1477

॥ श्रीरस्तु ॥

श्रीमद्वाल्मीकिरामायणे

# ॥ बा ल का ण्डः ॥



चेन्नपुर्यां

वाविळ्ळ रामस्वामिशास्त्रुलु अण्ड् सन्स्

इत्येतैः प्रकटितः

१९२८.

॥ श्रीरामायनमः ॥

# ॥ श्रीरामायणपारायणक्रमः ॥

## स्मार्तादीनां श्रीरामायणोपक्रमे अनुसन्धेयश्लोकक्रमः ॥

## ॥ आदौ श्रीमहागणापति ध्यानम् ॥

शुक्लांबरधरं विष्णुं शशिवर्णं चतुर्भुजम् ।
प्रसन्नवदनं ध्यायेत्सर्वविघ्नोपशान्तये ॥ १
अगजाननपद्मार्कं गजानन महर्निशम् ।
अनेकदं तं भक्ताना मेकदन्त मुपास्महे ॥ २
वागीशाद्या स्सुमनस स्सर्वार्थाना मुपक्रमे ।
यं नत्वा कृतकृत्यास्स्युस्तं नमामि गजाननम् ॥ ३

## ॥ सरस्वतीप्रार्थना ॥

शारदा शारदाम्भोजवदना वदनाम्बुजे ।
सर्वदा सर्वदाऽस्माकं सन्निधि स्सन्निधि क्रियात् ॥ १
या कुन्देन्दु तुषारहारधवळा या शुभ्रवस्त्रावृता
या वीणावरदण्डमण्डितकरा या श्वेतपद्मासना ।
या ब्रह्माच्युतशङ्करप्रभृतिभिर्देवैस्सदा पूजिता
सा मां पातु सरस्वती भगवती निश्शेषजाड्यापहा ॥ २
दोर्भिर्युक्ता चतुर्भि स्स्फटिकमणिमयी मक्षमालां दधाना
हस्तेनैकेन पद्मं सितमपिच शुकं पुस्तकं चापरेण ।
भासा कुन्देन्दुशङ्खस्फटिकमणिनिभा भासमानाऽसमाना
सा मे वाग्देवतेयं निवसतु वदने सर्वदा सुप्रसन्ना ॥ ३

## ॥ वाल्मीकिनमस्क्रिया ॥

कूजंतं रामरामेति मधुरं मधुराक्षरम् ।
आरुह्य कविताशाखां वन्दे वाल्मीकिकोकिलम् ॥ १
वाल्मीकेर्मुनिसिंहस्य कवितावनचारिणः ।
शृण्वन्रामकथानादं को न याति परां गतिम् ॥ २
यःपिबन्सततं रामचरितामृतसागरम् ।
अतृप्त स्तं मुनि वन्दे प्राचेतस मकल्मषम् ॥ ३

## ॥ आंजनेयनमस्क्रिया ॥

गोष्पदीकृतवाराशिं मशकीकृतराक्षसम् ।
रामायणमहामालारत्नं वन्देऽनिलात्मजम् ॥ १
अञ्जनानन्दनं वीरं जानकीशोकनाशनम् ।
कपीश मक्षहंतारं वन्दे लङ्काभयंकरम् ॥ २
आमिषीकृतमार्ताण्डं गोष्पदीकृतसागरम् ।
तृणीकृतदशग्रीव माञ्जनेयं नमाम्यहम् ॥ ३
उल्लङ्घ्य सिन्धोस्सलिलं सलीलं यश्शोकवह्निं जनकात्मजायाः ।
आदायतेनैव ददाह लङ्कां नमामि तं प्राञ्जलि राञ्जनेयम् ॥ ४
आञ्जनेयमतिपाटलाननं काञ्चनाद्रिकमनीयविग्रहम् ।
पारिजाततरुमूलवासिनं भावयामि पवमाननन्दनम् ॥ ५
यत्रयत्र रघुनाथकीर्तनं तत्रतत्र कृतमस्तकाञ्जलिम् ।
बाष्पवारिपरिपूर्णलोचनं मारुतिं नमत राक्षसान्तकम् ॥ ६
मनोजवं मारुततुल्यवेगं जितेंद्रियं बुद्धिमतां वरिष्ठम् ।
वातात्मजं वानरयूथमुख्यं श्रीरामदूतं शिरसा नमामि ॥ ७

## ॥ श्रीमद्रामायणप्रार्थना ॥

वाल्मीकिस्मृतिमन्दरेण मथित स्सीतारमासंभव-
स्सुग्रीवामरभूरुहोऽङ्गदगज स्सौमित्रिचन्द्रोदयः ।
वातोत्पन्नमणि र्विभीषणसुधः पौलस्त्यहालाहल
श्श्रीरामायणदुग्धसिन्धु रमलो भूयात्सन श्श्रेयसे ॥ १
यः कर्णाञ्जलिसंपुटै रहरह स्सम्यक्पिबत्यादरा-
द्वाल्मीके र्वदनारविन्दगलितं रामायणाख्यं मधु ।
जन्मव्याधिजराविपत्तिमरणै रत्यन्तसोपद्रव
संसारं स विहाय गच्छति पुमान्विष्णोः पदं शाश्वतम् ॥ २
तदुपगतसमाससन्धियोगं सममधुरोपनतार्थवाक्यबद्धम् ।
रघुवरचरितं मुनिप्रणीतं दशशिरस श्च वधं निशामयध्वम् ॥ ३
वाल्मीकिगिरिसंभूता रामसागरगामिनी ।
पुनाति भुवनं पुण्या रामायणमहानदी ॥ ४
श्लोकसारसमाकीर्णं सर्गकल्लोलसङ्कुलम् ।
काण्डग्राहमहामीनं वन्दे रामायणार्णवम् ॥ ५
वेदवेद्ये परे पुंसि जाते दशरथात्मजे ।
वेदः प्राचेतसा दासी त्साक्षाद्रामायणात्मना ॥ ६

## ॥ श्रीरामध्यानक्रमः ॥

वैदेहीसहितं सुरद्रुमतले हैमे महामण्डपे
मध्येपुष्पक मासने मणिमये वीरासने सुस्थितम् ।
अग्रे वाचयति प्रभञ्जनसुते तत्त्वं मुनिभ्यःपरं
व्याख्यान्तं भरतादिभिः परिवृतं रामं भजे श्यामलम् ॥ १

वामे भूमिसुता पुरश्च हनुमान् पश्चात्सुमित्रासुत
श्शत्रुघ्नो भरत श्च पार्श्वदळयो र्वाय्वादिकोणेषु च ।
सुग्रीव श्च विभीषण श्च युवराट्तारासुतो जाम्बवा-
न्मध्ये नीलसरोजकोमलरुचिं रामं भजे श्यामलम् ॥ २

माता रामो मत्पिता रामभद्रो भ्राता रामो मत्सखा राघवेशः ।
सर्वस्वं मे रामचन्द्रो दयालुर्नान्यं दैवं नैवजाने न जाने ॥ ३

साकेते शरदिन्दुकुन्दधवळे सौधे महामण्डपे
पर्यस्तागुरुधूपदीपललिते कर्पूरदीपोज्ज्वले ।
सुग्रीवाङ्गदजाम्बवत्परिवृत सौमित्रिणा सेवितं
लीलामानुषविग्रहं रघुवरं रामं भजे श्यामलम् ॥ ४

नमोऽस्तु रामाय स लक्ष्मणाय देव्यै च तस्यै जनकात्मजायै ।
नमोऽस्तु रुद्रेन्द्रयमानिलेभ्यो नमोऽस्तु चन्द्रार्कमरुद्गणेभ्यः ॥ ५

[तत श्श्रीकोशोपरि श्रीरामावाहनादिनैवेद्यान्तपूजा विधेया पारायणावसाने च पुनः पूजा कर्तव्या ॥]

॥ पारायणसमापनसमये अनुसन्धेयश्लोकक्रमः ॥

स्वस्ति प्रजाभ्यः परिपालयन्तां न्याय्येनमार्गेण महींमहीशाः ।
गोब्राह्मणेभ्य श्शुभमस्तु नित्यं लोकास्समस्ता स्सुखिनो भवन्तु ॥ १

काले वर्षतु पर्जन्यः पृथिवी सस्यशालिनी ।
देशोऽयं क्षोभरहितो ब्राह्मणा स्सन्तुनिर्भयाः ॥ २

अपुत्राः पुत्रिणस्सन्तु पुत्रिणस्सन्तु पौत्रिणः ।
अधना स्सधना स्सन्तुर्जीवन्तु शरदां शतम् ॥ ३

चरितं रघुनाथस्य शतकोटिप्रविस्तरम् ।
एकैक मक्षरं प्रोक्तं महापातकनाशनम् ॥ ४

शृण्वन् रामायणं भक्त्या यः पादं पदमेव वा।
स याति ब्रह्मणः स्थानं ब्रह्मणा पूज्यते सदा ॥ ५
रामाय रामभद्राय रामचन्द्राय वेधसे ।
रघुनाथाय नाथाय सीतायाः पतये नमः ॥ ६
मङ्गळं कोसलेन्द्राय महनीयगुणाब्धये ।
चक्रवर्तितनूजायसार्वभौमायमङ्गळम् ॥ ७
यन्मङ्गळं सहस्राक्षे सर्वदेवनमस्कृते ।
वृत्रनाशे समभवत्तत्ते भवतु मङ्गळम् ॥ ८
यन्मङ्गळं सुपर्णस्य विनताऽकल्पयत्पुरा ।
अमृतं प्रार्थयानस्य तत्ते भवतु मङ्गळम् ॥ ९
अमृतोत्पादने दैत्यान् घ्नतो वज्रधरस्य यत् ।
अदितिर्मङ्गळं प्रादात्तत्ते भवतु मङ्गळम् ॥ १०
त्रीन्विक्रमान प्रक्रमतो विष्णोरमिततेजसः ।
यदासीन्मङ्गळं राम तत्ते भवतु मङ्गळम् ॥ ११
ऋतवस्सागराद्वीपा वेदा लोकादिशश्चते ।
मङ्गळानि महाबाहो दिशन्तु तव सर्वदा ॥ १२
कायेन वाचा मनसेन्द्रियैर्वा बुद्ध्याऽऽत्मनावा प्रकृतेस्स्वभावात् ।
करोमि यद्यत्सकलं परस्मै श्रीराघवायेति समर्पयामि ॥ १३
यदक्षरपदभ्रष्टं मात्राहीनं च यद्भवेत् ।
तत्सर्वं क्षम्यतां देव श्रीराघव नमोऽस्तुते ॥ १४
आत्मा त्वं क्षितिजामतिः परिजनाः प्राणाश्शरीरं गृहं
पूजा ते विषयोपभोगरचना निद्रासमाधिस्थितिः ।

संचारः पदयोः प्रदक्षिणविधिः स्तोत्राणि सर्वा गिरो
यद्यत्कर्मकरोमितत्तदखिलं रामास्तु ते पूजनम् ॥ १५

[सीताविवाहपट्टाभिषेकसर्गयोस्तु-"इयं सीता मम सुता ।" "अभ्यषिञ्चन्नरव्याघ्रम्" इति श्लोकपठनात्पूर्वं विशेषतो ध्यानावाहननैवेद्यादिनीराजनान्तसपर्या संविधेया ॥]

अनेन श्रीमद्रामायणपारायणेन भगवान्सर्वदेवात्मक-
सीतालक्ष्मणभरत शत्रुघ्नहनुमत्समेत श्रीरामचन्द्रस्सुप्रीत स्सुप्रसन्नो वरदो भवतु ॥
न्यूनातिरिक्त सर्वं सगुण मस्तु । सर्वं श्रीरामचन्द्रार्पणमस्तु ॥

श्रीरामाय नमः ॥

## ॥ श्रीरामायणपारायणारम्भे श्रीवैष्णवैः पठनीयाः श्लोकाः ॥

प्रथमतः श्रीशैलेशे(रामानुजे)त्यादिस्वस्वसंप्रदायनिर्वाहकाचार्यानुसन्धानम् ॥

ततः—

लक्ष्मीनाथसमारम्भां नाथयामुनमध्यमाम् ।
अस्मदाचार्यपर्यन्तां वन्दे गुरुपरंपराम् ॥ १
योनित्यमच्युतपदाम्बुजयुग्मरुक्मव्यामोहतस्तदितराणितृणायमेने ।
अस्मद्गुरोर्भगवतोऽस्यदयैकसिन्धो रामानुजस्य चरणौ शरणं प्रपद्ये ॥
माता पिता युवतयस्तनया विभूति स्सर्वं यदेव नियमेन मदन्वयानाम् ।
आद्यस्य नः कुलपते र्वकुळाभिरामं श्रीमत्तदङ्घ्रियुगळं प्रणमामि मूर्ध्ना ॥
भूतं सरश्च महदाह्वय भट्टनाथ श्रीभक्तिसारकुलशेखरयोगिवाहान् ।
भक्ताङ्घ्रिरेणुपरकालयतीन्द्रमिश्रान् श्रीमत्पराङ्कुशमुनि प्रणतोस्मिनित्यम् ॥

## ॥ अथ श्रीशैलपूर्णविषयम् ॥

पितामहस्यापि पितामहाय प्राचेतसादेशफलप्रदाय ।
श्रीभाष्य कारोत्तम देशिकाय श्रीशैलपूर्णायनमो नमस्तात् ॥

इति श्लोकमारभ्य श्रीभाष्यकारप्रभृति स्वाचार्यपर्यन्त विषयास्सांप्रदयिकाः श्लोका अनुसन्धेयाः । यद्वास्वाचार्यप्रभृति श्रीधरपर्यन्त प्रतिव्यक्तिविषयाः श्लोका अनुसन्धेयाः ॥

## ॥ विष्वक्सेनध्यानम् ॥

शुक्लाम्बरधर विष्णुं शशिवर्णं चतुर्भुजम् ।
प्रसन्नवदनं ध्याये त्सर्वविघ्नोपशान्तये ॥ १

यस्य द्विरदवक्त्राद्याः पारिषद्याः परश्शतम् ।
विघ्नं निघ्नन्ति सततं विष्वक्सेनं त माश्रये ॥ २

## ॥ श्रीहयग्रीवध्यानम् ॥

ज्ञानानन्दमय देवं निर्मलस्फटिकाकृतिम् ।
आधारं सर्वविद्यानां हयग्रीव मुपास्महे ॥ १

अभङ्गुरकलादानस्थूललक्षत्व मीयुषे ।
तुङ्गाय महसे तस्मै तुरङ्गाय मुखे नमः ॥ २

## ॥ वाल्मीकिध्यानम् ॥

कूजन्तं रामरामेति मधुरं मधुराक्षरम् ।
आरुह्यकविताशाखां वन्दे वाल्मीकिकोकिलम् ॥ १

वाल्मीकेर्मुनिसिंहस्य कवितावनचारिणः ।
शृण्वन् रामकथानादं कोन याति परां गतिम् ॥ २

यः पिबन् सततं रामचरितामृतसागरम् ।
अतृप्तस्तं मुनिं वन्दे प्राचेतस मकल्मषम् ॥ ३

## ॥ आञ्जनेयप्रार्थना ॥

गोष्पदीकृतवाराशिं मशकीकृतराक्षसम् ।
रामायणमहामालारत्नं वन्देऽनिलात्मजम् ॥ १
अञ्जनानन्दनं वीरं जानकीशोकनाशनम् ।
कपीशमक्षहन्तारं वन्दे लङ्काभयङ्करम् ॥ २
[आमिषीकृतमार्ताण्डं गोष्पदीकृतसागरम् ।
तृणीकृतदशग्रीव माञ्जनेयं नमाम्यहम् ॥] ३
मनोजवं मारुततुल्यवेगं जितेन्द्रियं बुद्धिमतां वरिष्ठम् ।
वातात्मजं वानरयूथमुख्यं श्रीरामदूतं शिरसा नमामि ॥ ४
उल्लङ्घ्यसिन्धो स्सलिलं सलील यश्शोकवह्निं जनकात्मजायाः ।
आदाय तेनैव ददाह लङ्कां नमामि तं प्राञ्जलि राञ्जनेयम् ॥ ५
आञ्जनेय मतिपाटलाननं काञ्चनाद्रिकमनीयविग्रहम् ।
पारिजाततरुमूलवासिनं भावयामि पवमाननन्दनम् ॥ ६
यत्रयत्र रघुनाथकीर्तनं तत्रतत्र कृतमस्तकाञ्जलिम् ।
बाष्पवारिपरिपूर्णलोचनं मारुतिं नमत राक्षसान्तकम् ॥ ७

## ॥ श्रीरामायणप्रार्थना ॥

वेदवेद्ये परेपुंसि जाते दशरथात्मजे ।
वेदः प्राचेतसादासीत्साक्षाद्रामायणात्मना ॥ १
चरितं रघुनाथस्य शतकोटिप्रविस्तरम् ।
एकैक मक्षरं प्रोक्तं महापातकनाशनम् ॥ २

शृण्वन् रामायणं भक्त्या यःपादं पदमेव वा ।
स याति ब्रह्मणः स्थानं ब्रह्मणा पूज्यते सदा ॥ ३
वाल्मीकिगिरिसंभूता रामसागरगामिनी ।
पुनाति भुवनं पुण्या रामायणमहानदी ॥ ४
श्लोकसारसमाकीर्णं सर्गकल्लोलसंकुलम् ।
काण्डग्राहमहामीनं वन्दे रामायणार्णवम् ॥ ५
यः कर्णाञ्जलिसंपुटैरहरहस्सम्यक्पिबत्यादरा-
द्वाल्मीकेर्वदनारविन्दगळितं रामायणाख्यं मधु ।
जन्मव्याधिजराविपत्तिमरणैरत्यन्तसोपद्रवं
संसारं स विहाय गच्छति पुमान्विष्णोः पदं शाश्वतम् ॥] ६
तदुपगतसमाससन्धियोगं सममधुरोपनतार्थवाक्यबद्धम् ।
रघुवरचरितं मुनिप्रणीतं दशशिरसश्च वधं निशामयध्वम् ॥ ७

## ॥ श्रीरामप्रार्थना ॥

श्रीराघवं दशरथात्मजमप्रमेयं सीतापतिं रघुकुलान्वयरत्नदीपम् ।
आजानुबाहुमरविन्ददळायताक्षं रामं निशाचरविनाशकरं नमामि ॥
वैदेहीसहितं सुरद्रुमतले हैमे महामण्डपे
मध्येपुष्पकमासने मणिमये वीरासने सुस्थितम् ।
अग्रे वाचयति प्रभञ्जनसुते तत्त्वं मुनिभ्यः परं
व्याख्यान्तं भरतादिभिः परिवृतं रामं भजे श्यामलम् ॥ २

ततो यथाशक्ति श्रीकोशोपरि भगवदाराधनं कार्यम् ॥ अथ "धर्मात्मा सत्यसन्धश्च रामो दाशरथिर्यदि । पौरुषे चाप्रतिद्वन्द्व श्शरैनं जहि रावणिम् ॥ तपस्स्वाध्यायनिरतं तपस्वी वाग्विदांवरम् ।

नारदं परिपप्रच्छ वाल्मीकिर्मुनिपुङ्गवम् ॥" इति श्लोकद्वयं पठित्वा 'श्रीरघुनन्दन परब्रह्मणे नमः' इत्युक्त्वा पारायण मारभेत ॥

## ॥ पारायणसमापने अनुसन्धेयश्लोकक्रमः ॥

एव मेतत्पुरावृत्त माख्यानं भद्र मस्तु वः ।
प्रव्याहरत विस्रब्धं बलं विष्णोः प्रवर्धताम् ॥ १

लाभस्तेषां जयस्तेषां कुतस्तेषां पराभवः ।
येषामिन्दीवरश्यामो हृदये सुप्रतिष्ठितः ॥ २

काले वर्षतु पर्जन्यः पृथिवी सस्यशालिनी ।
देशोऽयं क्षोभरहितो ब्राह्मणा स्सन्तु निर्भयाः ॥ ३

कावेरी वर्धतां काले काले वर्षतु वासवः ।
श्रीरङ्गनाथो जयतु श्रीरङ्ग श्रीश्च वर्धताम् ॥ ४

स्वस्ति प्रजाभ्यः परिपालयन्तां न्याय्येन मार्गेण मही महीशाः ।
गोब्राह्मणेभ्य श्शुभमस्तु नित्यं लोका स्समस्ता स्सुखिनो भवन्तु ॥

मङ्गळं कोसलेन्द्राय महनीयगुणाब्धये ।
चक्रवर्तितनूजाय सार्वभौमाय मङ्गळम् ॥ ६

वेदवेदान्तवेद्याय मेघश्यामलमूर्तये ।
पुंसां मोहनरूपाय पुण्यश्लोकाय मङ्गळम् ॥ ७

विश्वामित्रान्तरङ्गाय मिथिलानगरीपतेः ।
भाग्यानां परिपाकाय भव्यरूपाय मङ्गळम् ॥ ८

पितृभक्तायसततं भ्रातृभि स्सहसीतया ।
नन्दिताखिललोकाय रामभद्राय मङ्गळम् ॥ ९

त्यक्तसाकेतवासाय चित्रकूटविहारिणे ।
सेव्याय सर्वयमिनां धीरोदाराय मङ्गलम् ॥ १०

सौमित्रिणा च जानक्या चापबाणासिधारिणे ।
संसेव्याय सदाभक्त्या स्वामिने मम मङ्गलम् ॥ ११

दण्डकारण्यवासाय खण्डितामरशत्रवे ।
गृध्रराजाय भक्ताय मुक्तिदायास्तु मङ्गलम् ॥ १२

सादरं शबरीदत्तफलमूलाभिलाषिणे ।
सौलभ्यपरिपूर्णाय सत्त्वोद्रिक्ताय मङ्गलम् ॥ १३

हनुमत्समवेताय हरीशाभीष्टदायिने ।
वालिप्रमथनायास्तु महाधीराय मङ्गलम् ॥ १४

श्रीमते रघुवीराय सेतूल्लङ्घितसिन्धवे ।
जितराक्षसराजाय रणधीराय मङ्गलम् ॥ १५

आसाद्य नगरीं दिव्यामभिषिक्ताय सीतया ।
राजाधिराजराजाय रामभद्राय मङ्गलम् ॥ १६

मङ्गलाशासनपरैर्मदाचार्यपुरोगमैः ।
सर्वैश्च पूर्वैराचार्यैः सत्कृतायास्तु मङ्गलम् ॥ १७

[कायेनवाचा मनसेन्द्रियैर्वा बुद्ध्याऽऽत्मनावा प्रकृते स्स्वभावात् ।
करोमि यद्यत्सकलं परस्मै नारायणायेति समर्पयामि ॥]

ततः 'पितामह' स्येत्यारभ्य स्वाचार्यपर्यन्तश्लोका अनुसन्धेयाः ॥ यद्वास्वाचार्य मारभ्य श्रीधरपर्यन्ता गुरुपरंपराऽनुसन्धेया॥ सीताविवाहपट्टाभिषेकसर्गयोस्तु 'इयं सीता मम सुता' 'अभ्यषिञ्चन्नरव्याघ्रम्' इति श्लोकपठनात्पूर्वं मध्ये विशेषतो भगवदाराधनं च कर्तव्यम् ॥

श्रीसीता लक्ष्मण भरत शत्रुघ्न हनुमत्समेत

श्रीरामचन्द्रपरब्रह्मणे नमः ॥

# ॥ श्रीगायत्रीरामायणम् ॥

तपस्स्वाध्यायनिरतं तपस्वी वाग्विदां वरम् ।
नारदं परिपप्रच्छ वाल्मीकिर्मुनिपुङ्गवम् ॥ १

स हत्वा राक्षसान् सर्वान् यज्ञघ्नान रघुनन्दनः ।
ऋषिभिः पूजित स्सम्य ग्यथेन्द्रो विजयी पुरा ॥ २

विश्वामित्र स्स धर्मात्मा श्रुत्वा जनकभाषितम् ।
वत्स राम धनुः पश्य इति राघव मब्रवीत् ॥ ३

तुष्टावास्य तदा वंशंप्रविश्य स विशांपतेः ।
शयनीय नरेन्द्रस्य तदासाद्यव्यतिष्ठत ॥ ४

वनवासं हि संख्याय वासांस्याभरणानिच ।
भर्तार मनुगच्छन्त्यै सीतायै श्वशुरो ददौ ॥ ५

राजा सत्यं च धर्मश्च राजा कुलवतां कुलम् ।
राजा माता पिता चैव राजा हितकरो नृणाम् ॥ ६

निरीक्ष्य स मुहूर्तंतु ददर्श भरतो गुरुम् ।
उटजे राम मासीनं जटावल्कलधारिणम् ॥ ७

यदि बुद्धिः कृता द्रष्टु मगस्त्यं तं महामुनिम् ।
अद्यैव गमने बुद्धिं रोचयस्व महायशाः ॥ ८

भरतस्यार्यपुत्रस्य श्वश्रूणां मम च प्रभो ।
मृगरूपमिदं व्यक्तं विस्मयं जनयिष्यति ॥ ९

गच्छ शीघ्र मितोरामसुग्रीवंतं महाबलम् ।
वयस्यं त कुरुक्षिप्रमितो गत्वाऽद्य राघव ॥ १०
देशकालौ प्रतीक्षस्व क्षममाणः प्रियाप्रिये ।
सुखदुःखसहः काले सुग्रीववशगोभव ॥ ११
वन्द्यास्तेतु तपस्सिद्धास्तपसार्वातकल्मषाः ।
प्रष्टव्यास्तेऽपिसीतायाः प्रवृत्तिं विनयान्वितैः ॥ १२
स निर्जित्य पुरीं श्रेष्ठां लङ्कां तां कामरूपिणीम् ।
विक्रमेण महातेजा हनूमान मारुतात्मजः ॥ १३
धन्या देवा स्सगन्धर्वा स्सिद्धाश्च परमर्षयः ।
मम पश्यन्ति ये नाथं रामं राजीवलोचनम् ॥ १४
मङ्गलाभिमुखी तस्य सा तदाऽसीन्महाकपेः ।
उपतस्थे विशालाक्षी प्रयताहव्यवाहनम् ॥ १५
हितं महार्थं मृदुहेतु संहितं व्यतीतकालायतिसंप्रतिक्षमम् ।
निशम्य तद्वाक्य मुपस्थितज्वरः प्रसङ्गवानुत्तरमेतदब्रवीत् ॥ १६
धर्मात्मा रक्षसां श्रेष्ठ स्संप्राप्तोऽयं विभीषणः ।
लंकैश्वर्यं ध्रुवं श्रीमानयं प्राप्नोत्यकण्डकम् ॥ १७
यो वज्रपाताशनिसन्निपातान्न चुक्षुभे नापि चचाल राजा ।
स रामबाणाभिहतो भृशार्तश्चचाल चापंचमुमोच वीरः ॥ १८
यस्यविक्रम मासाद्य राक्षसा निधनं गताः ।
मन्ये राघवं वीरं नारायण मनामयम् ॥ १९
नत दद्दशिरे रामं दहन्तमरिवाहिनीम् ।
मोहिताः परमास्त्रेण गान्धर्वेण महात्मना ॥ २०

प्रणम्य देवताभ्यश्चब्राह्मणेभ्यश्च मैथिली ।
बद्धाञ्जलिपुटा चेद मुवाचाग्निसमीपतः ॥ २१
चलनात्पर्वतेन्द्रस्य गणा देवाश्च काम्पिताः ।
चचाल पार्वती चापितदाऽश्लिष्टामहेश्वरम् ॥ २२
दाराः पुत्राः पुरं राष्ट्रं भोगाच्छादनभाजनम् ।
सर्वमेवाविभक्तं नो भविष्यति हरीश्वरः ॥ २३
या मेव रात्रि शत्रुघ्नः पर्णशालां समाविशत् ।
ता मेव रात्रि सीताऽपि प्रसूता दारकद्वयम् ॥ २४
इदं रामायणं कृत्स्नंगायत्रीबिजसंयुतम् ।
त्रिसन्ध्यं यः पठेन्नित्यं सर्वपापैः प्रमुच्यते ॥ २५
यावदावर्तते चक्रं यावती च वसुन्धरा ।
तावद्वर्षसहस्राणि स्वामित्वमवधारय ॥ २६

गायत्रीरामायण सपूर्णम् ॥



श्रीहयग्रीवाय नमः ॥

# ॥ श्रीरामचन्द्रपट्टाभिषेकप्रयोगः ॥

सुप्रक्षाळितपाणिपादस्स्वाचान्तः पुण्ड्रधारी कल्याणमण्डपं प्रविश्य "नमस्सदसे" इति परिषद मुपस्थाय श्रीरामपट्टाभिषेकाख्यं शुभकर्म कर्तुं मम योग्यतासिद्धिरस्त्विति मा मनुगृहाणेति दक्षिणादिकं दत्त्वा प्रार्थ्य । दर्भेष्वासीनो दर्भान धारयमाणः पवित्रपाणिः प्राणानायम्य । देशकालौ संकीर्त्य श्रीरामचन्द्र प्रीत्यर्थे श्रीरामचन्द्रपट्टाभिषेकाख्यं शुभकर्म करिष्ये-इति संकल्प्य । बलमन्त्र मनुसधाय अस्मिन श्रीरामचन्द्रपट्टाभिषेकशुभकर्मण्याचार्यं त्वां वृणे-इत्यादिक्रमेणाचार्य मध्वर्युं ब्रह्माण मुपद्रष्टारं वसिष्ठं वामदेवं जाबालि काश्यपं कात्यायनं गौतमं सुयज्ञं जयंचे त्यष्टौ ऋत्विजश्च वृणुयात्-तेच नामत्रय रामतारकमन्त्र सहस्र नामानि जपेयुः अथाचार्यो विष्वक्सेनमाराध्य पुण्याहं वाचयित्वा गोमयोपलिप्तालं कृतायां भूम्यां 'ब्रह्मजज्ञानमि'तिमध्ये-'नाके सुपर्णमि'ति दक्षिणतः-'आप्यायस्वे' त्युत्तरतश्च प्रागपवर्गं रेखात्रयं लिखित्वा 'यो अग्नौ' इति मध्ये-'इदं विष्णुरि'ति पश्चात्-'इन्द्रं विश्वा अवीवृध'न्निति पुरतः-उत्तरापवर्गं तिस्रश्चेति रेखा लिखित्वा अद्भिरवोक्ष्य चतुर्विंशतिप्रस्थपरिमितव्रीहीन्निक्षिप्य तदुपरि तावत्येव तण्डुलराशौ वस्त्रालंकृते प्रागादिष्वष्टसुदिक्षु 'ब्रह्मजज्ञान'मितिकलशान्प्रतिष्ठाप्यमध्येचतुरः कलशान्प्रतिष्ठाप्य । 'तेष्वाप्रोवा इदगं सर्वं-शन्नो देवीरि'ति-शतधारमिति मन्त्रै रष्टादिङ्नदीतीर्थानि मध्ये कुम्भेषु चतुस्समुद्रतीर्थानि

चापूर्य 'भूर्भुवस्सुवरोमि'त्यक्षतान्निक्षिप्य गन्धपुष्पादिभि रलंकृत्य दूर्वापुष्पफलै रवकीर्य तत्र पञ्चत्वकपञ्चपल्लव पञ्चरत्न सुवर्णपञ्चक-कुसुमचन्दनगोरोचनागैरिकपद्ममुस्ताकुङ्कुमकर्पूर वृषशृङ्ग गजदन्तमृत्ति-कासिद्धार्थदेवदारु मौक्तिकादीनि निक्षिप्य नदीसमुद्रानावाह्याभ्यर्च्य तत्र वरुणरूपिणं भगवन्त पुण्डरीकाक्षमावाह्य 'दधिक्राव्णण' इत्यादि-भिर्हिरण्यवर्णाः पवमान इति मन्त्रैरभिमन्त्र्य श्रीसीतालक्ष्मणभरत-शत्रुघ्नहनुमत्समेत श्रीरामचन्द्रसुवर्णप्रतिमां सात्त्वतेन विधिना प्रति-ष्ठापितां सिंहासने प्रतिष्ठाप्य सर्वोपचारैरभ्यर्च्य पुष्पाक्षतलाजधूप-दीपादीनङ्गुलीयकवस्त्रादींश्चप्रोक्षणादिभिश्शुचीकृत्य श्रोत्रियागारा-दानीतमग्निमुपसमाधायाग्निमुखान्तेगायत्र्यासहस्रवारं रामगायत्र्या-सहस्रवारं संक्षेपसर्गश्लोकैश्च शतवारमाज्येन प्रधानाहुतीर्हुत्वा कर्मस-मृद्ध्यर्थ जयादिभिर्हुत्वापरिधीनभ्यज्यतान्प्रहृत्य विश्वेभ्योदेवेभ्य इति सग्गुस्रावं हुत्वा प्राणानायम्य - अनाज्ञातादिप्रायश्चित्ताहुतीर्हुत्वा - अनाज्ञातम् ।। पुरुषसम्मितः ।। यत्वाकत्वा ।। त्वन्नो अग्ने ।। सत्वन्नो अग्ने।। त्वमग्ने अयासि आभीर्गीर्भिः।। त्र्यम्बकम् इदं विष्णु ।।भूरादित्र्या हृतित्रयम् ।। विष्णवेस्वाहेति च हुत्वा यथाशक्ति श्रीमदष्टाक्षरेणद्वयेन चहुत्वा पूर्णाहुतिम् "सप्तते अग्ने" इतिमन्त्रेणहुत्वापरिषेचनप्रणीता मोक्षणब्रह्मोद्वासनानिकृत्वा संपाताज्यं धृत्वा अनन्तरम् "शिरस्य-ञ्जलिमाधाय" इत्यादि श्रीपट्टाभिषेकसर्गं पठित्वा पूर्वाभिमन्त्रित-कलशतीर्थोदकैर्यजमान आचार्यर्त्विग्ब्राह्मणकन्यामन्त्रियोधादिभि स्सह प्रागादिदिक्क्रमेण। वसवस्त्वा पुरस्तादभिषिञ्चन्तु गायत्रेणछन्द-सा। रुद्रास्त्वा दक्षिणतोऽभिषिञ्चन्तुत्त्रैष्टुभेन छन्दसा। आदित्या

स्त्वा पश्चादभिषिञ्चन्तु जागतेन छन्दसा। विश्वेत्वा देवा उत्तरतोऽ-
भिषिञ्चन्त्वानुष्टुभेन छन्दसा। बृहस्पति स्त्वोपरिष्टादभिषिञ्चन्तुपां-
क्तेन छन्दसा। साम्राज्याय सुक्रतुः। देवस्य त्वासवितुः प्रसवे।
अश्विनो बाहुभ्याम्। पूष्णोहस्ताभ्याम्। अश्विनोर्भैषज्येन। तेजसे
ब्रह्मवर्चसायाभिषिञ्चामि। देवस्यत्वा+हस्ताभ्यां सरस्वत्यैभैषज्येन-
वीर्यायान्नाद्यायाभिषिञ्चामि। देवस्यत्वा+हस्ताभ्यां इन्द्रस्येन्द्रियेण-
श्रियै यशसे बलायाभिषिञ्चामि। चवाजिनम्। सोमगं राजानं वरुण
मग्नि मन्वारभामहे। आदित्यान्विष्णुग् सूर्य ब्रह्माणंच बृहस्पतिम्॥
देवस्य त्वा...हस्ताभ्यां सरस्वत्यै वाचो यन्तु र्यन्त्रेणाग्ने स्त्वा सा-
म्राज्येनाभिषिञ्चामीन्द्रस्य बृहस्पतेस्त्वा साम्राज्येनाभिषिञ्चामि।
देवा स्त्वेन्द्र ज्येष्ठा वरुण राजानोऽधस्ताच्चोपरिष्टाच्च पान्तुनवा एते
न पूतो न मेध्यो न प्रोक्षितो यदेन मतःप्राचीनं प्रोक्षति यत्संचित
माज्येन प्रोक्षति तेन पूतस्ते न मेध्यस्तेन प्रोक्षितः। अमृताभिषेकोऽस्तु-
इति श्रीरामप्रतिमां श्रीकोशं चाभिषिच्य सर्वमङ्गलवाद्यपुरस्सरं
धूपदीपादिसर्वोपचारान समर्प्य रत्नाङ्गुलीयकवस्त्रादिभि रलंकृत्य
भक्ष्यभोज्यादिकं निवेद्य कन्याभिर्नीराज्य लाजपुष्पाक्षतै राशिषो
वाचयित्वा आराध्य दण्डवत्प्रणमेत्॥ अथाचार्याराधनम्॥ प्राणा-
नायम्य श्रीरामायणमहामन्त्रार्थश्रावयितार माचार्यं सपत्नीकं श्रीसीता-
रामरूपमर्चयामीति सकल्प्य महोन्नते पीठे तौ दंपती निषाद्य शुद्धेन
तीर्थेन कांस्यान्यपात्रे तत्पादाववनिज्य स्वशिरसि तत्तीर्थं प्रोक्ष्य
पीत्वा कुथमाल्यधूपदीपादिकै रुपचारै राराध्य प्रथममाचार्यान्यै
हरिद्राकुङ्कमगन्धपुष्पमाङ्गल्यपादाभरणादीनि दत्त्वा सकूर्पासं पट्ट-

कौशेय मितरचित्रवस्त्रसहितम् "प्रियं जनक नन्दिन्याः कौशेयं स्निग्धमुत्तमम्। प्रीणातु दानेनैतस्य सीता कौशेयवासिनी" इति मन्त्रेण दत्त्वा अलंकृत्य अनन्तर माचार्याय पट्टकौशेयं स्निग्धं सर्वतपोहितम्। "पीताम्बरधरो रामः प्रीयतां दानतोऽधुना" इति दत्त्वा। "रामनामाङ्कितं दिव्य मङ्गुलीयक मुत्तमम्। स पवित्रं प्रदद्यांते प्रीयतां लक्ष्मणाग्रजः" इति सस्वर्णपवित्र रामनामाङ्गुलीयकम्॥"चतुर्विंशतिसाहस्रीयदेषारामसंहिता। तस्मात्तत्संख्ययादद्यांदक्षिणांरामतुष्टये" इति चतुर्विंशतिसहस्रशतदशकान्यतमनिष्कदक्षिणाम्॥ "सर्वसस्याश्रयाभूमिर्जानकीजननी ध्रुवा। तस्मा दस्याःप्रदानेन प्रीयतां भरताग्रजः" इति स सुवर्णा भुवम्॥ "सीतालक्ष्मणशत्रुघ्नभरतादिभि रन्वितम्। दास्यामि रामप्रतिमां प्रीयतां स रघूत्तमः" इति श्रीरामपट्टाभिषेक प्रतिमांपट्टवस्त्रावेष्टितपूर्णकुम्भसहितां स दक्षिणाम्॥ "एषदाशरथिस्साक्षादेधते पुस्तकात्मना। तस्मादस्य प्रदानेन प्रीयतां भरताग्रजः" इति श्रीरामायण श्रीकोशम॥ "शय्यामिमां सोपधानां हंसतूलविनिर्मिताम्। दास्याम्यनेन दानेन प्रीयतां भुजगेशयः" इति सोपधानां शय्याम् "गवा मङ्गेषु तिष्ठन्ति भुवनानि चतुर्दश। तस्मा दस्याः प्रदानेन प्रीयतां रघुनन्दनः॥ गावो ममाग्रत स्सन्तुगावो मे सन्तु पृष्ठतः। गावो ममेप्सितं दद्युर्गावो मे मातरस्स्वयम्" इमां गां ससुवर्णशृङ्गां सरौप्यखुरां सवस्त्रालकारां सकांस्यपात्रां ससुवर्णदक्षिणां वैष्णवीं तुभ्यमहं संप्रददे नमम नममेति कर्मसाद्गुण्यार्थं पयस्विनीं धेनुं च दद्यात्॥ शक्तौ स्वर्णपादुका धनु श्शर च्छत्रचामरगृहोपकरण मुक्ताहारादिकं च यथेष्टं दद्यात्। अथ ऋत्वि-

जां वसिष्ठादिक्रमेण कलशवस्त्रोपवीतदक्षिणाताम्बूल चन्दनादीनि दत्त्वा संपूज्याष्टौ कन्या हरिद्रा कुङ्कुमचन्दनमाल्यवस्त्रादिभि राराध्य नीराजयेत् ॥ अथ चतुर्विंशतिसहस्रं वा । चतुर्विंशति शतं वा । चतुर्विंशति वा । दश वा । ब्राह्मणान्भोजये दाशिषो वाचयेत्तेभ्यो दक्षिणागन्धपुष्पसुवसनताम्बूलादीनि दद्यात् ॥ आचार्यं स श्रीकोशं स प्रतिमं गजादियानमारोप्य महोत्सवपुरस्सरं तद्गृहं प्रतिस्वय मनुव्रजन् प्रेषयेत्सात्त्विकत्याग मन्ते कुर्यात् ॥

इति श्रीरामचन्द्रपट्टाभिषेकप्रयोग. ॥



## ॥ श्रीरामायणप्रशंसा ॥

वेदवेद्ये परे पुंसि जाते दशरथात्मजे ।
वेदः प्राचेतसादासीत्साक्षाद्रामायणात्मना ॥

श्रीमद्ब्रह्मतदेव बीज ममलं यस्याङ्कुर श्चिन्मयः
काण्डै स्सप्तभि रन्वितोऽतिविततो ऋष्यालवालोदितः ।
पत्त्रैस्तत्त्वसहस्रकै स्सुविलसच्छाखाशतैः पञ्चभिः
स्वात्मप्राप्तिफलप्रदो विजयते रामायणस्वस्तरुः ॥

यः कर्णाञ्जलिसंपुटै रहरह स्सम्य क्पिबत्यादरा-
द्वाल्मीके र्वदनारविन्दगलितं रामायणाख्यं मधु ।
जन्मव्याधिजराविपत्तिमरणै रत्यन्तसोपद्रवं
संसारं स विहाय गच्छति पुमान्विष्णोःपदं शाश्वतम् ॥

वाल्मीकिगिरिसंभूता रामांभोनिधिसंगता ।
श्रीमद्रामायणी गंगा पुनातु भुवनत्रयम् ॥

चरितं रघुनाथस्य शतकोटिप्रविस्तरम् ।
एकैक मक्षरं प्रोक्तं महापातकनाशनम् ॥

॥ श्रीरस्तु ॥

# श्रीमद्रामायणे-बालकाण्डे

## ॥ प्रथमस्सर्गः ॥

तपस्स्वाध्यायनिरतं तपस्वी वाग्विदां वरम् ।
नारदं परिपप्रच्छ वाल्मीकिर्मुनिपुङ्गवम् ॥ १
"कोन्वस्मिन्साम्प्रतं लोके गुणवा न्कश्चवीर्यवान्
धर्मज्ञश्च कृतज्ञश्च सत्यवाक्यो दृढव्रतः ॥ २
चारित्रेणच कोयुक्तस्सर्वभूतेषु कोहितः ।
विद्वान्कः क स्समर्थश्च कश्चैकप्रियदर्शनः ॥ ३
आत्मवान्को जितक्रोधो द्युतिमान्कोऽनसूयकः ।
कस्य बिभ्यति देवाश्च जातरोषस्य संयुगे ॥ ४
एत दिच्छा म्यहं श्रोतुं परं कौतूहलं हि मे ।
महर्षे त्वं समर्थोऽसि ज्ञातु मेवंविधं नरम् ॥" ५
श्रुत्वाचै तत्त्रिलोकज्ञोवाल्मीकेर्नारदो वचः ।
"श्रूयता" मितिचामन्त्र्यप्रहृष्टो वाक्यमब्रवीत् ॥ ६
"बहवो दुर्लभाश्चैव ये त्वया कीर्तिता गुणाः ।
मुने वक्ष्याम्यहंबुद्ध्वातैर्युक्त श्श्रूयतां" नरः ॥ ७
इक्ष्वाकुवंश प्रभवो रामो नाम जनैश्श्रुतः ।
नियतात्मा महावीर्यो द्युतिमा न्धृतिमा न्वशी ॥ ८

बुद्धिमा न्नीतिमा न्वाग्मी श्रीमाञ्छत्रुनिबर्हणः ।
विपुलांसो महाबाहुः कम्बुग्रीवो महाहनुः ॥ ९
महोरस्को महेष्वासो गूढजत्रुररिन्दमः ।
आजानुबाहु स्सुशिरा स्सुललाट स्सुविक्रमः ॥ १०
सम स्समविभक्ताङ्ग स्स्निग्धवर्णः प्रतापवान् ।
पीनवक्षा विशालाक्षो लक्ष्मीवाञ्छुभलक्षणः ॥ ११
धर्मज्ञस्सत्यसन्धश्च प्रजानांचहिते रतः ।
यशस्वीज्ञानसम्पन्नश्शुचि र्वश्य स्समाधिमान् ॥ १२
प्रजापतिसमश्श्रीमान्धाता रिपुनिषूदनः ।
रक्षिता जीवलोकस्य धर्मस्य परिरक्षिता ॥ १३
रक्षिता स्वस्य धर्मस्यस्वजनस्यच रक्षिता ।
वेदवेदाङ्गतत्त्वज्ञो धनुर्वेदेच निष्ठितः ॥ १४
सर्वशास्त्रार्थतत्त्वज्ञः स्मृतिमान्प्रतिभानवान् ।
सर्वलोकप्रियस्साधुरदीनात्मा विचक्षणः ॥ १५
सर्वदाऽभिगत स्सद्भिस्समुद्र इव सिन्धुभिः ।
आर्यस्सर्वसमश्चैव सदैकप्रियदर्शनः ॥ १६
स चसर्वगुणोपेतः कौसल्यानन्दवर्धनः ।
समुद्रइव गाम्भीर्ये धैर्येण हिमवा निव ॥ १७
विष्णुना सदृशो वीर्ये सोमवत्प्रियदर्शनः ।
कालाग्निसदृशः क्रोधे क्षमया पृथिवीसमः ॥ १८
धनदेन समस्त्यागे सत्येधर्म इवापरः ।
तमेवगुणसम्पन्नं रामं सत्यपराक्रमम् ॥ १९

ज्येष्ठं श्रेष्ठगुणैर्युक्तं प्रियंदशरथस्सुतम् ।
प्रकृतीनांहितैर्युक्तं प्रकृतिप्रियकाम्यया ॥ २०
यौवराज्येन संयोक्तु मैच्छ त्प्रीत्या महीपतिः ।
तस्याभिषेकसम्भारान्दृष्ट्वा भार्याऽथकैकयी ॥ २१
पूर्वं दत्तवरादेवी वरमेन मयाचत ।
विवासनं च रामस्य भरतस्याभिषेचनम् ॥ २२
स सत्यवचना द्राजा धर्मपाशेन संयतः ।
विवासयामास सुतं रामं दशरथः प्रियम् ॥ २३
स जगाम वनं वीरः प्रतिज्ञा मनुपालयन् ।
पितुर्वचननिर्देशा त्कैकेय्याः प्रियकारणात् ॥ २४
तं व्रजन्तं प्रियो भ्राता लक्ष्मणोऽनुजगामह ।
स्नेहा द्विनयसम्पन्न स्सुमित्रानन्दवर्धनः ॥ २५
भ्रातरं दयितो भ्रातु स्सौभ्रात्र मनुदर्शयन् ।
रामस्य दयिता भार्या नित्यं प्राणसमाहिता ॥ २६
जनकस्य कुले जाता देवमायेव निर्मिता ।
सर्वलक्षणसम्पन्ना नारीणा मुत्तमा वधूः ॥ २७
सीताप्यनुगता रामं शशिनं रोहिणीयथा ।
पौरैरनुगतो दूरं पित्रा दशरथेन च ॥ २८
शृंगिबेरपुरे सूतं गङ्गाकूले व्यसर्जयत् ।
गुह मासाद्य धर्मात्मा निषादाधिपति प्रियम् ॥ २९
गुहेन सहितो रामो लक्ष्मणेन च सीतया ।
ते वनेन वनं गत्वा नदी स्तीर्त्वा बहूदकाः ॥ ३०

चित्रकूट मनुप्राप्य भरद्वाजस्य शासनात् ।
रम्य मावसथं कृत्वा रममाणा वनेत्रयः ॥ ३१
देवगन्धर्वसङ्काशा स्तत्र ते न्यवसन्सुखम् ।
चित्रकूटं गते रामे पुत्रशोकातुरस्तथा ॥ ३२
राजा दशरथ स्स्वर्गं जगाम विलपन्सुतम् ।
मृते तु तस्मिन्भरतो वसिष्ठप्रमुखै र्द्विजैः ॥ ३३
नियुज्यमानो राज्याय नैच्छ द्राज्यं महाबलः ।
स जगामवनं वीरो रामपादप्रसादकः ॥ ३४
गत्वा तु स महात्मानं रामं सत्यपराक्रमम् ।
अयाचद्भ्रातरं राम मार्यभावपुरस्कृतः ॥ ३५
"त्वमेव राजा धर्मज्ञ" इति रामं वचोऽब्रवीत् ।
रामोऽपि परमोदार स्सुमुखस्सुमहायशाः ॥ ३६
न चैच्छत्पितुरादेशा द्राज्यंरामो महाबलः ।
पादुकेचास्यराज्याय न्यासं दत्वा पुनःपुनः ॥ ३७
निवर्तयामास ततो भरतं भरताग्रजः ।
स काम मनवाप्यैव रामपादा वुपस्पृशन् ॥ ३८
नन्दिग्रामेऽकरोद्राज्यं रामागमनकांक्षया ।
गते तु भरते श्रीमान्सत्यसंधो जितेन्द्रियः ॥ ३९
राम स्तु पुनरालक्ष्य नागरस्य जनस्य च ।
तत्रागमन मेकाग्रो दंडका न्प्रविवेशह ॥ ४०
प्रविश्य तु महारण्यं रामो राजीवलोचनः ।
विराधं राक्षसं हत्वा शरभङ्गं ददर्शह ॥ ४१

सुतीक्ष्णं चाप्यगस्त्यं च अगस्त्यभ्रातरं तथा ।
अगस्त्यवचनाच्चैव जग्राहैन्द्रं शरासनम् ॥ ४२
खड्गं च परमप्रीत स्तूणीचाक्षयसायकौ ।
वसतस्तस्य रामस्य वने वनचरै स्सह ॥ ४३
ऋषयोऽभ्यागमन्सर्वे वधायासुररक्षसाम् ।
स तेषां प्रतिशुश्राव राक्षसानां तथा वने ॥ ४४
प्रतिज्ञात श्च रामेण वध स्संयति रक्षसाम् ।
ऋषीणा मग्निकल्पानां दण्डकारण्यवासिनाम् ॥ ४५
तेन तत्रैव वसता जनस्थाननिवासिनी ।
विरूपिता शूर्पणखा राक्षसी कामरूपिणी ॥ ४६
तत श्शूर्पणखावाक्या दुद्युक्तान्सर्वराक्षसान् ।
खरं त्रिशिरसं चैव दूषणं चैव राक्षसम् ॥ ४७
निजघान रणे राम स्तेषां चैव पदानुगान् ।
वने तस्मिन्निवसता जनस्थाननिवासिनाम् ॥ ४८
रक्षसां निहता न्यास न्सहस्राणि चतुर्दश ।
ततो ज्ञातिवधं श्रुत्वा रावणः क्रोधमूर्छितः ॥ ४९
सहायं वरयामास मारीचं नामराक्षसम् ।
वार्यमाणस्तु बहुशो मारीचेन स रावणः ॥ ५०
"न विरोधो बलवता क्षमोरावण! तेन ते ।"
अनादृत्य तु तद्वाक्यं रावणः कालचोदितः ॥ ५१
जगाम सहमारीच स्तस्याश्रमपदं तदा ।
तेन मायाविना दूर मपवाह्य नृपात्मजौ ॥ ५२

जहार भार्यां रामस्य गृध्रं हत्वा जटायुषम् ।
गृध्रंच निहतं दृष्ट्वा हृतां श्रुत्वा च मैथिलीम् ॥ ५३
राघव श्शोकसन्तप्तो विललापाकुलेन्द्रियः ।
तत स्तेनैव शोकेन गृध्रं दग्ध्वाजटायुषम् ॥ ५४
मार्गमाणो वने सीतां राक्षसं सन्ददर्शह ।
कबन्धं नाम रूपेण विकृतं घोरदर्शनम् ॥ ५५
तं निहत्य महाबाहु र्ददाहस्वर्गतश्चसः ।
सचास्य कथयामास शबरीं धर्मचारिणीम् ॥ ५६
"श्रमणीं धर्मनिपुणामभिगच्छे"ति राघवम् ।
सोऽभ्यगच्छन्महातेजा श्शबरीं शत्रुसूदनः ॥ ५७
शबर्या पूजित स्सम्यग्रामो दशरथात्मजः ।
पम्पातीरे हनुमता सङ्गतो वानरेणह ॥ ५८
हनुमद्वचनाच्चैव सुग्रीवेण समागतः ।
सुग्रीवाय च तत्सर्वं शंस द्रामो महाबलः ॥ ५९
आदितस्तद्यथावृत्तं सीताया श्च विशेषतः ।
सुग्रीवश्चापि तत्सर्वं श्रुत्वा रामस्य वानरः ॥ ६०
चकार सख्यं रामेण प्रीत श्चैवाग्निसाक्षिकम् ।
ततो वानरराजेन वैरानुकथनं प्रति ॥ ६१
रामायावेदितं सर्वं प्रणयाद्दुःखितेन च ।
प्रतिज्ञातं च रामेण तदा वालिवधं प्रति ॥ ६२
वालिनश्च बलं तत्र कथयामास वानरः ।
सुग्रीव श्शङ्कित श्चासी न्नित्यं वीर्येण राघवे ॥ ६३

राघव प्रत्ययार्थन्तु दुन्दुभेः काय मुत्तमम् ।
दर्शयामास सुग्रीवो महापर्वतसन्निभम् ॥ ६४
उत्स्मयित्वा महाबाहुः प्रेक्ष्य चास्थि महाबलः ।
पादाङ्गुष्ठेन चिक्षेप सम्पूर्णं दशयोजनम् ॥ ६५
बिभेद च पुनस्साला न्सप्तैकेन महेषुणा ।
गिरिं रसातलंचैव जनय न्प्रत्ययंतदा ॥ ६६
ततः प्रीतमनास्तेन विश्वस्त स्स महाकपिः ।
किष्किन्धां रामसहितो जगाम च गुहां तदा ॥ ६७
ततोऽगर्जद्धरिवर स्सुग्रीवो हेमपिङ्गलः ।
तेन नादेन महता निर्जगाम हरीश्वरः ॥ ६८
अनुमान्य तदा तारां सुग्रीवेण समागतः ।
निजघान च तत्रैवं शरेणैकेन राघवः ॥ ६९
तत स्सुग्रीववचना द्धत्वा वालिन माहवे ।
सुग्रीवमेव तद्राज्ये राघवः प्रत्यपादयत् ॥ ७०
स च सर्वा न्समानीय वानरान्वानरर्षभः ।
दिशः प्रस्थापयामास दिदृक्षु र्जनकात्मजाम् ॥ ७१
ततो गृध्रस्य वचना त्संपाते र्हनुमान्बली ।
शतयोजनविस्तीर्णं पुप्लुवे लवणार्णवम् ॥ ७२
तत्रलङ्कां समासाद्य पुरीं रावणपालिताम् ।
ददर्शसीतां ध्यायन्ती मशोकवनिकां गताम् ॥ ७३
निवेदयित्वाऽभिज्ञानं प्रवृत्तिंच निवेद्य च ।
समाश्वास्यच वैदेहीं मर्दयामास तोरणम् ॥ ७४

पञ्च सेनाग्रगान्हत्वा सप्त मन्त्रिसुतानपि ।
शूरमक्षं च निष्पिष्य ग्रहणं समुपागमत् ॥ ७५
अस्त्रेणोन्मुक्तमात्मानं ज्ञात्वा पैतामहाद्वरात् ।
मर्षयन्राक्षसा न्वीरो यन्त्रिण स्तान्यदृच्छया ॥ ७६
ततो दग्ध्वा पुरीं लङ्का मृतेसीतांचमैथिलीम् ।
रामाय प्रियमाख्यातुं पुनराया न्महाकपिः ॥ ७७
सोऽभिगम्य महात्मानं कृत्वारामं प्रदक्षिणम् ।
न्यवेदयदमेयात्मा "दृष्टासी तेति तत्त्वतः ॥ ७८
तत स्सुग्रीवसहितो गत्वा तीरं महोदधेः ।
समुद्रं क्षोभयामास शरै रादित्यसन्निभैः ॥ ७९
दर्शयामास चात्मानं समुद्र स्सरितां पतिः ।
समुद्रवचना च्चैव नळंसेतु मकारयत् ॥ ८०
तेन गत्वा पुरीं लङ्कां हत्वा रावणमाहवे ।
रामस्सीता मनुप्राप्य परां व्रीडा मुपागमत् ॥ ८१
ता मुवाच ततो रामः परुषं जनसंसदि ।
अमृष्यमाणा सा सीता विवेश ज्वलनं सती ॥ ८२
ततोऽग्नि वचनात्सीतां ज्ञात्वाविगतकल्मषाम् ।
बभौ रामस्सम्प्रहृष्टःपूजितस्सर्वदैवतैः ॥ ८३
कर्मणा तेन महता त्रैलोक्यं स चराचरम् ।
सदेवर्षिगणं तुष्टं राघवस्य महात्मनः ॥ ८४
अभिषिच्य च लङ्कायां राक्षसेन्द्रं विभीषणम् ।
कृतकृत्यस्तदा रामो विज्वरः प्रमुमोदह ॥ ८५

देवताभ्यो वरं प्राप्य समुत्थाप्यच वानरान् ।
अयोध्यां प्रस्थितो रामः पुष्पकेण सुहृद्वृतः ॥ ८६
भरद्वाजाश्रमं गत्वा राम स्सत्यपराक्रमः ।
भरतस्यान्तिकं रामो हनूमन्तं व्यसर्जयत् ॥ ८७
पुनराख्यायिकांजल्प न्सुग्रीवसहितश्च सः ।
पुष्पकं तत्समारुह्य नन्दिग्रामं ययौ तदा ॥ ८८
नन्दिग्रामे जटांहित्वा भ्रातृभि स्सहितोऽनघः ।
रामस्सीता मनुप्राप्य राज्यं पुनरवाप्तवान् ॥ ८९
प्रहृष्टोमुदितोलोकस्तुष्टःपुष्ट स्सुधार्मिकः ।
निरामयो ह्यरोगश्च दुर्भिक्षभयवर्जितः ॥ ९०
न पुत्रमरणं किंचि द्द्रक्ष्यन्ति पुरुषाःक्वचित् ।
नार्यश्चाविधवानित्यं भविष्यन्ति पतिव्रताः ॥ ९१
न चाग्निजं भयं किंचि न्नाप्सुमज्जान्तिजन्तवः ।
न वातजं भयं किंचिन्नापि ज्वरकृतं तथा ॥ ९२
न चापि क्षुद्भयं तत्र न तस्करभयं तथा ।
नगराणि च राष्ट्राणि धनधान्ययुतानि च ॥ ९३
नित्यं प्रमुदिता स्सर्वे यथा कृतयुगे तथा ।
अश्वमेधशतैरिष्ट्वा तथा बहुसुवर्णकैः ॥ ९४
गवां कोट्ययुतं दत्त्वा ब्रह्मलोकं प्रयास्यति ।
असंख्येयं धनं दत्त्वा ब्राह्मणेभ्यो महायशाः ॥ ९५
राजवंशाञ्छतगुणान्स्थापयिष्यंति राघवः ।
चातुर्वर्ण्यंच लोकेऽस्मिन्स्वेस्वे धर्मे नियोक्ष्यति ॥ ९६

दशवर्ष सहस्राणि दशवर्ष शतानि च ।
रामो राज्य मुपासित्वा ब्रह्मलोकं गमिष्यति ॥ ९७

इदं पवित्रं पापघ्नं पुण्यं वेदैश्च सम्मितम् ।
यः पठे द्रामचरितं सर्वपापैः प्रमुच्यते ॥ ९८

एत दाख्यान मायुष्यं पठन्रामायणं नरः ।
स पुत्रपौत्र स्सगणः प्रेत्य स्वर्गे महीयते ॥ ९९

पठन्द्विजो वागृषभत्वमीया त्स्यात्क्षत्रियो भूमिपतित्वमीयात् ।
वणिग्जनः पण्यफलत्व मीयाज्जनश्च शूद्रोऽपि महत्त्वमीयात् ॥

इत्यार्षे श्रीमद्रामायणे आदिकाव्ये चतुर्विंशत्सहस्रिकाया संहिताया
बालकाण्डे सक्षेपोनाम प्रथमस्सर्ग ॥

## ॥ द्वितीयस्सर्गः ॥

नारदस्य तु तद्वाक्यं श्रुत्वा वाक्यविशारदः ।
पूजयामास धर्मात्मा सहशिष्यो महामुनिः ॥ १

यथाव त्पूजितस्तेन देवर्षिर्नारदस्तदा ।
आपृष्ट्वै वाभ्यनुज्ञात स्स जगाम विहायसम् ॥ २

स मुहूर्तं गते तस्मिन्देवलोकं मुनिस्तदा ।
जगाम तमसातीरं जाह्नव्यास्त्वविदूरतः ॥ ३

स तु तीरं समासाद्य तमसाया महामुनिः ।
शिष्य माह स्थितं पार्श्वे दृष्ट्वा तीर्थ मकर्दमम् ॥ ४

“अकर्दम मिद तीर्थं भरद्वाज! निशामय! ।
रमणीयं प्रसन्नाम्बु सन्मनुष्यमनो यथा ॥ ५

न्यस्यतां कलशस्तात! दीयतां वल्कलं मम ।
इद मेवावगाहिष्ये तमसातीर्थमुत्तमम् ॥" ६
एव मुक्तो भरद्वाजो वाल्मीकेन महात्मना ।
प्रायच्छत मुने स्तस्य वल्कलं नियतोगुरोः ॥ ७
स शिष्यहस्ता दादाय वल्कलं नियतेन्द्रियः ।
विचचारह पश्यं स्तत्सर्वतो विपुलं वनम् ॥ ८
तस्याभ्याशेतु मिथुनं चरन्त मनपायिनम् ।
ददर्श भगवां स्तत्र क्रौञ्चयो श्चारुनिस्स्वनम् ॥ ९
तस्मात्तु मिथुना देकं पुमांसं पापनिश्चयः ।
जघान वैरनिलयो निषादस्तस्य पश्यतः ॥ १०
तं शोणितपरीताङ्गं वेष्टमानं महीतले ।
भार्या तु निहतं दृष्ट्वा रुराव करुणा गिरम् ॥ ११
वियुक्ता पतिना तेन द्विजेन सहचारिणा ।
ताम्रशीर्षेण मत्तेन पक्षिणा सहितेन वै ॥ १२
तदा तु तं द्विजं दृष्ट्वा निषादेन निपातितम् ।
ऋषे धर्मात्मनस्तस्य कारुण्य समपद्यत ॥ १३
ततः करुणवेदित्वा दधर्मोऽयमिति द्विजः ।
निशाम्य रुदतीं क्रौञ्ची मिदं वचनमब्रवीत् ॥ १४
"मा निषाद प्रतिष्ठां त्व मगम श्शाश्वतीस्समाः ।
यत्क्रौञ्च मिथुनादेक मवधीः काममोहितम् ॥ १५
तस्यैवं ब्रुवत श्चिन्ता बभूव हृदि वीक्षतः ।
शोकार्तेनास्य शकुनेः किमिदं व्याहृतं मया ॥ १६

चिन्तयन्स महाप्राज्ञ श्चकार मतिमान्मतिम् ।
शिष्यं चैवाब्रवी द्वाक्य मिदं स मुनिपुङ्गवः ॥ १७
"पादबद्धोऽक्षरसमस्तन्त्रीलयसमन्वितः ।
शोकार्तस्य प्रवृत्तो मे श्लोको भवतु नान्यथा ॥ १८
शिष्यस्तु तस्य ब्रुवतो मुने र्वाक्य मनुत्तमम् ।
प्रतिजग्राह संहृष्टस्तस्य तुष्टोऽभवद्गुरुः ॥ १९
सोऽभिषेकं ततः कृत्वा तीर्थे तस्मि न्यथाविधि ।
तमेव चिन्तयन्नर्थ मुपावर्तत वैमुनिः ॥ २०
भरद्वाजस्तत श्शिष्यो विनीतश्श्रुतवान्मुनेः ।
कलशं पूर्णमादाय पृष्ठतोऽनुजगाम ह ॥ २१
स प्रविश्याश्रमपदं शिष्येण सह धर्मवित् ।
उपविष्टः कथाश्चान्या श्चकार ध्यानमास्थितः ॥ २२
आजगाम ततो ब्रह्मा लोककर्ता स्वयंप्रभुः ।
चतुर्मुखो महातेजा द्रष्टुं त मुनिपुङ्गवम् ॥ २३
वाल्मीकि रथ तं दृष्ट्वा सहसोत्थाय वाग्यतः ।
प्राञ्जलिः प्रयतो भूत्वा तस्थौ परमविस्मितः ॥ २४
पूजयामास तं देवं पाद्यार्घ्यासन वन्दनैः ।
प्रणम्य विधिवच्चैनं पृष्ट्वाऽनामय मव्ययम् ॥ २५
अथोपविश्य भगवा नासने परमार्चिते ।
वाल्मीकये महर्षये सन्दिदेशासनं ततः ॥ २६
ब्रह्मणा समनुज्ञात स्सोऽप्युपाविश दासने ।
उपविष्टे तदा तस्मिन्साक्षाल्लोकपितामहे ॥ २७

तद्गतेनैव मनसा वाल्मीकि र्ध्यानमास्थितः ।
पापात्मना कृतं कष्टं वैरग्रहणबुद्धिना ॥ २८
यस्तादृशं चारुरवं क्रौञ्चं हन्या दकारणात् ।
शोचन्नेव मुहुःक्रौञ्ची मुपश्लोक मिमं पुनः ॥ २९
जगावन्तर्गतमना भूत्वा शोकपरायणः ।
त मुवाच ततो ब्रह्मा प्रहस न्मुनिपुङ्गवम् ॥ ३०
"श्लोक एव त्वया बद्धो नात्रकार्या विचारणा ।
मच्छन्दा देव ते ब्रह्म! न्प्रवृत्तेयं सरस्वती ॥ ३१
रामस्य चरितं सर्वं कुरुत्व मृषिसत्तम! ।
धर्मात्मनो गुणवतो लोके रामस्य धीमतः ॥ ३२
वृत्तं कथय वीरस्य यथा ते नारदाच्छ्रुतम् ।
रहस्यं च प्रकाशं च यद्वृत्तं तस्य धीमतः ॥ ३३
रामस्य सह सौमित्रे राक्षसानां च सर्वशः ।
वैदेह्या श्चापि यद्वृत्तं प्रकाशं यदिवा रहः ॥ ३४
तच्चाप्यविदितं सर्वं विदितं ते भविष्यति ।
न तेवागनृता काव्ये काचिदत्र भविष्यति ॥ ३५
कुरु रामकथां पुण्यां श्लोकबद्धां मनोरमाम् ।
यावत्स्थास्यन्ति गिरयस्सरितश्च महीतले ॥ ३६
तावद्रामायणकथा लोकेषु प्रचरिष्यति ।
यावद्रामायणकथा त्वत्कृता प्रचरिष्यति ॥ ३७
तावदूर्ध्वमधश्चत्वं मल्लोकेषु निवत्स्यसि ।"
इत्युक्त्वा भगवान्ब्रह्मा तत्रैवान्तरधीयत ॥ ३८

तत स्सशिष्यो भगवान्मुनि र्विस्मय माययौ ।
तस्य शिष्या स्तत स्सर्वे जगुश्श्लोकमिमं पुनः ॥ ३९
मुहुर्मुहुः प्रीयमाणाः प्राहुश्च भृशविस्मिताः ।
"समाक्षरैश्चतुर्भिर्यः पादैर्गीतो महर्षिणा ॥ ४०
सोऽनुव्याहरणाद्भूय श्श्लोकश्श्लोकत्व मागतः ।"
तस्यबुद्धि रियं जाता वाल्मीके र्भावितात्मनः ॥ ४१
"कृत्स्नं रामायणं काव्य मीदृशैःकरवाण्यहम् ।"
उदारवृत्तार्थपदैर्मनोरमै स्तत स्स रामस्य चकार कीर्तिमान् ।
समाक्षरै श्श्लोकशतै र्यशस्विनो यशस्करं काव्य मुदारधीर्मुनिः ॥
तदुपगतसमाससंधियोगं सममधुरोपनतार्थ वाक्यबद्धम् ।
रघुवरचरितं मुनिप्रणीतं दशशिरसश्च वधं निशामयध्वम् ॥ ४३

इति श्रीमद्बालकाण्डे द्वितीयस्सर्गः ॥

## ॥ तृतीयस्सर्गः ॥

श्रुत्वावस्तुसमग्रं तद्धर्मात्मा धर्मसहितम् ।
व्यक्तमन्वेषते भूयोयद्वृत्तं तस्य धीमतः ॥ १
उपस्पृश्योदकं सम्यङ्मुनि स्स्थित्वा कृतांजलिः ।
प्राचीनाग्रेषु दर्भेषु धर्मेणान्वेषते गतिम् ॥ २
रामलक्ष्मणसीताभी राज्ञा दशरथेन च ।
सभार्येण सराष्ट्रेण यत्प्राप्तं तत्र तत्त्वतः ॥ ३
हसितं भाषितं यच्चगतिर्या यच्चचेष्टितम् ।
तत्सर्वंधर्मवीर्येण यथावत्सम्प्रपश्यति ॥ ४

स्त्रीतृतीयेन च तदा यत्प्राप्तं चरतावने ।
सत्यसंधेन रामेण तत्सर्वं चान्ववैक्षत ॥ ५
ततः पश्यति धर्मात्वा तत्सर्व योगमास्थितः ।
पुरायत्तत्र निर्वृत्तं पाणा वामलक यथा ॥ ६
तत्सर्वं तत्त्वतो दृष्ट्वा धर्मेण स महाद्युतिः ।
अभिरामस्य रामस्यचरितं कर्तु मुद्यतः ॥ ७
कामार्थगुणसंयुक्तं धर्मार्थगुणविस्तरम् ।
समुद्रमिवरत्नाढ्यं सर्वश्रुतिमनोहरम् ॥ ८
स यथा कथितं पूर्व नारदेन महर्षिणा ।
रघुवंशस्य चरितं चकार भगवा नृषिः ॥ ९
जन्म रामस्य सुमह द्वीर्यं सर्वानुकूलताम् ।
लोकस्य प्रियता क्षान्ति सौम्यतां सत्यशीलताम् ॥ १०
नानाचित्र कथाश्चान्या विश्वामित्रसमागमे ।
जानक्याश्च विवाहंच धनुषश्च विभेदनम् ॥ ११
रामरामविवादं च गुणान्दाशरथेस्तथा ।
तथाऽभिषेकं रामस्यकैकेय्यादुष्टभावताम् ॥ १२
विघातं चाभिषेकस्य रामस्य च विवासनम् ।
राज्ञश्शोक विलापं च परलोकस्य चाश्रयम् ॥ १३
प्रकृतीनां विषादंच प्रकृतीनां विसर्जनम् ।
निषादाधिपसंवादं सूतोपावर्तनं तथा ॥ १४
गङ्गायाश्चापि सन्तारं भरद्वाजस्य दर्शनम् ।
भरद्वाजाभ्यनुज्ञाना चित्रकूटस्य दर्शनम् ॥ १५

वास्तुकर्म निवेशं च भरतागमनं तथा ।
प्रसादनंच रामस्य पितुश्च सलिलक्रियाम् ॥ १६
पादुकाग्र्याभिषेकं च नन्दिग्रामनिवासनम् ।
दण्डकारण्यगमनं विराधस्य वधं तथा ॥ १७
दर्शनं शरभङ्गस्य सुतीक्ष्णेन समागमम् ।
अनसूयासहास्यामप्यङ्गरागस्य चार्पणम् ॥ १८
अगस्त्यदर्शनं चैव जटायो रभिसंगमम् ।
पञ्चवट्याश्चगमनंशूर्पणख्याश्चदर्शनम् ॥ १९
शूर्पणख्याश्च संवादं विरूपकरण तथा ।
वधं खरत्रिशिरसो रुत्थानं रावणस्य च ॥ २०
मारीचस्य वधं चैव वैदेह्या हरण तथा ।
राघवस्य विलापंच गृध्रराजनिबर्हणम् ॥ २१
कबन्धदर्शनं चापि पम्पायाश्चापिदर्शनम् ।
शबर्या दर्शनं चैव हनूमद्दर्शन तथा ॥ २२
[विलापंचैव पम्पायां राघवस्य महात्मनः ।]
ऋश्यमूकस्य गमनं सुग्रीवेण समागमम् ।
प्रत्ययोत्पादनं सख्यं वालिसुग्रीवविग्रहम् ॥ २३
वालिप्रमथनंचैव सुग्रीवप्रतिपादनम् ।
ताराविलापं समयं वर्षरात्रनिवासनम् ॥ २४
कोपं राघवसिंहस्य बलाना मुपसंग्रहम् ।
दिशः प्रस्थापनं चैव पृथिव्याश्च निवेदनम् ॥ २५
अङ्गुळीयकदानञ्च ऋक्षस्य बिलदर्शनम् ।
प्रायोपवेशनं चापि सम्पाते श्चापि दर्शनम् ॥ २६

पर्वतारोहणं चापि सागरस्य च लङ्घनम् ।
समुद्रवचनाच्चैव मैनाकस्य च दर्शनम् ॥ २७
सिंहिकायाश्च निधनं लङ्कामलयदर्शनम् ।
रात्रौ लङ्काप्रवेशं च एकस्यापि विचिन्तनम् ॥ २८
आपानभूमिगमन मवरोधस्य दर्शनम् ।
दर्शन रावणस्यापि पुष्पकस्य च दर्शनम् ॥ २९
अशोकवनिकायानं सीतायाश्चापि दर्शनम् ।
राक्षसीतर्जनं चैव त्रिजटास्वप्नदर्शनम् ॥ ३०
अभिज्ञानप्रदानञ्च रावणस्य च दर्शनम् ।
मणिप्रदानं सीताया वृक्षभङ्गं तथैव च ॥ ३१
राक्षसीविद्रवं चैव किङ्कराणां निबर्हणम् ।
ग्रहणं वायुसूनोश्च लङ्कादाहाभिगर्जनम् ॥ ३२
प्रतिप्लवनमेवाथ मधूनां हरण तथा ।
राघवाश्वासनं चापि मणिनिर्यातनं तथा ॥ ३३
विभीषणेन ससर्ग वधोपायनिवेदनम् ।
सङ्गमश्च समुद्रेण नळसेतोश्च बन्धनम् ॥ ३४
प्रतारश्च समुद्रस्य रात्रौ लङ्कावरोधनम् ।
कुम्भकर्णस्य निधनं मेघनादनिबर्हणम् ॥ ३५
रावणस्य विनाशश्च सीतावाप्ति मरेःपुरे ।
विभीषणाभिषेकं च पुष्पकस्य च दर्शनम् ॥ ३६
अयोध्यायाश्च गमनं [भरद्वाजसमागमम् ।

प्रेषणं वायुपुत्रस्य] भरतेन समागमम् ।
रामाभिषेकाभ्युदयं सर्वसैन्यविसर्जनम् ॥ ३७
[स्वराष्ट्ररञ्जनं चैव वैदेह्याश्च विसर्जनम् ।]
अनागतं च यत्किञ्चिद्रामस्य वसुधातले ।
तच्चकारोत्तरे काव्ये वाल्मीकिर्भगवानृषिः ॥ ३८॥

इति श्रीमद्बालकाण्डे तृतीयस्सर्गः ॥

## ॥ चतुर्थस्सर्गः ॥

प्राप्तराज्यस्य रामस्य वाल्मीकिर्भगवानृषिः ।
चकार चरितं कृत्स्नं विचित्रपदमात्मवान् ॥ १
चतुर्विंशत्सहस्राणि श्लोकानामुक्तवानृषिः ।
तथा सर्गशतान्पञ्च षट्काण्डानि तथोत्तरम् ॥ २
कृत्वापि तन्महाप्राज्ञस्सभविष्यं सहोत्तरम् ।
चिन्तयामास "को न्वेतत्प्रयुञ्जीया" दिति प्रभुः ॥ ३
तस्य चिन्तयमानस्य महर्षेर्भावितात्मनः ।
अगृह्णीतां ततः पादौ मुनिवेषौ कुशीलवौ ॥ ४
कुशीलवौ तु धर्मज्ञौ राजपुत्रौ यशस्विनौ ।
भ्रातरौ स्वरसम्पन्नौ ददर्शाश्रमवासिनौ ॥ ५
स तु मेधाविनौ दृष्ट्वा वेदेषु परिनिष्ठितौ ।
वेदोपबृंहणार्थाय तावग्राहयत प्रभुः ॥ ६
काव्यं रामायणं कृत्स्नं सीतायाश्चरितं महत् ।
पौलस्त्यवध मित्येव चकार चरितव्रतः ॥ ७

पाठ्ये गेये च मधुरं प्रमाणैस्त्रिभिरन्वितम् ।
जातिभिस्सप्तभिर्बद्धं तन्त्रीलयसमन्वितम् ॥ ८
रसैश्शृङ्गार कारुण्य हास्य वीरभयानकैः ।
रौद्रादिभिश्च संयुक्तं काव्यमेत दगायताम् ॥ ९
तौ तु गान्धर्वतत्त्वज्ञौ मूर्छनास्थानकोविदौ ।
भ्रातरौ स्वरसम्पन्नौ गन्धर्वाविव रूपिणौ ॥ १०
रूपलक्षणसम्पन्नौ मधुरस्वरभाषिणौ ।
बिम्बादिवोद्धृतौ बिम्बौ रामदेहात्तथापरौ ॥ ११
तौ राजपुत्रौ कात्स्न्र्येन धर्म्यमाख्यानमुत्तमम् ।
वाचो विधेयं तत्सर्वं कृत्वा काव्य मनिन्दितौ ॥ १२
ऋषीणां च द्विजातीनां साधूनां च समागमे ।
यथोपदेशं तत्त्वज्ञौ जगतुस्तौ समाहितौ ॥ १३
महात्मानौ महाभागौ सर्वलक्षणलक्षितौ ।
तौ कदाचित्समेतानामृषीणां भावितात्मनाम् ॥ १४
आसीनानां समीपस्थाविदं काव्य मगायताम् ।
तच्छ्रुत्वा मुनयस्सर्वे बाष्पपर्याकुलेक्षणाः ॥ १५
साधु साध्विति तावूचुः परं विस्मय मागताः ।
ते प्रीतमनसस्सर्वे मुनयो धर्मवत्सलाः ॥ १६
प्रशशंसुः प्रशस्तव्यौ गायमानौ कुशिलवौ ।
अहो गीतस्य माधुर्यं श्लोकानां च विशेषतः ॥ १७
चिरनिर्वृत्तमप्येतत्प्रत्यक्षमिव दर्शितम् ।
प्रविश्य तावुभौ सुष्ठु भावं सम्यगगायताम् ॥ १८

सहितौ मधुरं रक्तं सम्पन्नं स्वरसम्पदा ।
एवं प्रशस्यमानौ तौ तपश्श्लाघ्यैर्महात्मभिः ॥ १९
संरक्ततर मत्यर्थं मधुरं तावगायताम् ।
प्रीतः कश्चिन्मुनिस्ताभ्यां संस्थितः कलशं ददौ ॥ २०
प्रसन्नो वल्कलं कश्चिद्ददौ ताभ्यां महायशाः ।
[अन्यः कृष्णाजिनं प्रादाद्यज्ञसूत्रं तथाऽपरः ॥ २१
कश्चित्कमण्डलुं प्रादान्मौञ्जीमन्यो महामुनिः ।
वाससी द्वे ददावन्यः कुठार मपरो मुनिः ॥ २२
काषाय मपरो वस्त्रं चीर मन्यो ददौ मुनिः ।
जटाबन्धन मन्यस्तु कुशनां च मुदान्वितः ॥ २३
यज्ञभाण्ड मृषिः कश्चित्काष्टभार तथाऽपरः
औदुम्बरीं ब्रुसीमन्यस्स्वस्ति केचित्तथावदन ॥ २४
आयुष्यमपरे प्रोचु मुंदा तत्र महर्षयः ।
ददुरेवं वरं प्रीता ऋषय स्सत्यवादिनः ॥] २५
आश्चर्य मिद माख्यानं मुनिना सम्प्रकीर्तितम् ।
परं कवीना माधारं समाप्तं च यथाक्रमम् ॥ २६
अभिगीत मिदं गीतं सर्वगीतेषु कोविदौ ।
आयुष्यं पुष्टिजनक सर्वश्रुतिमनोहरम् ॥ २७
प्रशस्यमानौ सर्वत्र कदाचित्तत्र गायकौ ।
रथ्यासु राजमार्गेषु ददर्श भरताग्रजः ॥ २८
स्ववेश्मं चानीय तदा भ्रातरौ स कुशीलवौ ।
पूजयामास पूजार्हौ रामश्शत्रुनिबर्हणः ॥ २९

आसीनः काञ्चने दिव्ये स च सिंहासने प्रभुः ।
उपोपविष्टस्सचिवैः भ्रातृभिश्च परन्तपः ॥ ३०

दृष्ट्वा तु रूपसम्पन्नौ तावुभौ नियतस्तदा ।
उवाच लक्ष्मणं रामः शत्रुघ्नं भरतं तदा ॥ ३१

श्रूयता मिद माख्यान मनयो र्देववर्चसोः ।
विचित्रार्थपदं सम्यग्गायिनौ ता वचोदयत् ॥ ३२

तौ चापि मधुरं रक्तं स्वंचितायतनिस्वनम् ।
तन्त्रीलयवदत्यर्थं विश्रुतार्थ मगायताम् ॥ ३३

ह्लादयत्सर्वगात्राणि मनांसि हृदयानि च ।
श्रोत्राश्रयसुखं गेयं तद्बभौ जनसंसदि ॥ ३४

इमौ मुनी पार्थिवलक्षणान्वितौ कुशीलवौ चैव महातपस्विनौ ।
ममापि तद्भूतिकरं प्रवक्ष्यते महानुभावं चरितं निबोधत ॥ ३५

ततस्तु तौ रामवचःप्रचोदिता वगायतां मार्गविधानसम्पदा ।
स चापि रामः परिषद्गतश्शनैर्बुभूषया सक्तमना बभूवह ॥ ३६

इति श्रीमद्बालकाण्डे चतुर्थस्सर्ग ॥

---

## ॥ पञ्चमस्सर्गः ॥

सर्वा पूर्व मियं येषा मासीत्कृत्स्ना वसुन्धरा ।
प्रजापतिमुपादाय नृपाणां जयशालिनाम् ॥ १

येषां स सगरो नाम सागरो येन खानितः ।
षष्टिः पुत्रसहस्राणि यं यान्तं पर्यवारयन् ॥ २

इक्ष्वाकूणामिदं तेषां राज्ञां वंशे महात्मनाम् ।
महदुत्पन्न माख्यानं रामायणमिति श्रुतम् ॥ ३
तदिदं वर्तयिष्यामि सर्वं निखिल मादितः ।
धर्मकामार्थसहितं श्रोतव्य मनसूयया ॥ ४
कोसलो नाम मुदितः स्फीतो जनपदो महान् ।
निविष्टस्सरयूतीरे प्रभूतधनधान्यवान् ॥ ५
अयोध्यानाम नगरी तत्रासील्लोकविश्रुता ।
मनुना मानवेन्द्रेण यापुरी निर्मिता स्वयम् ॥ ६
आयता दशच द्वेच योजनानि महापुरी ।
श्रीमती त्रीणि विस्तीर्णा सुविभक्तमहापथा ॥ ७
राजमार्गेण महता सुविभक्तेन शोभिता ।
मुक्तपुष्पावकीर्णेन जलसिक्तेन नित्यशः ॥ ८
तां तु राजा दशरथो महाराष्ट्रविवर्धनः ।
पुरीमावासयामास दिवं देवपतिर्यथा ॥ ९
कवाटतोरणवतीं सुविभक्तान्तरापणाम् ।
सर्वयन्त्रायुधवती मुपेतां सर्वशिल्पिभिः ॥ १०
सूतमागधसम्बाधां श्रीमती मतुलप्रभाम् ।
उच्चाट्टालध्वजवतीं शतघ्निशतसङ्कुलाम् ॥ ११
वधूनाटकसंघैश्च संयुक्तां सर्वतःपुरीम् ।
उद्यानाम्रवणोपेतां महतीं सालमेखलाम् ॥ १२
दुर्गगम्भीरपरिघां दुर्गामन्यै र्दुरासदाम् ।
वाजिवारणसम्पूर्णां गोभिरुष्ट्रैः खरैस्तथा ॥ १३

सामन्तराजसंघैश्च बलिकर्मभि रावृताम् ।
नानादेशनिवासैश्च वणिग्भिरुपशोभिताम् ॥ १४

प्रासादै रत्नविकृतैः पर्वतैरुपशोभिताम् ।
कूटागारैश्च सम्पूर्णामिन्द्रस्येवामरावतीम् ॥ १५

चित्रा मष्टापदाकारां वरनारीगणैर्युताम् ।
सर्वरत्नसमाकीर्णां विमानगृहशोभिताम् ॥ १६

गृहगाढा मविच्छिद्रां समभूमौ निवेशिताम् ।
शालितण्डुलसम्पूर्णा मिक्षुकाण्डरसोदकाम् ॥ १७

दुन्दुभीभिर्मृदंगैश्च वीणाभिः पणवैस्तथा ।
नादितां भृशमत्यर्थं पृथिव्यां ता मनुत्तमाम् ॥ १८

विमान मिव सिद्धानां तपसाऽधिगतं दिवि ।
[न कुबेरस्य नेन्द्रस्य यमस्य वरुणस्य च ॥ १९

ब्रह्मणोऽपि पुरी रम्या नेदृशी च स्वयंभुवः ।]
सुनिवेशितवेश्मान्तां नरोत्तमसमावृताम् ॥ २०

ये च बाणै र्नविध्यन्ति विविक्त मपरापरम् ।
शब्दवेध्यं च विततं लघुहस्ता विशारदाः ॥ २१

सिंहव्याघ्रवराहाणां मत्तानां नर्दतां वने ।
हन्तारो निशितैश्शस्त्रैर्बलाद्बाहुबलादपि ॥ २२

तादृशानां सहस्रैस्तामभिपूर्णां महारथैः ।
पुरी मावासयामास राजा दशरथस्तदा ॥ २३

ता मग्निमद्भिर्गुणवद्भिरावृतां द्विजोत्तमैर्वेदषडङ्गपारगैः ।
सहस्रदैस्सत्यरतैर्महात्मभिर्महर्षिकल्पैर्ऋषिभिश्च केवलैः ॥ २४

इति श्रीमद्बालकाण्डे पञ्चमस्सर्गः ॥

## ॥ षष्ठस्सर्गः ॥

पुर्यां तस्यामयोध्यायां वेदवित्सर्वसंग्रहः ।
दीर्घदर्शी महातेजाः पौरजानपदप्रियः ॥ १

इक्ष्वाकूणामतिरथो यज्वा धर्मपरो वशी ।
महर्षिकल्पो राजर्षिस्त्रिषु लोकेषु विश्रुतः ॥ २

बलवान्निहतामित्रो मित्रवान्विजितेन्द्रियः ।
धनैश्च संग्रहैश्चान्यैश्शक्रवैश्रवणोपमः ॥ ३

यथा मनुर्महातेजा लोकस्य परिरक्षिता ।
तथा दशरथो राजा वसन्जगदपालयत् ॥ ४

तेन सत्याभिसन्धेन त्रिवर्गमनुतिष्ठता ।
पालिता सा पुरी श्रेष्ठा इन्द्रेणेवामरावती ॥ ५

तस्मिन्पुरवरे हृष्टा धर्मात्मानो बहुश्रुताः ।
नरास्तुष्टा धनैस्स्वैस्स्वैरलुब्धास्सत्यवादिनः ॥ ६

नाल्पसन्निचयः कश्चिदासीत्तस्मिन्पुरोत्तमे ।
कुटुम्बी यो ह्यसिद्धार्थोऽगवाश्वधनधान्यवान् ॥ ७

कामी वा न कदर्यो वा नृशंसः पुरुषः क्वचित् ।
द्रष्टुं शक्यमयोध्यायां नाविद्वान्न च नास्तिकः ॥ ८

सर्वे नराश्च नार्यश्च धर्मशीलास्सुसंयताः ।
उदिताश्शीलवृत्ताभ्यां महर्षय इवामलाः ॥ ९

नाकुण्डली नामकुटी नास्रग्वी नाल्पभोगवान् ।
नामृष्टो नानुलिप्ताङ्गो नासुगन्धश्च विद्यते ॥ १०

नामृष्टभोजी नादाता नाप्यनङ्गदनिष्कधृक् ।
नाहस्ताभरणोवापि दृश्यते नाप्यनात्मवान् ॥ ११
नानाहिताग्निर्नायज्वा न क्षुद्रो वा न तस्करः ।
कश्चिदासीदयोध्यायां न च निर्वृत्तसङ्करः ॥ १२
स्वकर्मनिरता नित्यं ब्राह्मणा विजितेन्द्रियाः ।
दानाध्ययनशीलाश्च संयताश्च प्रतिग्रहे ॥ १३
न नास्तिको नानृतको न कश्चि दबहुश्रुतः ।
नासूयको न चाशक्तो नाविद्वान्विद्यते तदा ॥ १४
नाषडङ्गविदत्रासीन्नाव्रतो नासहस्रदः ।
न दीनः क्षिप्तचित्तो वा व्यथितो वाऽपि कश्चन ॥ १५
कश्चि न्नरो वा नारी वा नाश्रीमान्नाप्यरूपवान् ।
द्रष्टुं शक्य मयोध्यायां नापि राजन्यभक्तिमान् ॥ १६
वर्णेष्वग्र्यचतुर्थेषु देवतातिथिपूजकाः ।
कृतज्ञा श्च वदान्याश्च शूरा विक्रमसंयुताः ॥ १७
दीर्घायुषो नरास्सर्वे धर्मं सत्यं च संश्रिताः ।
सहिताः पुत्रपौत्रैश्च नित्यं स्त्रीभिः पुरोत्तमे ॥ १८
क्षत्रं ब्रह्ममुखं चासीद्वैश्याः क्षत्रमनुव्रताः ।
शूद्रास्स्वधर्मनिरता स्त्री न्वर्णानुपचारिणः ॥ १९
सा तेनेक्ष्वाकुनाथेन पुरी सुपरिरक्षिता ।
यथा पुरस्तान्मनुना मानवेन्द्रेण धीमता ॥ २०
योधानामग्निकल्पानां पेशलानां सुवर्चसाम् ।
सम्पूर्णा कृतविद्यानां गुहे केसरिणामिव ॥ २१

काम्भोजविषये जातैर्बाह्लीकैश्च हयोत्तमैः ।
वनायुजैर्नदीजैश्च पूर्णा हरिहयोत्तमैः ॥ २२
विन्ध्यपर्वतजैर्मत्तैः पूर्णा हैमवतैरपि ।
मदान्वितैरतिबलैर्मातंगैः पर्वतोपमैः ॥ २३
ऐरावतकुलीनैश्च महापद्मकुलैस्तथा ।
अञ्जनादपि निष्पन्नैर्वामनादपि च द्विपैः ॥ २४
भद्रैर्मन्द्रैर्मृगैश्चैव भद्रमन्द्रमृगैस्तथा ।
भद्रमन्द्रैर्भद्रमृगैर्मृगमन्द्रैश्च सा पुरी ॥ २५
नित्यमत्तैस्सदा पूर्णा नागैरचलसन्निभैः ।
सा योजने च द्वे भूयस्सत्यनामा प्रकाशते ॥ २६
यस्यां दशरथो राजा वसञ्जगदपालयत् ।
तां पुरीं स महातेजा राजा दशरथो महान् ॥ २७
शशास शमितामित्रो नक्षत्राणीव चन्द्रमाः ।
तां सत्यनामां दृढतोरणार्गळां गृहैर्विचित्रैरुपशोभितां शिवाम् ।
पुरीमयोध्यां नृसहस्रसङ्कुलां शशास वै शक्रसमो महीपतिः ॥ २८

इति श्रीमद्बालकाण्डे षष्ठस्सर्गः ॥

## ॥ सप्तमस्सर्गः ॥

तस्यामात्या गुणैरासन्निक्ष्वाकोस्तु महात्मनः ।
मन्त्रज्ञाश्चेङ्गितज्ञाश्च नित्यं प्रियहिते रताः ॥ १
अष्टौ बभूवुर्वीरस्य तस्यामात्या यशस्विनः ।
शुचयश्चानुरक्ताश्च राजकृत्येषु नित्यशः ॥ २

धृष्टि र्जयन्तो विजयस्सिद्धार्थो ह्यर्थसाधकः ।
अशोको मन्त्रपालश्च सुमन्त्रश्चाष्टमोऽभवत् ॥ ३

ऋत्विजौ द्वावभिमतौ तस्यास्तामृषिसत्तमौ ।
वसिष्ठो वामदेवश्च मन्त्रिणश्च तथाऽपरे ॥ ४

विद्याविनीता ह्रीमन्तः कुशला नियतेन्द्रियाः ।
[परस्परानुरक्ताश्च नीतिमन्तो बहुश्रुताः]
श्रीमन्तश्च महात्मानश्शास्त्रज्ञा दृढविक्रमाः ॥ ५

कीर्तिमन्तः प्रणिहिता यथावचनकारिणः ।
तेजःक्षमायशःप्राप्तास्स्मितपूर्वाभिभाषिणः ॥ ६

क्रोधात्कामार्थहेतो र्वा न ब्रूयुरनृतं वचः ।
तेषामविदितं किंचित्स्वेषु नास्ति परेषु वा ॥ ७

क्रियमाणं कृतं वापि चारेणापि चिकीर्षितम् ।
कुशला व्यवहारेषु सौहृदेषु परीक्षिताः ॥ ८

प्राप्तकालं तु ते दण्डं धारयेयुस्सुतेष्वपि ।
कोशसंग्रहणे युक्ता बलस्य च परिग्रहे ॥ ९

अहितं चापिपुरुषं न विहिंस्यु रदूषकम् ।
वीराश्च नियतोत्साहा राजशास्त्रमनुव्रताः ॥ १०

शुचीनां रक्षितारश्च नित्यं विषयवासिनाम् ।
ब्रह्मक्षत्रमहिंसन्तस्ते कोशं समपूरयन् ॥ ११

सुतीक्ष्णदण्डास्संप्रेक्ष्य पुरुषस्य बलाबलम् ।
शुचीनामेकबुद्धीनां सर्वेषां सम्प्रजानताम् ॥ १२

नासीत्पुरेवा राष्ट्रेवा मृषावादी नरः क्वचित् ।
कश्चिन्न दुष्टस्तत्रासीत्परदाररतो नरः ॥ १३
प्रशान्तं सर्वमेवासीद्राष्ट्रं पुरवरं च तत् ।
सुवाससस्सुवेषाश्चते च सर्वे सुशीलिनः ॥ १४
हितार्थं च नरेन्द्रस्य जाग्रतो नयचक्षुषा ।
गुरौ गुणगृहीताश्च प्रख्याताश्च पराक्रमे ॥ १५
विदेशेष्वपि विख्यातास्सर्वतो बुद्धिनिश्चयात् ।
सन्धिविग्रहतत्त्वज्ञाः प्रकृत्यासम्पदान्विताः ॥ १६
मन्त्रसंवरणे शक्ताश्श्लक्ष्णास्सूक्ष्मासु बुद्धिषु ।
नीतिशास्त्रविशेषज्ञास्सततं प्रियवादिनः ॥ १७
ईदृशैस्तैरमात्यैस्तु राजा दशरथोऽनघः ।
उपपन्नो गुणोपेतैरन्वशासद्वसुन्धराम् ॥ १८
अवेक्षमाणश्चारेण प्रजाधर्मेण रञ्जयन् ।
प्रजानां पालनं कुर्वन्नधर्मं परिवर्जयन् ॥ १९
विश्रुतस्त्रिषु लोकेषु वदान्यस्सत्यसङ्गरः ।
स तत्र पुरुषव्याघ्रश्शशास पृथिवीमिमाम् ॥ २०
नाध्यगच्छद्विशिष्टं वा तुल्यं वा शत्रुमात्मनः ।
मित्रवान्नतसामन्तः प्रतापहतकंटकः ॥ २१
स शशास जगद्राजा दिवं देवपतिर्यथा ।
तैर्मन्त्रिभिर्मन्त्रहिते नियुक्तैर्वृतोऽनुरक्तैः कुशलैस्समर्थैः ॥ २२
स पार्थिवो दीप्तिमवाप युक्त स्तेजोमयैर्गोभिरिवोदितोऽर्कः ।

इति श्रीमद्बालकाण्डे सप्तमस्सर्गः ॥

## ॥ अष्टमस्सर्गः ॥

तस्य त्वेवं प्रभावस्य धर्मज्ञस्य महात्मनः ।
सुतार्थं तप्यमानस्य नासीद्वंशकरस्सुतः ॥ १
चिन्तयानस्य तस्यैवं बुद्धिरासीन्महात्मनः ।
सुतार्थं हयमेधेन किमर्थं न यजाम्यहम् ॥ २
स निश्चितां मतिं कृत्वा यष्टव्यमिति बुद्धिमान् ।
मन्त्रिभिस्सह धर्मात्मा सर्वैरेव कृतात्मभिः ॥ ३
ततोऽब्रवीदिदं राजा सुमन्त्रं मन्त्रिसत्तमम् ।
"शीघ्रमानय मे सर्वान्गुरूं स्तान्सपुरोहितान् ॥" ४
ततस्सुमन्त्रस्त्वरितं गत्वा त्वरितविक्रमः ।
समानयत्स तान्सर्वान्समस्तान्वेदपारगान् ॥ ५
सुयज्ञं वामदेवं च जाबालिमथ काश्यपम् ।
पुरोहितं वसिष्ठं च ये चान्ये द्विजसत्तमाः ॥ ६
तान्पूजयित्वा धर्मात्मा राजा दशरथस्तदा ।
इदं धर्मार्थसहितं श्लक्ष्णं वचनमब्रवीत् ॥ ७
"मम लालप्यमानस्य पुत्रार्थं नास्ति वै सुखम् ।
तदर्थं हयमेधेन यक्ष्यामीति मतिर्मम ॥ ८
तदहं यष्टु मिच्छामि शास्त्रदृष्टेन कर्मणा ।
कथं प्राप्स्याम्यहं कामं बुद्धिरत्र विचार्यताम् ॥" ९
तत "स्सा"ध्विति तद्वाक्यं ब्राह्मणाः प्रत्यपूजयन् ।
वसिष्ठप्रमुखास्सर्वे पार्थिवस्य मुखाच्च्युतम् ॥ १०

ऊचुश्च परमप्रीतास्सर्वे दशरथं वचः ।
“सम्भारास्सम्भ्रियन्तान्ते तुरगश्च विमुच्यताम् ॥ ११
[सरय्वाश्चोत्तरे तीरे यज्ञभूमिर्विधीयताम् ।
सर्वथा प्राप्स्यसे पुत्रानभिप्रेतांश्च पार्थिव ॥ १२
यस्य ते धार्मिकी बुद्धिरियं पुत्रार्थ मागता ।”
ततः प्रीतोऽभवद्राजा श्रुत्वैतद्द्विजभाषितम् ॥ १३
अमात्यांश्चाब्रवीद्राजा हर्षपर्याकुलेक्षणः ।
“सम्भारास्सम्भ्रियन्तां मे गुरूणां वचनादिह ॥ १४
समर्थाधिष्ठितश्चाश्वस्सोपाध्यायो विमुच्यताम् ।
सरय्वाश्चोत्तरे तीरे यज्ञभूमिर्विधीयताम् ॥ १५
शान्तयश्चाभिवर्धन्तां यथाकल्पं यथाविधि ।
शक्यः प्राप्तुमयं यज्ञ स्सर्वेणापि महीक्षिता ॥ १६
नापराधो भवेत्कष्टो यद्यस्मिन्क्रतुसत्तमे ।
छिद्रं हि मृगयन्तेऽत्र विद्वांसो ब्रह्मराक्षसाः ॥ १७
निहतस्य च यज्ञस्य सद्यःकर्ता विनश्यति ।
तद्यथा विधिपूर्वं मे क्रतुरेष समाप्यते ॥ १८
तथा विधानं क्रियतां समर्थाः करणेष्विह ।”
तथेति चाब्रुवन्सर्वे मन्त्रिणः प्रत्यपूजयन् ॥ १९
पार्थिवेन्द्रस्य तद्वाक्यं यथाज्ञप्तं निशम्य ते ।
तथा द्विजास्ते धर्मज्ञा वर्धयन्तो नृपोत्तमम् ॥ २०
अनुज्ञातास्ततस्सर्वे पुनर्जग्मुर्यथागतम् ।
विसर्जयित्वा तान्विप्रान्सचिवानिदमब्रवीत् ॥ २१

"ऋत्विग्भिरुपदिष्टोऽयं यथावत्क्रतुराप्यताम् ।"
[तावद्यूयं च भवत स्समर्थाः करणेष्विह ।।] २२
इत्युक्त्वा नृपशार्दूलस्सचिवान्समुपस्थितान् ।
विसर्जयित्वा स्वं वेश्म प्रविवेश महाद्युतिः ।। २३
ततस्स गत्वा ताः पत्नीर्नरेन्द्रो हृदयप्रियाः ।
उवाच "दीक्षां विशत यक्ष्येऽहं सुतकारणात् ।।" २४
तासां तेनातिकान्तेन वचनेन सुवर्चसाम् ।
मुखपद्मान्यशोभन्त पद्मानीव हिमात्यये ।। २५

।। इति श्रीमद्बालकाण्डे अष्टमस्सर्गः ।।

## ।। नवमस्सर्गः ।।

एतच्छ्रुत्वा रहस्सूतो राजान मिद मब्रवीत् ।
[श्रूयतां यः पुरावृत्तः पुराणे च मया श्रुतः ।।] १
"ऋत्विग्भिरुपदिष्टोऽयं पुरा वृत्तो मयाश्रुतः ।
सनत्कुमारो भगवान्पूर्वं कथितवान्कथाम् ।। २
ऋषीणां सन्निधौ राजंस्तव पुत्रागमं प्रति ।
काश्यपस्य तु पुत्रोऽस्ति विभण्डक इति श्रुतः ।। ३
ऋश्यशृङ्ग इति ख्यातस्तस्य पुत्रो भविष्यति ।
स वने नित्यसंवृत्तो मुनिर्वनचरस्सदा ।। ४
नान्यं जानाति विप्रेन्द्रो नित्यं पित्रनुवर्तनात् ।
द्वैविध्यं ब्रह्मचर्यस्य भविष्यति महात्मनः ।। ५

लोकेषु प्रथितं राजन्विप्रैश्च कथितं सदा ।
तस्यैवं वर्तमानस्य कालस्समभिवर्तत ॥ ६
अग्नि शुश्रूषमाणस्य पितर च यशस्विनम् ।
एतस्मिन्नेव कालेतु रोमपादः प्रतापवान् ॥ ७
अङ्गेषु प्रथितो राजा भविष्यति महाबलः ।
तस्य व्यतिक्रमाद्राज्ञो भविष्यति सुदारुणा ॥ ८
अनावृष्टिस्सुघोरा वै सर्वभूतभयावहा ।
अनावृष्ट्यां तु वृत्तायां राजा दुःखसमन्वितः ॥ ९
ब्राह्मणाञ्छ्रुतवृद्धांश्च समानीय प्रवक्ष्यति ।
"भवन्तश्श्रुतधर्माणो लोकचारित्रवेदिनः ॥ १०
समादिशन्तु नियमं प्रायश्चित्त यथा भवेत् ।"
वक्ष्यन्ति ते महीपालं ब्राह्मणा वेदपारगाः ॥ ११
"विभण्डकसुतं राजन्! सर्वोपायैरिहानय ।
आनाय्य च महीपाल! ऋश्यश्रृङ्गं सुसत्कृतम् ॥ १२
प्रयच्छ कन्यां शान्तां वै विधिना सुसमाहितः ।"
तेषां तु वचनं श्रुत्वा राजा चिन्तां प्रपत्स्यते ॥ १३
केनोपायेन वै शक्य इहानेतुं स वीर्यवान् ।
ततो राजा विनिश्चित्य सह मन्त्रिभिरात्मवान् ॥ १४
पुरोहितममात्यांश्च ततः प्रेष्यति सत्कृतान् ।
ते तु राज्ञो वचश्श्रुत्वा व्यथिता विनाताननाः ॥ १५
न गच्छेम ऋषेर्भीता अनुनेष्यन्ति तं नृपम् ।
वक्ष्यन्ति चिन्तयित्वा ते तस्योपायांश्च तत्क्षमान् ॥ १६

आनेष्यामो वयं विप्रं न च दापो भविष्यति ।
एव मङ्गाधिपेनैव गणिकाभि र्ऋषे स्सुतः ॥ १७
आनीतो वर्षय देवश्शान्ता चास्मै प्रदीयते ।
ऋश्यशृङ्गस्तु जामाता पुत्रांस्तव विधास्यति ॥ १८
सनत्कुमारकथितमेतावद्व्याहृतं मया ।
अथ हृष्टो दशरथ स्सुमन्त्र प्रत्युवाच ह ॥ १९
"यथश्यर्श्शृङ्ग स्त्वानीतो विस्तरेण त्वयोच्यताम् ॥"

इति श्रीमद्बालकाण्ड नवमस्सर्ग ॥

## ॥ दशमस्सर्गः ॥

सुमन्त्रश्चोदितो राज्ञा प्रोवाचेद वच स्तथा ।
यथर्श्यशृङ्गस्त्वानीतश्शृणु मे मन्त्रिभिस्सह ॥ १
[तन्मे निगदत स्सर्वं विस्तरेण शृणुष्वह ।]
"रोमपाद मुवाचेद सहामात्यः पुरोहितः ॥ २
उपायो निरपायोऽय मस्माभिरभिचिन्तितः ।
ऋश्यशृङ्गो वनचर स्तपस्स्वाध्यायने रतः ॥ ३
अनभिज्ञ स्स नारीणां विषयाणा सुखस्य च ।
इन्द्रियार्थै रभिमतै नरचित्तप्रमाथिभिः ॥ ४
पुर मानायिष्यामः क्षिप्रं चाध्यवसीयताम् ।
गणिकास्तत्र गच्छन्तु रूपवत्य स्स्वलङ्कृताः ॥ ५
प्रलोभ्य विविधोपायै रानेष्यन्तीहसत्कृताः ।"
श्रुत्वा तथेति राजा च प्रत्युवाच पुरोहितम् ॥ ६

पुरोहितो मन्त्रिणश्च तथा चक्रुश्च ते तदा ।
वारमुख्याश्च तच्छ्रुत्वा वन प्रविविशुर्महत् ॥ ७
आश्रमस्याविदूरेऽस्मिन्यत्नं कुर्वन्ति दर्शने ।
ऋषिपुत्रस्य धीरस्य नित्यमाश्रमवासिनः ॥ ८
पितुस्स नित्यसंतुष्टो नातिचक्राम चाश्रमात् ।
न तेन जन्मप्रभृति दृष्टपूर्वं तपस्विना ॥ ९
स्त्री वा पुमान्वा यच्चान्यत्सर्वं नगरराष्ट्रजम् ।
ततः कदाचित्तं देश माजगाम यदृच्छया ॥ १०
विभण्डकसुत स्तत्र ताश्चापश्य द्वरांगनाः ।
ता श्चित्रवेषाः प्रमदा गायन्त्यो मधुरस्वराः ॥ ११
ऋषिपुत्र मुपागम्य सर्वा वचन मब्रुवन् ।
"कस्त्वं किं वर्तसे ब्रह्मन्ज्ञातु मिच्छामहे वयम् ॥ १२
एकस्त्वं विजने घोरे वने चरसि शंसनः ।"
अदृष्टरूपास्ता स्तेन काम्यरूपा वने स्त्रियः ॥ १३
हार्दात्तस्य मति र्जाता ह्याख्यातु पितरं स्वकम् ।
"पिता विभण्डकोऽस्माकं तस्याहं सुतऔरसः ॥ १४
ऋश्यशृङ्ग इति ख्यातं नाम कर्म च मे भुवि ।
इहाश्रमपदोऽस्माकं समीपे शुभदर्शनाः ॥ १५
करिष्येवोऽत्रपूजां वै सर्वेषां विधिपूर्वकम् ।"
ऋषिपुत्रवच श्श्रुत्वा सर्वासां मति रासवै ॥ १६
तदाश्रमपदं द्रष्टुं जग्मुस्सर्वाश्च तेन ताः ।
आगतानां ततः पूजा मृषिपुत्रश्चकार ह ॥ १७

इद मर्घ्य मिदं पाद्य मिदं मूलं फलंच नः ।
प्रतिगृह्य च तां पूजां सर्वा एव समुत्सुकाः ॥ १८
ऋषेर्भीता श्च शीघ्रं ता गमनाय मति दधुः ।
"अस्माक मपि मुख्यानि फलानीमानि वै द्विज ॥ १९
गृहाण प्रतिभद्रं ते भक्षयस्व च माचिरम् ।"
तत स्तास्तं समालिङ्ग्य सर्वा हर्षसमन्विताः ॥ २०
मोदकान्प्रददुस्तस्मै भक्ष्यांश्च विविधान्बहून् ।
तानि चास्वाद्य तेजस्वी फलानीति स्म मन्यते ॥ २१
अनास्वादितपूर्वाणि वने नित्यनिवासिनाम् ।
आपृच्छ्य च तदा विप्रं व्रतचर्यां निवेद्यच ॥ २२
गच्छन्तिस्मापदेशात्ता भीतास्तस्य पितुस्स्त्रियः ।
गतासु तासु सर्वासु काश्यपस्यात्मजो द्विजः ॥ २३
[स्नात्वा जगाम तेजस्वी तस्य पुत्रोऽभवद्द्विधा ।]
अस्वस्थहृदयश्चासीद्दुखं स्म परिवर्तते ॥ २४
ततोऽपरेद्युस्तं देशमाजगाम सवीर्यवान् ।
विभण्डकसुत श्श्रीमान्मनसा चिन्तयन्बहून् ॥] २५
मनोज्ञा यत्र ता दृष्टा वारमुख्या स्स्वलङ्कृताः ।
दृष्ट्वैवतास्तदा विप्रमायान्तं हृष्टमानसाः ॥ २६
उपसृत्य तत स्सर्वास्तास्तमूचुरिदं वचः ।
"एह्याश्रमपदं सौम्य! ह्यस्माक" मिति चाब्रुवन ॥ २७
[चित्राण्यत्रफलानि स्युर्मूलानि च फलानिच ।]
तत्राप्येष विधि श्श्रीमान्विशेषेण भविष्यति" ॥ २८

श्रुत्वा तु वचनं तासां सर्वासां हृदयंगमम् ।
गमनाय मतिं चक्रे तं च निन्युस्तदा स्त्रियः ॥ २९

तत्र चानीयमाने तु विप्रे तस्मिन्महात्मनि ।
ववर्ष सहसा देवो जगत्प्रह्लादयंस्तदा ॥ ३०

वर्षेणैवागतं विप्रं विषयं स्वं नराधिपः ।
प्रत्युद्गम्य मुनिं प्रह्वश्शिरसा च महीं गतः ॥ ३१

अर्घ्यं च प्रददौ तस्मै न्यायतस्सुसमाहितः ।
वव्रे प्रसादं विप्रेन्द्रान्मा विप्रं मन्युराविशेत् ॥ ३२

अन्तःपुरं प्रावेश्यास्मै कन्यां दत्त्वा यथाविधि ।
शान्तां शान्तेन मनसा राजा हर्षमवाप सः ॥ ३३

एवं स न्यवसत्तत्र सर्वकामैस्सुपूजितः ।
[ऋश्यशृङ्गो महातेजाश्शान्तया सह भार्यया ॥] ३४

इति श्रीमद्बालकाण्डे दशमस्सर्गः ॥

---

## ॥ एकादशस्सर्गः ॥

भूय एव हि राजेन्द्र! शृणु मे वचनं हितम् ।
यथा स देवप्रवरः कथयामेवमब्रवीत् ॥ १

इक्ष्वाकूणां कुले जातो भविष्यति सुधार्मिकः ।
नाम्ना दशरथो नाम श्रीमान्सत्यप्रतिश्रवः ॥ २

अङ्गराजेन सख्यं च तस्य राज्ञो भविष्यति ।
कन्या चास्य महाभागा शान्ता नाम भविष्यति ॥ ३

पुत्र स्त्वङ्गाधिराजस्य रोमपाद इति श्रुतः ।
तं स राजा दशरथो गमिष्यति महायशाः ॥ ४
"अनपत्योऽस्मि धर्मात्मन्! शान्ताभर्ता मम क्रतुम् ।
आहरेत त्वयाऽऽज्ञप्त स्संतानार्थं कुलस्य च" ॥ ५
श्रुत्वा राज्ञोऽथ तद्वाक्यं मनसा स विचिन्त्य च ।
प्रदास्यते पुत्रवन्तं शान्ताभर्तारमात्मवान् ॥ ६
प्रतिगृह्य च तं विप्रं स राजा विगतज्वरः ।
आहरिष्यति तं यज्ञं प्रहृष्टेनान्तरात्मना ॥ ७
तं च राजा दशरथो यशस्कामः कृताञ्जलिः ।
ऋश्यशृङ्गं द्विजश्रेष्ठं वरयिष्यति धर्मवित् ॥ ८
यज्ञार्थं प्रसवार्थं च स्वर्गार्थं च नरेश्वरः ।
लभते च स तं कामं द्विजमुख्याद्विशांपतिः ॥ ९
पुत्राश्चास्य भविष्यन्ति चत्वारोऽमितविक्रमाः ।
वंशप्रतिष्ठानकरा स्सर्वलोकेषु विश्रुताः ॥ १०
एवं स देवप्रवरः पूर्वं कथितवान्कथाम् ।
सनत्कुमारो भगवान्पुरा देवयुगे प्रभुः ॥ ११
स त्वं पुरुषशार्दूल! तं मानय सुसत्कृतम् ।
स्वयमेव महाराज! गत्वा सबलवाहनः ॥ १२
[सुमन्त्रस्य वचश्श्रुत्वा हृष्टो दशरथोऽभवत् ।]
अनुमान्य वसिष्ठं च सूतवाक्यं निशम्य च ॥ १३
[वसिष्ठेनाभ्यनुज्ञातो राजा संपूर्णमानसः ।]

सान्तःपुर स्सहामात्यः प्रययौ यत्र सद्विजः ।
वनानि सरित श्चैव व्यतिक्रम्य शनैश्शनैः ॥ १४
अभिचक्राम तं देश यत्र वै मुनिपुंगवः ।
आसाद्य तं द्विजश्रेष्ठं रोमपादसमीपगम् ॥ १५
ऋषिपुत्र ददर्शादौ दीप्यमान मिवानलम् ।
ततो राजा यथान्यायं पूजां चक्रे विशेषतः ॥ १६
सखित्वात्तस्य वैराज्ञः प्रहृष्टेनान्तरात्मना ।
रोमपादेन चाख्यात मृषिपुत्राय धीमते ॥ १७
सख्यं सम्बन्धक चैव तदा तं प्रत्यपूजयत् ।
एवं सुसत्कृत स्तेन सहोषित्वा नरर्षभः ॥ १८
सप्ताष्टदिवसान्राजा राजानमिदमब्रवीत् ।
"शान्तातवसुताराजन! महभर्त्राविशांपते ॥ १९
मदीयं नगर यातु कार्य हि महदुद्यतम् ।"
तथेति राजा संश्रुत्य गमनं तस्य धीमतः ॥ २०
उवाच वचनं विप्र गच्छ त्व सहभार्यया ।
ऋषिपुत्रः प्रतिश्रुत्य 'तथे'त्याहनृपं तदा ॥ २१
सनृपेणाभ्यनुज्ञातः प्रययौ सहभार्यया ।
तावन्योन्याञ्जलिं कृत्वास्नेहात्संश्लिष्यचोरसा ॥ २२
ननन्दतुर्दशरथो रोमपादश्च वीर्यवान् ।
तत स्सुहृदमापृच्छ्य प्रस्थितो रघुनन्दनः ॥ २३
पौरेभ्यः प्रेषयामासदूतान्वै शीघ्रगामिनः ।
"क्रियतां नगरं सर्वं क्षिप्रमेव स्वलङ्कृतम् ॥ २४

धूपितं सिक्त सम्मृष्टं पताकाभि रलङ्कृतम् ।"
ततः प्रहृष्टाः पौरास्ते श्रुत्वा राजान मागतम् ॥ २५
तथा प्रचक्रुस्तत्सर्वं राज्ञा यत्प्रेषित तदा
यत्प्रेषितं वसिष्ठेन राज्ञा दशरथेन च ॥ २६
कृत्वादूतान्द्विजो राज्ञः प्रेषयामास सत्वरम् ।
ततो निवेदयामासु र्दूता स्तस्मै महात्मने ॥ २७
श्रुत्वा तु तेषा वचन पुरस्कृत्य द्विजेरितम ।
तत स्स्वलङ्कृतं राजा नगर प्रविवेश ह ॥ २८
शङ्खदुन्दुभिनिर्घोषैः पुरस्कृत्य द्विजर्षभम् ।
ततः प्रमुदिता स्सर्वे दृष्ट्वा त नागरा द्विजम् ॥ २९
प्रवेश्यमानं सत्कृत्य नरेन्द्रेणेन्द्रकर्मणा ।
अन्तःपुर प्रवेश्येन पूजा कृत्वा च शाश्वतः ॥ ३०
कृतकृत्यं तदाऽऽत्मानं मेने तस्योपवाहनात् ।
अन्तःपुरस्त्रिय स्सर्वा श्शान्तां दृष्ट्वा तथाऽऽगताम् ॥ ३१
सहभर्त्रा विशालाक्षीं प्रीत्याऽऽनन्दमुपागमन ।
पूज्यमाना च ताभि स्सा राज्ञा चैव विशेषतः ॥ ३२
उवास तत्र सुखिता कञ्चित्कालं सहर्त्विजा ।

इति श्रीमद्रामायणे बालकाण्डे एकादशस्सर्गः ॥

---

## ॥ द्वादशस्सर्गः ॥

ततः काले बहुतिथे कस्मिंश्चित्सुमनोहरे ।
वसन्ते समनुप्राप्ते राज्ञो यष्टुं मनोऽभवत् ॥ १

ततः प्रसाद्य शिरसा तं विप्रं देववर्णिनम् ।
यज्ञाय वरयामास सन्तानार्थं कुलस्यवै ॥ २
"तथे"ति च स राजान मुवाचच सुसत्कृतः ।
"सम्भारा स्सम्भ्रियन्तां ते तुरगश्च विमुच्यताम् ॥ ३
रमणीये प्रदेशे च यज्ञभूमि र्विधीयताम् ।
ततो राजाऽब्रवीद्वाक्य सुमन्त्रं मन्त्रिसत्तमम् ॥ ४
"सुमन्त्रावाहय क्षिप्र मृत्विजो ब्रह्मवादिनः ।
सुयज्ञं वामदेवच जाबालि मथ काश्यपम ॥ ५
पुरोहित वसिष्ठंच ये चान्ये द्विजसत्तमाः ।
तत स्सुमन्त्र स्त्वरितं गत्वा त्वरितविक्रमः ॥ ६
समानयत्सतान्विप्रान्समस्तान्वेदपारगान् ।
तान्पूजयित्वा धर्मात्मा राजा दशरथ स्तदा ॥ ७
धर्मार्थसहितं युक्त श्लक्ष्णं वचनमब्रवीन् ।
"ममलालप्यमानस्य पुत्रार्थं नास्ति वै सुखम् ॥ ८
तदर्थं हयमेधेन यक्ष्यामीति मतिर्मम ।
तदहं यष्टुमिच्छामि शास्त्रदृष्टेन कर्मणा ॥ ९
ऋषिपुत्रप्रभावेन कामान्प्राप्स्यामि चाप्यहम ।"
तत स्साध्विति तद्वाक्यं ब्राह्मणाः प्रत्यपूजयन ॥ १०
वसिष्ठप्रमुखा स्सर्वे पार्थिवस्य मुखाच्च्युतम् ।
ऋश्यशृंगपुरोगाश्च प्रत्यूचु र्नृपतिं तदा ॥ ११
"सम्भारा स्सम्भ्रियन्तां ते तुरगश्च विमुच्यताम् ।
[सरय्वा श्चोत्तरे तीरे यज्ञभूमि र्विधीयताम् ॥] १२

सर्वथा प्राप्स्यसे पुत्रां श्चतुरोऽमितविक्रमान ।
यस्य ते धार्मिकी बुद्धि रियं पुत्रार्थमागता ॥" १३
ततःप्रीतोऽभवद्राजा श्रुत्वा तद्द्विजभाषितम् ।
अमात्यां श्चाब्रवी द्राजा हर्षेणेदं शुभाक्षरम् ॥ १४
'गुरूणा वचना च्छीघ्र सभारा स्सम्भ्रियन्तु मे ।
समर्थाधिष्ठित श्चाश्व स्सोपाध्यायो विमुच्यताम् ॥ १५
सरय्वाश्चोत्तरे तीरे यज्ञभूमिर्विधीयताम ।
शान्तय श्चाभिवर्धन्तां यथाकल्प यथाविधि ॥ १६
शक्यः प्राप्तु मय यज्ञ स्सर्वेणापि महीक्षिता ।
नापराधो भवेत्कष्टो यद्यस्मिन्क्रतुसत्तमे ॥ १७
छिद्रं हि मृगयन्तेऽत्र विद्वांसो ब्रह्मराक्षसाः ।
निहतस्य च यज्ञस्य सद्यः कर्ता विनश्यति ॥ १८
तद्यथा विधिपूर्व मे क्रतुरेष समाप्यते ।
तथा विधान क्रियतां समर्थाः करणेष्विह ॥" १९
"तथे"ति च तत स्सर्वे मन्त्रिणः प्रत्यपूजयन ।
पार्थिवेन्द्रस्य तद्वाक्यं यथाऽऽज्ञप्त मकुर्वत ॥ २०
ततो द्विजास्ते धर्मज्ञमस्तुवन्पार्थिवर्षभम् ।
अनुज्ञाता स्तत स्सर्वे पुनर्जग्मु र्यथाऽऽगतम् ॥ २१
गतेष्वथ द्विजाग्र्येषु मन्त्रिण स्तान्नराधिपः ।
विसर्जयित्वा स्वं वेश्म प्रविवेश महाद्युतिः ॥ २२

इति श्रीमद्बालकाण्डे द्वादशस्सर्गः ॥



## ॥ त्रयोदशस्सर्गः ॥

पुनः प्राप्ते वसन्तेतु पूर्णस्संवत्सरोऽभवत् ।
प्रसवार्थंगतो यष्टुं हयमेधेन वीर्यवान् ॥ १
अभिवाद्य वसिष्ठं च न्यायतः प्रतिपूज्य च ।
अब्रवीत्प्रश्रितं वाक्यं प्रसवार्थं द्विजोत्तमम् ॥ २
"यज्ञो मे क्रियतां ब्रह्मन्यथोक्तं मुनिपुङ्गव ! ।
यथा न विघ्नः क्रियते यज्ञाङ्गेषु विधीयताम ॥ ३
भवान्स्निग्ध स्सुहृन्मह्यं गुरुश्च परमो महान् ।
वोढव्यो भवता चैव भारो यज्ञस्य-चोद्यतः ॥" ४
"तथे"ति च सराजानमब्रवीद्विजसत्तमः ।
"करिष्ये सर्वमेवैतद्भवता यत्समर्थितम ॥" ५
ततोऽब्रवीद्विजा न्वृद्धान्यज्ञकर्मसु निष्ठितान् ।
स्थापत्ये निष्ठिता श्चैव वृद्धान्परमधार्मिकान ॥ ६
कर्मान्तिका न्शिल्पकरान्वर्धकी न्खनकानपि ।
गणकान्शिल्पिन श्चैव तथैव नटनर्तकान् ॥ ७
तथा शुचीन्शास्त्रविदः पुरुषान्सुबहुश्रुतान् ।
"यज्ञकर्म समीहन्तां भवन्तो राजशासनात् ॥ ८
इष्टका बहुसाहस्रा शीघ्र मानीयता" मिति ।
"औपकार्याः क्रियन्तां च राज्ञां बहुगुणान्विताः ॥ ९
ब्राह्मणावसथाश्चैव कर्तव्या श्शतश श्शुभाः ।
भक्ष्यान्नपानै र्बहुभि स्समुपेता स्सुनिष्ठिताः ॥ १०

तथा पौरजनस्यापि कर्तव्या बहुविस्तराः ।
आवासा बहुकक्ष्यावै सर्वकामैरुपस्थिताः ॥ ११
तथा जानपदस्यापि जनस्य बहुशोभनम् ।
दातव्य मन्नं विधिवत्सत्कृत्य न तु लीलया ॥ १२
सर्ववर्णा यथा पूजां प्राप्नुवन्ति सुसत्कृताः ।
न चावज्ञा प्रयोक्तव्या कामक्रोधवशादपि ॥ १३
यज्ञ कर्मसु ये व्यग्राः पुरुषा श्शिल्पिन स्तथा ।
तेषा मपि विशेषेण पूजा कार्या यथाक्रमम ॥ १४
तेच स्यु स्संभृता स्सर्वे वसुभि र्भोजनेनच ।
यथा सर्व सुविहितं न किंचित्परिहीयते ॥ १५
तथा भवन्तः कुर्वन्तु प्रीतिस्निग्धेन चेतसा ।
ततस्सर्वे समागम्य वसिष्ठ मिद मब्रुवन् ॥ १६
"यथोक्त तत्सुविहितं न किंचि त्परिहीयते ।
यथोक्तं तत्करिष्यामो न किंचि त्परिहास्यते ॥" १७
तत स्सुमन्त्र मानीय वसिष्ठो वाक्य मब्रवीत् ।
"निमन्त्रयस्व नृपती न्पृथिव्यां ये च धार्मिकाः ॥ १८
ब्राह्मणान्क्षत्रियान्वैश्यान्शूद्रांश्चैव सहस्रशः ।
समानयस्व सत्कृत्य सर्वदेशेषु मानवान् ॥ १९
मिथिलाधिपतिं शूरं जनकं सत्यविक्रमम् ।
निष्ठितं सर्वशास्त्रेषु तथा वेदेषु निष्ठितम् ॥ २०
तमानय महाभागं स्वयमेव सुसत्कृतम् ।
पूर्वसम्बन्धिनं ज्ञात्वा ततः पूर्वं ब्रवीमि ते ॥ २१

तथा काशीपति स्निग्धं सततं प्रियवादिनम् ।
वयस्यं राजसिंहस्य स्वयमेवानयस्व ह ॥ २२
तथा केकयराजानं वृद्धं परमधार्मिकम् ।
श्वशुरं राजसिंहस्य सपुत्रं त्वमिहानय ॥ २३
अंगेश्वरं महाभागं रोमपादं सुसत्कृतम् ।
वयस्यं राजसिंहस्य तमानय यशस्विनम् ॥ २४
प्राचीनान्सिन्धुसौवीरान्सौराष्ट्रेयांश्च पार्थिवान् ।
दाक्षिणात्यान्नरेन्द्रांश्च समस्तानानयस्व ह ॥ २५
सन्ति स्निग्धाश्च ये चान्ये राजानः पृथिवीतले ।
तानानय यथा क्षिप्रं सानुगान्सहबान्धवान ॥" २६
वसिष्ठवाक्यं तच्छ्रुत्वा सुमन्त्रस्त्वरितस्तदा ।
व्यादिशत्पुरुषांस्तत्र राज्ञामानयने शुभान ॥ २७
स्वयमेव हि धर्मात्मा प्रययौ मुनिशासनात् ।
सुमन्त्रस्त्वरितो भूत्वा समानेतुं महीक्षितः ॥ २८
ते च कर्मान्तिकाः सर्वे वसिष्ठाय च धीमते ।
सर्वं निवेदयन्ति स्म यज्ञे यदुपकल्पितम ॥ २९
ततः प्रीतो द्विजश्रेष्ठस्तान्सर्वानिदमब्रवीत् ।
"अवज्ञया न दातव्यं कस्यचिल्लीलयापि वा ॥ ३०
अवज्ञया कृतं हन्याद्दातारं नात्र संशयः ।
ततः कैश्चिदहोरात्रैरुपयाता महीक्षितः ॥ ३१
बहूनि रत्नान्यादाय राज्ञो दशरथस्य वै ।
ततो वसिष्ठस्सुप्रीतो राजानमिदमब्रवीत् ॥ ३२

"उपयाता नरव्याघ्र! राजान स्त्वच्छासनात् ।
मयाऽपि सत्कृता स्सर्वे यथार्हं राजसत्तम ॥ ३३
यज्ञीयंच कृतं राजन्! पुरुषैस्सुसमाहितैः ।
निर्यातु च भवान्यष्टुं यज्ञायतनमन्तिकात् ॥ ३४
सर्वकामै रुपहृतै रुपेतं वै समन्ततः ।
द्रष्टु मर्हसि राजेन्द्र! मनसेव विनिर्मितम् ॥ ३५
तदा वसिष्ठवचना दृश्यशृङ्गस्य चाभयोः ।
शुभे दिवसनक्षत्रे निर्यातो जगतीपतिः ॥ ३६
ततो वसिष्ठप्रमुखा स्सर्व एव द्विजोत्तमाः ।
ऋश्यशृङ्ग पुरस्कृत्य यज्ञकर्मारभं स्तदा ॥ ३७
यज्ञवाटगता स्सर्वे यथाशास्त्र यमाविधि ॥

इति श्रीमद्बाल्काण्डे त्रयोदशस्सर्ग ॥

## ॥ चतुर्दशस्सर्गः ॥

अथ संवत्सरे पूर्णे तस्मिन्प्राप्ते तुरगमे ।
सरय्वाश्चोत्तरे तीरे राज्ञो यज्ञोऽभ्यवर्तत ॥ १
ऋश्यशृङ्गं पुरस्कृत्य कर्मचक्रु र्द्विजर्षभाः ।
अश्वमेधे महायज्ञे राज्ञोऽस्य सुमहात्मनः ॥ २
कर्म कुर्वन्ति विधिवद्याजका वेदपारगाः ।
यथाविधि यथान्यायं परिक्रामन्ति शास्त्रतः ॥ ३
प्रवर्ग्यं शास्त्रतः कृत्वा तथैवोपसदं द्विजाः ।
चक्रुश्च विधिवत्सर्व मधिकं कर्मशास्त्रतः ॥ ४

अभिपूज्य ततो हृष्टा स्सर्वे चक्रु र्यथाविधि ।
प्रातस्सवनपूर्वाणि कर्माणि मुनिपुङ्गवाः ॥ ५
ऐन्द्रश्च विधिवद्दत्तो राजा चाभिष्टुतोऽनघः ।
माध्यन्दिनं च सवनं प्रावर्तत यथाक्रमम् ॥ ६
तृतीयसवनं चैव राज्ञोऽस्य सुमहात्मनः ।
चक्रुस्ते शास्त्रतो दृष्ट्वा तदा ब्राह्मणपुङ्गवाः ॥ ७
न चाहुतमभूत्तत्र स्खलितं वापि किंचन ।
दृश्यते ब्रह्मवत्सर्वं क्षेमयुक्तं हि चक्रिरे ॥ ८
न तेष्वहस्सु श्रान्तो वा क्षुधितो वापि दृश्यते ।
नाविद्वान्ब्राह्मणस्तत्र नाशतानुचरस्तदा ॥ ९
ब्राह्मणा भुंजते नित्यं नाथवन्तश्च भुंजते ।
तापसा भुंजते चापि श्रमणा भुंजते तथा ॥ १०
वृद्धा श्च व्याधिता श्चैव स्त्रियो बाला स्तथैव च ।
अनिशं भुंजमानाना न तृप्ति रुपलभ्यते ॥ ११
दीयता दीयता मन्नं वासांसि विविधानि च ।
इति सञ्चोदिता स्तत्र तथा चक्रु रनेकशः ॥ १२
अन्नकूटा श्च बहवो दृश्यन्ते पर्वतोपमाः ।
दिवसे दिवसे तत्र सिद्धस्य विधिवत्तदा ॥ १३
नानादेशा दनुप्राप्ताः पुरुषाः स्त्रीगणा स्तथा ।
अन्नपानै स्सुविहिता स्तस्मिन्यज्ञे महात्मनः ॥ १४
अन्नं हि विधिवत्स्वादु प्रशंसन्ति द्विजर्षभाः ।
अहो तृप्तास्स्म भद्रं त इति शुश्राव राघवः ॥ १५

स्वलङ्कृताश्च पुरुषा ब्राह्मणान्पर्यवेषयन् ।
उपासते च तानन्ये सुमृष्टमणिकुण्डलाः ॥ १६
कर्मान्तरे तदा विप्रा हेतुवादान्बहूनपि ।
प्राहु स्सुवाग्मिनो धीराः परस्परजिगीषया ॥ १७
दिवसे दिवसे तत्र संस्तरे कुशला द्विजाः ।
सर्वकर्माणि चक्रुस्ते यथाशास्त्रं प्रचोदिताः ॥ १८
नाषडङ्गविदत्रासीं न्नाव्रतो नाबहुश्रुतः ।
सदस्या स्तस्य वै राज्ञो नावादकुशला द्विजाः ॥ १९
प्राप्ते यूपोच्छ्रये तस्मिन्षड्बैल्वाः खादिरा स्तथा ।
तावन्तो बिल्वसहिताः पर्णिन श्च तथाऽपरे ॥ २०
श्लेष्मातकमयस्त्वेको देवदारुमय स्तथा ।
द्वा वेव विहितौ तत्र बाहुव्यस्तपरिग्रहौ ॥ २१
कारिता स्सर्व एवै ते शास्त्रज्ञै र्यज्ञकोविदैः ।
शोभार्थं तस्य यज्ञस्य काञ्चनालङ्कृताऽभवन् ॥ २२
एकविंशतियूपा स्त एकविंशत्यरत्नयः ।
वासोभिरेकविंशद्भिरेकैकं समलङ्कृताः ॥ २३
विन्यस्ता विधिवत्सर्वे शिल्पिभि स्सुकृता दृढाः ।
अष्टाश्रय स्सर्व एव श्लक्ष्णरूपसमन्विताः ॥ २४
आच्छादिता स्ते वासोभिः पुष्पै र्गन्धै श्च भूषिताः ।
सप्तर्षयो दीप्तिमन्तो विराजन्ते यथा दिवि ॥ २५
इष्टकाश्च यथा न्यायं कारिता श्च प्रमाणतः ।
चितोऽग्नि र्ब्राह्मणै स्तत्र कुशलै श्शुल्बकर्मणि ॥ २६

स चित्यो राजसिंहस्य संचितः कुशलै र्द्विजैः ।
गरुडो रुक्मपक्षो वै त्रिगुणोऽष्टादशात्मकः ॥ २७
नियुक्ता स्तत्र पशवस्तत्तदुद्दिश्य दैवतम् ।
उरगाः पक्षिण श्चैव यथाशास्त्रं प्रचोदिताः ॥ २८
शामित्रे तु हयस्तत्र तथा जलचराश्चये ।
ऋत्विग्भिस्सर्वमेवैतन्नियुक्तं शास्त्रत स्तदा ॥ २९
पशूनां त्रिशतं तत्र यूपेषु नियतं तदा ।
अश्वरत्नोत्तमं तस्य राज्ञो दशरथस्य च ॥ ३०
कौसल्या तं हयं तत्र परिचर्य समन्ततः ।
कृपाणै र्विशशासैनं त्रिभिः परमया मुदा ॥ ३१
पतत्रिणा तदा सार्धं सुस्थितेन च चेतसा ।
अवसद्रजनी मेकां कौसल्या धर्मकाम्यया ॥ ३२
होताऽध्वर्यु स्तथोद्गाता हस्तेन समयोजयन् ।
महिष्या परिवृत्त्या च वावातां च तथाऽपराम् ॥ ३३
पतत्रिण स्तस्य वपा मुद्धृत्य नियतेन्द्रियः ।
ऋत्विक्परमसम्पन्नः श्रपयामास शास्त्रतः ॥ ३४
धूमगन्धं वपायास्तु जिघ्रति स्म नराधिपः ।
यथाकालं यथान्यायं निर्णुदन्पापमात्मनः ॥ ३५
हयस्य यानि चाङ्गानि तानि सर्वाणि ब्राह्मणाः ।
अग्नौ प्रास्यन्ति विधिवत्समन्त्रा ष्षोडशर्त्विजः ॥ ३६
प्लक्षशाखासु यज्ञाना मन्येषां क्रियते हविः ।
अश्वमेधस्य यज्ञस्य वैतसो भाग इष्यते ॥ ३७

त्र्यहोऽश्वमेध स्संख्यातः कल्पसूत्रेण ब्राह्मणैः ।
चतुष्टोम मह स्तस्य प्रथमं परिकल्पितम् ॥ ३८
उक्थ्यं द्वितीयं संख्यात मतिरात्र तथोत्तरम् ।
कारितास्तत्र बहवो विहिताश्शास्त्रदर्शनात् ॥ ३९
ज्योतिष्टोमायुषी चैव मतिरात्रौच निर्मितौ ।
अभिजिद्विश्वजिच्चैवमप्तोर्यामो महाक्रतुः ॥ ४०
प्राचीं होत्रे ददौ राजा दिशं स्वकुलवर्धनः ।
अध्वर्यवे प्रतीचीं तु ब्रह्मणे दक्षिणां दिशम् ॥ ४१
उद्गात्रेच तथोदीची दक्षिणैषा विनिर्मिता ।
अश्वमेधे महायज्ञे स्वयंभुविहिते पुरा ॥ ४२
क्रतुं समाप्यतु तदा न्यायतः पुरुषर्षभः ।
ऋत्विग्भ्यो हि ददौ राजा धरा तां क्रतुवर्धनः ॥ ४३
ऋत्विजस्त्वब्रुवन्सर्वे राजानं गतकल्मषम् ।
"भवा नेव मही कृत्स्ना मेको रक्षितु मर्हति ॥ ४४
न भूम्या कार्य मस्माकं नहि शक्तास्समपालने ।
रता स्स्वाध्यायकरणे वयं नित्य हि भूमिप ॥ ४५
निष्क्रियं किंचिदेवेह प्रयच्छतु भवानिति ।
मणिरत्नं सुवर्णंवा गावो यद्वा समुद्यतम् ॥ ४६
तत्प्रयच्छ नरश्रेष्ठ! धरण्या न प्रयोजनम्" ।
एव मुक्तो नरपतिः ब्राह्मणै र्वेदपारगैः ॥ ४७
गवां शतसहस्राणि दशतेभ्यो ददौ नृपः ।
दशकोटीस्सुवर्णस्य रजतस्य चतुर्गुणम् ॥ ४८

ऋत्विजस्तु तत स्सर्वे प्रददु स्सहिता वसु ।
ऋश्यशृङ्गाय मुनये वसिष्ठाय च धीमते ॥ ४९
ततस्ते न्यायतः कृत्वा प्रविभागं द्विजोत्तमाः ।
सुप्रीतमनस स्सर्वे प्रत्यूचु र्मुदिता भृशम् ॥ ५०
ततः प्रसर्पकेभ्य स्तु हिरण्यं सुसमाहितः ।
जाम्बूनदं कोटिसंख्यं ब्राह्मणेभ्यो ददौ तदा ॥ ५१
दरिद्राय द्विजायाथ हस्ताभरण मुत्तमम् ।
कस्मैचि द्याचमानाय ददौ राघवनन्दनः ॥ ५२
ततः प्रीतेषु नृपतिः द्विजेषु द्विजवत्सलः ।
प्रणाममकरोत्तेषां हर्षपर्याकुलेक्षणः ॥ ५३
तस्याशिषोऽथ विधिव द्ब्राह्मणै स्समुदीरिताः ।
उदारस्य नृवीरस्य धरण्यां प्रणतस्य च ॥ ५४
ततः प्रीतमना राजा प्राप्य यज्ञ मनुत्तमम् ।
पापापहं स्वर्नयनं दुस्तरं पार्थिवर्षभैः ॥ ५५
ततोऽब्रवी दृश्यशृङ्गं राजा दशरथस्तथा ।
"कुलस्य वर्धनं त्वन्तु कर्तु मर्हसि सुव्रत" ॥ ५६
"तथे"ति च स राजान मुवाच द्विजसत्तमः ।
"भविष्यन्ति सुता राजं श्चत्वारस्ते कुलोद्वहाः" ॥ ५७
[स तस्यवाक्यं मधुरं निशम्य प्रणम्य तस्मै प्रयतो नरेन्द्रः ।
जगाम हर्षपरमं महात्मा तमृश्यशृङ्गः पुनरप्युवाच ॥]

इति श्रीमद्बालकाण्डे चतुर्दशस्सर्गः ॥

## ॥ पञ्चदशस्सर्गः ॥

मेधावीतु ततो ध्यात्वा स किंचिदिद मुत्तरम् ।
लब्धसंज्ञस्ततस्तं तु वेदज्ञो नृप मब्रवीत् ॥ १

" इष्टिं तेऽहं करिष्यामि पुत्रीयां पुत्रकारणात् ।
अथर्वशिरसि प्रोक्तै र्मन्त्रै स्सिद्धां विधानतः । २

ततः प्रक्रम्य तामिष्टिं पुत्रीयां पुत्रकारणात्" ।
जुहाव चाग्नौ तेजस्वी मन्त्रदृष्टेन कर्मणा ॥ ३

ततो देवा स्सगन्धर्वा स्सिद्धाश्च परमर्षयः ।
भागप्रतिग्रहार्थं वै समवेता यथाविधि ॥ ४

ता स्समेत्य यथान्यायं तस्मिन्सदसि देवताः ।
अब्रुवंल्लोककर्तारं ब्रह्माणं वचन महत् ॥ ५

" भगवं! स्त्वत्प्रसादेन रावणो नाम राक्षसः ।
सर्वान्नो बाधते वीर्या च्छासितुं तं न शक्नुमः ॥ ६

त्वया तस्मै वरो दत्तः प्रीतेन भगव! न्मुदा ।
मानयन्तश्च तं नित्यं सर्वं तस्य क्षमामहे ॥ ७

उद्वेजयति लोकां स्त्री नुच्छ्रितान्द्वेष्टि दुर्मतिः ।
शक्रं त्रिदशराजानं प्रधर्षयितु मिच्छति ॥ ८

ऋषीन्यक्षान्सगन्धर्वानसुरान्ब्राह्मणां स्तथा ।
अतिक्रामति दुर्धर्षो वरदानेन मोहितः ॥ ९

नैनं सूर्यः प्रतपति पार्श्वे वाति स मारुतः ।
चलोर्मिमाली तं दृष्ट्वा समुद्रोऽपि न कम्पते ॥ १०

तन्महन्नो भयं तस्मा द्राक्षसाद्घोरदर्शनात् ।
वधार्थं तस्य भगव! न्नुपायं कर्तु मर्हसि" ॥ ११
एव मुक्तस्सुरै स्सर्वैश्चिन्तयित्वा ततोऽब्रवीत् ।
"हन्तायं विदित स्तस्य वधोपायो दुरात्मनः ॥ १२
तेन गन्धर्वयक्षाणां देवदानवरक्षसाम् ।
अवध्योऽस्मीति वागुक्ता तथेत्युक्तं च तन्मया ॥ १३
नाकीर्तयदवज्ञानात्तद्रक्षोमानुषांस्तदा ।
तस्मात्समानुषाद्वध्योमृत्युर्नान्योऽस्यविद्यते" ॥ १४
एतच्छ्रुत्वा प्रियं वाक्यं ब्रह्मणासमुदाहृतम् ।
देवामहर्षयस्सर्वे प्रहृष्टास्तेऽभवं स्तदा ॥ १५
एतस्मिन्नन्तरे विष्णुरुपयातो महाद्युतिः ।
शंखचक्रगदापाणिः पीतवासा जगत्पतिः ॥ १६
ब्रह्मणा च समागम्य तत्र तस्थौ समाहितः ।
तमब्रुवन्सुरास्सर्वे समभिष्टूयसन्नताः ॥ १७
"त्वां नियोक्ष्यामहे विष्णो! लोकानां हितकाम्यया ।
राज्ञो दशरथस्य त्वमयोध्याधिपतेः प्रभोः ॥ १८
धर्मज्ञस्य वदान्यस्य महर्षिसमतेजसः
तस्य भार्यासु तिसृषु ह्रीश्रीकीर्त्युपमासु च ॥ १९
विष्णो! पुत्रत्व मागच्छ कृत्वाऽऽत्मानं चतुर्विधम् ।
तत्र त्वं मानुषो भूत्वा प्रवृद्धं लोककंटकम् ॥ २०
अवध्यं दैवतै र्विष्णो! समरे जहि रावणम् ।
सहिदेवान्सगन्धर्वा न्सिद्धांश्च मुनिसत्तमान् ॥ २१

राक्षसो रावणो मूर्खो वीर्योत्सेकेन बाधते ।
ऋषयश्च ततस्तेन गन्धर्वाप्सरसस्तथा ॥ २२
क्रीडन्तो नन्दनवने क्रूरेण किल हिंसिताः ।
वधार्थं वय मायातास्तस्यवै मुनिभिस्सह ॥ २३
सिद्धगन्धर्वयक्षाश्च तत स्त्वां शरणं गताः ।
त्वं गतिः परमा देव! सर्वेषां नः परन्तप ॥ २४
वधाय देव! शत्रूणां नृणां लोके मनः कुरु" ।
एवमुक्तस्तु देवेशो विष्णु स्त्रिदशपुङ्गवः ॥ २५
पितामहपुरोगां स्ता न्सर्वलोकनमस्कृतः ।
अब्रवीत्रिदशान्सर्वान्समेतान्धर्मसंहितान् ॥ २६
-"भयं त्यजत, भद्रं वो, हितार्थं युधि रावणम् ।
सपुत्रपौत्रं सामात्यं समित्रज्ञातिबान्धवम् ॥ २७
हत्वा क्रूरं दुरात्मानं देवर्षीणां भयावहम् ।
दशवर्ष सहस्राणि दशवर्षशतानिच ॥ २८
वत्स्यामि मानुषे लोके पालयन्पृथिवी मिमाम्" ।
एवं दत्वा वरं देवो देवानां विष्णु रात्मवान् ॥ २९
मानुषे चिन्तयामास जन्मभूमिमथात्मनः ।
ततः पद्मपलाशाक्षः कृत्वाऽऽत्मानं चतुर्विधम् ॥ ३०
-पितरं रोचयामास तदा दशरथं नृपम् ।
ततो देवा स्सगन्धर्वा स्सरुद्रा स्साप्सरोगणाः ॥ ३१
स्तुतिभिर्दिव्यरूपाभि स्तुष्टुवुर्मधुसूदनम् ।

"त मुद्धतं रावण मुग्रतेजसं प्रवृद्धदर्पं त्रिदशेश्वरद्विषम् ।
विरावणं साधुतपस्विकंटकं तपस्विना मुद्धर तं भयावहम् ॥ ३२
तमेव हत्वा सबलं सबान्धवं विरावणं रावणमग्र्यपौरुषम् ।
स्वलोक मागच्छ गतज्वर श्चिरं सुरेन्द्रगुप्तं गतदोषकल्मषम् ॥"

इति श्रीमद्बालकाण्डे पञ्चदशस्सर्गः ॥

---

## ॥ षोडशस्सर्गः ॥

ततो नारायणो देवो नियुक्त स्सुरसत्तमैः ।
जानन्नपि सुरानेवं श्लक्ष्णं वचन मब्रवीत् ॥ १
"उपायः कोवधे तस्य रावणस्य दुरात्मनः ।
य महं तं समास्थाय निहन्या मृषिकंटकम् ॥" २
एव मुक्ता स्सुरास्सर्वे प्रत्यूचु र्विष्णु मव्ययम् ।
"मानुषीं तनु मास्थाय रावणं जहि संयुगे ॥ ३
सहि तेपे तप स्तीव्रं दीर्घकाल मरिन्दम ! ।
येन तुष्टोऽभवद्ब्रह्मा लोककृल्लोकपूर्वजः ॥ ४
संतुष्टः प्रददौ तस्मै राक्षसाय वरं प्रभुः ।
नानाविधेभ्यो भूतेभ्यो भयं नान्यत्र मानुषात् ॥ ५
अवज्ञाताः पुरा तेन वरदानेन मानवाः ।
एवं पितामहा त्तस्माद्वरं प्राप्य स दर्पितः ॥ ६
उत्सादयति लोकां स्त्रीन् स्त्रिय श्चाप्यपकर्षति ।
तस्मात्तस्य वधो दृष्टो मानुषेभ्यः परन्तप ॥" ७

इत्येत द्वचनं श्रुत्वा सुराणां विष्णु रात्मवान् ।
पितरं रोचयामास तदा दशरथं नृपम् ॥ ८
स चाप्यपुत्रो नृपति स्तस्मिन्काले महाद्युतिः ।
अयजत्पुत्रिया मिष्टिं पुत्रेप्सु ररिसूदनः ॥ ९
स कृत्वा निश्चयं विष्णु रामन्त्र्य च पितामहम् ।
अन्तर्धानं गतो देवैः पूज्यमानो महर्षिभिः ॥ १०
ततो वै यजमानस्य पावकादतुलप्रभम् ।
प्रादुर्भूतं महद्भूतं महावीर्यं महाबलम् ॥ ११
कृष्णरक्ताम्बरधरं रक्तास्यं दुन्दुभिस्वनम् ।
स्निग्धहर्यक्षतनुजश्मश्रुप्रवरमूर्धजम् ॥ १२
शुभलक्षणसम्पन्नं दिव्याभरणभूषितम् ।
शैलशृङ्गसमुत्सेधं दृप्तशार्दूलविक्रमम् ॥ १३
दिवाकरसमाकारं दीप्तानलशिखोपमम् ।
[महादंष्ट्रं गदापाणिं गोपतिश्लिष्टकन्धरम् ॥ १४
महोरस्कं महाबाहु मङ्गदद्वयशोभितम् ।
ताराविकृतकल्पेन हारेणोरसि राजता ॥ १५
ताराधिपतिकल्पै श्च दन्तैः परमशोभितम् ।
ज्वलन्निव च तेजोभि र्दीपयन्निव च श्रिया ॥ १६
तप्तजाम्बूनदमयै र्भूषणै र्भूषितं च यत् ।]
तप्तजाम्बूनदमयीं राजतान्तपरिच्छदाम् ॥ १७
दिव्यपायससम्पूर्णां पात्रीं पत्नी मिव प्रियाम् ।
प्रगृह्य विपुलां दोर्भ्यां स्वयं मायामयी मिव ॥ १८

समवेक्ष्याब्रवी द्वाक्य मिदं दशरथं नृपम् ।
"प्राजापत्यं नरं विद्धि मामिहाभ्यागतं नृप ॥" १९

ततःपरं तदा राजा प्रत्युवाच कृताञ्जलिः ।
"भगव! न्स्वागतं तेऽस्तु किं महं करवाणि ते ॥" २०

अथो पुनरिदं वाक्यं प्राजापत्योनरोऽब्रवीत् ।
राज! न्नर्चयता देवानद्य प्राप्तमिदं त्वया ॥ २१

इदं तु नृपशार्दूल! पायसं देवनिर्मितम् ।
प्रजाकरं गृहाण त्वं धन्यमारोग्यवर्धनम् ॥ २२

भार्याणा मनुरूपाणा 'मश्नी' तेति प्रयच्छ वै ।
तासु त्वं प्राप्स्यसे पुत्रान्यदर्थं यजसे नृप! ॥ २३

"तथे"ति नृपतिः प्रीत श्शिरसा प्रतिगृह्यताम् ।
पात्रीं देवान्नसंपूर्णां देवदत्तां हिरण्मयीम् ॥ २४

अभिवाद्य च तद्भूत मद्भुतं प्रियदर्शनम् ।
मुदा परमया युक्तश्चकाराभिप्रदक्षिणम् ॥ २५

ततो दशरथः प्राप्य पायसं देवनिर्मितम् ।
बभूव परमप्रीतः प्राप्य वित्तमिवाधनः ॥ २६

ततस्तदद्भुतप्रख्यं भूतं परमभास्वरम् ।
संवर्तयित्वा तत्कर्म तत्रैवान्तरधीयत ॥ २७

हर्षरश्मिभि रुद्योतं तस्यान्तःपुरमाबभौ ।
शारदस्याभिरामस्य चन्द्रस्येव नभोऽम्शुभिः ॥ २८

सोऽन्तःपुरं प्रविश्यैव कौसल्या मिदमब्रवीत् ।
"पायसं प्रतिगृह्णीष्व पुत्रीयं त्विद मात्मनः ॥" २९

कौसल्यायै नरपतिः पायसार्धं ददौ तदा ।
अर्धादर्धं ददौ चापि सुमित्रायै नराधिपः ॥ ३०
कैकेय्यै चावशिष्टार्धं ददौ पुत्रार्थकारणात् ।
प्रददौ चावशिष्टार्धं पायसस्यामृतोपमम् ॥ ३१
अनुचिन्त्य सुमित्रायै पुनरेव महीपतिः ।
एवं तासां ददौ राजा भार्याणां पायसं पृथक् ॥ ३२
तास्त्वेतत्पायसं प्राप्य नरेन्द्रस्योत्तमस्त्रियः ।
सम्मानं मेनिरे सर्वाः प्रहर्षोदितचेतसः ॥ ३३
तत स्तु ताः प्राश्य तदुत्तमस्त्रियो महीपते रुत्तमपायसं पृथक् ।
हुताशनादित्यसमानतेजस श्चिरेण गर्भान्प्रतिपेदिरे तदा ॥ ३४
तत स्तु राजा प्रसमीक्ष्य तास्स्त्रियः प्ररूढगर्भाः प्रतिलब्धमानसः ।
बभूव हृष्ट स्त्रिदिवे यथा हरि स्सुरेन्द्रसिद्धर्षिगणाभिपूजितः ॥ ३५

इति श्रीमद्बालकाण्डे षोडशस्सर्गः ॥

---

## ॥ सप्तदशस्सर्गः ॥

पुत्रत्वं तु गते विष्णौ राज्ञस्तस्य महात्मनः ।
उवाच देवता स्सर्वा स्स्वयम्भूर्भगवा निदम् ॥ १
"सत्यसन्धस्य वीरस्य सर्वेषां नो हितैषिणः ।
विष्णो स्सहाया न्बलिनस्सृजध्वं कामरूपिणः ॥ २
मायाविद श्च शूरां श्च वायुवेगसमान्जवे ।
नयज्ञान्बुद्धिसम्पन्नान्विष्णुतुल्यपराक्रमान् ॥ ३

असंहार्यानुपायज्ञान्दिव्यसंहननान्वितान् ।
सर्वास्त्रगुणसम्पन्नानमृतप्राशनानिव ॥ ४
अप्सरस्सु च मुख्यासु गन्धर्वीणां तनूषु च ।
[यक्षपन्नगकन्यासु ऋक्षीविद्याधरीषु च ॥ ५
किन्नरीणां च गात्रेषु वानरीणां तनूषु च ।]
सृजध्वं हरिरूपेण पुत्रां स्तुल्यपराक्रमान् ॥ ६
पूर्वमेव मयासृष्टो जाम्बवानृक्षपुङ्गवः ।
जृम्भमाणस्य सहसा मम वक्त्रादजायत ॥" ७
ते तथोक्ता भगवता तत्प्रतिश्रुत्य शासनम् ।
जनयामासु रेवं ते पुत्रान्वानररूपिणः ॥ ८
ऋषय श्च महात्मानः सिद्धविद्याधरोरगाः ।
चारणा श्च सुतान्वीरान्ससृजु र्वनचारिणः ॥ ९
वानरेन्द्रं महेन्द्राभ मिन्द्रो वालिनमूर्जितम् ।
सुग्रीवं जनयामास तपनस्तपतां वरः ॥ १०
बृहस्पति स्त्वजनयत्तारं नाम महाहरिम् ।
सर्ववानरमुख्यानां बुद्धिमन्त मनुत्तमम् ॥ ११
धनदस्य सुत श्श्रीमान्वानरो गन्धमादनः ।
विश्वकर्मा त्वजनय न्नळं नाम महाहरिम् ॥ १२
पावकस्य सुत श्श्रीमान्नीलोऽग्निसदृशप्रभः ।
तेजसा यशसा वीर्या दत्यरिच्यत वानरान् ॥ १३
रूपद्रविणसम्पन्ना वश्विनौ रूपसम्मतौ ।
मैन्दं च द्विविदं चैव जनयामासतु स्स्वयम् ॥ १४

वरुणो जनयामास सुषेणं वानरर्षभम् ।
शरभं जनयामास पर्जन्यस्तु महाबलम् ॥ १५
मारुतस्यात्मज श्श्रीमान्हनूमन्नाम वानरः ।
वज्रसंहननोपेतो वैनतेयसमो जवे ॥ १६
[सर्ववानरमुख्येषु बुद्धिमान्बलवानपि ।]
ते सृष्टा बहुसाहस्रा दशग्रीववधे रताः ॥ १७
अप्रमेयबला वीरा विक्रान्ताः कामरूपिणः ।
मेरुमंदरसंकाशा वपुष्मन्तो महाबलाः ॥ १८
ऋक्षवानरगोपुच्छाः क्षिप्र मेवाभिजज्ञिरे ।
यस्य देवस्य यद्रूपं तेजो य श्च पराक्रमः ॥ १९
अजायत समस्तेन तस्य तस्य सुतः पृथक् ।
गोलाङ्गूलीषु चोत्पन्नाः केचित्सम्मतविक्रमाः ॥ २०
ऋक्षीषु च तथा जाता वानराः किन्नरीषु च ।
देवा महर्षिगन्धर्वा स्तार्क्ष्या यक्षा मनस्विनः ॥ २१
नागाः किम्पुरुषा श्चैव सिद्धविद्याधरोरगाः ।
बहवो जनयामासु हृष्टा स्तत्र सहस्रशः ॥ २२
वानरान्सुमहाकायान्सर्वान्वै वनचारिणः ।
अप्सरस्सु च मुख्यासु तथा विद्याधरीषु च ॥ २३
नागकन्यासु च तथा गन्धर्वीणां तनूषु च ।
कामरूपबलोपेता यथा कामविचारिणः ॥ २४
सिंहशार्दूलसदृशा दर्पेण च बलेन च ।
शिलाप्रहरणा स्सर्वे सर्वे पादपयोधिनः ॥ २५

नखदंष्ट्रायुधा स्सर्वे सर्वे सर्वास्त्रकोविदाः ।
विचालयेयु श्शैलेन्द्रा न्भेदयेयु स्स्थिरान्द्रुमान् ॥ २६
क्षोभयेयु श्च वेगेन समुद्रं सरितां पतिम् ।
दारयेयुः क्षितिं पद्भ्या माप्लवेयु र्महार्णवम् ॥ २७
नभस्स्थलं विशेयु श्च गृह्णीयु रपि तोयदान् ।
गृह्णीयु रपि मातङ्गान्मत्तान्प्रव्रजतो वने ॥ २८
नर्दमाना श्च नादेन पातयेयुर्विहंगमान ।
ईदृशानां प्रसूतानि हरीणां कामरूपिणाम् ॥ २९
शतं शतसहस्राणि यूथपानां महात्मनाम् ।
ते प्रधानेषु यूथेषु हरीणा हरियूथपाः ॥ ३०
बभूवु र्यूथपश्रेष्ठा वीरांश्चाजनयन्हरीन ।
अन्ये ऋक्षवतः प्रस्था नुपतस्थु स्सहस्रशः ॥ ३१
अन्ये नानाविधान्शैलान्भेजिरे काननानि च ।
सूर्यपुत्रं च सुग्रीवं शक्रपुत्रं च वालिनम् ॥ ३२
भ्रातरा वुपतस्थु स्ते सर्वएव हरीश्वराः ।
नळं नीलं हनूमन्त मन्यांश्च हरियूथपान् ॥ ३३
ते तार्क्ष्यवेगसम्पन्ना स्सर्वे युद्धविशारदाः ।
विचरन्तोऽर्दयन्दर्पात्सिंहव्याघ्रमहोरगान ॥ ३४
तां श्च सर्वान्महाबाहु र्वाली विपुलविक्रमः ।
जुगोप भुजवीर्येण ऋक्षगोपुच्छवानरान् ॥ ३५
तैरियं पृथिवी शूरै स्सपर्वतवनार्णवा ।
कीर्णा विविधसंस्थानै र्नानाव्यञ्जनलक्षणैः ॥ ३६

तैर्मेघबृंदाचलकूटकल्पैर्महाबलै र्वानरयूथपालैः ।
बभूव भूर्भीमशरीररूपै स्समावृता रामसहायहेतोः ॥ ३७

इति श्रीमद्बालकाण्डे सप्तदशस्सर्गः ॥

## ॥ अष्टादशस्सर्गः ॥

निर्वृत्ते तु क्रतौ तस्मिन्हयमेधे महात्मनः ।
प्रतिगृह्य सुराभागान्प्रतिजग्मु र्यथागतम् ॥ १

समाप्तदीक्षानियमः पत्नीगणसमन्वितः ।
प्रविवेश पुरीं राजा सभृत्यबलवाहनः ॥ २

यथार्हं पूजिता स्तेन राज्ञा वै पृथिवीश्वराः ।
मुदिताः प्रययु र्देशान्प्रणम्य मुनिपुङ्गवम् ॥ ३

श्रीमतां गच्छतां तेषां स्वपुराणि पुरात्ततः ।
बलानि राज्ञां शुभ्राणि प्रहृष्टानि चकाशिरे ॥ ४

गतेषु पृथिवीशेषु राजा दशरथ स्तदा ।
प्रविवेश पुरीं श्रीमान्पुरस्कृत्य द्विजोत्तमान् ॥ ५

शान्तया प्रययौ सार्धं ऋश्यशृङ्ग स्सुपूजितः ।
अन्वीयमानो राज्ञाऽथ सानुयात्रेण धीमता ॥ ६

एवं विसृज्य तान्सर्वान्राजासम्पूर्णमानसः ।
उवास सुखित स्तत्र पुत्रोत्पत्तिं विचिन्तयन् ॥ ७

ततो यज्ञे समाप्ते तु ऋतूनां षट्समत्ययुः ।

## ॥ श्रीरामावतारघट्टः ॥

तत श्च द्वादशे मासे चैत्रे नावमिके तिथौ ॥ ८
नक्षत्रेऽदितिदैवत्ये स्वोच्चसंस्थेषु पञ्चसु ।
ग्रहेषु कर्कटेलग्ने वाक्पता विन्दुनासह ॥ ९
प्रोद्यमाने जगन्नाथं सर्वलोकनमस्कृतम् ।
कौसल्याऽजनयद्रामं सर्वलक्षणसंयुतम् ॥ १०
विष्णो रर्धं महाभागं पुत्त्रमैक्ष्वाकुवर्धनम् ।
कासैल्या शुशुभे तेन पुत्रेणामिततेजसा ॥ ११
यथा वरेण देवाना मदितिर्वज्रपाणिना ।
भरतो नाम कैकेय्यां जज्ञे सत्यपराक्रमः ॥ १२
साक्षाद्विष्णो श्चतुर्भाग स्सर्वैस्समुदितो गुणैः ।
अथ लक्ष्मणशत्रुघ्नौ सुमित्राऽजनयत्सुतौ ॥ १३
वीरौ सर्वास्त्रकुशलौ विष्णो रर्धसमन्वितौ ।
पुष्ये जातस्तु भरतो मीनलग्ने प्रसन्नधीः ॥ १४
सार्पे जातौ तु सौमित्री कुळीरेऽभ्युदिते रवौ ।
राज्ञः पुत्रा महात्मान श्चत्वारो जज्ञिरे पृथक् ॥ १५
गुणवन्तोऽनुरूपाश्च रुच्या प्रोष्ठपदोपमाः ।
जगुः कलं च गन्धर्वा ननृतुश्चाप्सरोगणाः ॥ १६
देवदुन्दुभयो नेदुः पुष्पवृष्टि श्च खाच्च्युता ।
उत्सवश्च महानासी दयोध्यायां जनाकुलः ॥ १७
रथ्या श्च जनसम्बाधा नटनर्तकसङ्कुलाः ।
गायकै श्च विराविण्यो वादनै श्च तथापरैः ॥ १८

ादेयांश्च ददौ राजा सूतमागधवन्दिनाम् ।
ब्राह्मणेभ्यो ददौ वित्तं गोधनानि सहस्रशः ॥ १९
अतीत्यैकादशाहं तु नामकर्म तथाऽकरोत् ।
ज्येष्ठं रामं महात्मानं भरतं कैकयीसुतम् ॥ २०
सौमित्रिं लक्ष्मणमिति शत्रुघ्न मपरं तथा ।
वसिष्ठः परमप्रीतो नामानि कृतवां स्तदा ॥ २१
ब्राह्मणान्भोजयामास पौरान्जानपदानपि ।
अददा द्ब्राह्मणानां तु रत्नौघममितं बहु ॥ २२
तेषां जन्मक्रियादीनि सर्वकर्माण्यकारयत् ।
तेषां केतुरिव ज्येष्ठो रामो रतिकरः पितुः ॥ २३
बभूव भूयो भूतानां स्वयम्भूरिव सम्मतः ।
सर्वे वेदविदश्शूरा स्सर्वे लोकहिते रताः ॥ २४
सर्वे ज्ञानोपसम्पन्ना स्सर्वे समुदिता गुणैः ।
तेषा मपि महातेजा रामस्सत्यपराक्रमः ॥ २५
इष्टस्सर्वस्य लोकस्य शशाङ्क इव निर्मलः ।
गजस्कन्धेऽश्वपृष्ठेच रथचर्यासु सम्मतः ॥ २६
धनुर्वेदे च निरतः पितृशुश्रूषणे रतः ।
बाल्यात्प्रभृतिसुस्निग्धो लक्ष्मणो लक्ष्मिवर्धनः ॥ २७
रामस्य लोकरामस्य भ्रातुर्ज्येष्ठस्य नित्यशः ।
सर्वप्रियकरस्तस्य रामस्यापि शरीरतः ॥ २८
लक्ष्मणो लक्ष्मिसम्पन्नो बहिःप्राण इवापरः ।
नच तेन विना निद्रां लभते पुरुषोत्तमः ॥ २९

मृष्टमन्न मुपानीत मश्नाति नहि तं विना ।
यदा हि हयमारुह्य मृगयां याति राघवः ॥ ३०
तदैनं पृष्ठतोऽन्वेति स धनुः परिपालयन ।
भरतस्यापि शत्रुघ्नो लक्ष्मणावरजो हि सः ॥ ३१
प्राणैः प्रियतरो नित्यं तस्य चासीत्तथा प्रियः ।
स चतुर्भिर्महाभागैः पुत्रैर्दशरथः प्रियैः ॥ ३२
बभूव परमप्रीतो देवैरिव पितामहः ।
ते यदा ज्ञानसम्पन्ना स्सर्वे स्समुदिता गुणैः ॥ ३३
ह्रीमन्तः कीर्तिमन्त श्च सर्वज्ञा दीर्घदर्शिनः ।
तेषामेवं प्रभावानां सर्वेषा दीप्ततेजसाम् ॥ ३४
पिता दशरथो हृष्टो ब्रह्मा ! लोकाधिपो यथा ।
ते चापि मनुजव्याघ्रा वैदिकाध्ययने रताः ॥ ३५
पितृशुश्रूषणरताः धनुर्वेदे च निष्ठिताः ।
अथ राजा दशरथस्तेषां दारक्रिया प्रति ॥ ३६
चिन्तयामास धर्मात्मा सोपाध्याय स्सबान्धवः ।
तस्य चिन्तयमानस्य मन्त्रिमध्ये महात्मनः ॥ ३७
अभ्यागच्छन्महातेजा विश्वामित्रो महामुनिः ।
स राज्ञो दर्शनाकांक्षी द्वाराध्यक्षानुवाच ह ॥ ३८
"शीघ्रमाख्यात मां प्राप्तं कौशिकं गाधिनस्सुतम् ।"
तच्छ्रुत्वा वचनं त्रासाद्राज्ञो वेश्म प्रदुद्रुवुः ॥ ३९
सम्भ्रान्तमनस स्सर्वे तेन वाक्येन चोदिताः ।
ते गत्वा राजभवनं विश्वामित्र मृषिं तदा ॥ ४०

प्राप्तमावेदयामासु र्नृपायैक्ष्वाकवे तदा ।
तेषां तद्वचनं श्रुत्वा सपुरोधा स्समाहितः ॥ ४१
प्रत्युज्जगाम तं हृष्टो ब्रह्माण मिव वासवः ।
तं दृष्ट्वाज्वलितं दीप्त्या तापसं संशितव्रतम् ॥ ४२
प्रहृष्टवदनो राजा ततोऽर्घ्य मुपहारयत् ।
स राज्ञः प्रतिगृह्यार्घ्यं शास्त्रदृष्टेनकर्मणा ॥ ४३
कुशलं चाव्ययं चैव पर्यपृच्छन्नराधिपम् ।
पुरे कोशे जनपदे बान्धवेषु सुहृत्सु च ॥ ४४
कुशलं कौशिको राज्ञः पर्यपृच्छ त्सुधार्मिकः ।
"अपि ते सन्नता स्सर्वे सामन्ता रिपवो जिताः ! ॥ ४५
दैवं च मानुषं चापि कर्म ते साध्वनुष्ठितम् ।"
वसिष्ठं च समागम्य कुशलं मुनिपुङ्गवः ॥ ४६
ऋषींश्चान्या न्यथान्यायं महाभागानुवाच ह ।
ते सर्वे हृष्टमनसस्तस्य राज्ञो निवेशनम् ॥ ४७
विविशुः पूजिता स्तत्र निषेदुश्च यथार्हतः ।
अथ हृष्टमना राजा विश्वामित्रं महामुनिम् ॥ ४८
उवाच परमोदारो हृष्टस्तमभिपूजयन् ।
"यथाऽमृतस्य सम्प्राप्तिर्यथा वर्ष मनूदके ॥ ४९
यथा सदृशदारेषु पुत्रजन्माऽप्रजस्य च ।
प्रणष्टस्य यथा लाभो यथा हर्षो महोदये ॥ ५०
तथैवागमनं मन्ये स्वागतं ते महामुने ! ।
कंचते परमं कामं करोमि किमु हर्षितः ॥ ५१

पात्रभूतोऽसि मे ब्रह्म! न्दिष्ट्या प्राप्तोऽसि कौशिक! ।
अद्य मे सफलं जन्म जीवितं च सुजीवितम् ॥ ५२

पूर्वं राजर्षिशब्देन तपसा द्योतितप्रभः ।
ब्रह्मर्षित्व मनुप्राप्तः पूज्योऽसि बहुधा मया ॥ ५३

तदद्भुत मिदं ब्रह्मन्! पवित्रं परमं मम ।
शुभक्षेत्रगतश्चाहं तव सन्दर्शनात्प्रभो! ॥ ५४

ब्रूहि यत्प्रार्थितं तुभ्यं कार्यं मागमनं प्रति ।
इच्छाम्यनुगृहीतोऽहं त्वदर्थं परिवृद्धये ॥ ५५

कार्यस्य न विमर्शं च गंतु मर्हसि कौशिक! ।
कर्ता चाह मशेषेण दैवतं हि भवा न्मम ॥ ५६

मम चाय मनुप्राप्तो महानभ्युदयो द्विज! ।
तवागमनजः कृत्स्नो धर्मश्चानुत्तमो मम ॥" ५७

इति हृदयसुखं निशम्य वाक्यं श्रुतिसुख मात्मवता विनीतमुक्तम् ।
प्रथितगुणयशा गुणै र्विशिष्टः परमऋषिः परमं जगाम हर्षम् ५८

इति श्रीमद्बालकाण्डे अष्टादशस्सर्गः ॥

---

## ॥ एकोनविंशस्सर्गः ॥

तच्छ्रुत्वा राजसिंहस्य वाक्य मद्भुतविस्तरम् ।
हृष्टरोमा महातेजा विश्वामित्रोऽभ्यभाषत ॥ १

"सदृशं राजशार्दूल! तवैतद्भुवि नान्यथा ।
महावंशप्रसूतस्य वसिष्ठव्यपदेशिनः ॥ २

यत्तु मे हृद्गतं वाक्यं तस्यकार्यस्य निश्चयम् ।
कुरुष्व राजशार्दूल! भव सत्यप्रतिश्रवाः ॥ ३
अहं नियममातिष्ठे सिद्ध्यर्थं पुरुषर्षभ! ।
तस्य विघ्नकरौ द्वौतु राक्षसौ कामरूपिणौ ॥ ४
व्रते मे बहुशश्चीर्णे समाप्त्यां राक्षसा विमौ ।
मारीच श्च सुबाहुश्च वीर्यवन्तौ सुशिक्षितौ ॥ ५
समांसरुधिरौघेन वेदीं तामभ्यवर्षताम् ।
अवधूते तथाभूते तस्मिन्नियमनिश्चये ॥ ६
कृतश्रमो निरुत्साह स्तस्मा द्देशा दपाक्रमे ।
नच मे क्रोध मुत्स्रष्टुं बुद्धिर्भवति पार्थिव! ॥ ७
तथा भूता हि सा चर्या न शापस्तत्र मुच्यते ।
स्वपुत्र राजशार्दूल! राम सत्यपराक्रमम् ॥ ८
काकपक्षधर शूरं ज्येष्ठं मे दातु मर्हसि ।
शक्तो ह्येष मया गुप्तो दिव्येन स्वेन तेजसा ॥ ९
राक्षसा ये विकर्तार स्तेषा मपि विनाशने ।
श्रेय श्चास्मै प्रदास्यामि बहुरूपं न संशयः ॥ १०
त्रयाणा मपि लोकानां येन ख्यातिं गमिष्यति ।
न च तौ राममासाद्य शक्तौ स्थातुं कथंचन ॥ ११
न च तौ राघवादन्यो हन्तुमुत्सहते पुमान् ।
वीर्योत्सिक्तौ हि तौ पापौ कालपाशवशंगतौ ॥ १२
रामस्य राजशार्दूल! न पर्याप्तौ महात्मनः ।
न च पुत्र कृतस्नेहं कर्तु मर्हसि पार्थिव ॥ १३

अहं ते प्रतिजानामि हतौ तौ विद्धि राक्षसौ ।
अहं वेद्मि महात्मानं रामं सत्यपराक्रमम् ॥ १४
वसिष्ठोऽपि महातेजा ये चेमे तपसि स्थिताः ।
यदि ते धर्मलाभं च यशश्च परमं भुवि ॥ १५
स्थितमिच्छसि राजेन्द्र रामं मे दातु मर्हसि ।
यदि ह्यनुज्ञां काकुत्स्थ! ददते तव मन्त्रिणः ॥ १६
वसिष्ठप्रमुखा स्सर्वे ततो रामं विसर्जय ।
अभिप्रेत मसंसक्त मात्मजं दातु मर्हसि ॥ १७
दशरात्रं हि यज्ञस्य रामं राजीवलोचनम् ।
नात्येति कालो यज्ञस्य यथाऽयं मम राघव! ॥ १८
तथा कुरुष्व भद्रं ते माच शोके मनः कृथाः ।"
इत्येव मुक्त्वा धर्मात्मा धर्मार्थसहितं वचः ॥ १९
विरराम महातेजा विश्वामित्रो महामुनिः ।
स तन्निशम्य राजेन्द्रो विश्वामित्रवचश्शुभम् ॥ २०
शोक मभ्यगम त्तीव्रं व्यषीदत भयान्वितः ।
इतिहृदयमनोविदारणं मुनिवचनं तदतीव शुश्रुवान् ।
नरपति रभवन्महामतिस्तदा व्यथितमनाः प्रचचाल चासनात् ॥२१

इति श्रीमद्बालकाण्डे एकोनविंशस्सर्गः ॥

## ॥ विंशस्सर्गः ॥

तच्छ्रुत्वा राजशार्दूलो विश्वामित्रस्य भाषितम् ।
मुहूर्तमिव निस्संज्ञ स्संज्ञावा निद मब्रवीत् ॥ १

"ऊनषोडशवर्षो मे रामो राजीवलोचनः ।
न युद्धयोग्यता मस्य पश्यामि सह राक्षसैः ॥ २
इय मक्षौहिणी पूर्णा यस्याऽहं पतिरीश्वरः ।
अनया संवृतो गत्वा योद्धाऽहं तै र्निशाचरैः ॥ ३
इमे शूराश्च विक्रान्ता भृत्या मेऽस्त्रविशारदाः ।
योग्या रक्षोगणै र्योग्यं न रामं नेतु मर्हसि ॥ ४
अह मेव धनुष्पाणि र्गोप्ता समरमूर्धनि ।
यावत्प्राणान्धरिष्यामि तावद्योत्स्ये निशाचरैः ॥ ५
निर्विघ्ना व्रतचर्या सा भविष्यति सुरक्षिता ।
अहं तत्रागमिष्यामि न रामं नेतु मर्हसि ॥ ६
बालो ह्यकृतविद्य श्च न च वेत्ति बलाबलम् ।
न चास्त्रबलसंयुक्तो न च युद्धविशारदः ॥ ७
न चासौ रक्षसां योग्यः कूटयुद्धा हि ते ध्रुवम् ।
विप्रयुक्तो हि रामेण मुहूर्त मपि नोत्सहे ॥ ८
जीवितुं मुनिशार्दूल! न रामं नेतु मर्हसि ।
यदि वा राघवं ब्रह्म! न्नेतु मिच्छसि सुव्रत! ॥ ९
चतुरंगसमायुक्तं मया च सहितं नय ।
षष्टिर्वर्षसहस्राणि जातस्य मम कौशिक! ॥ १०
दुःखेनोत्पादित श्चायं न रामं नेतु मर्हसि ।
चतुर्णा मात्मजानां हि प्रीतिः परमिका मम ॥ ११
ज्येष्ठं धर्मप्रदानं च न रामं नेतुं मर्हसि ।
किंवीर्या राक्षसा स्ते च कस्य पुत्रा श्च केचते ॥ १२

कथं प्रमाणाः के चैता त्रक्षन्ति मुनिपुङ्गव ! ।
कथं च प्रतिकर्तव्यं तेषां रामेण रक्षसाम् ॥ १३
मामकै र्वा बलै र्ब्रह्मन् ! मया वा कूटयोधिनाम् ।
सर्वं मे शंस भगव ! न्कथं तेषां मया रणे ॥ १४
स्थातव्यं दुष्टभावानां वीर्योत्सिक्ता हि राक्षसाः ।"
तस्य तद्वचनं श्रुत्वा विश्वामित्रोऽभ्यभाषत ॥ १५
"पौलस्त्यवंशप्रभवो रावणो नाम राक्षसः ।
स ब्रह्मणा दत्तवर स्त्रैलोक्यं बाधते भृशम् ॥ १६
महाबलो महावीर्यो राक्षसै र्बहुभि र्वृतः ।
श्रूयते हि महावीर्यो रावणो राक्षसाधिपः ॥ १७
साक्षाद्वैश्रवणभ्राता पुत्रो विश्रवसो मुनेः ।
यदा स्वयं न यज्ञस्य विघ्नकर्ता महाबलः ॥ १८
तेन संचोदितौ द्वौतु राक्षसौ सुमहाबलौ ।
मारीच श्च सुबाहु श्च यज्ञविघ्नं करिष्यतः ॥" १९
इत्युक्तो मुनिना तेन राजोवाच मुनिं तदा ।
"न हि शक्तोऽस्मि सङ्ग्रामे स्थातुं तस्य दुरात्मनः ॥ २०
स त्वं प्रसादं धर्मज्ञ ! कुरुष्व ममपुत्रके ।
मम चैवाल्पभाग्यस्य दैवतं हि भवान्गुरुः ॥ २१
देवदानवगन्धर्वा यक्षाः पतगपन्नगाः ।
न शक्ता रावणं सोढुं किंपुनर्मानवा युधि ॥ २२
[येन विक्रमवीर्येण दाक्षिणो लोकपालकः ।
निर्जितो धनुरायम्य साक्षाद्वैश्रवणश्च सः ॥ २३

तस्मै रामं कथं ब्रह्म! न्नेतु मर्हसि नार्हसि ।]
सहिर्वीर्यवतां वीर्य मादत्ते युधि राक्षसः ॥ २४
तेन चाहं नशक्तोऽस्मि संयोद्धुं तस्य वा बलैः ।
सबलो वा मुनिश्रेष्ठ सहितो वा ममात्मजैः ॥ २५
कथमप्यमरप्रख्यं सङ्ग्रामाणा मकोविदम् ।
बालं मे तनयं ब्रह्म! न्नैव दास्यामि पुत्रकम् ॥ २६
अथ कालोपमौ युद्धे सुतौ सुन्दोपसुन्दयोः ।
यज्ञविघ्नकरौ तौ ते नैव दास्याम्यहं सुतम् ॥ २७
मारीच श्च सुबाहु श्च वीर्यवन्तौ सुशिक्षितौ ।
तयोरन्यतरेणाहं योद्धा स्यां ससुहृद्गणः ॥" २८
इति नरपतिजल्पना द्विजेन्द्रं कुशिकसुतं सुमहान्विवेश मन्युः ।
सुहुत इव मखेऽग्नि राज्यसिक्त स्समभव दुज्ज्वलितो महर्षिवह्निः ॥

इति श्रीमद्बालकाण्डे विंशस्सर्गः ॥

---

## ॥ एकविंशस्सर्गः ॥

तच्छ्रुत्वा वचनं तस्य स्नेहपर्याकुलाक्षरम् ।
समन्युः कौशिको वाक्यं प्रत्युवाच महीपतिम् ॥ १
"पूर्व मर्थ प्रतिश्रुत्य प्रतिज्ञां हातुमिच्छसि ।
राघवाणा मयुक्तोऽयं कुलस्यास्य विपर्ययः ॥ २
यदीदं ते क्षमं राजन्! गमिष्यामि यथागतम् ।
मिथ्याप्रतिज्ञः काकुत्स्थ! सुखी भव स बान्धवः ॥" ३

तस्य रोषपरीतस्य विश्वामित्रस्य धीमतः ।
चचाल वसुधा कृत्स्ना विवेश च भयं सुरान् ॥ ४
त्रस्तरूपं तु विज्ञाय जगत्सर्वं महानृषिः ।
नृपतिं सुव्रतो धीरो वसिष्ठो वाक्य मब्रवीत् ॥ ५
"इक्ष्वाकूणां कुले जात स्साक्षाद्धर्म इवापरः ।
धृतिमान्सुव्रत श्श्रीमान्नधर्मं हातु मर्हसि ॥ ६
त्रिषु लोकेषु विख्यातो धर्मात्मा इति राघव! ।
स्वधर्मं प्रतिपद्यस्व नाधर्मं वोढु मर्हसि ॥ ७
संश्रुत्यैवं करिष्यामीत्यकुर्वाणस्य राघव ! ।
इष्टापूर्तवधो भूयात्तस्मा द्रामं विसर्जय ॥ ८
कृतास्त्र मकृतास्त्रं वा नैनं शक्ष्यन्ति राक्षसाः ।
गुप्तं कुशिकपुत्रेण ज्वलनेनामृतं यथा ॥ ९
एष विग्रहवान्धर्म एष वीर्यवतां वरः ।
एष बुद्ध्याऽधिको लोके तपस श्च परायणम् ॥ १०
एषोऽस्त्रान्विविधान्वेत्ति त्रैलोक्ये सचराचरे ।
नैन मन्यः पुमान्वेत्ति न वेत्स्यन्ति च केचन ॥ ११
न देवा नर्षयः केचि न्नासुरा न च राक्षसाः ।
गन्धर्वयक्षप्रवरास्सकिन्नरमहोरगाः ॥ १२
सर्वास्त्राणि भृशाश्वस्य पुत्राः परमधार्मिकाः ।
कौशिकाय पुरादत्ता यदा राज्यं प्रशासति ॥ १३
तेऽपि पुत्रा भृशाश्वस्य प्रजापति सुतासुताः ।
नैकरूपा महावीर्या दीप्तिमन्तो जयावहाः ॥ १४

जया च सुप्रभा चैव दक्षकन्ये सुमध्यमे ।
तेसुवातेऽस्त्रशस्त्राणि शतं परमभास्वरम् ॥ १५

पञ्चाशत सुतान्लेभे जया नाम परान्पुरा ।
वधायासुरसैन्याना ममेयान्कामरूपिणः ॥ १६

सुप्रभाऽजनयच्चापि पुत्रा न्पञ्चाशतं पुनः ।
संहारान्नाम दुर्धर्षान्दुराक्रामान्बलीयसः ॥ १७

तानि चास्त्राणि वेत्त्येष यथावत्कुशिकात्मजः ।
अपूर्वाणां च जनने शक्तोभूय श्च धर्मवित् ॥ १८

एवं वीर्यो महातेजा विश्वामित्रो महायशाः ।
न रामगमने राज! न्संशयं गन्तु मर्हसि ॥ १९

तेषां निग्रहणे शक्त स्स्वयं च कुशिकात्मजः ।
तव पुत्रहितार्थाय त्वामुपेत्याभियाचते ॥" २०

इति मुनिवचनात्प्रसन्नचितो रघुवृषभस्तु मुमोद भास्वराङ्गः ।
गमन मभिरुरोच राघवस्य प्रथितयशाः कुशिकात्मजाय बुद्ध्या ॥

॥ इति श्रीमद्बालकाण्डे एकविंशस्सर्गः ॥

---

## ॥ द्वाविंशस्सर्गः ॥

तथा वसिष्ठे ब्रुवति राजा दशरथ स्सुतम् ।
प्रहृष्टवदनो राम माजुहाव सलक्ष्मणम् ॥ १

कृतस्वस्त्ययनं मात्रा पित्रा दशरथेन च ।
पुरोधसा वसिष्ठेन मङ्गलै रभिमन्त्रितम् ॥ २

स पुत्रं मूर्ध्न्युपाघ्राय राजा दशरथः प्रियम् ।
ददौ कुशिकपुत्राय सुप्रीतेनान्तरात्मना ॥ ३
[ततो भूयो वसिष्ठेन मङ्गळै रभिमन्त्रितम् ।
आदाय विप्रो हृष्टोऽभूत्त्रिदशा विज्वराभवन् ॥] ४
ततो वायुस्सुखस्पर्शो नीरजस्को ववौ तदा ।
विश्वामित्रगतं दृष्ट्वा रामं राजीवलोचनम् ॥ ५
पुष्पवृष्टिर्महत्यासीद्देवदुन्दुभिनिस्वनैः ।
शंखदुन्दुभिनिर्घोषः प्रयाते तु महात्मनि ॥ ६
विश्वामित्रो ययावग्रे ततो रामो धनुर्धरः ।
काकपक्षधरो धन्वी तं च सौमित्रिरन्वगात् ॥ ७
कलापिनौ धनुष्पाणी शोभयानौ दिशो दश ।
विश्वामित्रं महात्मानं त्रिशीर्षा विव पन्नगौ ॥ ८
अनुजग्मतु रक्षुद्रौ पितामहमिवाश्विनौ ।
तदा कुशिकपुत्रं तु धनुष्पाणी स्वलङ्कृतौ ॥ ९
बद्धगोधाङ्गुळित्राणौ खड्गवन्तौ महाद्युती ।
कुमारौ चारुवपुषौ भ्रातरौ रामलक्ष्मणौ ॥ १०
अनुयातौ श्रिया दीप्तौ शोभयेता मनिन्दितौ ।
स्थाणुं देव मिवाचिन्त्यं कुमारा विव पावकी ॥ ११
अध्यर्धयोजनं गत्वा सरय्वा दक्षिणे तटे ।
"रामे"ति मधुरां वाणीं विश्वामित्रोऽभ्यभाषत ॥ १२
"गृहाण वत्स सलिलंमाभूत्कालस्य पर्ययः ।
मन्त्रग्रामं गृहाण त्वं बला मतिबलां तथा ॥ १३

न श्रमो न ज्वरो वा ते न रूपस्य विपर्ययः ।
नच सुप्तं प्रमत्तं वा धर्षयिष्यन्ति नैर्ऋताः ॥ १४
न बाह्वो स्सदृशो वीर्ये पृथिव्या मस्ति कश्चन ।
त्रिषु लोकेषुवै राम! नभवेत्सदृश स्तव ॥ १५
न सौभाग्ये न दाक्षिण्ये न ज्ञाने बुद्धिनिश्चये ।
नोत्तरे प्रतिवक्तव्ये समो लोके तवानघ! ॥ १६
एत द्विद्याद्वये लब्धे भविता नास्ति ते समः ।
बला त्वतिबलाचैव सर्वज्ञानस्य मातरौ ॥ १७
क्षुत्पिपासे न ते राम! भविष्येते नरोत्तम ।
बलामतिबलां चैव पठतः पथि राघव! ॥ १८
विद्याद्वय मधीयाने यश श्चाप्यतुलं त्वयि ।
पितामहसुते ह्येते विद्ये तेजस्समन्विते ॥ १९
प्रदातुं तव काकुत्स्थ! सदृशस्त्वंहि धार्मिकः ।
कामं बहुगुणा स्सर्वे त्वय्येते नात्र संशयः ॥ २०
तपसा सम्भृतेचैते बहुरूपे भविष्यतः ।"
ततो रामो जलं स्पृष्ट्वा प्रहृष्टवदनश्शुचिः ॥ २१
प्रतिजग्राह ते विद्ये महर्षे र्भावितात्मनः ।
विद्यासमुदितो रामश्शुशुभेभूरिविक्रमः ॥ २२
सहस्ररश्मिर्भगवाञ्छरदीव दिवाकरः ।
गुरुकार्याणि सर्वाणि नियुज्य कुशिकात्मजे ॥ २३
ऊषु स्तां रजनीं तीरे सरय्वा स्सुसुखं त्रयः ।

दशरथनृपसूनुसत्तमाभ्यां तृणशयनेऽनुचिते सहोषिताभ्याम् ।
कुशिकसुतवचोनुलालिताभ्यां सुख मिव सा विबभौ विभावरी च ॥

॥ इति श्रीमद्बालकाण्डे द्वाविंशस्सर्गः ॥

## ॥ त्रयोविंशस्सर्गः ॥

प्रभातायां तु शर्वर्यां विश्वामित्रो महामुनिः ।
अभ्यभाषत काकुत्स्थौ शयानौ पर्णसंस्तरे ॥ १
कौसल्यासुप्रजा राम! पूर्वा सन्ध्या प्रवर्तते ।
उत्तिष्ठ नरशार्दूल! कर्तव्यं दैवमाह्निकम् ॥ २
तस्यर्षेः परमोदारं वच श्श्रुत्वा नृपात्मजौ ।
स्नात्वा कृतोदकौ वीरौ जेपतुः परमं जपम् ॥ ३
कृताह्निकौ महावीर्यौ विश्वामित्रं तपोधनम् ।
अभिवाद्याभिसंहृष्टौ गमनायाभितस्थतुः ॥ ४
तौ प्रयातौ महावीर्यौ दिव्यां त्रिपथगां नदीम् ।
ददृशाते ततस्तत्र सरय्वास्सङ्गमे शुभे ॥ ५
तत्राश्रमपदं पुण्यं ऋषीणामग्र्यतेजसाम् ।
बहुवर्षसहस्राणि तप्यतां परमं तपः ॥ ६
तं दृष्ट्वा परमप्रीतौ राघवौ पुण्यमाश्रमम् ।
ऊचतु स्तं महात्मानं विश्वामित्र मिदंवचः ॥ ७
"कस्याय माश्रमः पुण्यः कोन्वस्मिन्वसते पुमान्? ।
भगवन्! श्रोतु मिच्छावः परं कौतूहलं हि नौ ॥" ८

तयो स्तद्वचनं श्रुत्वा प्रहस्य मुनिपुङ्गवः ।
अब्रवी "च्छ्रूयतां राम! यस्यायं पूर्वमाश्रयः ॥ ९
कन्दर्पोमूर्तिमानासीत्काम इत्युच्यते बुधैः ।
तपस्यन्तमिहस्थाणु नियमेन समाहितम् ॥ १०
कृतोद्वाहं तु देवेशं गच्छन्तं समरुद्गणम् ।
धर्षयामास दुर्मेधा हुङ्कृत श्च महात्मना ॥ ११
अवदग्धस्य रौद्रेण चक्षुषा रघुनन्दन! ।
व्यशीर्यन्त शरीरात्स्वात्सर्वगात्राणि दुर्मतेः ॥ १२
तस्यगात्रं हतं तत्र निर्दग्धस्य महात्मना ।
अशरीरः कृतः कामः क्रोधा द्देवेश्वरेण हि ॥ १३
अनङ्ग इति विख्यातस्तदा प्रभृति राघव! ।
स चाङ्गविषय श्श्रीमान्यत्राङ्ग प्रमुमोच ह ॥ १४
तस्याय माश्रमः पुण्यस्तस्येमे मुनयः पुरा ।
शिष्या धर्मपरा नित्यं तेषां पापं न विद्यते ॥ १५
इहाद्य रजनीं राम! वसेम शुभदर्शन! ।
पुण्ययो स्सरितो र्मध्ये श्वस्तरिष्यामहे वयम् ॥ १६
अभिगच्छामहे सर्वे शुचयः पुण्यमाश्रमम् ।
स्नाता श्च कृतजप्या श्च हुतहव्या नरोत्तम! ॥" १७
तेषां संवदतां तत्र तपोदीर्घेण चक्षुषा ।
विज्ञाय परमप्रीता मुनयो हर्षमागमन् ॥ १८
अर्घ्यं पाद्यं तथाऽऽतिथ्यं निवेद्य कुशिकात्मजे ।
रामलक्ष्मणयोः पश्चादकुर्वन्नातिथिक्रियाम् ॥ १९

सत्कारं समनुप्राप्य कथाभि रभिरञ्जयन् ।
यथार्ह मजपन्सन्ध्यामृषयस्ते समाहिताः ॥ २०
तत्रवासिभि रानीता मुनिभि स्सुव्रतै स्सह ।
न्यवसन्सुसुखं तत्र कामाश्रमपदे तदा ॥ २१
कथाभि रभिरामाभि रभिरामौ नृपात्मजौ ।
रमयामास धर्मात्मा कौशिको मुनिपुङ्गवः ॥ २२

इति श्रीमद्बालकाण्डे त्रयोविंशस्सर्गः ॥

॥ चतुर्विंशस्सर्गः ॥

ततः प्रभाते विमले कृताह्निक मरिन्दमौ ।
विश्वामित्रं पुरस्कृत्य नद्यास्तीर मुपागतौ ॥ १
ते च सर्वे महात्मानो मुनय स्संशितव्रताः ।
उपस्थाप्य शुभां नावं विश्वामित्र मथाब्रुवन् ॥ २
"आरोहतु भवान्नावं राजपुत्रपुरस्कृतः ।
अरिष्टं गच्छ पन्थानं माभूत्कालस्य पर्ययः" ॥ ३
विश्वामित्र 'स्तथे' त्युक्त्वातानृषीनभिपूज्य च ।
ततार सहित स्ताभ्यां सरितं सागरंगमाम् ॥ ४
तत श्शुश्राव वै शब्द मतिसंरम्भवर्धितम् ।
मध्य मागम्य तोयस्य सह रामः कनीयसा ॥ ५
अथ राम स्सरिन्मध्ये पप्रच्छ मुनिपुङ्गवम् ।
"वारिणोभिद्यमानस्य किं मयं तुमुलो ध्वनिः" ॥ ६

राघवस्य वचश्श्रुत्वा कौतूहलसमन्वितः ।
कथयामास धर्मात्मा तस्य शब्दस्य निश्चयम् ॥ ७
"कैलासपर्वते राम! मनसानिर्मितं सरः ।
ब्रह्मणा नरशार्दूल! तेनेदं मानसं सरः ॥ ८
तस्मात्सुस्राव सरस स्साऽयोध्यामुपगूहते ।
सरः प्रवृत्ता सरयूः पुण्या ब्रह्मसरश्च्युता ॥ ९
तस्यायं तुमुल श्शब्दो जाह्नवी मभिवर्तते ।
वारिसंक्षोभजो राम! प्रणामं नियतः कुरु ॥" १०
ताभ्यां तु ता वुभौ कृत्वा प्रणाम मतिधार्मिकौ ।
तीरं दक्षिण मासाद्य जग्मतु र्लघुविक्रमौ ॥ ११
स वन घोरसङ्काशं दृष्ट्वा नृपवरात्मजः ।
अविप्रहतमैक्ष्वाकः पप्रच्छमुनिपुङ्गवम् ॥ १२
"अहो! वन मिदं दुर्गं झिल्लिकागणनादितम् ।
भैरवै श्श्वापदैः पूर्णं शकुन्तै र्दारुणारुतैः ॥ १३
नानाप्रकारै श्शकुनै र्वाश्यद्भिर्भैरवस्वनैः ।
सिंहव्याघ्रवराहैश्च वारणैश्चोपशोभितम् ॥ १४
धवाश्वकर्णककुभैर्बिल्वतिन्दुकपाटलैः ।
संकीर्णं बदरीभिश्च किन्वेतद्दारुण वनम् ॥" १५
त मुवाच महातेजा विश्वामित्रो महामुनिः ।
"श्रूयतां वत्स! काकुत्स्थ! यस्यैतद्दारुणं वनम् ॥ १६
एतौ जनपदौ स्फीतौ पूर्वं मास्तां नरोत्तम! ।
मलदाश्च करूशाश्च देवनिर्माणनिर्मितौ ॥ १७

पुरा वृत्रवधे राम! मलेन समभिप्लुतम् ।
क्षुधा चैव सहस्राक्षं ब्रह्महत्या समाविशत् ॥ १८
तमिन्द्रं स्नापयन देवा ऋषयश्च तपोधनाः ।
कलशैः स्नापयामासुर्मलं चास्य प्रमोचयन ॥ १९
इह भूम्यां मलं दत्वा दत्वा कारूशमेव च ।
शरीरजं महेन्द्रस्य ततो हर्षं प्रपेदिरे ॥ २०
निर्मलो निष्करूशश्च शुचि रिन्द्रो यदाऽभवत् ।
ददौ देशस्य सुप्रीतो वर प्रभु रनुत्तमम् ॥ २१
"इमौ जनपदौ स्फीतौ ख्यातिं लोके गमिष्यतः ।
मलदाश्च करूशाश्च ममाङ्गमलधारिणौ ॥" २२
साधु साध्विति तं देवाः पाकशासन मब्रुवन् ।
देशस्य पूजां तां दृष्ट्वा कृतां शक्रेण धीमता ॥ २३
एतौ जनपदौ स्फीतौ दीर्घं काल मरिन्दम! ।
मलदाश्च करूशाश्च मुदितौ धनधान्यतः ॥ २४
कस्यचित्त्वथ कालस्य यक्षीवै कामरूपिणी ।
बलं नागसहस्रस्य धारयन्ती तदा ह्यभूत् ॥ २५
ताटका नाम भद्रंते भार्या सुन्दस्य धीमतः ।
मारीचो राक्षसः पुत्रो यस्याश्शक्रपराक्रमः ॥ २६
वृत्तबाहुर्महावीर्यो विपुलास्यतनुर्महान् ।
राक्षसो भैरवाकारो नित्यं त्रासयते प्रजाः ॥ २७
इमौ जनपदौ नित्यं विनाशयति राघव! ।
मलदांश्च करूशांश्च ताटका दुष्टचारिणी ॥ २८

सेयं पन्थान मावार्य वसत्यध्यर्धयोजने ।
अत एव च गन्तव्यं ताटकाया वनं यतः ॥ २९
स्वबाहुबल माश्रित्य जहीमां दुष्टचारिणीम् ।
मन्नियोगादिमं देशं कुरु निष्कण्टकं पुनः ॥ ३०
नहि कश्चि दिमं देशं शक्नोत्यागन्तु मीदृशम् ।
यक्षिण्या घोरया राम! उत्सादितमसह्यया ॥ ३१
एत त्ते सर्व माख्यातं यथैतद्दारुणं वनम् ।
यक्ष्या चोत्सादितं सर्व मद्यापि न निवर्तते ॥" ३२

इति श्रीमद्बालकाण्डे चतुर्विंशस्सर्गः ॥

---

## ॥ पञ्चविंशस्सर्गः ॥

अथ तस्याप्रमेयस्य मुने र्वचन मुत्तमम् ।
श्रुत्वा पुरुषशार्दूलः प्रत्युवाच शुभां गिरम् ॥ १
"अल्पवीर्या यदा यक्षाः श्रूयन्ते मुनिपुङ्गव ! ।
कथं नागसहस्रस्य धारयत्यबला बलम् ॥" २
तस्य तद्वचनं श्रुत्वा रामस्य विदितात्मनः ।
विश्वामित्रोऽब्रवीद्वाक्यं "शृणु येन बलोत्तरा ॥" ३
वरदानकृतं वीर्यं धारयत्यबलाबलम् ।
पूर्वमासीन्महान्यक्षस्सुकेतु र्नामवीर्यवान् ॥ ४
अनपत्य श्शुभाचार स्सच तेपे महत्तपः ।
पितामहस्तु सुप्रीत स्तस्य यक्षपते स्तदा ॥ ५

कन्यारत्नं ददौ राम! ताटकां नाम नामतः ।
ददौ नागसहस्रस्य बलं चास्याः पितामहः ॥ ६
न त्वेव पुत्रं यक्षाय ददौ ब्रह्मा महायशाः ।
तां तु जातां विवर्धन्तीं रूपयौवनशालिनीम् ॥ ७
झर्झपुत्राय सुन्दाय ददौ भार्यां यशस्विनीम् ।
कस्यचित्त्वथ कालस्य यक्षी पुत्रं व्यजायत ॥ ८
मारीचं नाम दुर्धर्षं यश्शापाद्राक्षसोऽभवत् ।
सुन्दे तु निहते राम! साऽगस्त्य मृषिसत्तमम् ॥ ९
ताटका सहपुत्रेण प्रधर्षयितु मिच्छति ।
भक्षार्थं जातसंरम्भा गर्जन्ती साऽभ्यधावत ॥ १०
आपतन्तीं तु तां दृष्ट्वा अगस्त्यो भगवानृषिः ।
"राक्षसत्वं भजस्वे"ति मारीचं व्याजहार ह ॥ ११
अगस्त्यः परमक्रुद्ध स्ताटकामपि शप्तवान् ।
"पुरुषादी महायक्षी विरूपा विकृतानना ॥ १२
इदं रूपं विहायाशु दारुणं रूप मस्तु ते ।"
सैषा शापकृतामर्षा ताटका क्रोधमूर्छिता ॥ १३
देश मुत्सादयत्येन मगस्त्यचरितं शुभम् ।
एनां राघव! दुर्वृत्तां यक्षीं परमदारुणाम् ॥ १४
गोब्राह्मणहितार्थाय जहि दुष्टपराक्रमाम् ।
न ह्येनां शापसंस्पृष्टां कश्चिदुत्सहते पुमान् ॥ १५
निहन्तुं त्रिषु लोकेषु त्वामृते रघुनन्दन! ।
नहि ते स्त्रीवधकृते घृणा कार्या नरोत्तम ॥ १६

चातुर्वर्ण्यहितार्थाय कर्तव्यं राजसूनुना ।
नृशंस मनृशंसं वा प्रजारक्षणकारणात् ॥ १७
पातकं वा सदोषं वा कर्तव्यं रक्षता सदा ।
राज्यभारनियुक्तानामेष धर्मस्सनातनः ॥ १८
अधर्म्यां जहि काकुत्स्थ! धर्मो ह्यस्या न विद्यते ।
श्रूयते हि पुरा शक्रो विरोचनसुतां नृप ॥ १९
पृथिवीं हन्तु मिच्छन्तीं मन्थरा मभ्यसूदयत् ।
विष्णुनाऽपि पुरा राम! भृगुपत्नी दृढव्रता ॥ २०
अनिन्द्रं लोकमिच्छन्ती काव्यमाता निषूदिता ।
एतै श्चान्यै श्च बहुभी राजपुत्र! महात्मभिः ॥ २१
अधर्मसहिता नार्यो हताः पुरुषसत्तमैः ॥"

इति श्रीमद्बालकाण्डे पञ्चविंशस्सर्गः ॥

## ॥ षड्विंशस्सर्गः ॥

मुने र्वचन मक्लीब श्रुत्वा नरवरात्मजः ।
राघवः प्राञ्जलिर्भूत्वा प्रत्युवाच दृढव्रतः ॥ १
"पितुर्वचननिर्देशा त्पितुर्वचनगौरवात् ।
वचनं कौशिकस्येति कर्तव्य मविशङ्कया ॥ २
अनुशिष्टोऽस्म्ययोध्यायां गुरुमध्ये महात्मना ।
पित्रा दशरथेनाहं नावज्ञेयं हि तद्वचः ॥ ३
सोऽहं पितुर्वचश्श्रुत्वा शासनाद्ब्रह्मवादिनः ।
करिष्यामि न संदेह स्ताटकावध मुत्तमम् ॥ ४

गोब्राह्मणहितार्थाय देशस्यास्य सुखाय च ।
तव चैवाप्रमेयस्य वचनं कर्तु मुद्यतः ॥" ५
एव मुक्त्वा धनुर्मध्ये बद्ध्वा मुष्टि मरिन्दमः ।
ज्याशब्द मकरो त्तीव्रं दिशश्शब्देन नादयन् ॥ ६
तेन शब्देन वित्रस्ता स्ताटकावनवासिनः ।
ताटका च सुसंक्रुद्धा तेन शब्देन मोहिता ॥ ७
तं शब्द मभिनिध्याय राक्षसी क्रोधमूर्छिता ।
श्रुत्वा चाभ्यद्रवद्वेगा द्यतश्शब्दो विनिस्सृतः ॥ ८
तां दृष्ट्वा राघवः क्रुद्धां विकृतां विकृताननाम् ।
प्रमाणेनातिवृद्धां च लक्ष्मणं सोऽभ्यभाषत ॥ ९
"पश्य लक्ष्मण! यक्षिण्याभैरवं दारुणं वपुः ।
भिद्येरन्दर्शना दस्या भीरूणां हृदयानिच ॥ १०
एनां पश्य दुराधर्षां मायाबलसमन्विताम् ।
विनिवृत्तां करोम्यद्य हृतकर्णाग्रनासिकाम् ॥ ११
न ह्येना मुत्सहे हन्तुं स्त्रीस्वभावेन लक्षिताम् ।
वीर्यं चास्या गतिं चापि हनिष्यामीति मे मतिः ॥" १२
एवं ब्रुवाणे रामे तु ताटका क्रोधमूर्छिता ।
उद्यम्य बाहूगर्जन्ती राममेवाभ्यधावत ॥ १३
विश्वामित्रस्तु ब्रह्मर्षिर्हुंकारेणाभिभर्त्स्य ताम् ।
"स्वस्ति राघवयो रस्तु" जयं चैवाभ्यभाषत ॥ १४
उन्द्धूवाना रजो घोरं ताटका राघवावुभौ ।
रजोमोहेन महता मुहूर्तं साऽव्यमोहयत ॥ १५

ततो मायां समास्थाय शिलावर्षेण राघवौ ।
अवाकिरत्सुमहता तत श्चुक्रोध राघवः ॥ १६
शिलावर्षं महत्तस्या श्शरवर्षेण राघवः ।
प्रतिहत्योपधावन्त्याः करौ चिच्छेद पत्रिभिः ॥ १७
तत श्छिन्नभुजां श्रान्ता मभ्याशे परिगर्जतीम् ।
सौमित्रिरकरोत्क्रोधा द्धृतकर्णाऽग्रनासिकाम् ॥ १८
कामरूपधरा सद्यः कृत्वा रूपाण्यनेकशः ।
अन्तर्धानगता यक्षी मोहयन्ती च मायया ॥ १९
अश्मवर्षं विमुञ्चन्ती भैरवं विचचार ह ।
[ज्यास्वनं चक्रतुर्वीरौ वज्राशनिसमंतदा ॥ २०
मोहिता तेन शब्देन लब्धसंज्ञा चिरात्ततः ।
तत स्तावश्मवर्षेण ववर्ष क्रोधमूर्छिता ॥ २१
वरान्नमुचितनया यथा विष्णुपुरन्दरौ ।]
तत स्तावश्मवर्षेण कीर्यमाणौ समन्ततः ॥ २२
दृष्ट्वा गाधिसुतश्श्रीमा निदं वचन मब्रवीत् ।
"अलं ते घृणया राम! पापैषा दुष्टचारिणी ॥ २३
यज्ञविघ्नकरी यक्षी पुरावर्धति मायया ।
वध्यतां ताव देवैषा पुरा सन्ध्या प्रवर्तते ॥ २४
रक्षांसि सन्ध्याकालेषु दुर्धर्षाणिभवन्ति वै ।"
इत्युक्त स्तु तदा यक्षीमश्मवृष्ट्याऽभिवर्षतीम् ॥ २५
दर्शयन्शब्दवेधित्वं तां रुरोध स सायकैः ।
सा रुद्धाशरजालेन मायाबलसमन्विता ॥ २६

अभिदुद्राव काकुत्स्थं लक्ष्मणं च विनेदुषी ।
ता मापतन्तीं वेगेन विक्रान्ता मशनी मिव ॥ २७
शरेणोरसि विव्याध सा पपात ममार च ।
तां हतां भीमसंकाशां दृष्ट्वा सुरपति स्तदा ॥ २८
"साधु साध्वि"ति काकुत्स्थं सुरा श्च समपूजयन ।
उवाच परमप्रीत स्सहस्राक्षः पुरन्दरः ॥ २९
सुरा श्च सर्वे संहृष्टा विश्वामित्र मथाब्रुवन् ।
"मुने! कौशिक! भद्रं ते सेन्द्रास्सर्वे मरुद्गणाः ॥ ३०
तोषिताः कर्मणाऽनेन स्नेहं दर्शय राघवे ।
प्रजापते र्भृशाश्वस्य पुत्रान्सत्यपराक्रमान् ॥ ३१
तपोबलभृतान्ब्रह्म! न्राघवाय निवेदय ।
पात्रभूतश्च ते ब्रह्मं! स्तवानुगमने धृतः ॥ ३२
कर्तव्यं च महत्कर्म सुराणां राजसूनुना ।"
एव मुक्त्वा सुरा स्सर्वे हृष्टा जग्मु र्यथागतम् ॥ ३३
विश्वामित्रं पुरस्कृत्य तत स्सन्ध्या प्रवर्तते ।
ततो मुनिवरः प्रीत स्ताटकावधतोषितः ॥ ३४
मूर्ध्नि राम मुपाघ्राय इदं वचनमब्रवीत् ।
"इहाद्य रजनीं राम! वसेम शुभदर्शन! ॥ ३५
श्वः प्रभाते गमिष्याम स्तदाश्रमपदं मम ।"
विश्वामित्र वचश्श्रुत्वा हृष्टो दशरथात्मजः ॥ ३६
उवास रजनीं तत्र ताटकाया वने सुखम् ।
मुक्तशापं वनं तच्च तस्मिन्नेव तदाऽहनि ॥ ३७

रमणीयं विबभ्राज यथा चैत्ररथं वनम् ।
निहत्य तां यक्षसुतां स रामः प्रशस्यमान स्सुरसिद्धसंघैः ।
उवास तस्मिन्मुनिना सहैव प्रभातवेळां प्रतिबोध्यमानः ॥ ३८

इति श्रीमद्बालकाण्डे षड्विंशस्सर्गः ॥

## ॥ सप्तविंशस्सर्गः ॥

अथ तां रजनीमुष्य विश्वामित्रो महायशाः ।
प्रहस्य राघवं वाक्य मुवाच मधुराक्षरम् ॥ १
"परितुष्टोऽस्मि भद्रंते राजपुत्र! महायशः ।
प्रीत्या परमया युक्तो ददाम्यस्त्राणि सर्वशः ॥ २
देवासुरगणान्वापि सगन्धर्वोरगानपि ।
यै रमित्रान्प्रसह्याजौ वशीकृत्य विजेष्यसि ॥ ३
तानि दिव्यानि भद्रं ते ददाम्यस्त्राणि सर्वशः ।
दण्डचक्रं महद्दिव्यं तव दास्यामि राघव! ॥ ४
धर्मचक्रं ततो वीर! कालचक्रं तथैव च ।
विष्णुचक्रं तथाऽत्युग्रमैन्द्रमस्त्रं तथैव च ॥ ५
वज्र मस्त्रं नरश्रेष्ठ! शैवं शूलवरं तथा ।
अस्त्रं ब्रह्मशिरश्चैव ऐषीकमपि राघव! ॥ ६
ददामि ते महाबाहो ब्राह्म मस्त्र मनुत्तमम् ।
गदे द्वे चैव काकुत्स्थ! मोदकी शिखरी उभे ॥ ७
प्रदीप्ते नरशार्दूल! प्रयच्छामि नृपात्मज! ।
धर्मपाश महं राम! कालपाशं तथैव च ॥ ८

पाशं वारुण मस्त्रंच ददाम्यह मनुत्तमम् ।
अशनी द्वे प्रयच्छामि शुष्कार्द्रे रघुनन्दन! ॥ ९
ददामि चास्त्रं पैनाक मस्त्रं नारायणं तथा ।
आग्नेय मस्त्रदयितं शिखरं नाम नामतः ॥ १०
वायव्यं प्रमथं नाम ददामि च तवानघ! ।
अस्त्रं हयशिरो नाम क्रौञ्च मस्त्रं तथैव च ॥ ११
शक्तिद्वयंच काकुत्स्थ! ददामि तव राघव! ।
कङ्कालं मुसलं घोरं कापाल मथ कङ्कणम् ॥ १२
धारयन्त्यसुरा यानि ददाम्येतानि सर्वतः ।
वैद्याधरं महास्त्रंच नन्दनं नाम नामतः ॥ १३
असिरत्नं महाबाहो! ददामिच नृपात्मज! ।
गान्धर्व मस्त्रं दयितं मानवं नाम नामतः ॥ १४
प्रस्वापनप्रशमने दद्मि सौरं च राघव! ।
दर्पणं शोषणं चैव सन्तापनविलापने ॥ १५
मदनं चैव दुर्धर्षं कन्दर्पदयितं तथा ।
पैशाच मस्त्रं दयितं मोहनं नाम नामतः ॥ १६
प्रतीच्छ नरशार्दूल! राजपुत्र! महायशः! ।
तामसं नरशार्दूल! सौमनं च महाबल! ॥ १७
संवर्धं चैव दुर्धर्षं मौसलंच नृपात्मज! ।
सत्य मस्त्रं महाबाहो! तथा मायाधरं वरम् ॥ १८
घोरं तेजःप्रभं नाम परतेजोऽपकर्षणम् ।
सौम्यास्त्रं शिशिरं नाम त्वष्टु रस्त्रं सुदामनम् ॥ १९

दारुणं च भगस्यापि शीतेषु मथ मानवम् ।
गता त्राम ! महाबाहो ! कामरूपान्महाबलान् ॥ २०
गृहाण परमोदारा न्क्षिप्रमेव नृपात्मज ! ।"
स्थितस्तु प्राङ्मखो भूत्वा शुचिर्मुनिवर स्तदा ॥ २१
ददौ रामाय सुप्रीतो मन्त्रग्राम मनुत्तमम् ।
सर्वसंग्रहणं येषां दैवतैरपि दुर्लभम् ॥ २२
तान्यस्त्राणि तदा विप्रो राघवाय न्यवेदयत् ।
जपतस्तु मुने स्तस्य विश्वामित्रस्य धीमतः ॥ २३
उपतस्थुर्महार्हाणि सर्वाण्यस्त्राणि राघवम् ।
ऊचुश्च मुदिता स्सर्वे रामं प्राञ्जलयस्तदा ॥ २४
"इमे स्म परमोदाराः किङ्करास्तव राघव ! ।"
प्रतिगृह्यच काकुत्स्थ स्समालभ्य च पाणिना ॥ २५
"मानसा मे भविष्यध्वमि" ति तानभ्यचोदयत् ।
ततः प्रीतमना रामो विश्वामित्रं महामुनिम् ॥ २६
अभिवाद्य महातेजा गमनायोपचक्रमे ।

इति श्रीमद्बालकाण्डे सप्तविंशस्सर्गः ॥

## ॥ अष्टाविंशस्सर्गः ॥

प्रतिगृह्य ततोऽस्त्राणि प्रहृष्टवदन श्शुचिः ।
गच्छन्नेव च काकुत्स्थो विश्वामित्र मथाब्रवीत् ॥ १
"गृहीतास्त्रोऽस्मि भगवन् ! दुराधर्षस्सुरैरपि ।
अस्त्राणां त्वह मिच्छामि संहारं मुनिपुङ्गव ! ॥" २

एवं ब्रुवति काकुत्स्थे विश्वामित्रो महामुनिः ।
संहारं व्याजहाराथ धृतिमा न्सुव्रत श्शुचिः ॥ ३
सत्यवन्तं सत्यकीर्तिं धृष्टं रभस मेव च ।
प्रतिहारतरं नाम पराङ्मुखमवाङ्मुखम् ॥ ४
लक्षाक्षविषमौ चैव दृढनाभसुनाभकौ ।
दशाक्ष शतवक्त्रौच दशशीर्षशतोदरौ ॥ ५
पद्मनाभमहानाभौ दुन्दुनाभसुनाभकौ ।
ज्योतिषं कृशनं चैव नैराश्यविमला वुभौ ॥ ६
योगन्धर हरिद्रौ च दैत्यप्रशमनौ तथा ।
[शुचिर्बाहुर्महाबाहुर्निष्कुलिर्विरुचि स्तथा ॥] ७
सार्चिमाली धृतिर्माली वृत्तिमा न्रुचिर स्तथा ।
पितृसौमनसं चैव विधूतमकरावुभौ ॥ ८
करवीरकरं चैव धनधान्यौच राघव! ।
कामरूपं कामरुचिं मोहनं मारणं तथा ॥ ९
जृम्भकं सर्वनाभं च सन्तानवरणौ तथा ।
भृशाश्वतनयान्राम! भास्वरान्कामरूपिणः ॥ १०
"प्रतीच्छ मम भद्रं ते पात्रभूतोऽसि राघव! ।"
"बाढ" मित्येव काकुत्स्थः प्रहृष्टेनान्तरात्मना ॥ ११
[जग्राह मन्त्रग्रामं तेऽप्युपतस्थुश्च राघवम् ।]
दिव्यभास्वरदेहाश्च मूर्तिमन्त स्सुखप्रदाः ॥ १२
केचि दङ्गारसदृशाः केचि द्धूमोपमास्तथा ।
चन्द्रार्कसदृशाः केचित्प्रह्वाञ्जलिपुटा स्तथा ॥ १३

रामं प्राञ्जलयो भूत्वाऽब्रुवन्मधुरभाषिणः ।
"इमे स्म नरशार्दूल! शाधि किङ्करवाम ते ॥" १४
"मानसाः कार्यकालेषु साहाय्यं मे करिष्यथ ।
गम्यता"मिति तानाह यथेष्टं रघुनन्दनः ॥ १५
अथ ते राम मामन्त्र्य कृत्वा चापि प्रदक्षिणम् ।
"एव मस्त्वि"ति काकुत्स्थ मुक्त्वा जग्मुर्यथागतम् ॥ १६
[प्रणम्य शिरसा रामं सर्वे सम्मतविक्रमाः ।
ततस्तु रामः काकुत्स्थश्शासना द्ब्रह्मवादिनः ॥ १७
लक्ष्मणायच तान्सर्वान्वरांस्तात्रघुनन्दनः ।
संहारान्सच संहृष्ट श्श्रीमांस्तस्मै न्यवेदयत् ॥] १८
स च तान्राघवो ज्ञात्वा विश्वामित्रं महामुनिम् ।
गच्छन्नेवाथ मधुरं श्लक्ष्णं वचन मब्रवीत् ॥ १९
"किन्वेतन्मेघसङ्काशं पर्वतस्याविदूरतः ।
वृक्षषण्डमितो भाति परं कौतूहलं हि मे ॥ २०
दर्शनीयं मृगाकीर्णं मनोहरमतीवच ।
नानाप्रकारै श्शकुनै र्वल्गुनादै रलङ्कृतम् ॥ २१
निस्सृतास्स्म मुनिश्रेष्ठ! कान्तारा द्रोमहर्षणात् ।
अनया त्ववगच्छामि देशस्य सुखवत्तया ॥ २२
सर्वं मे शंस भगव! न्कस्याश्रमपदं त्विदम् ।
सम्प्राप्ता यत्र ते पापाः ब्रह्मघ्ना दुष्टचारिणः ॥ २३
तव यज्ञस्य विघ्नाय दुरात्मानो महामुने! ।
भगवं! स्तस्य को देश? स्सा यत्र तव याज्ञिकी ॥ २४

रक्षितव्या क्रिया ब्रह्म! न्मया वध्याश्च राक्षसाः ।
एतत्सर्वं मुनिश्रेष्ठ! श्रोतुमिच्छाम्यहं प्रभो! ॥" २५

इति श्रीमद्बालकाण्डे अष्टाविंशस्सर्गः ॥

## ॥ एकोनत्रिंशस्सर्गः ॥

अथ तस्याप्रमेयस्य तद्वनं परिपृच्छतः ।
विश्वामित्रो महातेजा व्याख्यातु मुपचक्रमे ॥ १
" इह राम! महाबाहो! विष्णुर्देववरः प्रभुः ।
वर्षाणि सुबहूनीह तथा युगशतानि च ॥ २
तपश्चरणयोगार्थ मुवास सुमहातपाः ।
एष पूर्वाश्रमो राम! वामनस्य महात्मनः ॥ ३
सिद्धाश्रम इति ख्यातस्सिद्धो ह्यत्र महातपाः ।
एतस्मिन्नेव काले तु राजा वैरोचनिर्बलिः ॥ ४
निर्जित्य दैवतगणान्सेंद्रांश्च समरुद्गणान् ।
[स्वबाहुबलमाश्रित्य धर्मात्मा सत्यसङ्गरः ॥] ५
कारयामास तद्राज्यं त्रिषु लोकेषु विश्रुतः ।
बलेस्तु यजमानस्य देवास्साग्निपुरोगमाः ॥ ६
समागम्य स्वयं चैव विष्णु मूचु रिहाश्रमे ।
[शंखचक्रधरं देवं तप्यन्तं परमं तपः ॥] ७
" बलिर्वैरोचनिर्विष्णो! यजते यज्ञमुत्तमम् ।
असमाप्ते क्रतौ तस्मिन्स्वकार्यमभिपद्यताम् ॥ ८

येचैनमभिवर्तन्ते याचितार इतस्ततः ।
यच्च यत्र यथावच्च सर्वं तेभ्यः प्रयच्छति ॥ ९
सत्वं सुरहितार्थाय मायायोगमुपाश्रितः ।
वामनत्वं गतो विष्णो! कुरु कल्याण मुत्तमम् ॥" १०
एतस्मिन्नन्तरे राम! काश्यपोऽग्निसमप्रभः ।
अदित्या सहितो राम! दीप्यमानइवौजसा ॥ ११
देवीसहायो भगवान्दिव्यं वर्षसहस्रकम् ।
व्रतं समाप्य वरदं तुष्टाव मधुसूदनम् ॥ १२
"तपोमय तपोराशि तपोमूर्ति तपात्मकम् ।
तपसा त्वां सुतप्तेन पश्यामि पुरुषोत्तमम् ॥ १३
शरीरे तव पश्यामि जगत्सर्व मिदं प्रभो! ।
त्व मनादि रनिर्देश्यस्त्वामहं शरणं गतः ॥" १४
तमुवाच हरिः प्रीतः काश्यपं धूतकल्मषम् ।
"वरं वरय भद्रं ते वरार्होऽसि मतो मम ॥" १५
तच्छ्रुत्वा वचनं तस्य मारीचः काश्यपोऽब्रवीत् ।
"अदित्या देवतानां च मम चैवानुयाचतः ॥ १६
वरं वरद! सुप्रीतो दातुमर्हसि सुव्रत! ।
पुत्रत्वं गच्छ भगव! न्नदित्यां मम चानघ! ॥ १७
भ्राता भव यवीयां स्त्वं शक्रस्यासुरसूदन! ।
शोकार्तानां तु देवानां साहाय्यं कर्तुमर्हसि ॥ १८
अयं सिद्धाश्रमो नाम प्रसादात्ते भविष्यति ।
सिद्धे कर्मणि देवेश! उत्तिष्ठ भगव! न्नितः ॥" १९

अथ विष्णु र्महातेजा अदित्यां समजायत ।
वामनं रूप मास्थाय वैरोचनि मुपागमत् ॥ २०
त्रीन्क्रमानथ भिक्षित्वा प्रतिगृह्य च मानदः ।
आक्रम्य लोकाँल्लोकात्मा सर्वभूतहिते रतः ॥ २१
महेन्द्राय पुनः प्रादान्नियम्य बलिमोजसा ।
त्रैलोक्यं स महातेजा श्चक्रे शक्रवशं पुनः ॥ २२
तेनैष पूर्वमाक्रान्त आश्रमश्श्रमनाशनः ।
मयाऽपि भक्त्या तस्यैष वामनस्योपभुज्यते ॥ २३
एत माश्रम मायान्ति राक्षसा विघ्नकारिणः ।
अत्रैव पुरुषव्याघ्र! हन्तव्या दुष्टचारिणः ॥ २४
अद्य गच्छामहे राम! सिद्धाश्रम मनुत्तमम् ।
तदाश्रमपदं तात! तवाप्येतद्यथा मम ॥ २५
[इत्युक्त्वा परमप्रीतो गृह्य रामं सलक्ष्मणम् ।]
प्रविशन्नाश्रमपदं व्यरोचत महामुनिः ॥ २६
शशीव गतनीहारः पुनर्वसुसमन्वितः ।
तं दृष्ट्वा मुनयस्सर्वे सिद्धाश्रमनिवासिनः ॥ २७
उत्पत्योत्पत्य सहसा विश्वामित्रमपूजयन् ।
यथार्हं चक्रिरे पूजां विश्वामित्राय धीमते ॥ २८
तथैव राजपुत्राभ्यामकुर्वन्नतिथिक्रियाम् ।
मुहूर्तमथ विश्रान्तौ राजपुत्रावरिन्दमौ ॥ २९
प्राञ्जली मुनिशार्दूल मूचतू रघुनन्दनौ ।
"अद्यैव दीक्षां प्रविश भद्रंते मुनिपुङ्गव! ॥ ३०

सिद्धाश्रमोऽयं सिद्धस्स्यात्सत्यमस्तु वचस्तव ।"
एव मुक्तो महातेजा विश्वामित्रो महानृषिः ॥ ३१
प्रविवेश तदा दीक्षां नियतो नियतेन्द्रियः ।
कुमारावपि तां रात्रि मुषित्वा सुसमाहितौ ॥ ३२
प्रभातकाले चोत्थाय पूर्वां सन्ध्या मुपास्य च ।
स्पृष्टोदकौ शुची जप्यं समाप्य नियमेन च ।
हुताग्निहोत्रमासीनं विश्वामित्र मवन्दताम् ॥ ३३

इति श्रीमद्बालकाण्डे एकोनत्रिंशस्सर्गः ॥

## ॥ त्रिंशस्सर्गः ॥

अथ तौ देशकालज्ञौ राजपुत्रावरिन्दमौ ।
देशे काले च वाक्यज्ञा वब्रूतां कौशिकं वचः ॥ १
"भगवन्! श्रोतु मिच्छावो यस्मिन्काले निशाचरौ ।
संरक्षणीयौ तौ ब्रह्म! न्नातिवर्तेत तत्क्षणम् ॥" २
एवं ब्रुवाणौ काकुत्स्थौ त्वरमाणौ युयुत्सया ।
सर्वे ते मुनयः प्रीताः प्रशशंसु नृपात्मजौ ॥ ३
"अद्यप्रभृति षड्रात्रं रक्षतं राघवौ युवाम् ।
दीक्षां गतो ह्येष मुनिर्मौनित्वं च गमिष्यति ॥" ४
तौ तु तद्वचनं श्रुत्वा राजपुत्रौ यशस्विनौ ।
अनिद्रौ षडहोरात्रं तपोवनमरक्षताम् ॥ ५
उपासां चक्रतु वीरौ यत्तौ परमधन्विनौ ।
ररक्षतु र्मुनिवरं विश्वामित्र मरिन्दमौ ॥ ६

अथ काले गते तस्मिन्षष्ठेऽहनि समागते ।
सौमित्रि मब्रवी द्रामो यत्तो भव समाहितः ॥ ७
रामस्यैवं ब्रुवाणस्य त्वरितस्य युयुत्सया ।
प्रजज्वाल ततो वेदि स्सोपाध्यायपुरोहिता ॥ ८
सदर्भचमसस्रुक्का ससमित्कुसुमोच्चया ।
विश्वामित्रेण सहिता वेदि र्जज्वाल सर्त्विजा ॥ ९
मन्त्रवच्च यथान्यायं यज्ञोऽसौ सम्प्रवर्तते ।
आकाशे च महाञ्छब्दः प्रादुरासी द्भयानकः ॥ १०
आवार्य गगनं मेघो यथा प्रावृषि निर्गतः ।
तथा मायां विकुर्वाणौ राक्षसावभ्यधावताम् ॥ ११
मारीच श्च सुबाहु श्च तयो रनुचरा श्चये ।
आगम्य भीमसंकाशा रुधिरौघमवासृजन् ॥ १२
सा तेन रुधिरौघेण वेदि र्जज्वाल मण्डिता ।
[दृष्ट्वा वेदिं तथाभूतां सानुजः क्रोधसंयुतः ॥] १३
सहसाऽभिद्रुतो रामस्तानपश्यत्ततो दिवि ।
तावापतन्तौ सहसा दृष्ट्वा राजीवलोचनः ॥ १४
लक्ष्मणं त्वभिसम्प्रेक्ष्य रामो वचनमब्रवीत् ।
"पश्यलक्ष्मण! दुर्वृत्तान्राक्षसान्पिशिताशनान् ॥ १५
[यज्ञघ्नानशितप्रख्यान्देवारीन्पिशिताशनान् ।]
मानवास्त्रसमाधूताननिलेन यथा घनान् ॥ १६
[करिष्यामि नसंदेहो नोत्सहे हंतु मीदृशान् ।
इत्युक्त्वा वचनं राम श्चापे संधाय वेगवान् ॥] १७

मानवं परमोदार मस्त्रं परमभास्वरम् ।
चिक्षेप परमक्रुद्धो मारीचोरसि राघवः ॥ १८
स तेन परमास्त्रेण मानवेन समाहतः ।
सम्पूर्णं योजनशतं क्षिप्त स्सागरसंप्लवे ॥ १९
विचेतनं विघूर्णन्तं शीतेषुबलताडितम् ।
निरस्तं दृश्य मारीचं रामो लक्ष्मण मब्रवीत् ॥ २०
"पश्य लक्ष्मण! शीतेषुं मानवं धर्मसंहितम् ।
मोहयित्वा नयत्येनं न च प्राणैर्व्ययुज्यत ॥ २१
इमानपि वधिष्यामि निर्घृणान्दुष्टचारिणः ।
राक्षसान्पापकर्मस्थान्यज्ञघ्नान्रुधिराशनान् ॥" २२
संगृह्यास्त्रं ततो रामो दिव्यमाग्नेय मद्भुतम् ।
सुबाहूरसि चिक्षेप स विद्धः प्रापतद्भुवि ॥ २३
शेषान्वायव्यमादाय निजघान महायशाः ।
राघवः परमोदारो मुनीनां मुदमावहन् ॥ २४
स हत्वा राक्षसान्सर्वान्यज्ञघ्नान रघुनन्दनः ।
ऋषिभिः पूजितस्तत्र यथेन्द्रो विजये पुरा ॥ २५
अथ यज्ञे समाप्ते तु विश्वामित्रो महामुनिः ।
निरीतिका दिशो दृष्ट्वा काकुत्स्थ मिदमब्रवीत् ॥ २६
"कृतार्थोऽस्मि महाबाहो! कृतं गुरुवच स्त्वया ।
सिद्धाश्रम मिदं सत्यं कृतं राम! महायशः! ॥" २७
[स हि रामं प्रशस्यैवं ताभ्यां सन्ध्यामुपागमत् ।]

इति श्रीमद्बालकाण्डे त्रिंशस्सर्गः ॥

## ॥ एकत्रिंशस्सर्गः ॥

अथ तां रजनीं तत्र कृतार्थौ रामलक्ष्मणौ ।
ऊषतुर्मुदितौ वीरौ प्रहृष्टेनान्तरात्मना ॥ १
प्रभातायां तु शर्वर्यां कृतपौर्वाह्णिकक्रियौ ।
विश्वामित्र मृषीं श्चान्यान्सहिता वभिजग्मतुः ॥ २
अभिवाद्य मुनिश्रेष्ठं ज्वलन्त मिव पावकम् ।
ऊचतुर्मधुरोदारं वाक्यं मधुरभाषिणौ ॥ ३
"इमौ स्म मुनिशार्दूल! किङ्करौ समुपस्थितौ ।
आज्ञापय यथेष्टं वै शासनं करवाव किम्? ॥" ४
एवमुक्त स्ततस्ताभ्यां सर्व एव महर्षयः ।
विश्वामित्रं पुरस्कृत्य रामं वचन मब्रुवन् ॥ ५
"मैथिलस्य नरश्रेष्ठ! जनकस्य भविष्यति ।
यज्ञः परमधर्मिष्ठ स्तत्र यास्यामहे वयम् ॥ ६
त्वं चैव नरशार्दूल! सहास्माभि र्गमिष्यसि ।
अद्भुतं धनुरत्नंच तत्र तद्द्रष्टु मर्हसि ॥ ७
तद्धि पूर्वं नरश्रेष्ठ! दत्तं सदसि दैवतैः ।
अप्रमेयबलं घोरं मखे परमभास्वरम् ॥ ८
नास्य देवा न गन्धर्वानासुरा नच राक्षसाः ।
कर्तु मारोपणं शक्ता न कथंचनमानुषाः ॥ ९
धनुषस्तस्य वीर्यं तु जिज्ञासन्तो महीक्षितः ।
न शेकु रारोपयितुं राजपुत्रा महाबलाः ॥ १०

तद्धनुर्नरशार्दूल! मैथिलस्य महात्मनः ।
तत्र द्रक्ष्यसि काकुत्स्थ! यज्ञं चाद्भुतदर्शनम् ॥ ११
तद्धि यज्ञफलं तेन मैथिलेनोत्तमं धनुः ।
याचितं नरशार्दूल! सुनाभं सर्वदैवतैः ॥ १२
आयागभूतं नृपते स्तस्य वेश्मनि राघव! ।
अर्चितं विविधै र्गन्धै र्धूपै श्चागरुगन्धिभिः ॥" १३
एव मुक्त्वा मुनिवरः प्रस्थानमकरोत्तदा ।
सर्षिसंघस्सकाकुत्स्थ आमन्त्र्य वनदेवताः ॥ १४
"स्वस्ति वोऽस्तु गमिष्यामि सिद्ध स्सिद्धाश्रमादहम् ।"
उत्तरे जाह्नवीतीरे हिमवन्तं शिलोच्चयम् ॥ १५
प्रदक्षिणं ततः कृत्वा सिद्धाश्रम मनुत्तमम् ।
उत्तरां दिश मुद्दिश्य प्रस्थातु मुपचक्रमे ॥ १६
तं प्रयान्तं मुनिवर मन्वया दनुसारिणम् ।
शकटीशतमात्रं तु प्रयाणे ब्रह्मवादिनाम् ॥ १७
मृगपक्षिगणा श्चैव सिद्धाश्रमनिवासिनः ।
अनुजग्मुर्महात्मानं विश्वामित्रं महामुनिम् ॥ १८
निवर्तयामास ततः सर्षिसंघान्मृगानपि ।
तेगत्वा दूर मध्वानं लम्बमाने दिवाकरे ॥ १९
वासं चक्रु र्मुनिगणा श्शोणाकूले समाहिताः ।
तेऽस्तङ्गते दिनकरे स्नात्वा हुतहुताशनाः ॥ २०
विश्वामित्रं पुरस्कृत्य निषेदुरमितौजसः ।
रामोऽपि सहसौमित्रि र्मुनींस्तानभिपूज्यच ॥ २१

अग्रतो निषसादाथ विश्वामित्रस्य धीमतः ।
अथ रामो महातेजा विश्वामित्रं महामुनिम् ॥ २२
पप्रच्छ नरशार्दूलः कौतूहलसमन्वितः ।
"भगवन्कोन्वयं देश स्समृद्धवनशोभितः ॥ २३
श्रोतु मिच्छामि भद्रन्ते वक्तु मर्हसि तत्त्वतः ।"
चोदितो रामवाक्येन कथयामास सुव्रतः ॥ २४
तस्य देशस्य निखिल मृषिमध्ये महातपाः ।

इति श्रीमद्बालकाण्डे एकत्रिंशस्सर्गः ॥

## ॥ द्वात्रिंशस्सर्गः ॥

"ब्रह्मयोनिर्महानासीत्कुशो नाम महातपाः ।
अक्लिष्टव्रतधर्मज्ञस्सज्जनप्रतिपूजकः ॥ १
स महात्मा कुलीनायां युक्तायां सुगुणोल्बगान् ।
वैदर्भ्यां जनयामास चतुर स्सदृशान्सुतान् ॥ २
कुशाम्बं कुशनाभं च आधूर्तरजसं वसुम् ।
दीप्तियुक्ता न्महोत्साहा न्क्षत्रधर्मचिकीर्षया ॥ ३
ता नुवाच कुशः पुत्रान् धर्मिष्ठान्सत्यवादिनः ।
"क्रियतां पालनं पुत्रा धर्मं प्राप्स्यथ पुष्कलम् ॥" ४
कुशस्य वचनं श्रुत्वा चत्वारो लोकसम्मताः ।
निवेशं चक्रिरे सर्वे पुराणां नृवरा स्तदा ॥ ५
कुशाम्बस्तु महातेजाः कौशाम्बी मकरोत्पुरीम् ।
कुशनाभस्तु धर्मात्मा पुरं चक्रे महोदयम् ॥ ६

आधूर्तरजसो राम! धर्मारण्यं महीपतिः।
चक्रे पुरवरं राजा वसुश्चक्रे गिरिव्रजम् ॥ ७

एषा वसुमती राम! वसोस्तस्य महात्मनः।
एते शैलवराः पञ्च प्रकाशन्ते समन्ततः ॥ ८

सुमागधी नदी रम्या मगधान्विश्रुताऽऽययौ।
पञ्चानां शैलमुख्यानां मध्ये मालेव शोभते ॥ ९

सैषा हि मागधी राम! वसोस्तस्य महात्मनः।
पूर्वाभिचरिता राम सुक्षेत्रा सस्यमालिनी ॥ १०

कुशनाभस्तु राजर्षिः कन्याशतमनुत्तमम्।
जनयामास धर्मात्मा घृताच्यां रघुनन्दन! ॥ ११

तास्तु यौवनशालिन्यो रूपवत्य स्स्वलङ्कृताः।
उद्यानभूमि मागम्य प्रावृषीव शतह्रदाः ॥ १२

गायन्त्यो नृत्यमानाश्च वादयन्त्यश्च सर्वशः।
आमोद परमं जग्मुर्वराभरणभूषिताः ॥ १३

अथ ता श्चारुसर्वाङ्ग्यो रूपेणाप्रतिमा भुवि।
उद्यानभूमि मागम्य तारा इव घनान्तरे ॥ १४

ता स्सर्वगुणसम्पन्ना रूपयौवनसंयुताः।
दृष्ट्वा सर्वात्मको वायुरिदं वचन मब्रवीत् ॥ १५

"अहं वः कामये सर्वा भार्या मम भविष्यथ।
मानुषस्त्यज्यतां भावो दीर्घमायुरवाप्स्यथ ॥ १६

चलं हि यौवनं नित्यं मानुषेषु विशेषतः।
अक्षय्यं यौवनं प्राप्ता अमर्य श्च भविष्यथ ॥" १७

तस्य तद्वचनं श्रुत्वा वायो रक्लिष्टकर्मणः ।
अपहास्य ततो वाक्य कन्याशत मथाब्रवीत् ॥ १८
"अन्त श्चरसि भूतानां सर्वेषां त्वं सुरोत्तम ! ।
प्रभावज्ञा श्च ते सर्वाः किमस्मानवमन्यसे ॥ १९
कुशनाभसुतास्सर्वा स्समर्था स्त्वां सुरोत्तम ! ।
स्थानाच्च्यावयितुं देवं रक्षाम स्तु तपोवयम् ॥ २०
माभूत्सकालो दुर्मेधः ! पितरं सत्यवादिनम् ।
नावमन्यस्व धर्मेण स्वयंवर मुपास्महे ॥ २१
पिता हि प्रभु रस्माकं दैवतं परमं हि सः ।
यस्य नो दास्यति पिता स नो भर्ता भविष्यति ॥" २२
तासां तद्वचनं श्रुत्वा वायुः परमकोपनः ।
प्रविश्य सर्वगात्राणि बभञ्ज भगवान्प्रभुः ॥ २३
[अरत्निमात्राकृतयो भग्नदर्पा भयार्दिताः ।]
ताः कन्या वायुना भग्ना विविशु र्नृपतेर्गृहम् ॥ २४
प्रापतन्भुविसम्भ्रान्ता स्सलज्जा स्सास्रलोचनाः ।
स च ता दयिता दीनाः कन्याः परमशोभनाः ॥ २५
दृष्ट्वा भग्नास्तदा राजा सम्भ्रान्त इदमब्रवीत् ।
"किमिदं कथ्यतां पुत्र्यः को धर्म मवमन्यते ॥ २६
कुब्जाः केन कृता स्सर्वाः वेष्टयन्त्यो नाभिभाषथ ।"
एवं राजा विनिश्वस्य समाधिं सन्दधे ततः ॥ २७

इति श्रीमद्बालकाण्डे द्वात्रिंशस्सर्गः ॥



## ॥ त्रयस्त्रिंशस्सर्गः ॥

तस्य तद्वचनं श्रुत्वा कुशनाभस्य धीमतः ।
शिरोभि श्चरणौ स्पृष्ट्वा कन्याशत मभाषत ॥ १
"वायुस्सर्वात्मको राजन्प्रधर्षयितु मिच्छति ।
अशुभं मार्गमास्थाय न धर्मं प्रत्यवेक्षते ॥ २
पितृमत्यस्स्म भद्रं ते स्वच्छन्दे न वयं स्थिताः ।
पितरं नो वृणीष्व त्वं यदि नो दास्यते तव ॥ ३
तेन पापानुबन्धेन वचनं न प्रतीच्छता ।
एवं ब्रुवन्त्य स्सर्वास्स्म वायुना निहता भृशम् ॥" ४
तासां तद्वचनं श्रुत्वा राजा परमधार्मिकः ।
प्रत्युवाच महातेजाः कन्याशत मनुत्तमम् ॥ ५
क्षान्तं क्षमावतां पुत्र्यः! कर्तव्यं सुमहत्कृतम् ।
ऐकमत्य मुपागम्य कुलं चावेक्षितं मम ॥ ६
अलङ्कारो हि नारीणां क्षमा तु पुरुषस्य वा ।
दुष्करं तच्च यत्क्षान्तं त्रिदशेषु विशेषतः ॥ ७
यादृशीवः क्षमा पुत्र्य! स्सर्वासामविशेषतः ।
क्षमादानं क्षमायज्ञः क्षमासत्यं हि पुत्रिकाः! ॥ ८
क्षमायशः क्षमाधर्मः क्षमायां विष्ठितं जगत् ।
विसृज्य कन्याः काकुत्स्थ! राजा त्रिदशविक्रमः ॥ ९
मन्त्रज्ञो मन्त्रयामास प्रदानं सह मन्त्रिभिः ।
देशकालौ प्रदानस्य सदृशे प्रतिपादनम् ॥ १०

एतस्मिन्नेवकाले तु चूळीनाम महामुनिः ।
ऊर्ध्वरेता श्शुभाचारो ब्राह्मं तप उपागमत् ॥ ११
तप्यन्तं त मृषिं तत्र गन्धर्वी पर्युपासते ।
सोमदा नाम भद्रं ते ऊर्मिळातनया तदा ॥ १२
साच तं प्रणता भूत्वा शुश्रूषणपरायणा ।
उवासकाले धर्मिष्ठा तस्या स्तुष्टोऽभवद्गुरुः ॥ १३
सचतां कालयोगेन प्रोवाच रघुनन्दन! ।
"परितुष्टोऽस्मि भद्रं ते किंकरोमि तवप्रियम् ॥" १४
परितुष्टं मुनि ज्ञात्वा गन्धर्वी मधुरस्वरा ।
उवाच परमप्रीता वाक्यज्ञा वाक्यकोविदम् ॥ १५
"लक्ष्म्या समुदितो ब्राह्म्या ब्रह्मभूतो महातपाः ।
ब्राह्मेण तपसा युक्तं पुत्र मिच्छामि धार्मिक! ॥ १६
अपति श्चास्मि भद्रं ते भार्या चास्मि न कस्यचित् ।
ब्राह्मेणोपगतायाश्च दातुमर्हसि मे सुतम् ॥ १७
तस्याः प्रसन्नो ब्रह्मर्षिर्ददौ पुत्रमनुत्तमम् ।
ब्रह्मदत्त इति ख्यातं मानसं चूळिनस्सुतम् ॥ १८
स राजा सौमदेय स्तु पुरी मध्यवसत्तदा ।
काम्पिल्यां परया लक्ष्म्या देवराजो यथा दिवम् ॥ १९
स बुद्धिं कृतवा न्राजा कुशनाभ स्सुधार्मिकः ।
ब्रह्मदत्ताय काकुत्स्थ! दातुं कन्या शतं तदा ॥ २०
त माहूय महातेजा ब्रह्मदत्तं महीपतिः ।
ददौ कन्याशतं राजा सुप्रीतेनान्तरात्मना ॥ २१

यथाक्रमं ततः पाणीन् जग्राह रघुनन्दन! ।
ब्रह्मदत्तो महीपाल स्तासां देवपति र्यथा ॥ २२
स्पृष्टमात्रे ततः पाणौ विकुब्जा विगतज्वराः ।
युक्ताः परमया लक्ष्म्या बभुः कन्याशतं तदा ॥ २३
स दृष्ट्वा वायुना मुक्ताः कुशनाभो महीपतिः ।
बभूव परमप्रीतो हर्षं लेभे पुनःपुनः ॥ २४
कृतो द्वाहं तु राजानं ब्रह्मदत्तं महीपतिः ।
सदारं प्रेषयामास सोपाध्यायगणं तदा ॥ २५
सोमदाऽपि सुसंहृष्टा पुत्रस्य सदृशीं क्रियाम् ।
यथान्यायंच गन्धर्वी स्नुषास्ताः प्रत्यनन्दत ॥ २६
दृष्ट्वा स्पृष्ट्वाच ताः कन्याः कुशनाभं प्रशस्य च ।

इति श्रीमद्बालकाण्डे त्रयस्त्रिंशस्सर्गः ॥

## ॥ चतुस्त्रिंशस्सर्गः ॥

कृतोद्वाहे गते तस्मिन्ब्रह्मदत्ते च राघव! ।
अपुत्रः पुत्रलाभाय पौत्री मिष्टि मकल्पयत् ॥ १
इष्ट्यां तु वर्तमानायां कुशनाभं महीपतिम् ।
उवाच परमोदारः कुशो ब्रह्मसुतस्तदा ॥ २
"पुत्रस्ते सदृशः पुत्र! भविष्यति सुधार्मिकः ।
गाधिं प्राप्स्यसि तेन त्वं कीर्तिं लोकेच शाश्वतीम् ॥" ३
एव मुक्त्वा कुशो राम! कुशनाभं महीपतिम् ।
जगामाकाश माविश्य ब्रह्मलोकं सनातनम् ॥ ४

कस्यचित्त्वथ कालस्य कुशनाभस्य धीमतः ।
जज्ञेपरमधार्मिष्ठो गाधिरित्येव नामतः ॥ ५
स पिता मम काकुत्स्थ! गाधिः परमधार्मिकः ।
कुशवंशप्रसूतोऽस्मि कौशिको रघुनन्दन! ॥ ६
पूर्वजा भगिनी चापि मम राघव! सुव्रता ।
नाम्ना सत्यवती नाम ऋचीके प्रतिपादिता ॥ ७
सशरीरा गता स्वर्गं भर्तार मनुवर्तिनी ।
कौशिकी परमोदारा प्रवृत्ताच महानदी ॥ ८
दिव्या पुण्योदका रम्या हिमवन्त मुपाश्रिता ।
लोकस्य हितकामार्थं प्रवृत्ता भगिनी मम ॥ ९
ततोऽहं हिमवत्पार्श्वे वसामि निरतस्सुखम् ।
भगिन्यां स्नेहसंयुक्तः कौशिक्यां रघुनन्दन! ॥ १०
सातु सत्यवती पुण्या सत्येधर्मे प्रतिष्ठिता ।
पतिव्रता महाभागा कौशिकी सरितां वरा ॥ ११
अहं हि नियमा द्राम! हित्वा तां समुपागतः ।
सिद्धाश्रम मनुप्राप्य सिद्धोऽस्मि तव तेजसा ॥ १२
एषा राम! ममोत्पत्तिः स्वस्य वंशस्य कीर्तिता ।
देशस्यच महाबाहो! यन्मां त्वं परिपृच्छसि ॥ १३
गतोऽर्धरात्रः काकुत्स्थ! कथाः कथयतो मम ।
निद्रामभ्येहि भद्रं ते माभू द्विघ्नोऽध्वनीह नः १४
निष्पन्दा स्तरवस्सर्वे निलीना मृगपक्षिणः ।
नैशेन तमसा व्याप्ता दिशश्च रघुनन्दन! ॥ १५

शनैर्वियुज्यते सन्ध्या नभो नेत्रैरिवावृतम् ।
नक्षत्रतारागहनं ज्योतिर्भिरवभासते ॥ १६
उत्तिष्ठति च शीतांशु श्शशी लोकतमोनुदः ।
ह्लादयन्प्राणिनां लोके मनांसि प्रभया विभो! ॥ १७
नैशानि सर्वभूतानि प्रचरन्ति ततस्ततः ।
यक्षराक्षससङ्घाश्च रौद्राश्च पिशिताशनाः ॥ १८
एव मुक्त्वा महातेजा विरराम महामुनिः ।
"साधु साध्वि" ति तं सर्वे मुनयो ह्यभ्यपूजयन् ॥ १९
"कौशिकानामयं वंशो महान्धर्मपर स्सदा ।
ब्रह्मोपमा महात्मानः कुशवंश्या नरोत्तमाः ॥ २०
विशेषेण भवानेव विश्वामित्रो महायशाः ।
कौशिकी च सरिच्छ्रेष्ठा कुलोद्द्योतकरीतव ॥" २१
इति तैर्मुनिशार्दूलैः प्रशस्तः कुशिकात्मजः ।
निद्रा मुपागम च्छ्रीमानस्तंगत इवांशुमान् ॥ २२
रामोऽपि सहसौमित्रः किंचिदागतविस्मयः ।
प्रशस्य मुनिशार्दूलं निद्रां समुपसेवते ॥ २३

इति श्रीमद्बालकाण्डे चतुस्त्रिंशस्सर्गः ॥

---

## ॥ पञ्चत्रिंशस्सर्गः ॥

उपास्य रात्रिशेषं तु शोणकूले महर्षिभिः ।
निशायां सुप्रभातायां विश्वामित्रोऽभ्यभाषत ॥ १
सुप्रभाता निशा राम! पूर्वासन्ध्या प्रवर्तते ।
उत्तिष्ठोत्तिष्ठ भद्रंते गमनायाभिरोचय ॥ २

तच्छ्रुत्वा वचनं तस्य कृत्वा पौर्वाह्णिकीं क्रियाम् ।
गमन रोचयामास वाक्यं चेदमुवाचह ॥ ३
"अयं शोणश्शुभजलोऽगाधः पुलिनमण्डितः ।
कतरेण पथाब्रह्मन्सन्तरिष्यामहे वयम् ॥" ४
एवमुक्तस्तु रामेण विश्वामित्रोऽब्रवीदिदम् ।
"एषपन्था मयोद्दिष्टो येन यान्ति महर्षयः ॥" ५
एवमुक्तामहर्षयो विश्वामित्रेण धीमता ।
पश्यन्तस्ते प्रयातावै वनानि विविधानिच ॥ ६
तेगत्वा दूर मध्वानं गतेऽर्धदिवसे तदा ।
जाह्नवीं सरितां श्रेष्ठां ददृशु र्मुनिसेविताम् ॥ ७
तां दृष्ट्वा पुण्यसलिलां हंससारससेविताम् ।
बभूवुर्मुदिता स्सर्वे मुनयस्सहराघवाः ॥ ८
तस्यास्तीरे तत श्चक्रुस्त आवासपरिग्रहम् ।
तत स्स्नात्वा यथान्यायं सन्तर्प्य पितृदेवताः ॥ ९
हुत्वा चै वाग्निहोत्राणि प्राश्य चामृतवद्धविः ।
विविशु र्जाह्नवितीरे शुचौ मुदितमानसाः ॥ १०
विश्वामित्रं महात्मानं परिवार्य समन्ततः ।
[विष्ठिता श्च यथान्यायं राघवौ च यथार्हतः ॥] ११
अथ तत्र तदा रामो विश्वामित्र मथा ब्रवीत् ।
"भगवन्! श्रोतु मिच्छामि गङ्गां त्रिपथगां नदीम् ॥ १२
त्रैलोक्यं कथमाक्रम्य गता नदनदीपतिम् ।"
चोदितो रामवाक्येन विश्वामित्रो महामुनिः ॥ १३

वृद्धिं जन्मच गङ्गाया वक्तु मेवोपचक्रमे ।
" शैलेन्द्रो हिमवान्नाम धातूना माकरो महान् ॥ १४
तस्य कन्याद्वयं राम! रूपेणा प्रतिमं भुवि ।
या मेरुदुहिता राम! तयो र्माता सुमध्यमा ॥ १५
नाम्ना मनोरमा नाम पत्नी हिमवतः प्रिया ।
तस्यां गङ्गेय मभवज्ज्येष्ठा हिमवत स्सुता ॥ १६
उमानाम द्वितीयाऽभू न्नाम्ना तस्यैव राघव! ।
अथ ज्येष्ठां सुरास्सर्वे देवतार्थचिकीर्षया ॥ १७
शैलेन्द्रं वरयामासुर्गङ्गां त्रिपथगां नदीम् ।
ददौ धर्मेण तनयां हिमवान् लोकपावनीम् ॥ १८
स्वच्छन्दपथगां गङ्गां त्रैलोक्यहितकाम्यया ।
प्रतिगृह्य ततो देवा स्त्रिलोकहितकारिणः ॥ १९
गङ्गा मादाय तेऽगच्छन्कृतार्थेनान्तरात्मना ।
[यथागतं ययुर्देवा स्ततः पूर्णमनोरथाः ॥] २०
याचान्या शैलदुहिता कन्यासी द्रघुनन्दन! ।
उग्रं सा व्रत मास्थाय तपस्तेपे तपोधना ॥ २१
उग्रेण तपसा युक्तां ददौ शैलवर स्सुताम् ।
रुद्रायाप्रतिरूपाय उमां लोकनमस्कृताम् ॥ २२
एते ते शैलराजस्य सुते लोकनमस्कृते ।
गङ्गाच सरितां श्रेष्ठा उमा देवी च राघव! ॥ २३
एतत्ते सर्वमाख्यातं यथा त्रिपथगा नदी ।
खं गता प्रथमं तात गतिं गतिमतां वर! ॥ २४

सैषा सुरनदी रम्या शैलेन्द्रस्य सुता तदा ।
सुरलोकं समारूढा विपापा जलवाहिनी ॥" २५

॥ इति श्रीमद्बालकाण्डे पञ्चत्रिंशस्सर्गः ॥

## ॥ षट्त्रिंशस्सर्गः ॥

उक्तवाक्ये मुनौ तस्मि न्नुभौ राघवलक्ष्मणौ ।
प्रतिनन्द्य कथां वीरा वूचतुर्मुनिपुङ्गवम् ॥ १
"धर्मयुक्त मिदं ब्रह्म! न्कथितं परमं त्वया ।
दुहितु श्शैलराजस्य ज्येष्ठाया वक्तु मर्हसि ॥ २
विस्तरं विस्तरज्ञोऽसि दिव्यमानुषसम्भवम् ।
त्रीन्पथो हेतुना केन प्लावये ल्लोकपावनी? ॥ ३
कथं गङ्गा त्रिपथगा विश्रुता सरिदुत्तमा ।
त्रिषु लोकेषु सर्वज्ञ कर्मभिः कै स्समन्विता? ॥" ४
तथा ब्रुवति काकुत्स्थे विश्वामित्र स्तपोधनः ।
निखिलेन कथां सर्वा मृषिमध्ये न्यवेदयत् ॥ ५
"पुरा राम कृतोद्वाहो नीलकण्ठो महातपाः ।
दृष्ट्वा च स्पृहया देवीं मैथुनायोपचक्रमे ॥ ६
[तस्य सङ्क्रीडमानस्य महादेवस्य धीमतः ।]
शितिकण्ठस्य देवस्य दिव्यं वर्षशतंगतम् ॥ ७
[एवं मन्मथयुद्धेतु तयो र्नासी त्पराजयः ।]
नचापि तनयो राम! तस्यामासीत्परन्तप! ८
ततो देवास्समुद्विग्नाः पितामहपुरोगमाः ।
"यदि ह्योत्पद्यते भूतं कस्तत्प्रतिसहिष्यते ॥" ९

अभिगम्य सुरास्सर्वे प्रणिपत्येद मब्रुवन् ।
" देवदेव ! महादेव ! लोकस्यास्य हिते रत ! ॥ १०
सुराणां प्रणिपातेन प्रसादं कर्तु मर्हसि ।
न लोकाधारयिष्यन्ति तव तेजस्सुरोत्तम ! ॥ ११
ब्राह्मेण तपसा युक्तो देव्या सह तपश्चर ।
त्रैलोक्यहितकामार्थं तेजस्तेजसि धारय ॥ १२
[रक्ष सर्वानिमान् लोकान्नालोकं कर्तु मर्हसि ।]
देवतानां वचश्श्रुत्वा सर्वलोकमहेश्वरः ॥ १३
बाढमित्यब्रवीत्सर्वा न्पुनश्चेद मुवाच ह ।
" धारयिष्याम्यहं तेजस्तेजस्येव सहोमया ॥ १४
त्रिदशाः पृथिवी चैव निर्वाण मधिगच्छतु ।
यदिदं क्षुभितं स्थानान्ममतेजोह्यनुत्तमम् ॥ १५
धारयिष्यति कस्तन्मे ब्रुवन्तु सुरसत्तमाः ।"
एव मुक्ता स्सुरास्सर्वे प्रत्यूचु र्वृषभध्वजम् ॥ १६
" यत्तेजः क्षुभितं ह्येतत्तद्धरा धारयिष्यति ।"
एव मुक्तस्सुरपतिः प्रमुमोच महीतले ॥ १७
तेजसा पृथिवी ग्रेन व्याप्ता सगिरिकानना ।
ततो देवाः पुनरिदमूचुश्चाथ हुताशनम् ॥ १८
" प्रविशत्वं महातेजो ! रौद्रं वायुसमन्वितः ।"
तदग्निना पुनर्व्याप्तं संजात श्श्वेतपर्वतः ॥ १९
दिव्यं शरवणं चैव पावकादित्यसन्निभम् ।
यत्र जातो महातेजाः कार्तिकेयोऽग्निसम्भवः ॥ २०

अथोमां च शिवं चैव देवास्सर्षिगणा स्तदा ।
पूजयामासुरत्यर्थं सुप्रीतमनसस्ततः ॥ २१
अथ शैलसुता राम! त्रिदशानिद मब्रवीत् ।
[अप्रियस्य कृतस्याद्य फलं प्राप्स्यथ मे सुराः ॥ २२
इत्युक्त्वा सलिलं गृह्य पार्वती भास्करप्रभा ।]
समन्युरशपत्सर्वान्क्रोधसंरक्तलोचना ॥ २३
यस्मान्निवारिता चैवं सङ्गतिः पुत्रकाम्यया ।
असत्यं स्वेषु दारेषु तस्मान्नोत्पादयिष्यथ ॥ २४
अद्य प्रभृति युष्पाक मप्रजास्सन्तु पत्नयः ।"
एव मुक्त्वा सुरास्सर्वान्शशाप पृथिवीमपि ॥ २५
"अवने नैकरूपा त्वं बहुभार्या भविष्यसि ।
न च पुत्रकृतां प्रीतिं मत्क्रोधकलुषीकृता ॥ २६
प्राप्स्यसि त्वं सुदुर्मेध! मम पुत्र मनिच्छती ।"
तान्सर्वान्व्रीडितान् दृष्ट्वा सुरान्सुरपति स्तदा ॥ २७
गमनायोपचक्राम दिशं वरुणपालिताम् ।
स गत्वा तप आतिष्ठत्पार्श्वे तस्योत्तरे गिरेः ॥ २८
हिमवत्प्रभवे शृङ्गे सह देव्या महेश्वरः ।
एष ते विस्तरो राम शैलपुत्र्या निवेदितः ॥ २९
गङ्गायाः प्रभवं चैव शृणु मे सहलक्ष्मणः ॥

॥ इति श्रीमद्बालकाण्डे षट्त्रिंशस्सर्गः ॥

## ॥ सप्तत्रिंशस्सर्गः ॥

तप्यमाने तपो देवे देवास्सर्षिगणाः पुरा ।
सेनापति मभीप्सन्तः पितामह मुपागमन् ॥ १

ततोऽब्रुवन्सुरास्सर्वे भगवन्तं पितामहम् ।
प्रणिपत्य शुभं वाक्यं सेन्द्रास्साग्निपुरोगमाः ॥ २

"यो न स्सेनापतिर्देवदत्तो भगवता पुरा ।
तपः परममास्थाय तप्यतेस्मसहोमया ॥ ३

यदत्रानन्तरं कार्यं लोकानां हितकाम्यया ।
संविधत्स्व विधानज्ञ! त्वं हि नः परमा गतिः ॥" ४

देवतानां वचश्श्रुत्वा सर्वलोकपितामहः ।
सांत्वयन्मधुरै र्वाक्यै स्त्रिदशानिदमब्रवीत् ॥ ५

"शैलपुत्र्या यदुक्त तन्नप्रजास्सन्तु पत्निषु ।
तस्या वचनमक्लिष्टं सत्यमेव न संशयः ॥ ६

इय माकाशगा गङ्गा यस्यां पुत्रं हुताशनः ।
जनयिष्यति देवानां सेनापति मरिन्दमम् ॥ ७

ज्येष्ठा शैलेन्द्रदुहिता मानयिष्यति तं सुतम् ।
उमाया स्तद्बहुमतं भवि यति न संशयः ॥" ८

तच्छ्रुत्वा वचनं तस्य कृतार्था रघुनन्दन! ।
प्रणिपत्य सुरा स्सर्वे पितामह मपूजयन् ॥ ९

ते गत्वा पर्वतं राम! कैलासं धातु मण्डितम् ।
अग्निं नियोजयामासुः पुत्रार्थे सर्वदेवताः ॥ १०

"देवकार्य मिदं देव संविधत्स्व हुताशन ।
शैलपुत्र्यां महातेजो! गङ्गायां तेज उत्सृज ॥" ११
देवतानां प्रतिज्ञाय गङ्गामभ्येत्य पावकः ।
"गर्भ धारयवै देवि देवतानामिदं प्रियम् ॥" १२
तस्य तद्वचनं श्रुत्वा दिव्यं रूप मधारयत् ।
दृष्ट्वा तन्महिमानं स समन्ता दवकीर्यत ॥ १३
समन्तत स्तदा देवी मभ्यषिञ्चत पावकः ।
सर्वस्रोतांसि पूर्णानि गङ्गाया रघुनन्दन ॥ १४
त मुवाच ततो गङ्गा सर्वदेवपुरोहितम् ।
"अशक्ता धारणे देव तव तेज स्समुद्धतम् ॥" १५
दह्यमानाग्निना तेन सम्प्रव्यथितचेतना ।
अथाब्रवी दिदं गङ्गां सर्वदेवहुताशनः ॥ १६
"इह हैमवते पादे गर्भोऽयं सन्निवेश्यताम् ।"
श्रुत्वा त्वग्निवचो गङ्गा तं गर्भ मतिभास्वरम् ॥ १७
उत्ससर्ज महातेज स्स्रोतोभ्यस्तु तदाऽनघ ।
यदस्या निर्गतं तस्मात्तप्तजाम्बूनदप्रभम् ॥ १८
काञ्चनं धरणीं प्राप्तं हिरण्य ममलं शुभम् ।
ताम्रं कार्ष्णायसं चैव तैक्ष्ण्या देवाभ्यजायत ॥ १९
मलं तस्या भव त्तत्र त्रपु सीसक मेवच ।
तदेत द्धरणीं प्राप्य नानाधातु रवर्धत ॥ २०
निक्षिप्त मात्रे गर्भेतु तेजोभि रभिरञ्जितम् ।
सर्वं पर्वतसन्नद्धं सौवर्ण मभव द्वनम् ॥ २१

[तं देशन्तु ततो ब्रह्मा सम्प्राप्येद मभाषत ।
"जातस्वरूपं यत्तस्मा ज्जातरूपं भविष्यति ॥"] २२
जातरूप मिति ख्यातं तदा प्रभृति राघव ।
सुवर्णं पुरुषव्याघ्र! हुताशन समप्रभम् ॥ २३
तृणवृक्षलतागुल्मं सर्वं भवति काञ्चनम् ।
त कुमारं ततो जातं सेन्द्रा स्सहमरुद्गणाः ॥ २४
क्षीरसम्भावनार्थाय कृत्तिका स्समयोजयन् ।
ताः क्षीरं जातमात्रस्य कृत्वा समय मुत्तमम् ॥ २५
ददुः "पुत्रोऽय मस्माकं सर्वासा" मिति निश्चिताः ।
ततस्तु देवता स्सर्वाः "कार्तिकेय" इति ब्रुवन् ॥ २६
"पुत्रस्त्रैलोक्यविख्यातो भविष्यति न संशयः।"
तेषां तद्वचनं श्रुत्वा स्कन्नगर्भपरिस्रवे ॥ २७
[स्नापयन्परया लक्ष्म्या दीप्यमानं यथाऽनलम् ।
स्कन्द इत्यब्रुवन् देवास्स्कन्नं गर्भपरिस्रवात् ॥] २८
कार्तिकेयं महाभागं काकुत्स्थ! ज्वलनोपमम् ।
प्रादुर्भूतं ततः क्षीरं कृत्तिकानामनुत्तमम् २९
षण्णां षडाननो भूत्वा जग्राह स्तनजं पयः ।
गृहीत्वा क्षीरमेकाह्ना सुकुमारवपुस्तदा ॥ ३०
अजयत्स्वेन वीर्येण दैत्यसैन्यगणान्विभुः ।
सुरसेनागणपतिं ततस्त ममलद्युतिम् ॥ ३१
अभ्यषिञ्चन्सुरगणा स्समेत्याग्निपुरोगमाः ।
एष ते राम! गङ्गाया विस्तरोऽभिहितो मया ॥ ३२

कुमारसम्भवश्चैव धन्यः पुण्य स्तथैव च ।
भक्तश्च यः कार्तिकेये काकुत्स्थ! भुविमानवः ॥ ३३
आयुष्मान्पुत्रपौत्रैश्च स्कन्दसालोक्यमाव्रजेत् ॥"

इति श्रीमद्बालकाण्डे सप्तत्रिंशस्सर्गः ॥

## ॥ अष्टत्रिंशस्सर्गः ॥

तां कथां कौशिको रामे निवेद्य कुशिकात्मजः ।
पुनरेवापरं वाक्यं काकुत्स्थमिद मब्रवीत् ॥ १
"अयोध्याधिपति श्शूरः पूर्वमासीन्नराधिपः ।
सगरो नाम धर्मात्मा प्रजाकामस्सचाप्रजः ॥ २
वैदर्भदुहिता राम! केशिनी नाम नामतः ।
ज्येष्ठा सगरपत्नी सा धर्मिष्ठा सत्यवादिनी ॥ ३
अरिष्टनेमिदुहिता रूपेणाऽप्रतिमा भुवि ।
द्वितीया सगरस्यासीत्पत्नी सुमतिसंज्ञिता ॥ ४
ताभ्यां सह तदा राजा पत्नीभ्यां तप्तवां स्तपः ।
हिमवन्तं समासाद्य भृगुसंस्रवणे गिरौ ॥ ५
अथ वर्षशते पूर्णे तपसाऽऽराधितो मुनिः ।
सगराय वरं प्रादाद्भृगु स्सत्यवतां वरः ॥ ६
"अपत्यलाभ स्सुमहान्भविष्यति तवानघ! ।
कीर्तिं चाप्रतिमां लोके प्राप्स्यसे पुरुषर्षभ! ॥ ७
एका जनयिता तात! पुत्रं वंशकरं तव ।
षष्टिः पुत्रसहस्राणि ह्यपरा जनयिष्यति ॥" ८

भाषमाणं महात्मानं राजपुत्रौ प्रसाद्यतम् ।
ऊचतुः परमप्रीतौ कृताञ्जलिपुटौ तदा ॥ ९
"एकः कस्यास्सुतो ब्रह्म! न्कावहून्जनयिष्यति ।
श्रोतु मिच्छावहे सम्यक्सत्यमस्तु वचस्तव ॥" १०
तयो स्तद्वचनं श्रुत्वा भृगुः परमधार्मिकः ।
उवाच परमां वाणीं "स्वच्छन्दोऽत्र विधीयताम् ॥ ११
"एको वंशकरो वास्तु बहवो वा महाबलाः ।
कीर्तिमन्तो महोत्साहाः का वा कं वर मिच्छति ॥" १२
मुनेस्तु वचनं श्रुत्वा केशिनी रघुनन्दन! ।
पुत्रं वंशकरं राम! जग्राह नृपसन्निधौ ॥ १३
षष्टिं पुत्रसहस्राणि सुपर्णभगिनी तदा ।
महोत्साहान्कीर्तिमतो जग्राह सुमतिस्सुतान् ॥ १४
प्रदक्षिण मृषिं कृत्वा शिरसाऽभि प्रणम्य च ।
जगाम स्वपुरं राजा सभार्यो रघुनन्दन! ॥ १५
अथ काले गते तस्मिन्जेष्ठा पुत्रं व्यजायत ।
असमञ्ज इति ख्यातं केशिनी सगरात्मजम् ॥ १६
सुमतिस्तु नरव्याघ्र! गर्भतुम्बं व्यजायत ।
षष्टिः पुत्रसहस्राणि तुम्बभेदा द्विनिस्सृताः ॥ १७
घृतपूर्णेषु कुम्भेषु धात्र्यस्ता न्समवर्धयन् ।
कालेन महता सर्वे यौवनं प्रतिपेदिरे ॥ १८
अथ दीर्घेण कालेन रूपयौवनशालिनः ।
षष्टिः पुत्रसहस्राणि सगरस्याभवं स्तदा ॥ १९

स च ज्येष्ठो नरश्रेष्ठ! सगरस्यात्मसम्भवः ।
बालान्गृहीत्वा तु जले सरय्वा रघुनन्दन! २०
प्रक्षिप्य प्रहसन्नित्यं मज्जतस्ता न्निरीक्ष्यवै ।
एवं पापसमाचार स्सज्जन प्रतिबाधकः ॥ २१
पौराणामहिते युक्तः पुत्रो निर्वासितः पुरात् ।
तस्य पुत्रोंऽशुमान्नाम असमञ्जस्य वीर्यवान् ॥ २२
सम्मतस्सर्वलोकस्य सर्वस्यापि प्रियंवदः ।
ततः कालेन महता मति स्समभिजायत ॥ २३
सगरस्य नरश्रेष्ठ! "यजेय" मिति निश्चिता ।
स कृत्वा निश्चयं राम! सोपाध्यायगण स्तदा ॥ २४
यज्ञकर्मणि वेदज्ञो यष्टुं समुपचक्रमे ॥

इति श्रीमद्बालकाण्डे अष्टत्रिंशस्सर्गः ॥

---

## ॥ एकोनचत्वारिंशस्सर्गः ॥

विश्वामित्रवच श्श्रुत्वा कथां ते रघुनन्दनः ।
उवाच परमप्रीतो मुनिं दीप्तमिवानलम् ॥ १
"श्रोतुमिच्छामि भद्रंते विस्तरेण कथा मिमाम् ।
पूर्वको मे कथं ब्रह्म! न्यज्ञं वै समुपाहरत् ॥" २
[तस्य तद्वचनं श्रुत्वा कौतूहलसमन्वितम् ।]
विश्वामित्रस्तु काकुत्स्थ मुवाच प्रहसन्निव ॥ ३
"श्रूयतां विस्तरो राम! सगरस्य महात्मनः ।
शङ्करश्वशुरो राम! हिमवानचलोत्तमः ॥ ४

[इन्द्रदत्तवर श्श्रीमानद्रिराज्येऽभिषेचितः ।
विन्ध्यपर्वतमासाद्य निरीक्षेते परस्परम् ॥ ५
तयोर्मध्ये प्रवृत्तोऽभूद्यज्ञ स्स पुरुषोत्तम ! ।
सहि देशो नरव्याघ्र ! प्रशस्तो यज्ञकर्मणि ॥ ६
तस्याश्वचर्यां काकुत्स्थ ! दृढधन्वा महारथः ।
अंशुमानकरोत्तात ! सगरस्य मते स्थितः ॥ ७
तस्य पर्वणि तं यज्ञं यजमानस्य वासवः ।
राक्षसीं तनुमास्थाय यज्ञीयाश्वमपाहरत् ॥ ८
ह्रियमाणे तु काकुत्स्थ ! तस्मिन्नश्वे महात्मनः ।
उपाध्यायगणास्सर्वे यजमान मथाब्रुवन् ॥ ९
"अयं पर्वणि वेगेन यज्ञीयाश्वोऽपनीयते ।
हर्तारं जहि काकुत्स्थ ! हयश्चैवोपनीयताम् ॥ १०
यज्ञच्छिद्रं भवत्येतत्सर्वेषा मशिवाय नः ।
तत्तथा क्रियतां राजन्यथाऽच्छिद्रः क्रतुर्भवेत् ॥" ११
उपाध्यायवचः श्रुत्वा तस्मिन्सदसि पार्थिवः ।
षष्टिं पुत्रसहस्राणि वाक्यमेतदुवाच ह ॥ १२
"गतिं पुत्रा ! न पश्यामि रक्षसां पुरुषर्षभाः । !
मन्त्रपूतै र्महाभागैरास्थितो हि महान्क्रतुः ॥ १३
तद्गच्छत विचिन्वध्वं पुत्रका ! भद्र मस्तु वः ।
समुद्रमालिनीं सर्वां पृथिवी मनुगच्छत ॥ १४
एकैकं योजनं पुत्रा ! विस्तार मधिगच्छत ।
यावत्तुरगसन्दर्श स्तावत्खनतमेदिनीम् ॥ १५

[नागलोकं समासाद्य विचिन्वध्वं विशेषतः ।
उदयाचलमारुह्य विहृत्यास्तमयं गिरिम् ॥ १६
निवर्तध्वं न तुरग मालोक्य ब्रह्मणोगृहम् ।]
तं चैव हयहर्तारं मार्गमाणा ममाज्ञया ॥ १७
दीक्षितः पौत्रसहित स्सोपाध्यायगणो ह्यहम् ।
इहस्थास्यामि भद्रं वो यावत्तुरगदर्शनम् ॥" १८
इत्युक्ता हृष्टमनसो राजपुत्रा महाबलाः ।
[प्रणम्य शिरसा तस्मै कृत्वा चापि प्रदक्षिणम् ॥] १९
जग्मुर्महीतलं राम! पितुर्वचनयन्त्रिताः ।
योजनायामविस्तार मेकैको धरणीतलम् ॥ २०
बिभिदुः पुरुषव्याघ्र! वज्रस्पर्शसमै र्नखैः ।
शूलै रशनिकल्पै श्च हलैश्चापि सुदारुणैः ॥ २१
[मुष्टिभि श्चरणै र्दन्तै र्दम्भोळिसदृशै र्नखैः ।]
भिद्यमाना वसुमती ननाद रघुनन्दन! ॥ २२
नागानां वध्यमानाना मसुराणांच राघव! ।
राक्षसानांच दुर्धर्षस्सत्वानां निनदोऽभवत् ॥ २३
योजनानां सहस्राणि षष्टिं तु रघुनन्दन! ।
बिभिदु र्धरणीं वीरारसातल मनुत्तमम् ॥ २४
एवं पर्वतसम्बाधं जम्बूद्वीपं नृपात्मजाः ।
खनन्तो नरशार्दूल! सर्वतः परिचक्रमुः ॥ २५
ततो देवा स्सगन्धर्वा स्सासुरा स्सहपन्नगाः ।
सम्भ्रान्तमनस स्सर्वे पिता महमुपागमन् ॥ २६

ते प्रसाद्य महात्मानं विषण्णवदना स्तदा ।
ऊचुः परमसंत्रस्ताः पितामह मिदं वचः ॥ २७
"भगव! न्पृथिवीसर्वा खन्यते सगरात्मजैः ।
बहवश्च महात्मानो हन्यन्ते तलवासिनः ॥ २८
[वरुणस्य सुता वीरा बहवो दानवैस्सह ।
चूर्णीकृतामहाशैला मीनाश्चैवानुभक्षिताः ] २९
अयं यज्ञहरोऽस्माक मनेनाश्वोऽपनीयते ।
इति ते सर्वभूतानि निघ्नन्ति सगरात्मजाः ॥", ३०

इति श्रीमद्बालकाण्डे एकोनचत्वारिंशस्सर्गः ॥

## ॥ चत्वारिंशस्सर्गः ॥

देवतानां वच श्श्रुत्वा भगवान्वै पितामहः ।
प्रत्युवाच "सुसंत्रस्तान्कृतान्तबलमोहितान् ॥ १
यस्येयं वसुधा कृत्स्ना वासुदेवस्य धीमतः ।
कापिलं रूप मास्थाय धारयत्यनिशं धराम् ॥ २
[आस्ते रसातले धीमान्सर्वान्नो धारयन्प्रभुः ।]
तस्य कोपाग्निना दग्धा भविष्यन्ति नृपात्मजाः ॥ ३
पृथिव्या श्चापि निर्भेदो दृष्ट एव सनातनः ।
सगरस्य च पुत्राणां विनाशोऽदीर्घजीविनाम् ॥" ४
पितामहवचश्श्रुत्वा त्रयस्त्रिंश दरिन्दम! ।
देवाः परमसंहृष्टाः पुन र्जग्मुर्यथागतम् ॥ ५

सगरस्य च पुत्राणां प्रादुरासी न्महात्मनाम् ।
पृथिव्यां भिद्यमानायां निर्घातसमनिस्वनः ॥ ६
ततो भित्वा महीं सर्वां कृत्वा चापि प्रदक्षिणम् ।
सहिता स्सागरा स्सर्वे पितरं वाक्य मब्रुवन् ॥ ७
"परिक्रान्ता महीसर्वा सत्ववन्तश्च सूदिताः ।
देवदानवरक्षांसि पिशाचोरगराक्षसाः ॥ ८
न च पश्यामहेऽश्वं त मश्वहर्तार मेव च ।
कि करिष्याम भद्रं ते बुद्धि रत्र विचार्यताम् ॥" ९
तेषां तद्वचनं श्रुत्वा पुत्राणां राजसत्तमः ।
समन्यु रब्रवी द्वाक्यं सगरो रघुनन्दन! ॥ १०
"भूयः खनत भद्रं वोनिर्भिद्य वसुधातलम् ।
अश्वहर्तार मासाद्य कृतार्था श्च निवर्तथ ॥" ११
पितु र्वचन मासाद्य सगरस्य महात्मनः ।
षष्टिः पुत्रसहस्राणि रसातल मभिद्रवन् ॥ १२
खन्यमाने तत स्तास्मि न्ददृशुः पर्वतोपमम् ।
दिशागजं विरूपाक्षं धारयन्तं महीतलम् ॥ १३
सपर्वतवनां कृत्स्नां पृथिवीं रघुनन्दन!
शिरसा धारयामास विरूपाक्षो महागजः ॥ १४
यदा पर्वणि काकुत्स्थ विक्रमार्थं महागजः ।
खेदा च्चालयते शीर्षं भूमिकम्पस्तदा भवेत् ॥ १५
तं ते प्रदक्षिणं कृत्वा दिशापालं महागजम् ।
मानयन्तो हि ते राम! जग्मुर्भित्वा रसातलम् ॥ १६

ततः पूर्वां दिशंभित्वा दक्षिणांबिभिदुः पुनः ।
दक्षिणस्यामपि दिशि ददृशुस्ते महागजम् ॥ १७
महापद्मं महात्मानं सुमहत्पर्वतोपमम् ।
शिरसा धारयन्तं ते विस्मयं जग्मुरुत्तमम् ॥ १८
ततः प्रदक्षिणं कृत्वा सगरस्य महात्मनः ।
षष्टिः पुत्रसहस्राणि पश्चिमांबिभिदुर्दिशम् ॥ १९
पश्चिमायामपिदिशि महान्त मचलोपमम् ।
दिशागजं सौमनसं ददृशुस्ते महाबलाः ॥ २०
तं ते प्रदक्षिणं कृत्वा पृष्ट्वाचापि निरामयम् ।
खनन्तस्समुपाक्रान्ता दिशं हैमवतीं ततः ॥ २१
उत्तरस्यां रघुश्रेष्ठ! ददृशुर्हिमपाण्डरम् ।
भद्रंभद्रेण वपुषा धारयन्तं महीमिमाम् ॥ २२
समालभ्य ततस्सर्वे कृत्वाचैनं प्रदक्षिणम् ।
षष्टिः पुत्रसहस्राणिबिभिदुर्वसुधातलम् ॥ २३
ततः प्रागुत्तरां गत्वा सागराः प्रथितां दिशम् ।
रोषादभ्यखनन्सर्वे पृथिवीं सगरात्मजाः ॥ २४
ते तु सर्वे महात्मानो भीमवेगा महाबलाः ।
ददृशुः कपिलं तत्र वासुदेवं सनातनम् ॥ २५
हयं च तस्य देवस्य चरन्तमविदूरतः ।
प्रहर्षमतुलं प्राप्तास्सर्वे ते रघुनन्दन! ॥ २६
ते तं हयहरं ज्ञात्वा क्रोधपर्याकुलेक्षणाः ।
खनित्रलाङ्गलधरा नानावृक्षशिलाधराः ॥ २७

अभ्यधावन्त संक्रुद्धा "स्तिष्ठतिष्ठे"ति चाब्रुवन् ।
" अस्माकं त्वं हि तुरगं यज्ञीयं हृतवानसि ॥ २८
दुर्मेध! स्त्वं हि सम्प्राप्तान्विद्धि न स्सगरात्मजान् ।"
श्रुत्वा तद्वचनं तेषां कपिलो रघुनन्दन! ॥ २९
क्रोधेन महताविष्टो हुङ्कार मकरोत्तदा ।
ततस्तेनाप्रमेयेन कपिलेन महात्मना ॥ ३०
भस्मराशीकृता स्सर्वे काकुत्स्थ! सगरात्मजाः ॥

इति श्रीमद्बालकाण्डे चत्वारिंशस्सर्गः ॥

---

## ॥ एकचत्वारिंशस्सर्गः ॥

पुत्रां श्चिरगतान् ज्ञात्वा सगरो रघुनन्दन! ।
नप्तारमब्रवीद्राजा दीप्यमानं स्वतेजसा ॥ १
"शूरश्च कृतविद्यश्च पूर्वैस्तुल्योऽसि तेजसा ।
पितॄणां गतिमन्विच्छ येन चाश्वोऽपवाहितः ॥ २
अन्तर्भौमानि सत्वानि वीर्यवन्ति महान्ति च ।
तेषां त्वं प्रतिघातार्थं सासि गृह्णीष्व कार्मुकम् ॥ ३
अभिवाद्याभिवाद्यां स्त्वं हत्वा विघ्नकरा नपि ।
सिद्धार्थ स्सन्निवर्तस्व मम यज्ञस्य पारगः ॥" ४
एव मुक्तोऽशुमा न्सम्य क्सगरेण महात्मना ।
धनु रादाय खड्गं च जगाम लघुविक्रमः ॥ ५
स खातं पितृभिर्मार्गे मन्तर्भौमं महात्मभिः ।
प्रापद्यत नरश्रेष्ठ! तेन राज्ञाऽभिचोदितः ॥ ६

दैत्यदानवरक्षोभिः पिशाचपतगोरगैः ।
पूज्यमानं महातेजा दिशागज मपश्यत ॥ ७
स तं प्रदक्षिणं कृत्वा पृष्ट्वा चापि निरामयम् ।
पितॄन्सपरिपप्रच्छ वाजिहर्तार मेव च ॥ ८
दिशागजस्तु तच्छ्रुत्वा प्रत्याहांशुमतो वचः ।
आसमञ्ज ! "कृतार्थस्त्वं सहाश्वश्शीघ्रमेष्यसि ॥" ९
तस्य तद्वचनं श्रुत्वा सर्वानेव दिशागजान् ।
यथाक्रमं यथान्यायं प्रष्टुं समुपचक्रमे ॥ १०
तैश्च सर्वैर्दिशापालै र्वाक्यज्ञो वाक्यकोविदैः ।
पूजित "स्सहयश्चैव गन्तासी" त्यभिचोदितः ॥ ११
तेषां तद्वचनं श्रुत्वा जगाम लघुविक्रमः ।
भस्मराशीकृता यत्र पितरस्तस्य सागराः ॥ १२
स दुःखवश मापन्न स्त्वसमञ्जसुतस्तदा ।
चुक्रोश परमार्तस्तु वधात्तेषां सुदुःखितः ॥ १३
यज्ञियं च हयं तत्र चरन्त मविदूरतः ।
ददर्श पुरुषव्याघ्रो दुःखशोक समन्वितः ॥ १४
स तेषां राजपुत्राणां कर्तुकामो जलक्रियाम् ।
सलिलार्थी महातेजा न चापश्य ज्जलाशयम् ॥ १५
विसार्य निपुणां दृष्टिं ततोऽपश्यत्खगाधिपम् ।
पितॄणां मातुलं राम ! सुवर्ण मनिलोपमम् ॥ १६
स चैन मब्रवीद्वाक्यं वैनतेयो महाबलः ।
"माशुचः पुरुषव्याघ्र ! वधोऽयं लोकसम्मतः ॥ १७

कापिलेनाप्रमेयेन दग्धा हीमे महाबलाः ।
सलिलं नार्हसि प्राज्ञ! दातु मेषां हि लौकिकम् ॥ १८
गङ्गा हिमवतो ज्येष्ठादुहिता पुरुषर्षभ! ।
तस्यां कुरु महाबाहो! पितृणां सलिलक्रियाम् ॥ १९
भस्मराशी कृता नेतान् प्लावये ल्लोकपावनी ।
तया क्लिन्न मिदं भस्म गङ्गया लोककान्तया ॥ २०
षष्टिं पुत्र सहस्राणि स्वर्गलोकं नयिष्यति ।
गच्छ चाश्वं महाभाग! तं गृह्य पुरुषर्षभ! ॥ २१
यज्ञं पैतामहं वीर! संवर्तयितु मर्हसि ।"
सुपर्णवचनं श्रुत्वा सोऽशुमा नतिवीर्यवान् ॥ २२
त्वरितं हयमादाय पुन रायान्महायशाः ।
ततो राजान मासाद्य दीक्षितं रघुनन्दन! २३
न्यवेदय द्यथावृत्तं सुपर्णवचनं तथा ।
तच्छ्रुत्वा घोरसङ्काशं वाक्य मंशुमतो नृपः ॥ २४
यज्ञं निर्वर्तयामास यथाकल्पं यथाविधि ।
स्वपुरं चागमच्छ्रीमा निष्टयज्ञो महीपतिः ॥ २५
गङ्गाया श्चागमे राजा निश्चयं नाध्यगच्छत ।
अकृत्वा निश्चयं राजा कालेन महता महान् ॥ २६
त्रिंशद्वर्ष सहस्राणि राज्यं कृत्वा दिवं गतः ।

इति श्रीमद्बालकाण्डे एकचत्वारिंशस्सर्गः ॥

1477

## ॥ द्विचत्वारिंशस्सर्गः ॥

कालधर्मं गते राम! सगरे प्रकृतीजनाः ।
राजानं रोचयामासु रंशुमन्त सुधार्मिकम् ॥ १
स राजा सुमहा नासी दंशुमा न्रघुनन्दन! ।
तस्य पुत्रो महा नासी द्दिलीप इति विश्रुतः ॥ २
तस्मि न्राज्यं समावेश्य दिलीपे रघुनन्दन! ।
हिमवच्छिखरे पुण्ये तपस्तेपे सुदारुणम् ॥ ३
द्वात्रिंश त्सहस्राणि वर्षाणि सुमहायशाः ।
तपोवनं गतो राजा स्वर्गं लेभेतपोधनः ॥ ४
दिलीपस्तु महातेजा श्श्रुत्वा पैतामहं वधम् ।
दुःखोपहतया बुद्ध्यानिश्चयं नाध्यगच्छत ॥ ५
"कथं गङ्गावतरणं? कथ तेषां जलक्रिया? ।
तारयेयं कथं चैना" निति चिन्तापरोऽभवत् ॥ ६
तस्य चिन्तयतो नित्यं धर्मेण विदितात्मनः ।
पुत्रो भगीरथो नाम जज्ञे परमधार्मिकः ॥ ७
दिलीप स्तु महातेजा यज्ञैर्बहुभि रिष्टवान् ।
त्रिंशद्वर्षसहस्राणि राजा राज्य मकारयत् ॥ ८
अगत्वा निश्चयं राजा तेषा मुद्धरणं प्रति ।
व्याधिना नरशार्दूल! काल धर्म मुपेयिवान् ॥ ९
इन्द्रलोकं गतो राजा स्वार्जितेनैव कर्मणा ।
राज्ये भगीरथं पुत्र मभिषिच्य नरर्षभः ॥ १०

भगीरथ स्तु राजर्षि र्धार्मिको रघुनन्दन! ।
अनपत्यो महातेजाः प्रजाकाम स्सचाप्रजः ॥ ११
मन्त्रिष्वाधाय तद्राज्यं गङ्गावतरणे रतः ।
स तपो दीर्घ मातिष्ठ द्गोकर्णे रघुनन्दन! १२
ऊर्ध्व बाहुः पञ्चतपा मासाहारो जितेन्द्रियः ।
तस्य वर्षसहस्राणि घोरे तपसि तिष्ठतः ॥ १३
अतीतानि महाबाहो! तस्य राज्ञो महात्मनः ।
सुप्रीतो भगवा न्ब्रह्मा प्रजानां पति रीश्वरः ॥ १४
तत स्सुरगणै स्सार्धमुपागम्य पितामहः ।
भगीरथं महात्मानं तप्यमान मथाऽब्रवीत् ॥ १५
"भगीरथ! महाभाग! प्रीतस्तेऽहं जनेश्वर! ।
तपसा च सुतप्तेन वरं वरय सुव्रत ॥" १६
त मुवाच महातेजा स्सर्वलोकपितामहम् ।
भगीरथो महाभागः कृताञ्जलि रुपस्थितः ॥ १७
"यदि मे भगव! न्प्रीतो यद्यस्ति तपसः फलम् ।
सगरस्यात्मजा स्सर्वे मत्त स्सलिल माप्नुयुः ॥ १८
गङ्गाया स्सलिलक्लिन्ने भस्म न्येषां महात्मनाम् ।
स्वर्गं गच्छेयु रत्यन्तं सर्वेमे प्रपितामहाः ॥ १९
देयाच सन्तति र्देव! नावसीदे त्कुलं चनः ।
इक्ष्वाकूनां कुले देव! एष मेऽस्तु वरः परः ॥" २०
उक्तवाक्यं तु राजानं सर्वलोकपितामहः ।
प्रत्युवाच शुभां वाणीं मधुरां मधुराक्षराम् ॥ २१

"मनोरथो महानेष भगीरथ! महारथ!।
एवं भवतु भद्रं त इक्ष्वाकुकुलवर्धन!॥ २२
इयं हैमवती गङ्गा ज्येष्ठा हिमवतस्सुता।
तां वै धारयितुं शक्तो हर स्तत्र नियुज्यताम्॥ २३
गङ्गायाः पतनं राजन्! पृथिवी न सहिष्यति।
तां वै धारयितुं वीर! नान्यं पश्यामि शूलिनः॥" २४
त मेव मुक्त्वा राजानं गङ्गां चाभाष्य लोककृत्।
जगाम त्रिदिवं देव स्सह सर्वैर्मरुद्गणैः॥ २५

इति श्रीमद्बालकाण्डे द्विचत्वारिंशस्सर्गः॥

## ॥ त्रिचत्वारिंशस्सर्गः ॥

देवदेवे गते तस्मिन् सोऽङ्गुष्ठाग्रनिपीडिताम्।
कृत्वा वसुमतीं राम! वत्सरं समुपासत॥ १
[ऊर्ध्वबाहु र्निरालम्बो वायुभक्षो निराश्रयः।
अचलः स्थाणुवत्तेपे रात्रिंदिव मरिन्दम!] २
अथ संवत्सरे पूर्णे सर्वलोकनमस्कृतः।
उमापतिः पशुपती राजान मिदमब्रवीत्॥ ३
प्रीतस्तेऽहं नरश्रेष्ठ! करिष्यामि तव प्रियम्।
शिरसा धारयिष्यामि शैलराजसुतामहम्॥ ४
[उमापतेर्वचः श्रुत्वा गङ्गा क्रोधसमन्विता]।
ततो हैमवती ज्येष्ठा सर्वलोकनमस्कृता॥ ५

तदा साऽतिमहद्रूपं कृत्वा वेगं च दुस्सहम् ।
आकाशादपत द्राम ! शिवे शिवशिरस्युत ॥ ६
अचिन्तयच्च सा देवी गङ्गा परमदुर्धरा ।
" विशाम्यहं हि पातालं स्रोतसा गृह्य शङ्करम् ॥ ७
तस्यावलेपनं ज्ञात्वा क्रुद्धस्स भगवान्हरः ।
तिरोभावयितुं बुद्धिं चक्रे त्रिणयन स्तदा ॥ ८
सा तस्मिन्पतिता पुण्या पुण्ये रुद्रस्य मूर्धनि ।
हिमवत्प्रतिमे राम ! जटामण्डलगह्वरे ॥ ९
सा कथं चिन्महीं गन्तुं नाशक्नो द्यत्नमास्थिता ।
नैव निर्गमनं लेभे जटामण्डलमोहिता ॥ १०
तत्रैवाबंभ्रमद्देवी संवत्सरगणान्बहून ।
तामपश्यन्पुनस्तत्र तपः परममास्थितः ॥ ११
अनेन तोषितश्चाभूदत्यर्थं रघुनन्दन ।
विससर्ज ततो गङ्गां हरो बिन्दुसरः प्रति ॥ १२
तस्यां विसृज्यमानायां सप्तस्रोतांसि जज्ञिरे ।
ह्लादिनी पावनी चैव नलिनी च तथा परा ॥ १३
तिस्रः प्राचीं दिशं जग्मुर्गङ्गा श्शिवजलाश्शुभाः ।
सुचक्षुश्चैव सीता च सिन्धुश्चैव महानदी ॥ १४
तिस्रस्त्वेता दिशं जग्मुः प्रतीचीं तु शुभोदकाः ।
सप्तमी चान्वगात्तासां भगीरथमथोनृपम् ॥ १५
भगीरथोऽपि राजर्षिर्दिव्यं स्यन्दनमास्थितः ।
प्रायादग्रे महातेजा गङ्गा तं चाप्यनुव्रजत् ॥ १६

गगना च्छङ्करशिरस्ततो धरणि माश्रिता ।
व्यसर्पत जलं तत्र तीव्रशब्दपुरस्कृतम् ॥ १७
मत्स्यकच्छपसङ्घैश्च शिशुमारगणै स्तथा ।
पतद्भिः पतितैश्चान्यैर्व्यरोचत वसुन्धरा ॥ १८
ततो देवर्षि गन्धर्वा यक्षा सिद्धगणा स्तदा ।
व्यलोकयन्त ते तत्र गगना द्गां गतां तथा ॥ १९
विमानैर्नगराकारै र्हयैर्गजवरै स्तथा ।
पारिप्लवगतैश्चापि देवता स्तत्र विष्ठिताः ॥ २०
तदद्भुततमं लोके गङ्गापतन मुत्तमम् ।
दिदृक्षवो देवगणा स्समीयुरमितौजसः ॥ २१
सम्पतद्भि स्सुरगणै स्तेषां चाभरणौजसा ।
शतादित्यमिवाभाति गगनं गततोयदम् ॥ २२
शिशुमारोरगगणैर्मीनैरपि च चञ्चलैः ।
विद्युद्भिरिव विक्षिप्त माकाशमभवत्तदा ॥ २३
पाण्डरै स्सलिलोत्पीडैः कीर्यमाणै स्सहस्रधा ।
शारदाभ्रैरिवाकीर्णं गगनं हंससंप्लवैः ॥ २४
क्वचिद्द्रुततरं याति कुटिलं क्वचिदायतम् ।
विनतं क्वचिदुद्भूतं क्वचिद्याति शनैश्शनैः ॥ २५
सलिलेनैव सलिलं क्वचि दभ्याहतं पुनः ।
मुहूरूर्ध्वमुखं गत्वा पपात वसुधातलम् ॥ २६
[विष्णुपादपरिभ्रष्टा प्लावयित्वेन्दुमण्डलम् ।]
तच्छङ्करशिरोभ्रष्टं भ्रष्टं भूमितले पुनः ॥ २७

व्यरोचत तदा तोयं निर्मलं गतकल्मषम् ।
तत्र देवर्षि गन्धर्वा वसुधातलवासिनः ॥ २८
भवाङ्गपतितं तोयं "पवित्र"मिति पस्पृशुः ।
शापात्प्रपतिता ये च गगनाध्वसुधातलम् ॥ २९
कृत्वा तत्राभिषेकं ते बभूवुर्गतकल्मषाः ।
धूतपापाः पुनस्तेन तोयेनाथ सुभास्वता ॥ ३०
पुनराकाशमाविश्य स्वान् लोकान् प्रतिपेदिरे ।
मुमुदे मुदितो लोकस्तेन तोयेन भास्वता ॥ ३१
कृताभिषेको गङ्गायां बभूव विगतक्लमः ।
भगीरथोऽपि राजर्षि र्दिव्यं स्यन्दनमास्थितः ॥ ३२
प्रायादग्रे महातेजास्तं गङ्गा पृष्ठतोऽन्वगात् ।
देवास्सर्षिगणा स्सर्वे दैत्यदानवराक्षसाः ॥ ३३
गन्धर्वयक्षप्रवरास्सकिन्नरमहोरगाः ।
सर्वाश्चाप्सरसो राम! भगीरथरथानुगाम् ॥ ३४
गङ्गामन्वगमन्प्रीता स्सर्वे जलचराश्चये ।
यतो भगीरथो राजा ततो गङ्गा यशस्विनी ॥ ३५
जगाम सरितां श्रेष्ठा सर्वपापविनाशिनी ।
ततो हि यजमानस्य जह्नो रद्भुतकर्मणः ॥ ३६
गङ्गा संप्लावयामास यज्ञवाटं महात्मनः ।
तस्याऽवलेपनं ज्ञात्वा क्रुद्धो यज्वा तु राघव ॥ ३७
अपिबच्च जलं सर्वं गङ्गायाः परमाद्भुतम् ।
ततो देवा स्सगन्धर्वा ऋषयश्च सुविस्मिताः ॥ ३८

पूजयन्ति महात्मानं जह्नुं पुरुषसत्तमम् ।
गङ्गां चापि नयन्तिस्म दुहितृत्वे महात्मनः ॥ ३९
ततस्तुष्टो महातेजा श्श्रोत्राभ्या मसृजत्पुनः ।
तस्माज्जह्नुसुता गङ्गा प्रोच्यते जाह्नवीति च ॥ ४०
जगाम च पुनर्गङ्गा भगीरथरथानुगा ।
सागरश्चापि सम्प्राप्ता सा सरित्प्रवरा तदा ॥ ४१
रसातलमुपागच्छत्सिद्ध्यर्थं तस्य कर्मणः ।
भगीरथोऽपि राजर्षिर्गङ्गा मादाय यत्नतः ॥ ४२
पितामहान्भस्मकृतानपश्यद्दीनचेतनः ।
अथ तं भस्मनां राशि गङ्गा सलिलमुत्तमम् ॥ ४३
प्लावयद्धूतपाप्मानस्स्वर्गं प्राप्ता नरोत्तम ! ॥

इति श्रीमद्बालकाण्डे त्रिचत्वारिंशस्सर्गः ॥

---

## ॥ चतुश्चत्वारिंशस्सर्गः ॥

सगत्वा सागरं राजा गङ्गयाऽनुगत स्तदा ।
प्रविवेश तलं भूमेर्यत्र ते भस्मसात्कृताः ॥ १
भस्मन्यथाऽऽप्लुते राम ! गङ्गायास्सलिलेनवै ।
सर्वलोकप्रभुर्ब्रह्मा राजानमिदमब्रवीत् ॥ २
" तारिता नरशार्दूल ! दिवं याताश्च देववत् ।
षष्टिः पुत्रसहस्राणि सगरस्य महात्मनः ॥ ३
सागरस्य जलं लोके यावत्स्थास्यति पार्थिव ! ।
सगरस्यात्मजा स्तावत्स्वर्गे स्थास्यन्ति देववत् ॥ ४

इयं च दुहिता ज्येष्ठा तव गङ्गा भविष्यति ।
त्वत्कृतेन च नाम्नाऽथ लोके स्थास्यति विश्रुता ॥ ५
गङ्गा त्रिपथगा राज! न्दिव्या भागीरथीति च ।
त्रीन्पथो भावयन्तीति तत स्त्रिपथगास्मृता ॥ ६
पितामहानां सर्वेषां त्व मत्र मनुजाधिप! ।
कुरुष्व सलिलं राज! न्प्रतिज्ञा मपवर्जय ॥ ७
पूर्वकेण हि ते राजं! स्ते नातियशसा तदा ।
धर्मिणां प्रवरेणापि नैष प्राप्तो मनोरथः ॥ ८
तथैवांशुमता तात! लोकेऽप्रतिमतेजसा ।
गङ्गां प्रार्थयता नेतुं प्रतिज्ञा नापवर्जिता ॥ ९
राजर्षिणा गुणवता महर्षि समतेजसा ।
मत्तुल्यतपसा चैव क्षत्रधर्मस्थितेन च ॥ १०
दिलीपेन महाभाग! तव पित्राऽतितेजसा ।
पुनर्न शङ्किता नेतुं गङ्गां प्रार्थयताऽनघ! ॥ ११
सा त्वया समतिक्रान्ता प्रतिज्ञा पुरुषर्षभ! ।
प्राप्तोऽसि परमं लोके यशः परमसम्मतम् ॥ १२
यच्च गङ्गावतरणं त्वया कृत मरिन्दम! ।
अनेन च भवा न्प्राप्तो धर्मस्यायतनं महत् ॥ १३
प्लावयस्व त्व मात्मानं नरोत्तम! सदोचिते ।
सलिले पुरुषव्याघ्र! शुचिः पुण्यफलो भव ॥ १४
पितामहानां सर्वेषां कुरुष्व सलिलक्रियाम् ।
स्वस्तितेऽस्तु गमिष्यामि स्वं लोकं गम्यतां नृप! ॥" १५

इत्येव मुक्त्वा देवेश स्सर्वलोकपितामहः ।
यथाऽऽगतं तथा गच्छ देवलोकं महायशाः ॥ १६
भगीरथोऽपि राजर्षिः कृत्वा सलिल मुत्तमम् ।
यथाक्रमं यथान्यायं सागराणां महायशाः ॥ १७
कृतोदकश्शुची राजा स्वपुरं प्रविवेशह ।
समृद्धार्थो रघुश्रेष्ठ! स्वराज्यं प्रशशासह ॥ १८
प्रमुमोदहि लोक स्तं नृप मासाद्य राघव! ।
नष्टशोक स्समृद्धार्थो बभूव विगतज्वरः ॥ १९
एष ते राम! गङ्गाया विस्तरोऽभिहितो मया ।
स्वस्ति प्राप्नुहि भद्रं ते सन्ध्याकालोऽतिवर्तते ॥ २०
धन्यं यशस्य मायुष्यं पुत्र्यं स्वर्ग्य मतीवच ।
य श्श्रावयति विप्रेषु क्षत्रियेष्वितरेषु च ॥ २१
प्रीयन्ते पितर स्तस्य प्रीयन्ते दैवतानि च ।
इद माख्यान मव्यग्रो गङ्गावतरणं शुभम् ॥ २२
यश्शृणोति च काकुत्स्थ! सर्वा न्कामानवाप्नुयात् ।
सर्वे पापाः प्रणश्यन्ति आयुः कीर्तिश्च वर्धते ॥"

॥ इति श्रीमद्बालकाण्डे चतुश्चत्वारिंशस्सर्गः ॥

## ॥ पञ्चचत्वारिंशस्सर्गः ॥

विश्वामित्रवच श्श्रुत्वा राघव स्सहलक्ष्मणः ।
विस्मयं परमं गत्वा विश्वामित्र मथाब्रवीत् ॥

"अत्यद्भुत मिदं ब्रह्म! न्कथितं परमं त्वया ।
गङ्गावतरणं पुण्यं सागरस्यापि पूरणम् ॥" २
[क्षणभूतेव नौ रात्रि संवृत्तेयं महातपः! ।
इमां चिन्तयत स्सर्वां निखिलेन कथां तव ॥] ३
तस्य सा शर्वरी सर्वा सह सौमित्रिणा तदा ।
जगाम चिन्तयानस्य विश्वामित्रकथां शुभाम् ॥ ४
ततः प्रभाते विमले विश्वामित्रं महामुनिम् ।
उवाच राघवो वाक्यं कृताह्निक मरिन्दमः ॥ ५
"गता भगवती रात्री श्रोतव्यं परमं श्रुतम् ।
[तराम सरितां श्रेष्ठां पुण्यां त्रिपथगां नदीम् ॥ ६
नौ रेषाहि सुखास्तीर्णा ऋषीणां पुण्यकर्मणाम् ।]
भगवन्त मिह प्राप्तं ज्ञात्वा त्वरित मागतम् ॥" ७
तस्य तद्वचनं श्रुत्वा राघवस्य महात्मनः ।
सन्तारं कारयामास सर्षिसंघ स्सराघवः ॥ ८
उत्तरं तीर मासाद्य सम्पूज्यर्षिगणं तदा ।
गङ्गाकूले निविष्टास्ते विशालां ददृशुः पुरीम् ॥ ९
ततो मुनिवर स्तूर्णं जगाम सहराघवः ।
विशालां नगरीं रम्यां दिव्यां स्वर्गोपमां तदा ॥ १०
अथ रामो महाप्राज्ञो विश्वामित्रं महामुनिम् ।
पप्रच्छ प्राञ्जलि भूत्वा विशाला मुत्तमां पुरीम् ॥ ११
"कतरो राजवंशोऽयं विशालायां महामुने ।
श्रोतु मिच्छामि भद्रं ते परं कौतूहलं हि मे ॥ १२

तस्य तद्वचनं श्रुत्वा रामस्य मुनिपुङ्गवः ।
आख्यातुं तत्समारेभे विशालस्य पुरातनम् ॥ १३
"श्रूयतां राम! शक्रस्य कथां कथयत इशुभाम् ।
अस्मिन्देशेतु यद्वृत्तं तदपि श्रृणु राघव ॥ १४
पूर्वंकृतयुगे राम! दितेः पुत्रा महाबलाः ।
अदिते श्च महाभागा वीर्यवन्त स्सुधार्मिकाः ॥ १५
तत स्तेषां नरश्रेष्ठ! बुद्धि रासी न्महात्मनाम् ।
"अमरा अजरा श्चैव कथं स्याम निरामयाः ॥" १६
तेषां चिन्तयतां राम! बुद्धि रासी न्महात्मनाम् ।
"क्षीरोदमथनं कृत्वा रसं प्राप्स्याम तत्र वै ॥" १७
ततो निश्चित्य मथनं योक्त्रं कृत्वा च वासुकिम् ।
मन्थानं मन्दरं कृत्वा ममन्थु रमितौजसः ॥ १८
अथ वर्षसहस्रेण योक्त्रसर्पशिरांसि च ।
वमंत्यातिविषं तत्र ददंशु र्दशनै श्शिलाः ॥ १९
उत्पपाताग्निसंकाशं हालाहलमहाविषम् ।
तेन दग्धं जगत्सर्वं सदेवासुरमानुषम् ॥ २०
अथ देवा महादेवं शङ्करं शरणार्थिनः ।
जग्मुः पशुपतिं रुद्रं "त्राहि त्राही" ति तुष्टुवुः ॥ २१
एवमुक्त स्ततो देवै र्देवदेवेश्वरः प्रभुः ।
प्रादुरासी त्ततोऽत्रैव शंखचक्रधरो हरिः ॥ २२
उवाचैनं स्मितं कृत्वा रुद्रं शूलभृतं हरिः ।
"दैवतै र्मथ्यमाने तु यत्पूर्वं समुपस्थितम् ॥ २३

त्वदीयं हि सुरश्रेष्ठ! सुराणामग्रजोऽसि यत् ।
अग्रपूजा मिमां मत्वा गृहाणेदं विषं प्रभो! ॥" २४
इत्युक्त्वाऽथ सुरज्येष्ठस्तत्रै वान्तरधीयत ।
देवतानां भयं दृष्ट्वा श्रुत्वा वाक्यं च शार्ङ्गिणः ॥ २५
हालाहलविषं घोरं स जग्राहामृतोपमम् ।
देवान्विसृज्य देवेशो जगाम भगवान हरः ॥ २६
ततो देवासुरास्सर्वे ममन्थू रघुनन्दन! ।
प्रविवेशाथ पातालं मंथानः पर्वतोऽनघ! ॥ २७
ततो देवा स्सगन्धर्वास्तुष्टुवु र्मधुसूदनम् ।
"त्वं गति स्सर्वभूतानां विशेषेण दिवौकसाम् ॥ २८
पालयास्मान्महाबाहो! गिरिमुद्धर्तु मर्हसि ।"
इति श्रुत्वा हृषीकेशः कामठं रूपमास्थितः ॥ २९
पर्वतं पृष्ठतः कृत्वा शिश्ये तत्रोदधौ हरिः ।
पर्वताग्रन्तु लोकात्मा हस्तेनाक्रम्य केशवः ॥ ३०
देवानां मध्यतस्थित्वा ममन्थ पुरुषोत्तमः ।
[अथ वर्षसहस्रेण ज्येष्ठानाम वराङ्गना ॥ ३१
उत्पपातवरारोहा सागरैरवकल्पिता ।
अभवत्पारिजाताख्यो वृक्ष इन्द्राय कल्पितः ॥] ३२
अथ वर्षसहस्रेण सदण्डस्सकमण्डलुः ।
पूर्वं धन्वन्तरिर्नाम अप्सराश्च सुवर्चसः ॥ ३३
अप्सुनिर्मथनादेव रसस्तस्माद्वरस्त्रियः ।
उत्पेतुर्मनुजश्रेष्ठ! तस्मादप्सरसोऽभवन् ॥ ३४

षष्टिः कोट्योऽभवंस्तासामप्सराणां सुवर्चसाम् ।
असंख्येयास्तु काकुत्स्थ! या स्तासां परिचारिकाः ॥ ३५
न तास्स्म परिगृह्णन्ति सर्वे ते देवदानवाः ।
अप्रतिग्रहणात्ताश्च सर्वा स्साधारणा स्मृताः ॥ ३६
वरुणस्य ततः कन्या वारुणी रघुनन्दन! ।
उत्पपात महाभागा मार्गमाणा परिग्रहम् ॥ ३७
दितेः पुत्रा न तां राम! जगृहुर्वरुणात्मजाम् ।
अदितेस्तु सुतावीर! जगृहुस्ता मनिन्दिताम् ॥ ३८
असुरास्तेन दैतेया स्सुरास्तेनादिते स्सुताः ।
हृष्टाः प्रमुदिताश्चासन्वारुणीग्रहणात्सुराः ॥ ३९
उच्चैश्श्रवा हयश्रेष्ठो मणिरत्नं च कौस्तुभम् ।
उदतिष्ठन्नरश्रेष्ठ! तथैवामृत मुत्तमम् ॥ ४०
अथ तस्य कृते राम महानासी त्कुलक्षयः ।
अदितेस्तु ततः पुत्रा दितेः पुत्रा नसूदयन् ॥ ४१
एकतोऽभ्यागमन्सर्वेह्यसुरा राक्षसै स्सह ।
युद्धमासीन्महाघोरं वीर! त्रैलोक्यमोहनम् ॥ ४२
यदा क्षयं गतं सर्वं तदा विष्णु र्महाबलः ।
अमृतं सोऽहरत्तूर्णं माया मास्थाय मोहिनीम् ॥ ४३
ये गताऽभिमुखं विष्णुमक्षयं पुरुषोत्तमम् ।
सम्पिष्टास्ते तदा युद्धे विष्णुना प्रभविष्णुना ॥ ४४
अदिते रात्मजा वीर! दितेः पुत्रा न्निजघ्निरे ।
तस्मिन्युद्धे महाघोरे दैतेयादित्ययोर्भृशम् ॥ ४५

निहत्य दितिपुत्रांश्च राज्यं प्राप्यपुरन्दरः ।
शशासमुदितो लोकान्सर्षिसङ्घान् सचारणान् ॥ ४६

इति श्रीमद्बालकाण्डे पञ्चचत्वारिंशस्सर्गः ॥

॥ षट्चत्वारिंशस्सर्गः ॥

हतेषु तेषु पुत्रेषु दितिः परमदुःखिता ।
मारीचं काश्यपं राम भर्तारमिदमब्रवीत् ॥ १
"हतपुत्राऽस्मि भगवं! स्तव पुत्रैर्महाबलैः ।
शक्रहन्तार मिच्छामि पुत्रं दीर्घतपोर्जितम् ॥ २
साऽहं तपश्चरिष्यामि गर्भं मे दातु मर्हसि ।
[बलवन्तं महेष्वासं स्थितिज्ञं समदर्शिनम् ॥] ३
ईश्वरं शक्रहन्तारं त्व मनुज्ञातु मर्हसि ।"
तस्या स्तद्वचनं श्रुत्वा मारीचः काश्यप स्तदा ॥ ४
प्रत्युवाच महातेजा दितिं परमदुःखिताम् ।
"एवं भवतु भद्रंते शुचिर्भव तपोधने! ॥ ५
जनयिष्यसि पुत्रं त्वं शक्रहन्तारमाहवे ।
पूर्णे वर्षसहस्रे तु शुचिर्यदि भविष्यसि ॥ ६
पुत्रं त्रैलोक्यभर्तारं मत्त स्त्वं जनयिष्यसि ।"
एव मुक्त्वा महातेजाः पाणिना सममार्जताम् ॥ ७
समालभ्य तत "स्वस्ती" त्युक्त्वा च तपसे ययौ ।
गते तस्मिन्नरश्रेष्ठ! दितिः परमहर्षिता ॥ ८

कुशप्लवन मासाद्य तपस्तेपे सुदारुणम् ।
तपस्तस्यां हि कुर्वन्त्यां परिचर्यां चकार ह ॥ ९
सहस्राक्षो नरश्रेष्ठ! परया गुणसम्पदा ।
अग्निं कुशान्काष्ठ मपःफलं मूलं तथैवच ॥ १०
न्यवेदय त्सहस्राक्षो यच्चान्य दभिकांक्षितम् ।
गात्रसंवाहनै श्चैव श्रमापनयनै स्तथा ॥ ११
शक्रस्सर्वेषु कालेषु दितिं परिचचार ह ।
अथ वर्षसहस्रे तु दशोने रघुनन्दन! ॥ १२
दितिः परमसम्प्रीता सहस्राक्ष मथाब्रवीत् ।
"याचितेन सुरश्रेष्ठ! तव पित्रा महात्मना ॥ १३
वरो वर्षसहस्रान्ते दत्तो मम सुतंप्रति ।
तपश्चरन्त्या वर्षाणि दशवीर्यवतां वर! ॥ १४
अवशिष्टानि भद्रंते भ्रातरं द्रक्ष्यसे ततः ।
तमहं त्वत्कृते पुत्र! समाधास्ये जयोत्सुकम् ॥ १५
त्रैलोक्यविजयं पुत्र! सहभोक्ष्यसि विज्वरः ।"
एव मुक्त्वा दिति श्शक्रं प्राप्ते मध्यं दिवाकरे ॥ १६
निद्रयाऽपहृता देवी पादौ कृत्वाऽथ शीर्षतः ।
दृष्ट्वा ता मशुचिं शक्रः पादतः कृतमूर्धजाम् ॥ १७
शिरः स्थाने कृतौ पादौ जहास च मुमोद च ।
तस्या श्शरीरविवरं विवेश च पुरन्दरः ॥ १८
गर्भं च सप्तधा राम! बिभेद परमात्मवान् ।
भिद्यमानस्ततो गर्भो वज्रेण शतपर्वणा ॥ १९

रुरोद सुस्वरं राम! ततो दिति रबुध्यत ।
"मारुदोमारुद" श्चेति गर्भं शक्रोऽभ्यभाषत ॥ २०
बिभेद च महातेजा रुदन्त मपि वासवः ।
"न हन्तव्यो न हन्तव्य" इत्येवं दिति रब्रवीत् ॥ २१
निष्पपात तत श्शक्रो मातु र्वचनगौरवात् ।
प्राञ्जलि र्वज्रसहितो दितिं शक्रोऽभ्यभाषत ॥ २२
"अशुचिर्देवि! सुप्ताऽसि पादयोः कृतमूर्धजा ।
तदन्तर महंलब्ध्वा शक्रहन्तार माहवे ॥ २३
अभिदं सप्तधा देवि! तन्मे त्वं क्षन्तु मर्हसि ।"

इति श्रीमद्बालकाण्डे षट्चत्वारिंशस्सर्गः ॥

## ॥ सप्तचत्वारिंशस्सर्गः ॥

सप्तधातु कृते गर्भे दितिः परमदुःखिता ।
सहस्राक्षं दुराधर्षं वाक्यं सानुनयाऽब्रवीत् ॥ १
"ममापराधा द्गर्भोऽयं सप्तधा विफलीकृतः ।
नापराधोऽस्ति देवेश! तवात्र बलसूदन! ॥ २
प्रियं तु कर्तु मिच्छामि मम गर्भविपर्यये ।
मरुतां सप्त सप्तानां स्थानपाला भवन्त्विमे ॥ ३
वातस्कन्धा इमे सप्त चरन्तु दिवि पुत्रक! ।
मारुता इति विख्याता दिव्यरूपा ममात्मजाः ॥ ४
ब्रह्मलोकं चरत्वेक इन्द्रलोकं तथापरः ।
दिवि वायु रिति ख्यात स्तृतीयोऽपि महायशाः ॥ ५

चत्वार स्तु सुरश्रेष्ठ! दिशो वै तव शासनात् ।
संचरिष्यन्ति भद्रंते देवभूता ममात्मजाः ॥ ६
स्वत्कृतेनैव नाम्ना च मारुता इति विश्रुताः ।"
तस्यास्तद्वचनं श्रुत्वा सहस्राक्षः पुरन्दरः ॥ ७
उवाच प्राञ्जलि र्वाक्यं दितिं बलनिषूदनः ।
"सर्वं मे तद्यथोक्तं ते भविष्यति न संशयः ॥ ८
विचरिष्यन्ति भद्रंते देवभूतास्तवात्मजाः ।"
एवं तौ निश्चयं कृत्वा माता पुत्रौ तपोवने ॥ ९
जग्मतु स्त्रिदिवं राम! कृतार्थां विति नश्श्रुतम् ।
एष देश स्स काकुत्स्थ! महेन्द्राध्युषितः पुरा ॥ १०
दितिं यत्र तपस्सिद्धा मेवं परिचचार सः ।
इक्ष्वाकोस्तु नरव्याघ्र! पुत्रः परमधार्मिकः ॥ ११
अलंबुसाया मुत्पन्नो विशाल इति विश्रुतः ।
तेन चासी दिह स्थाने विशालेति पुरी कृता ॥ १२
विशालस्य सुतो राम! हेमचन्द्रो महाबलः ।
सुचन्द्र इति विख्यातो हेमचन्द्रा दनन्तरः ॥ १३
सुचन्द्रतनयो राम! धूम्राश्व इति विश्रुतः ।
धूम्राश्वतनयश्चापि सृंजय स्समपद्यत ॥ १४
सृंजयस्य सुत श्श्रीमान्सहदेवः प्रतापवान् ।
कुशाश्व स्सहदेवस्य पुत्रः परमधार्मिकः ॥ १५
कुशाश्वस्य महातेजास्सोमदत्तः प्रतापवान् ।
सोमदत्तस्य पुत्रस्तु काकुत्स्थ इति विश्रुतः ॥ १६

तस्य पुत्रो महातेजा सम्प्रत्येष पुरीमिमाम् ।
आवसत्यमरप्रख्य स्सुमतिर्नाम दुर्जयः ॥ १७

इक्ष्वाकोऽस्तु प्रसादेन सर्वे वैशालिका नृपाः ।
दीर्घायुषो महात्मानो वीर्यवन्त स्सुधार्मिकाः ॥ १८

इहाद्य रजनीं राम! सुखं वत्स्यामहेवयम् ।
श्वःप्रभाते नरश्रेष्ठ! जनकं द्रष्टु मर्हसि ॥ १९

सुमतिस्तु महातेजा विश्वामित्र मुपागतम् ।
श्रुत्वा नरवरश्रेष्ठः प्रत्युद्गच्छन्महायशाः ॥ २०

पूजां च परमां कृत्वा सोपाध्यायस्सबान्धवः ।
प्राञ्जलिः कुशलं पृष्ट्वा विश्वामित्र मथाब्रवीत् ॥ २१

"धन्योऽस्म्यनुगृहीतोऽस्मि यस्य मे विषयं मुनिः ।
सम्प्राप्तो दर्शनं चैवनास्तिधन्यतरो मम ॥ २२

इति श्रीमद्बालकाण्डे सप्तचत्वारिंशस्सर्गः ॥

## ॥ अष्टचत्वारिंशस्सर्गः ॥

पृष्ट्वातु कुशलं तत्र परस्परसमागमे ।
कथान्ते सुमति र्वाक्यं व्याजहार महामुनिम् ॥ १

"इमौ कुमारौ भद्रन्ते देवतुल्यपराक्रमौ ।
गजसिंहगती वीरौ शार्दूलवृषभोपमौ ॥ २

पद्मपत्रविशालाक्षौ खड्ग तूणी धनुर्धरौ ।
अश्विना विव रूपेण समुपस्थितयौवनौ ॥ ३

यदृच्छयैव गां प्राप्तौ देवलोकादिवामरौ ।
कथं पद्भ्यामिह प्राप्तौ किमर्थं कस्य वा मुने! ॥ ४
भूषयन्ताविमं देशं चन्द्रसूर्याविवाम्बरम्? ।
परस्परस्य सदृशौ प्रमाणेङ्गितचेष्टितैः ॥ ५
किमर्थं च मुनिश्रेष्ठ! सम्प्राप्तौ दुर्गमे पथि ।
वरायुधधरौ वीरौ श्रोतुमिच्छामि तत्त्वतः ॥" ६
तस्य तद्वचनं श्रुत्वा यथावृत्तं न्यवेदयत् ।
सिद्धाश्रमनिवासं च राक्षसानां वधं तथा ॥ ७
विश्वामित्रवचश्श्रुत्वा राजा परमहर्षितः ।
अतिथी परमौ प्राप्तौ पुत्रौ दशरथस्य तौ ॥ ८
पूजयामास विधिवत्सत्कारार्हौ महाबलौ ।
ततः परमसत्कार सुमतेः प्राप्य राघवौ ॥ ९
उष्य तत्र निशामेकां जग्मतुर्मिथिलां ततः ।
तां दृष्ट्वा मुनयस्सर्वे जनकस्य पुरीं शुभाम् ॥ १०
साधुसाध्विति शंसन्तो मिथिलां समपूजयन् ।
मिथिलोपवने तत्र आश्रमं दृश्य राघवः ॥ ११
पुराणं निर्जनं रम्यं पप्रच्छ मुनिपुङ्गवम् ।
"श्रीमदाश्रमसङ्काशं किन्न्विदं मुनिवर्जितम्? ॥ १२
श्रोतुमिच्छामि भगवन् कस्यायं पूर्व आश्रमः ।"
तच्छ्रुत्वा राघवेणोक्तं वाक्यं वाक्यविशारदः ॥ १३
प्रत्युवाच महातेजा विश्वामित्रो महामुनिः ।
"हन्त ते कथयिष्यामि शृणु तत्त्वेन राघव! ॥ १४

यस्यैतदाश्रमपदं शप्तं कोपान्महात्मना ।
गौतमस्य नरश्रेष्ठ! पूर्वमासीन्महात्मनः ॥ १५
आश्रमो दिव्यसङ्काशः सुरैरपि सुपूजितः ।
सचेह तप आतिष्ठदहल्यासहितः पुरा ॥ १६
वर्षपूगाननेकांश्च राजपुत्र! महायशः ।
[कस्मिंश्चिद्दिवसे राम! ततो दूरं गते मुनौ ॥] १७
तस्यांतरं विदित्वाऽथ सहस्राक्षश्शचीपतिः ।
मुनिवेषधरोऽहल्यामिदं वचनमब्रवीत् ॥ १८
"ऋतुकालं प्रतीक्षन्ते नार्थिन स्सुसमाहिते ।
संगमं त्वहमिच्छामि त्वया सह सुमध्यमे ॥" १९
मुनिवेषं सहस्राक्षं विज्ञाय रघुनन्दन! ।
मतिं चकार दुर्मेधा देवराजकुतूहलात् ॥ २०
अथाब्रवीत्सुरश्रेष्ठं कृतार्थेनान्तरात्मना ।
"कृतार्थाऽस्मि सुरश्रेष्ठ! गच्छ शीघ्रमितः प्रभो ॥ २१
आत्मानं मां च देवेश! सर्वधा रक्ष मानद!"
इन्द्रस्तु प्रहसन्वाक्यमहल्यामिदमब्रवीत् ॥ २२
"सुश्रोणि! परितुष्टोऽस्मि गमिष्यामि यथागतम् ।"
एवं संगम्य तु तया निश्चक्रामोटजात्ततः ॥ २३
ससम्भ्रमात्त्वरन्राम! शङ्कितो गौतमं प्रति ।
गौतमं स ददर्शाऽथ प्रविशन्तं महामुनिम् ॥ २४
देवदानवदुर्धर्षं तपोबलसमन्वितम् ।
तीर्थोदकपरिक्लिन्नं दीप्यमानमिवानलम् ॥ २५

गृहीतसमिधं तत्र सकुशं मुनिपुङ्गवम् ।
दृष्ट्वा सुरपतिस्त्रस्तो विवर्णवदनोऽभवत् ॥ २६

अथ दृष्ट्वा सहस्राक्षं मुनिवेषधरं मुनिः ।
दुर्वृत्तं वृत्तसम्पन्नो रोषाद्वचनमब्रवीत् ॥ २७

"मम रूपं समास्थाय कृतवानसि दुर्मते! ।
अकर्तव्यमिदं तस्माद्विफलस्त्वं भविष्यसि ॥" २८

गौतमेनैव मुक्तस्य सरोषेण महात्मना ।
पेततुर्वृषणौ भूमौ सहस्राक्षस्य तत्क्षणात् ॥ २९

तथा शप्त्वा स वै शक्रमहल्यामपि शप्तवान् ।
"इह वर्षसहस्राणि बहूनि त्वं निवत्स्यसि ॥ ३०

वायुभक्षा निराहारा तप्यन्ती भस्मशायिनी ।
अदृश्या सर्वभूतानामाश्रमेऽस्मिन्निवत्स्यसि ॥ ३१

यदा चैतद्वनं घोरं रामो दशरथात्मजः !
आगमिष्यति दुर्धर्षस्तदा पूता भविष्यसि ॥ ३२

तस्यातिथ्येन दुर्वृत्ते लोभमोहविवर्जिता ।
मत्सकाशे मुदा युक्ता स्वं वपुर्धारयिष्यसि ॥" ३३

एवमुक्त्वा महातेजा गौतमो दुष्टचारिणीम् ।
इममाश्रममुत्सृज्य सिद्धचारणसेविते ॥ ३४

हिमवच्छिखरे रम्ये तपस्तेपे महातपाः ।

इति श्रीमद्बालकाण्डे अष्टचत्वारिंशस्सर्गः ॥



## ॥ एकोनपञ्चाशस्सर्गः ॥

अफलस्तु ततश्शक्रो देवानग्निपुरोधसः ।
अब्रवीत्त्रस्तवदनः सर्षिसङ्घान्सचारणान् ॥ १
"कुर्वता तपसो विघ्नं गौतमस्य महात्मनः ।
क्रोधमुत्पाद्य तु मया सुरकार्यमिदं कृतम् ॥ २
अफलोऽस्मि कृतस्तेन क्रोधात्सा च निराकृता ।
शापमोक्षेण महता तपोऽस्यापहृतं मया ॥ ३
तस्मात्सुरवरास्सर्वे सर्षिसङ्घास्सचारणाः ।
सुरसाह्यकरं सर्वे सफलं कर्तुमर्हथ ॥" ४
शतक्रतोर्वचश्श्रुत्वा देवाश्चाग्निपुरोगमाः ।
पितृदेवानुपेत्याहुस्सह सर्वैर्मरुद्गणैः ॥ ५
"अयं मेषस्सवृषणश्शक्रो ह्यवृषणः कृतः ।
[पुराविचार्य मोहेन ऋषिपत्नीं शतक्रतुः ॥ ६
धर्षयित्वा मुनेश्शापात्तत्रैव विफलीकृतः ।
इदानीं कुप्यते देवान देवराजः पुरन्दरः ॥] ७
मेषस्य वृषणौ गृह्य शक्रायाऽशु प्रयच्छत ।
अफलस्तु कृतो मेषः परां तुष्टिं प्रदास्यति ॥ ८
भवतां हर्षणार्थाय ये च दास्यन्ति मानवाः ।"
[अक्षयं हि फलं तेषां यूयं दास्यथ हर्षिताः ॥] ९
अग्नेस्तु वचनं श्रुत्वा पितृदेवास्समागताः ।
उत्पाट्य मेषवृषणौ सहस्राक्षे न्यवेशयन् ॥ १०

तदाप्रभृति काकुत्स्थ! पितृदेवास्समागताः ।
अफलान्भुंजते मेषान्फलैस्तेषां मयोजयन् ॥ ११
इन्द्रस्तु मेषवृषणस्तदाप्रभृति राघव! ।
गौतमस्य प्रभावेन तपसश्च महात्मनः ॥ १२
तदागच्छ महातेजः! आश्रमं पुण्यकर्मणः ।
तारयैनां महाभागामहल्यां देवरूपिणीम् ॥" १३
विश्वामित्रवचश्श्रुत्वा राघवस्सहलक्ष्मणः ।
विश्वामित्रं पुरस्कृत्य तमाश्रममथाविशत् ॥ १४
ददर्श च महाभागां तपसा द्योतितप्रभाम् ।
लोकैरपि समागम्य दुर्निरीक्ष्यां सुरासुरैः ॥ १५
प्रयत्नान्निर्मितां धात्रा दिव्यां मायामयीमिव ।
[धूमेनापि परीताङ्गीं दीप्तामग्निशिखामिव ॥] १६
सतुषाराघृतां साभ्रां पूर्णचन्द्रप्रभामिव ।
मध्येऽम्भसो दुराधर्षां दीप्तां सूर्यप्रभामिव ॥ १७
सा हि गौतमवाक्येन दुर्निरीक्ष्या बभूव ह ।
त्रयाणामपि लोकाना यावद्रामस्य दर्शनम् ॥ १८
शापस्यान्तमुपागम्य तेषां दर्शनमागता ।
राघवौ तु ततस्तस्याः पादौ जगृहतुस्तदा ॥ १९
स्मरन्ती गौतमवचः प्रतिजग्राह सा च तौ ।
पाद्यमर्घ्यं तथाऽऽतिथ्यं चकार सुसमाहिता ॥ २०
प्रतिजग्राह काकुत्स्थो विधिदृष्टेन कर्मणा ।
पुष्पवृष्टिर्महत्यासीद्देवदुन्दुभिनिस्वनैः ॥ २१

गन्धर्वाप्सरसां चापि महानासीत्समागमः ।
"साधु साध्वि" ति देवा स्तामहल्यां समपूजयन् ॥ २२
तपोबलविशुद्धाङ्गीं गौतमस्य वशानुगाम् ।
गौतमोऽपि महातेजा अहल्यासहितस्सुखी ॥ २३
रामं सम्पूज्य विधिवत्तपस्तेपे महातपाः ।
रामोऽपि परमां पूजां गौतमस्य महात्मनः ॥ २४
सकाशाद्विधिवत्प्राप्य जगाम मिथिलां ततः ॥

इति श्रीमद्बालकाण्डे एकोनपञ्चाशस्सर्गः ॥

## ॥ पञ्चाशस्सर्गः ॥

ततः प्रागुत्तरां गत्वा रामस्सौमित्रिणा सह ।
विश्वामित्रं पुरस्कृत्य यज्ञवाटमुपागमत् ॥ १
रामस्तु मुनिशार्दूलमुवाच सह लक्ष्मणः ।
"साध्वी यज्ञसमृद्धिर्हि जनकस्य महात्मनः ॥ २
बहूनीह सहस्राणि नानादेशनिवासिनाम् ।
ब्राह्मणानां महाभाग! वेदाध्ययनशालिनाम् ॥ ३
ऋषिवाटाश्च दृश्यन्ते शकटीशतसंकुलाः ।
देशो विधीयतां ब्रह्मन्यत्र वत्स्यामहे वयम् ॥" ४
रामस्य वचनं श्रुत्वा विश्वामित्रो महामुनिः ।
निवेशमकरोद्देशे विविक्ते सलिलायुते ॥ ५
विश्वामित्रमनुप्राप्तं श्रुत्वा स नृपतिस्तदा ।
शतानन्दं पुरस्कृत्य पुरोहितमनिन्दितम् ॥ ६

प्रत्युज्जगाम सहसा विनयेन समन्वितः ।
ऋत्विजोऽपि महात्मानस्त्वर्घ्यमादाय सत्वरम् ॥ ७
विश्वामित्राय धर्मेण ददुर्मन्त्रपुरस्कृतम् ।
प्रतिगृह्य च तां पूजां जनकस्य महात्मनः ॥ ८
पप्रच्छ कुशलं राज्ञो यज्ञस्य च निरामयम् ।
स तांश्चापि मुनीन् पृष्ट्वा सोपाध्यायपुरोधसः ॥ ९
यथान्यायं ततस्सर्वैस्समागच्छत्प्रहृष्टवत् ।
अथ राजा मुनिश्रेष्ठं कृताञ्जलि रभाषत ॥ १०
"आसने भगवानास्तां सहैभिर्मुनिपुंगवैः ।"
जनकस्य वचश्श्रुत्वा निषसाद महामुनिः ॥ ११
पुरोधा ऋत्विजश्चैव राजा च सह मन्त्रिभिः ।
आसनेषु यथान्यायमुपविष्टास्समन्ततः ॥ १२
दृष्ट्वा स नृपतिस्तत्र विश्वामित्रमथाब्रवीत् ।
"अद्य यज्ञसमृद्धिर्मे सफला दैवतैः कृता ॥ १३
अद्य यज्ञफलं प्राप्तं भगवद्दर्शनान्मया ।
धन्योऽस्म्यनुगृहीतोऽस्मि यस्य मे मुनिपुङ्गव ॥ १४
यज्ञोपसदनं ब्रह्मन्! प्राप्तोऽसि मुनिभिस्सह ।
द्वादशाहं तु ब्रह्मर्षे! शेषमाहुर्मनीषिणः ॥ १५
ततो भागार्थिनो देवान्द्रष्टुमर्हसि कौशिक! ।"
इत्युक्त्वा मुनिशार्दूलं प्रहृष्टवदनस्तदा ॥ १६
पुनस्तं परिपप्रच्छ प्राञ्जलिः प्रणतो नृपः ।
"इमौ कुमारौ भद्रं ते देवतुल्यपराक्रमौ ॥ १७

गजसिंहगती वीरौ शार्दूलवृषभोपमौ ।
पद्मपत्रविशालाक्षौ खड्गतूणीधनुर्धरौ ॥ १८
अश्विनाविव रूपेण समुपस्थितयौवनौ
यदृच्छयेव गां प्राप्तौ देवलोकादिवामरौ ॥ १९
कथं पद्भ्यामिह प्राप्तौ किमर्थं कस्य वा मुने! ।
वरायुधधरौ वीरौ कस्य पुत्रौ महामुने! ॥ २०
भूषयन्ताविमं देशं चन्द्रसूर्याविवाम्बरम् ।
परस्परस्य सदृशौ प्रमाणेङ्गितचेष्टितैः ॥ २१
काकपक्षधरौ वीरौ श्रोतुमिच्छामि तत्त्वतः ।"
तस्य तद्वचन श्रुत्वा जनकस्य महात्मनः ॥ २२
न्यवेदयन्महात्मानौ पुत्रौ दशरथस्य तौ ।
सिद्धाश्रमनिवासं च राक्षसानां वधं तथा ॥ २३
तच्चागमनमव्यग्रं विशालायाश्च दर्शनम् ।
अहल्यादर्शनं चैव गौतमेन समागमम् ॥ २४
महाधनुषि जिज्ञासां कर्तुमागमनं तथा ।
एतत्सर्वं महातेजा जनकाय महात्मने ॥ २५
निवेद्य विररामाथ विश्वामित्रो महामुनिः ।

इति श्रीमद्बालकाण्डे पञ्चाशस्सर्गः ॥

## ॥ एकपञ्चाशस्सर्गः ॥

तस्य तद्वचनं श्रुत्वा विश्वामित्रस्य धीमतः ।
हृष्टरोमा महातेजाश्शतानन्दो महातपाः ॥ १

गौतमस्य सुतो ज्येष्ठस्तपसा द्योतितप्रभः ।
रामसन्दर्शनादेव परं विस्मय मागतः ॥ २
स तौ निषण्णौ सम्प्रेक्ष्य सुखासीनौ नृपात्मजौ ।
शतानन्दो मुनिश्रेष्ठं विश्वामित्रमथाब्रवीत् ॥ ३
"अपि ते मुनिशार्दूल! मम माता यशस्विनी ।
दर्शिता राजपुत्राय तपोदीर्घमुपागता ॥ ४
अपि रामो महातेजा मम माता यशस्विनी ।
वन्यैरुपाहरत्पूजां पूजार्हे सर्वदेहिनाम् ॥ ५
अपि रामाय कथितं यथावृत्तं पुरातनम् ।
मम मातुर्महातेजो दैवेन दुरनुष्ठितम् ॥ ६
अपि कौशिक! भद्रं ते गुरुणा मम संगता ।
मम माता मुनिश्रेष्ठ! रामसन्दर्शनादितः ॥ ७
अपि मे गुरुणा रामः पूजितः कुशिकात्मज! ।
इहागतो महातेजाः पूजां प्राप्य महात्मनः ॥ ८
अपि शान्तेन मनसा गुरुर्मे कुशिकात्मज! ।
इहागतेन रामेण प्रयतेनाभिवादितः ॥" ९
तच्छ्रुत्वा वचनं तस्य विश्वामित्रो महामुनिः ।
प्रत्युवाच शतानन्दं वाक्यज्ञो वाक्यकोविदम् ॥ १०
"नातिक्रान्तं मुनिश्रेष्ठ! यत्कर्तव्यं कृत मया ।
संगता मुनिना पत्नी भार्गवेणेव रेणुका ॥" ११
तच्छ्रुत्वा वचनं तस्य विश्वामित्रस्य भाषितम् ।
शतानन्दो महातेजा रामं वचनमब्रवीत् ॥ १२

स्वागतं ते नरश्रेष्ठ! दिष्ट्या प्राप्तोऽसि राघव!।
विश्वामित्रं पुरस्कृत्य महर्षिमपराजितम् ॥ १३
अचिन्त्यकर्मा तपसा ब्रह्मर्षिरतुलप्रभः ।
विश्वामित्रो महातेजा वेत्स्येनं परमां गतिम् ॥ १४
नास्ति धन्यतरो राम! त्वत्तोऽन्यो भुवि कश्चन ।
गोप्ता कुशिकपुत्रस्ते येन तप्तं महत्तपः ॥ १५
श्रूयतां चाभिधास्यामि कौशिकस्य महात्मनः ।
यथाबलं यथावृत्तं तन्मे निगदतश्शृणु ॥ १६
राजाभूदेष धर्मात्मा दीर्घकालमरिन्दमः ।
धर्मज्ञः कृतविद्यश्च प्रजानां च हिते रतः ॥ १७
प्रजापतिसुतस्त्वासीत्कुशो नाम महीपतिः ।
कुशस्य पुत्रो बलवान्कुशनाभस्सुधार्मिकः ॥ १८
कुशनाभसुतस्त्वासीद्गाधिरित्येव विश्रुतः ।
गाधेः पुत्रो महातेजा विश्वामित्रो महामुनिः ॥ १९
विश्वामित्रो महातेजाः पालयामास मेदिनीम् ।
बहुवर्षसहस्राणि राजा राज्यमकारयत् ॥ २०
कदाचित्तु महातेजा योजयित्वा वरूथिनीम् ।
अक्षौहिणीपरिवृतः परिचक्राम मेदिनीम् ॥ २१
नगराणि सराष्ट्राणि सरितश्च तथा गिरीन् ।
आश्रमान् क्रमशो राम विचरन्नाजगाम ह ॥ २२
वसिष्ठस्याश्रमपदं नानापुष्पलताद्रुमम् ।
नानामृगगणाकीर्णं सिद्धचारणसेवितम् ॥ २३

देवदानवगन्धर्वैः किन्नरैरुपशोभितम् ।
प्रशान्तहरिणाकीर्णं द्विजसंघनिषेवितम् ॥ २४
ब्रह्मर्षिगणसंकीर्णं देवर्षिगणसेवितम् ।
तपश्चरणसंसिद्धैरग्निकल्पैर्महात्मभिः ॥ २५
अब्भक्षैर्वायुभक्षैश्च शीर्णपर्णाशनैस्तथा ।
फलमूलाशनैर्दान्तैर्जितरोषैर्जितेन्द्रियैः ॥ २६
ऋषिभिर्वालखिल्यैश्च जपहोमपरायणैः ।
अन्यैर्वैखानसैश्चैव समन्तादुपशोभितम् ॥ २७
वसिष्ठस्याश्रमपदं ब्रह्मलोकमिवापरम् ।
ददर्श जयतां श्रेष्ठो विश्वामित्रो महाबलः ॥ २८

इति श्रीमद्बालकाण्डे एकपञ्चाशस्सर्गः ॥

## ॥ द्विपञ्चाशस्सर्गः ॥

तं दृष्ट्वा परमप्रीतो विश्वामित्रो महाबलः ।
प्रणतो विनयाद्वीरो वसिष्ठं जपतां वरम् ॥ १
स्वागतं तव चेत्युक्तो वसिष्ठेन महात्मना ।
आसनं चास्य भगवान्वसिष्ठो व्यादिदेश ह ॥ २
उपविष्टाय च तदा विश्वामित्राय धीमते ।
यथान्यायं मुनिवरः फलमूलान्युपाहरत् ॥ ३
प्रतिगृह्य तु तां पूजां वसिष्ठाद्राजसत्तमः ।
तपोऽग्निहोत्रशिष्येषु कुशलं पर्यपृच्छत ॥ ४

विश्वामित्रो महातेजा वनस्पतिगणे तदा ।
सर्वत्र कुशलं चाह वसिष्ठो राजसत्तमम् ॥ ५
सुखोपविष्टं राजानं विश्वामित्रं महातपाः ।
पप्रच्छ जपतां श्रेष्ठो वसिष्ठो ब्रह्मणस्सुतः ॥ ६
"कच्चित्ते कुशलं राजन्! कच्चिद्धर्मेण रञ्जयन् ।
प्रजाः पालयसे वीर राजवृत्तेन धार्मिक? ॥ ७
कच्चित्ते सुभृता भृत्याः कच्चित्तिष्ठन्ति शासने? ।
कच्चित्ते विजितास्सर्वे रिपवो रिपुसूदन? ॥ ८
कच्चिद्बलेषु कोशेषु मित्रेषु च परन्तप! ।
कुशलं ते नरव्याघ्र! पुत्रपौत्रेषु चानघ? ॥" ९
सर्वत्र कुशलं राजा वसिष्ठं प्रत्युदाहरत् ।
विश्वामित्रो महातेजा वसिष्ठं विनयान्वितः ॥ १०
कृत्वोभौ सुचिरं कालं धर्मिष्ठौ ताः कथाश्शुभाः ।
मुदा परमया युक्तौ प्रीयेतां तौ परस्परम् ॥ ११
ततो वसिष्ठो भगवान्कथान्ते रघुनन्दन! ।
विश्वामित्रमिदं वाक्य मुवाच प्रहसन्निव ॥ १२
"आतिथ्य कर्तुमिच्छामि बलस्यास्य महाबल ।
तव चैवाप्रमेयस्य यथार्हं सम्प्रतीच्छ मे ॥ १३
सत्क्रियां तु भवानेतां प्रतीच्छतु मयोद्यताम् ।
राजा त्वमतिथिश्रेष्ठः पूजनीयः प्रयत्नतः ॥" १४
एवमुक्तो वसिष्ठेन विश्वामित्रो महामतिः ।
"कृत" मित्यब्रवीद्राजा "पूजावाक्येन मे त्वया ॥ १५

फलमूलेन भगवन्! विद्यते यत्तवाश्रमे ।
पाद्येनाचमनीयेन भगवद्दर्शनेन च ॥ १६
सर्वथा च महाप्राज्ञ! पूजार्हेण सुपूजितः ।
गमिष्यामि नमस्तेऽस्तु मैत्रेणेक्षस्व चक्षुषा ॥" १७
एवं ब्रुवन्तं राजानं वसिष्ठः पुनरेव हि ।
न्यमन्त्रयत धर्मात्मा पुनःपुन रुदारधीः ॥ १८
"बाढ"मित्येव गाधेयो वसिष्ठं प्रत्युवाच ह ।
"यथा प्रियं भगवतस्तथास्तु मुनिसत्तम ॥" १९
एवमुक्तो महातेजा वसिष्ठो जपतां वरः ।
आजुहाव ततः प्रीतः कल्माषीं धूतकल्मषः ॥ २०
"एह्येहि शबळे! क्षिप्रं शृणु चापि वचो मम ।
सबलस्यास्य राजर्षेः कर्तुं व्यवसितोऽस्म्यहम् ॥ २१
भोजनेन महार्हेण सत्कारं संविधत्स्व मे ।
यस्य यस्य यथा कामं षड्रसेष्वभिपूजितम् ॥ २२
तत्सर्वं कामधुक् क्षिप्रमभिवर्ष कृते मम ।
रसेनान्नेन पानेन लेह्यचोष्येण संयुतम् ॥ २३
अन्नानां निचयं सर्वं सृजस्व शबळे! त्वर ।"

॥ इति श्रीमद्बालकाण्डे द्विपञ्चाशस्सर्गः ॥

---

## ॥ त्रिपञ्चाशस्सर्गः ॥

एवमुक्ता वसिष्ठेन शबळा शत्रुसूदन! ।
विदधे कामधुक्कामान्यस्य यस्य यथेप्सितम् ॥ १

इक्षून्मधूंस्तथा लाजान्मैरेयांश्च वरासवान् ।
पानानि च महार्हाणि भक्ष्यांश्चोच्चावचांस्तथा ॥ २
उष्णाढ्यस्यौदनस्यात्र राशयः पर्वतोपमाः ।
मृष्टान्नानि च सूपांश्च दधिकुल्यास्तथैव च ॥ ३
नानास्वादुरसानां च षाडबानां तथैव च ।
भाजनानि सुपूर्णानि गौडानि च सहस्रशः ॥ ४
सर्वमासीत्सुसंतुष्टं हृष्टपुष्टजनायुतम् ।
विश्वामित्रबलं राम! वसिष्ठेनाभितर्पितम् ॥ ५
विश्वामित्रोऽपि राजर्षिः हृष्टः पुष्टस्तदाऽभवत् ।
सान्तःपुरवरो राजा सब्राह्मणपुरोहितः ॥ ६
सामात्यो मन्त्रिसहितस्सभृत्यः पूजितस्तदा ।
युक्तः परमहर्षेण वसिष्ठमिदमब्रवीत् ॥ ७
"पूजितोऽहं त्वया ब्रह्मन्! पूजार्हेण सुसत्कृतः ।
श्रूयतामभिधास्यामि वाक्यं वाक्यविशारद! ॥ ८
गवां शतसहस्रेण दीयतां शबळा मम ।
रत्नं हि भगवन्नेतद्रत्नहारी च पार्थिवः ॥ ९
तस्मान्मे शबळां देहि ममैषा धर्मतो द्विज ।"
एवमुक्तस्तु भगवान्वसिष्ठो मुनिसत्तमः ॥ १०
विश्वामित्रेण धर्मात्मा प्रत्युवाच महीपतिम् ।
"नाहं शतसहस्रेण नापि कोटिशतैर्गवाम् ॥ ११
राजन्! दास्यामि शबळां राशिभीरजतस्य वा ।
न परित्यागमर्हेयं मत्सकाशादरिन्दम ॥ १२

शाश्वती शबळा मह्यं कीर्तिरात्मवतो यथा ।
अस्यां हव्यं च कव्यं च प्राणयात्रा तथैव च ॥ १३
आयत्त मग्निहोत्रं च बलिर्होमस्तथैव च ।
स्वाहाकारवषट्कारौ विद्याश्च विविधास्तथा ॥ १४
आयत्तमत्र राजर्षे सर्वमेतन्न संशयः ।
सर्वस्व मेतत्सत्येन मम तुष्टिकरी सदा ॥ १५
कारणैर्बहुभी राजन्! न दास्ये शबळा तव ।"
वसिष्ठेनैवमुक्तस्तु विश्वामित्रोऽब्रवीत्ततः ॥ १६
संरब्धतरमत्यर्थं वाक्यं वाक्यविशारदः ।
"हैरण्यकक्ष्याग्रैवेयान्सुवर्णाङ्कुशभूषितान् ॥ १७
ददामि कुञ्जरास्तेऽहं सहस्राणि चतुर्दश ।
हैरण्यानां रथानां ते श्वेताश्वानां चतुर्युजाम् ॥ १८
ददामि ते शतान्यष्टौ किङ्किणीकविभूषितान् ।
हयानां देशजातानां कुलजानां महौजसाम् ॥ १९
सहस्रमेकं दश च ददामि तव सुव्रत! ।
नानावर्णविभक्तानां वयस्थानां तथैव च ॥ २०
ददाम्येकां गवां कोटिं शबळा दीयतां मम ।"
यावदिच्छसि रत्नं वा हिरण्यं वा द्विजोत्तम ॥ २१
तावद्ददामि तत्सर्वं शबळा दीयतां मम ।"
एवमुक्तस्तु भगवान्विश्वामित्रेण धीमता ॥ २२
"न दास्यामी"ति शबळां प्राह "राजन् कथंचन ।
एतदेव हि मे रत्नमेतदेव हि मे धनम् ॥ २३

एतदेव हि सर्वस्वमेतदेव हि जीवितम् ।
दर्शश्च पूर्णमासश्च यज्ञाश्चैवाप्तदक्षिणाः ॥ २४
एतदेव हि मे राजन् ! विविधाश्च क्रियास्तथा ।
अदोमूलाः क्रियास्सर्वा मम राजन्न संशयः ॥ २५
बहुना किं प्रलापेन न दास्ये कामदोहिनीम् ।"

इति श्रीमद्बालकाण्डे त्रिपञ्चाशस्सर्गः ॥

॥ चतुःपञ्चाशस्सर्गः ॥

कामधेनुं वसिष्ठोऽपि यदा न त्यजते मुनिः ।
तदाऽस्य शबळां राम ! विश्वामित्रोऽन्वकर्षत ॥ १
नीयमाना तु शबळा राम ! राज्ञा महात्मना ।
दुःखिता चिन्तयामास रुदन्ती शोककर्शिता ॥ २
"परित्यक्ता वसिष्ठेन किमहं सुमहात्मना ।
याऽहं राजभटैर्दीना ह्रियेयं भृशदुःखिता ॥ ३
किं मयाऽपकृतं तस्य महर्षेर्भावितात्मनः ।
यन्मामनागसं भक्तामिष्टां त्यजति धार्मिकः ॥" ४
[इति सा चिन्तयित्वा तु निश्वस्य च पुनःपुनः ।
जगाम वेगेन तदा वसिष्ठं परमौजसम् ॥] ५
निर्धूय तांस्तदा भृत्यान्शतशश्शत्रुसूदन ! ।
जगामानिलवेगेन पादमूलं महात्मनः ॥ ६
शबळा सा रुदन्ती च क्रोशन्ती चेदमब्रवीत् ।
वसिष्ठस्याग्रतस्स्थित्वा मेघदुन्दुभिराविणी ॥ ७

"भगवन्! किं परित्यक्ता त्वयाऽहं ब्रह्मण स्सुत!।
यस्माद्राजभृता मां हि नयंते त्वत्सकाशतः ॥" ८
एव मुक्तस्तु ब्रह्मर्षि रिदं वचन मब्रवीत्।
शोकसन्तप्तहृदयां स्वसार मिव दुःखिताम् ॥ ९
'न त्वां त्यजामि शबळे नापि मेऽपकृतं त्वया।
एष त्वां नयते राजा बलान्मत्तो महाबलः ॥ १०
न हि तुल्यं बलं मह्यं राजा त्वद्य विशेषतः।
बली राजा क्षत्रियश्च पृथिव्याः पतिरेव च ॥ ११
इयमक्षौहिणी पूर्णा सवाजिरथसंकुला।
हस्तिध्वजसमाकीर्णा तेनासौ बलवत्तरः ॥" १२
एवमुक्ता वसिष्ठेन प्रत्युवाच विनीतवत्।
वचनं वचनज्ञा सा ब्रह्मर्षिममितप्रभम् ॥ १३
"न बलं क्षत्रियस्याहुर्ब्राह्मणो बलवत्तरः।
ब्रह्मन्! ब्रह्मबलं दिव्यं क्षत्रात्तु बलवत्तरम् ॥ १४
अप्रमेयबलं तुभ्यं न त्वया बलवत्तरः।
विश्वामित्रो महावीर्यस्तेजस्तव दुरासदम् ॥ १५
नियुङ्क्ष्वमां महाभाग त्वद्ब्रह्मबलसंभृताम्।
तस्य दर्पबलं यत्त न्नाशयामि दुरात्मनः ॥" १६
इत्युक्तस्तु तया राम! वसिष्ठस्तु महायशाः।
"सृजस्वेति तदोवाच बलं परबलार्दनम् ॥" १७
तस्य तद्वचनं श्रुत्वा सुरभिस्साऽसृजत्तदा।
तस्या हुम्भारवोत्सृष्टाः पप्लवाश्शतशो नृप ॥ १८

नाशयन्ति बलं सर्वं विश्वामित्रस्य पश्यतः ।
बलं भग्नं ततो दृष्ट्वा रथेनाक्रम्य कौशिकः ॥ १९
स राजा परमक्रुद्धो रोषविष्फारितेक्षणः ।
पह्लवा न्नाशयामास शस्त्रै रुच्चावचै रपि ॥ २०
विश्वामित्रार्दितान् दृष्ट्वा पह्लवान् शतशस्तथा ।
भूय एवासृजत्कोपा च्छकान्यवनमिश्रितान् ॥ २१
तै रासीत्संवृता भूमि श्शकैर्यवनमिश्रितैः ।
प्रभावद्भि र्महावीर्यै र्हेमकिंजल्कसन्निभैः ॥ २२
दीर्घासिपट्टसधरै र्हेमवर्णाम्बरावृतैः ।
निर्दग्धं तद्बलं सर्वं प्रदीप्तैरिव पावकैः ॥ २३
ततोऽस्त्राणि महातेजा विश्वामित्रो मुमोचह ।
तैस्ते यवनकाम्भोजाः पह्लवाश्चाकुलीकृताः ॥ २४

इति श्रीमद्बालकाण्डे चतु पञ्चाशस्सर्गः ॥

---

## ॥ पञ्चपञ्चाशस्सर्गः ॥

तत स्तानाकुलान् दृष्ट्वा विश्वामित्रास्त्रमोहितान् ।
वसिष्ठ श्चोदयामास कामधु! क्सृज योगतः ॥ १
तस्या हुंभारवा ज्जाताः काम्भोजा रविसन्निभाः ।
ऊधसस्त्वथ संजाताः पह्लवाश्शस्त्रपाणयः ॥ २
योनिदेशा च्च यवनाश्शकृद्देशाच्छका स्तथा ।
रोमकूपेषु च म्लेच्छा हारीतास्सकिरातकाः ॥ ३

तै स्तैर्निषूदितं सर्वं विश्वामित्रस्य तत्क्षणात् ।
सपदातिगजं साश्वं सरथं रघुनन्दन! ॥ ४
दृष्ट्वा निषूदितं सैन्यं वसिष्ठेन महात्मना ।
विश्वामित्रसुतानां च शतं नानाविधायुधम् ॥ ५
अभ्यधावत्सुसंक्रुद्धं वसिष्ठं जपतां वरम् ।
हुंकारेणैव तान्सर्वान् ददाह भगवानृषिः ॥ ६
ते साश्वरथपादाता वसिष्ठेन महात्मना ।
भस्मीकृता मुहूर्तेन विश्वामित्रसुतास्तदा ॥ ७
दृष्ट्वा विनाशितान्पुत्रान्बलं च सुमहायशाः ।
सव्रीडश्चिन्तयाऽऽविष्टो विश्वामित्रोऽभवत्तदा ॥ ८
समुद्र इव निर्वेगो भग्नदंष्ट्र इवोरगः ।
उपरक्त इवादित्यस्सद्यो निष्प्रभतां गतः ॥ ९
हतपुत्रबलो दीनो लूनपक्ष इव द्विजः ।
हतदर्पो गतोत्साहो निर्वेदं समपद्यत ॥ १०
स पुत्रमेकं राज्याय "पालये"ति नियुज्य च ।
पृथिवीं क्षत्रधर्मेण वनमेवान्वपद्यत ॥ ११
स गत्वा हिमवत्पार्श्वं किन्नरोरगसेवितम् ।
महादेवप्रसादार्थं तपस्तेपे महातपाः ॥ १२
केन चित्त्वथ कालेन देवेशो वृषभध्वजः ।
दर्शयामास वरदो विश्वामित्रं महाबलम् ॥ १३
"किमर्थं तप्यसे राजन्! ब्रूहि यत्ते विवक्षितम् ।
वरदोऽस्मि वरो यस्ते कांक्षितस्सोऽभिधीयताम्" ॥ १४

एवमुक्तस्तु देवेन विश्वामित्रो महातपाः ।
प्रणिपत्य महादेवमिदं वचनमब्रवीत् ॥ १५
"यदि तुष्टो महादेव! धनुर्वेदो ममानघ ॥
साङ्गोपाङ्गोपनिषद स्सरहस्यः प्रदीयताम् ॥ १६
यानि देवेषु चास्त्राणि दानवेषु महर्षिषु ।
गन्धर्वयक्षरक्षस्सु प्रतिभान्तु ममानघ ॥ १७
तव प्रसादा द्भवतु देवदेव! ममेप्सितम् ।"
एवमस्त्विति देवेशो वाक्य मुक्त्वा गतस्तदा ॥ १८
प्राप्य चास्त्राणि राजर्षि र्विश्वामित्रो महाबलः
दर्पेण महता युक्तो दर्पपूर्णोऽभवत्तदा ॥ १९
विवर्धमानो वीर्येण समुद्र इव पर्वणि ।
"हत मेव तदा मेने वसिष्ट मृषिसत्तमम् ॥ २०
ततो गत्वाऽऽश्रमपदं मुमोचास्त्राणि पार्थिव ।
यैस्तत्तपोवनं सर्वं निर्दग्धं चास्त्रतेजसा ॥ २१
उदीर्यमाण मस्त्रं तद्विश्वामित्रस्य धीमतः ।
दृष्ट्वा विप्रद्रुता स्सर्वे मुनय श्शतशो दिशः ॥ २२
वसिष्ठस्य च ये शिष्यास्तथैव मृगपक्षिणः ।
विद्रवन्ति भया द्भीता नानादिग्भ्य स्सहस्रशः ॥ २३
वसिष्ठस्याश्रमपदं शून्य मासी न्महात्मनः ।
मुहूर्त मिव निश्शब्द मासी दिरिणसन्निभम् ॥ २४
वदतो वै वसिष्ठस्य "माभैरि" ति मुहुर्मुहुः ।
"नाशयाम्यद्य गाधेयं नीहार मिव भास्करः ॥" २५

एव मुक्त्वा महातेजा वसिष्ठो जपतां वरः ।
विश्वामित्रं तदा वाक्यं सरोष मिद मब्रवीत् ॥ २६

"आश्रमं चिरसंवृद्धं यद्विनाशितवानसि ।
दुराचारोऽसि यन्मूढ! तस्मा त्त्वं न भविष्यसि ॥" २७

इत्युक्त्वा परमक्रुद्धो दण्ड मुद्यम्य सत्वरम् ।
विधूम मिव कालाग्निं यमदण्डमिवापरम् ॥ २८

इति श्रीमद्बालकाण्डे पञ्चपञ्चाशस्सर्गः ॥

---

## ॥ षट्पञ्चाशस्सर्गः ॥

एवमुक्तो वसिष्ठेन विश्वामित्रो महाबलः ।
आग्नेय मस्त्र मुत्क्षिप्य "तिष्ठतिष्ठे" ति चाब्रवीत् ॥ १

ब्रह्मदण्डं स चोत्क्षिप्य कालदण्ड मिवापरम् ।
वसिष्ठो भगवा न्क्रोधा दिदं वचन मब्रवीत् ॥ २

"क्षत्रबन्धो! स्थितोऽस्म्येष यद्बलं तद्विदर्शय ।
नाशयाम्यद्य ते दर्पं शस्त्रस्य तव गाधिज! ॥ ३

क्व ते क्षत्रियबलं क्व ब्रह्मबलं महत् ।
पश्य ब्रह्मबलं दिव्यं मम क्षत्रियपांसन! ॥" ४

तस्यास्त्रं गाधिपुत्रस्य घोर माग्नेय मुद्यतम् ।
ब्रह्मदण्डेन तच्छान्त मग्ने र्वेग इवाम्भसा ॥ ५

वारुणं चैव रौद्रंच ऐन्द्रं पाशुपतं तथा ।
ऐषीकं चापि चिक्षेप कुपितो गाधिनन्दनः ॥ ६

मानवं मोहनं चैव गान्धर्वं स्वापनं तथा ।
जृम्भणं मादनं चैव सन्तापनविलापने ॥ ७
शोषणं दारणं चैव वज्र मस्त्रं सुदुर्जयम् ।
ब्रह्मपाशं कालपाशं वारुणं पाश मेव च ॥ ८
पैनाकास्त्रं च दयितं शुष्कार्द्रे अशनी उभे ।
दण्डास्त्र मथ पैशाचं क्रौञ्च मस्त्रं तथैवच ॥ ९
धर्मचक्रं कालचक्रं विष्णुचक्रं तथैवच ।
वायव्यं मथनं चैव अस्त्रं हयशिरं स्तथा ॥ १०
शक्तिद्वयं च चिक्षेप कंकालं मुसलं तथा ।
वैद्याधरं महास्त्रं च कालास्त्र मथ दारुणम् ॥ ११
त्रिशूलमस्त्रं घोरं च कापाल मथ कङ्कणम् ।
एता न्यस्त्राणि चिक्षेप सर्वाणि रघुनन्दन! ॥ १२
वसिष्ठे जपतां श्रेष्ठे तदद्भुत मिवाभवत् ।
तानि सर्वाणि दण्डेन ग्रसते ब्रह्मण स्सुतः ॥ १३
तेषु शान्तेषु ब्रह्मास्त्रं क्षिप्तवान्गाधिनन्दनः ।
तदस्त्र मुद्यतं दृष्ट्वा देवास्साग्निपुरोगमाः ॥ १४
देवर्षय श्च सम्भ्रान्ता गन्धर्वा स्समहोरगाः ।
त्रैलोक्य मासी त्सन्त्रस्तं ब्रह्मास्त्रे समुदीरिते ॥ १५
तदप्यस्त्रं महाघोरं ब्राह्मं ब्राह्मेण तेजसा ।
वसिष्ठो ग्रसते सर्वं ब्रह्मदण्डेन राघव! ॥ १६
ब्रह्मास्त्रं ग्रसमानस्य वसिष्ठस्य महात्मनः ।
त्रैलोक्यमोहनं रौद्रं रूपमासीत्सुदारुणम् ॥ १७

रोमकूपेषु सर्वेषु वसिष्ठस्य महात्मनः ।
मरीच्य इव निष्पेतु रग्नेर्धूमाकुलार्चिषः ॥ १८

प्राज्वल द्ब्रह्मदण्ड श्च वसिष्ठस्य करोद्यतः ।
विधूम इव कालाग्नि र्यमदण्ड इवापरः ॥ १९

ततोऽस्तुवन्मुनिगणा वसिष्ठं जपतां वरम् ।
"अमेयं ते बलं ब्रह्मन्! तेजो धारय तेजसा ॥ २०

निगृहीत स्त्वया ब्रह्मन्! विश्वामित्रो महातपाः ।
प्रसीद जपतां श्रेष्ठ! लोका स्सन्तु गतव्यथाः ॥" २१

एव मुक्तो महातेजा श्शमं चक्रे महातपाः ।
विश्वामित्रोऽपि निकृतो विनिश्वस्येदमब्रवीत् ॥ २२

"धिग्बलं क्षत्रियबलं ब्रह्मतेजो बलं बलम् ।
एकेन ब्रह्मदण्डेन सर्वास्त्राणि हतानि मे ॥ २३

तदेत त्समवेक्ष्याहं प्रसन्नेन्द्रियमानसः ।
तपो महत्समास्थास्ये यद्वैब्रह्मत्वकारणम् ॥" २४

इति श्रीमद्बालकाण्डे षट्पञ्चाशस्सर्गः ॥

---

## ॥ सप्तपञ्चाशस्सर्गः ॥

तत स्सन्तप्तहृदय स्स्मरन्निग्रह मात्मनः ।
विनिश्वस्य विनिश्वस्य कृतवैरो महात्मना ॥ १

स दक्षिणां दिशं गत्वा महिष्या सह राघव! ।
तताप परमं घोरं विश्वामित्रो महत्तपः ॥ २

[फलमूलाशनो दान्त श्चकार सुमहत्तपः ।]
अथास्य जज्ञिरे पुत्रा स्सत्यधर्मपरायणाः ॥ ३
हविष्यन्दो मधुष्यन्दो दृढनेत्रो महारथः ।
पूर्णे वर्षसहस्रे तु ब्रह्मा लोकपितामहः ॥ ४
अब्रवीन्मधुरं वाक्यं विश्वामित्रं तपोधनम् ।
"जिता राजर्षि लोकास्ते तपसा कुशिकात्मज ॥ ५
अनेन तपसा त्वां तु राजर्षि रिति विद्महे ।"
एवमुक्त्वा महातेजा जगाम सह दैवतैः ॥ ६
त्रिविष्टपं ब्रह्मलोकं लोकानां परमेश्वरः ।
विश्वामित्रोऽपि तच्छ्रुत्वा ह्रिया किंचि दवाङ्मुखः ॥ ७
दुःखेन महता विष्ट स्समन्यु रिद मब्रवीत् ।
"तप श्च सुमहत्तप्तं 'राजर्षि' रिति मां विदुः ॥ ८
देवा स्सर्षिगणा स्सर्वे नास्ति मन्ये तपःफलम् ।"
इति निश्चित्य मनसा भूय एव महातपाः ॥ ९
[क्रोधेन महताविष्ट स्त्रैलोक्यं व्यथय न्निव ।]
तपश्चकार काकुत्स्थ! परमं परमात्मवान् ॥ १०
एतस्मिन्नेव काले तु सत्यवादी जितेन्द्रियः ।
त्रिशङ्कु रिति विख्यात इक्ष्वाकुकुलवर्धनः ॥ ११
तस्यबुद्धि स्समुत्पन्ना "यजेय" मिति राघव! ।
"गच्छेयं सशरीरेण देवानां परमां गतिम् ॥ १२
स वसिष्ठं समाहूय कथयामास चिन्तितम् ।
"अशक्य" मिति चाप्युक्तो वसिष्ठेन महात्मना ॥ १३

प्रत्याख्यातो वसिष्ठेन सययौ दक्षिणां दिशम् ।
तत स्तत्कर्मसिद्ध्यर्थं पुत्रां स्तस्य गतो नृपः ॥ १४
वासिष्ठा दीर्घतपस स्तपो यत्र हि तेपिरे ।
त्रिशङ्कु स्सुमहातेजा श्शतं परमभास्वरम् ॥ १५
वसिष्ठपुत्रान्ददृशे तप्यमानान्यशस्विनः ।
सोऽभिगम्य महात्मान स्सर्वानेव गुरोस्सुतान् ॥ १६
अभिवाद्यानुपूर्व्येण ह्रिया किंचि दवाङ्मुखः ।
अब्रवी त्सुमहाभागान्सर्वानेव कृताञ्जलिः ॥ १७
"शरणं वःप्रपद्येऽहं सर्वा न्नमस्कृत्य प्रसादये ।
प्रत्याख्यातोऽस्मि भद्रं वो वसिष्ठेन महात्मना ॥ १८
यष्टुकामो महायज्ञं तदनुज्ञातु मर्हथ ।
गुरुपुत्रा नहं सर्वान्नमस्कृत्य प्रसादये ॥ १९
शिरसा प्रणतो याचे ब्राह्मणां स्तपसि स्थितान् ।
ते मां भवन्त स्सिद्ध्यर्थं याजयन्तु समाहिताः ॥ २०
स शरीरो यथाऽहं हि देवलोक मवाप्नुयाम् ।
प्रत्याख्यातो वसिष्ठेन गति मन्यां तपोधनाः ॥ २१
गुरुपुत्रानृते सर्वान्नाहं पश्यामि कंचन ।
इक्ष्वाकूणां हि सर्वेषां पुरोधाः परमा गतिः ॥ २२
पुरोधसस्तु विद्वांस स्तारयन्ति सदा नृपान् ।
तस्मा दनन्तरं सर्वे भवन्तो दैवतं मम ॥" २३

इति श्रीमद्बालकाण्डे सप्तपञ्चाशस्सर्गः ॥

## ॥ अष्टपञ्चाशस्सर्गः ॥

तत स्त्रिशङ्कोर्वचनं श्रुत्वा क्रोधसमन्वितम् ।
ऋषिपुत्र शतं राम राजान मिदमब्रवीत् ॥ १
"प्रत्याख्यातोऽसि दुर्बुद्धे! गुरुणा सत्यवादिना ।
तं कथं समतिक्रम्य शाखान्तरमुपेयिवान् ॥ २
इक्ष्वाकूणां हि सर्वेषां पुरोधाः परमो गुरुः ।
नचातिक्रमितुं शक्यं वचनं सत्यवादिनः ॥ ३
अशक्य मिति चोवाच वसिष्ठो भगवानृषिः ।
तं वयं वै समाहर्तुं क्रतुं शक्ताः कथं तव ॥ ४
बालिशस्त्वं नरश्रेष्ठ! गम्यतां स्वपुरं पुनः ।
याजने भगवाञ्शक्त स्त्रैलोक्यस्यापि पार्थिव! ॥ ५
अवमानं वयं कर्तुं तस्य शक्ष्यामहे कथम् ।"
तेषां तद्वचनं श्रुत्वा "क्रोधपर्याकुलाक्षरम् ॥ ६
स राजा पुनरेवैतानिदं वचनमब्रवीत् ।
प्रत्याख्यातोऽस्मि गुरुणा गुरुपुत्रै स्तथैव च ॥ ७
अन्यां गतिं गमिष्यामि स्वस्ति वोऽस्तु तपोधनाः ।"
ऋषिपुत्रा स्तु तच्छ्रुत्वा वाक्यं घोराभिसंहितम् ॥ ८
शेपुः परमसंक्रुद्धा "श्चण्डालत्वं गमिष्यसि ।"
एव मुक्त्वा महात्मानो विविशु स्ते स्वमाश्रमम् ॥ ९
[तच्छ्रुत्वा घोरसंकाश मृषिपुत्रस्य भाषितम् ।
प्रविशत्स्वपुरं राजा चिन्तयामास दुःखितः ॥] १०

अथ रात्र्यां व्यतीतायां राजा चण्डालतां गतः ।
नीलवस्त्रधरो नीलः परुषो ध्वान्तमूर्धजः ॥ ११
चित्यमाल्यानुलेपश्च आयसाभरणोऽभवत् ।
तं दृष्ट्वा मन्त्रिण स्सर्वे त्यक्त्वा चण्डालरूपिणम् ॥ १२
प्राद्रवन्सहिता राम! पौरा येऽस्यानुगामिनः ।
एको हि राजा काकुत्स्थ! जगाम परमात्मवान् ॥ १३
दह्यमानो दिवा रात्रं विश्वामित्र तपोधनम् ।
विश्वामित्रस्तु त दृष्ट्वा राजान विफलीकृतम् ॥ १४
चण्डालरूपिणं राम! मुनिः कारुण्यमागतः ।
कारूण्या त्स महातेजा वाक्यं परमधार्मिकः ॥ १५
इदं जगाद भद्रं ते राजानं घोररूपिणम् ।
"किं मागमन कार्यं ते राजपुत्र! महाबल! ॥ १६
अयोध्याधिपते! वीर! शापा च्चण्डालतां गतः ।"
अथ तद्वाक्य माकर्ण्य राजा चण्डालतां गतः॥ १७
अब्रवी त्प्राञ्जलिर्वाक्य वाक्यज्ञो वाक्यकोविदम् ।
"प्रत्याख्यातोऽस्मि गुरुणा गुरुपुत्रै स्तथैवच ॥ १८
अनवाप्यैव तं कामं मया प्राप्तो विपर्ययः ।
सशरीरो दिवं याया मिति मे सौम्यदर्शन! ॥ १९
मया चेष्टं क्रतुशतं तच्च नावाप्यते फलम् ।
अनृतं नोक्त पूर्वं मे नच वक्ष्ये कदाचन ॥ २०
कृच्छ्रेष्वपि गत स्सौम्य! क्षत्रधर्मेण ते शपे ।
यज्ञै र्बहुविधै रिष्टं प्रजा धर्मेण पालिताः ॥ २१

गुरवश्च महात्मान श्शीलवृत्तेन तोषिताः ।
धर्मे प्रयतमानस्य यज्ञं चाहर्तु मिच्छतः ॥ २२
परितोषं न गच्छन्ति गुरवो मुनिपुङ्गव !
दैव मेव परं मन्ये पौरुषं तु निरर्थकम् ॥ २३
दैवेनाक्रम्यते सर्वं दैवं हि परमा गतिः ।
तस्य मे परमार्तस्य प्रसाद मभिकाङ्क्षतः ॥ २४
कर्तुं मर्हसि भद्रं ते दैवोपहतकर्मणः ।
नान्यां गतिं गमिष्यामि नान्यश्शरण मस्तिते ॥ २५
दैवं पुरुषकारेण निवर्तयितु मर्हसि ॥"

इति श्रीमद्बालकाण्डे अष्टपञ्चाशस्सर्गः ॥

## ॥ एकोनषष्टितमस्सर्गः ॥

उक्तवाक्यं तु राजानं कृपया कुशिकात्मजः ।
अब्रवी न्मधुरं वाक्यं साक्षा च्चण्डालरूपिणम् ॥
"ऐक्ष्वाक ! स्वागतं वत्स ! जानामि त्वां सुधार्मिकम् ।
शरणं ते भविष्यामि माभैषी र्नृपपुङ्गव ! ॥
अह मामन्त्रये सर्वान्महर्षी न्पुण्यकर्मणः ।
यज्ञसाह्यकरा न्राजन् ! ततो यक्ष्यसि निर्वृतः ॥
गुरुशापकृतं रूपं यदिदं त्वयि वर्तते ।
अनेन सह रूपेण सशरीरो गमिष्यसि ॥
हस्तप्राप्त महं मन्ये स्वर्गं तव नराधिप ! ।
यस्त्वं कौशिक मागम्य शरण्यं शरणागतः ॥"

एव मुक्त्वा महातेजाः पुत्रान्परमधार्मिकान् ।
व्यादिदेश महाप्राज्ञान यज्ञसम्भारकारणात् ॥ ६
सर्वान्शिष्या न्समाहूय वाक्य मेत दुवाच ह ।
" सर्वा नृषिगणा न्वत्स! आनयध्वं ममाज्ञया ॥ ७
सशिष्यसुहृद श्चैव सर्त्विज स्स बहुश्रुतान् ।
यदन्यो वचनं ब्रूया न्मद्वाक्य बलचोदितः ॥ ८
तत्सर्व मखिले नोक्तं ममाख्येय मनादृतम् । "
तस्य तद्वचनं श्रुत्वा दिशो जग्मुस्तदाज्ञया ॥ ९
आजग्मुरथ देशेभ्य स्सर्वेभ्यो ब्रह्मवादिनः ।
ते च शिष्या स्समागम्य मुनि ज्वलिततेजसम् ॥ १०
ऊचु श्च वचन सर्वे सर्वेषां ब्रह्मवादिनाम् ।
श्रुत्वा ते वचनं सर्वे समायान्ति द्विजातयः ॥ ११
सर्वदेशेषु चागच्छ न्वर्जयित्वा महोदयम् ।
वासिष्ठं तच्छतं सर्वं क्रोधपर्याकुलाक्षरम् ॥ १२
यदाह वचनं सर्वं शृणु त्वं मुनिपुङ्गव ।
" क्षत्रियो याजको यस्य चण्डालस्य विशेषतः ॥ १३
कथं सदसि भोक्तारो हविस्तस्य सुरर्षयः ।
ब्राह्मणा वा महात्मानो भुक्त्वा चण्डालभोजनम् ॥ १४
कथं स्वर्गं गमिष्यन्ति विश्वामित्रेण पालिताः । "
एत द्वचननैष्ठुर्य मूचु स्संरक्तलोचनाः ॥ १५
वासिष्ठा मुनिशार्दूल! सर्वे ते समहोदयाः ।
तेषां तद्वचनं श्रुत्वा सर्वेषां मुनिपुङ्गवः ॥ १६

क्रोधसंरक्तनयन स्सरोष मिदमब्रवीत् ।
“ये दूषयन्त्यदुष्टं मां तप उग्रं समास्थितम् ॥ १७
भस्मीभूता दुरात्मानो भविष्यन्ति न संशयः ।
अद्य ते कालपाशेन नीता वैवस्वत क्षयम् ॥ १८
सप्तजातिशतान्येव मृतपा स्सन्तु सर्वशः ।
श्वमांसनियताहारा मुष्टिकानाम निर्घृणाः ॥ १९
विकृताश्च विरूपाश्च लोका ननुचरन्त्विमान् ।
महोदय स्तु दुर्बुद्धिर्मामदूष्यं ह्यदूषयत् ॥ २०
दूषित स्सर्वलोकेषु निषादत्वं गमिष्यति ।
प्राणातिपातनिरतो निरनुक्रोशतां गतः ॥ २१
दीर्घकालं ममक्रोधा दुर्गति वर्तयिष्यति ।”
एतावदुत्वा वचनं विश्वामित्रो महातपाः ॥ २२
विरराम महातेजा ऋषिमध्ये महामुनिः ।

इति श्रीमद्बालकाण्डे एकोनषष्टितमस्सर्ग. ॥

## ॥ षष्टितमस्सर्गः ॥

तपोबलहतान्कृत्वा वासिष्ठान्समहोदयान् ।
ऋषिमध्ये महातेजा विश्वामित्रोऽभ्यभाषत ॥ १
“अय मिक्ष्वाकुदायाद स्त्रिशङ्कु रिति विश्रुतः ।
धर्मिष्ट श्च वदान्य श्च मां चैव शरणं गतः ॥ २
तेनानेन शरीरेण देवलोक जिगीषया ।
यथाऽयं स्वशरीरेण स्वर्गलोकं गमिष्यति ॥ ३

तथा प्रवर्त्यतां यज्ञो भवद्भि श्च मया सह ।"
विश्वामित्रवचश्श्रुत्वा सर्व एव महर्षयः ॥ ४
ऊचु स्समेत्य सहिता धर्मज्ञा धर्मसंहितम् ।
"अयं कुशिकदायादो मुनिः परमकोपनः ॥ ५
यदाह वचनं सम्यगेतत्कार्यं नसंशयः ।
अग्निकल्पोहि भगवान्शापं दास्यति रोषितः ॥ ६
तस्मात्प्रवर्त्यतां यज्ञ स्सशरीरो यथा दिवम् ।
गच्छे दिक्ष्वाकुदायादो विश्वामित्रस्य तेजसा ॥ ७
तथा प्रवर्त्यतां यज्ञस्सर्वे समधितिष्ठत ।"
एव मुक्त्वा महर्षय श्चक्रु स्ता स्ताः क्रियास्तदा ॥ ८
याजक श्च महातेजा विश्वामित्रोऽभवत्क्रतौ ।
ऋत्विज श्चानुपूर्व्येण मन्त्रवन्मन्त्रकोविदाः ॥ ९
चक्रु स्सर्वाणि कर्माणि यथाकल्प यथा विधि ।
ततः कालेन महता विश्वामित्रो महातपाः ॥ १०
चकारावाहनं तत्र भागार्थं सर्वदेवताः ।
नाभ्यागमं स्तदाऽऽहूताभागार्थं सर्वदेवताः ॥ ११
ततः क्रोधसमाविष्टो विश्वामित्रो महामुनिः ।
स्रुवमुद्यम्य सक्रोध स्त्रिशंकु मिदमब्रवीत् ॥ १२
"पश्य मे तपसो वीर्यं स्वार्जितस्य नरेश्वर! ।
एष त्वां सशरीरेण नयामि स्वर्गमोजसा ॥ १३
दुष्प्रापां सशरीरेण दिवं गच्छ नराधिप! ।
स्वार्जितं किंचिदप्यस्ति मया हि तपसः फलम् ॥ १४

राजन्! स्वतेजसा तस्य सशरीरो दिवं व्रज ।"
उक्तवाक्ये मुनौ तस्मिन्सशरीरो नरेश्वरः ॥ १५
दिवं जगाम काकुत्स्थ! मुनीनां पश्यतां तदा ।
देवलोकगतं दृष्ट्वा त्रिशङ्कुं पाकशासनः ॥ १६
सह सर्वैः स्सुरगणै रिदं वचनमब्रवीत् ।
"त्रिशङ्को! गच्छ भूयस्त्वं नासि स्वर्गकृतालयः ॥ १७
गुरुशापहतो मूढ! पत भूमि मवाक्छिराः ।"
एव मुक्तो महेन्द्रेण त्रिशङ्कु रपतत्पुनः ॥ १८
विक्रोशमान स्त्राहीति विश्वामित्रं तपोधनम् ।
तच्छ्रुत्वा वचनं तस्य क्रोशमानस्य कौशिकः ॥ १९
रोष माहारयत्तीव्रं "तिष्ठतिष्ठे"ति चाब्रवीत् ।
ऋषिमध्ये स तेजस्वी प्रजापति रिवापरः ॥ २०
सृजन्दक्षिणमार्गस्थान्सप्तर्षीनपरान्पुनः ।
नक्षत्रमाला मपरा मसृजत्क्रोधमूर्छितः ॥ २१
दक्षिणां दिशमास्थाय मुनिमध्ये महायशाः ।
सृष्ट्वा नक्षत्रवंशं च क्रोधेन कलुषीकृतः ॥ २२
अन्य मिन्द्रं करिष्यामि लोको वा स्यादनिन्द्रकः ।
दैवतान्यपिसक्रोधात्स्रष्टुं समुपचक्रमे ॥ २३
ततः परमसम्भ्रान्ता स्सर्षिसङ्घा स्सुरासुराः ।
[सकिन्नरमहायक्षा स्सहसिद्धा स्सुरासुराः ॥] २४
विश्वामित्रं महात्मान मूचु स्सानुनयं वचः ।
"अयं राजा महाभाग! गुरुशापपरिक्षतः ॥ २५

सशरीरो दिवं यातुं नार्हत्येव तपोधन! ।"
तेषां तद्वचनं श्रुत्वा देवानां मुनिपुङ्गवः ॥ २६
अब्रवीत्सुमहद्वाक्यं कौशिक स्सर्वदेवताः ।
"सशरीरस्य भद्रं वस्त्रिशङ्कोरस्य भूपतेः ॥ २७
आरोहणं प्रतिज्ञाय नानृतं कर्तुमुत्सहे ।
स्वर्गोऽस्तु सशरीरस्य त्रिशङ्कोरस्य शाश्वतः ॥ २८
नक्षत्राणि च सर्वाणि मामकानि ध्रुवाण्यथ ।
यावल्लोका धरिष्यन्ति तिष्ठन्त्वेतानि सर्वशः ॥ २९
मत्कृतानि सुरास्सर्वे तदनुज्ञातुमर्हथ ।"
एव मुक्ता स्सुरास्सर्वे प्रत्यूचु र्मुनिपुङ्गवम् ॥ ३०
"एवं भवतु भद्रं ते तिष्ठन्त्वेतानि सर्वशः ।
गगने तान्यनेकानि वैश्वानरपथाद्बहिः ॥ ३१
नक्षत्राणि मुनिश्रेष्ठ! तेषु ज्योतिष्षु जाज्वलन् ।
अवाक्छिरा स्त्रिशङ्कुश्च तिष्ठत्वमरसन्निभः ॥ ३२
अनुयास्यन्तिचैतानि ज्योतींषि नृपसत्तमम् ।
कृतार्थं कीर्तिमन्तं च स्वर्गलोकगतं यथा ॥" ३३
विश्वामित्रस्तु धर्मात्मा सर्वदेवैरभिष्टुतः ।
ऋषिभि श्च महातेजा "बाढ" मित्याह देवताः ॥ ३४
ततो देवा महात्मानो मुनयश्च तपोधनाः ।
जग्मु र्यथागतं सर्वे यज्ञस्यांते नरोत्तम! ॥ ३५

इति श्रीमद्बालकाण्डे षष्टितमस्सर्गः ॥

## ॥ एकषष्टितमस्सर्गः ॥

विश्वामित्रो महात्माऽथ प्रस्थितान्प्रेक्ष्यतानृषीन् ।
अब्रवीन्नरशार्दूल स्सर्वा स्तान्वनवासिनः ॥ १
"महान्विघ्नः प्रवृत्तोऽयं दक्षिणामास्थितो दिशम् ।
दिशमन्यां प्रपत्स्याम स्तत्र तप्स्यामहे तपः ॥ २
पश्चिमायां विशालायां पुष्करेषु महात्मनः ।
सुखं तप श्चरिष्यामः परं तद्धि तपोवनम् ॥" ३
एव मुक्त्वा महातेजाः पुष्करेषु महामुनिः ।
तपउग्रं दुराधर्ष तेपे मूलफलाशनः ॥ ४
एतस्मिन्नेव काले तु अयोध्याधिपति नृपः
अम्बरीष इति ख्यातो यष्टुं समुपचक्रमे ॥ ५
तस्य वै यजमानस्य पशुमिन्द्रो जहारह ।
प्रणष्टे तु पशौ विप्रो राजान मिदमब्रवीत् ॥ ६
" पशुरद्य हृतोराज! न्प्रणष्ट स्तव दुर्नयात् ।
अरक्षितारं राजानं घ्नन्ति दोषा नरेश्वर! ॥ ७
प्रायश्चित्तं महद्ध्येत न्नरं वा पुरुषर्षभ! ।
आनयस्व पशु शीघ्रं यावत्कर्म प्रवर्तते ॥" ८
उपाध्यायवचश्श्रुत्वा स राजा पुरुषर्षभ! ।
अन्वियेष महाबुद्धिः पशुं गोभि स्सहस्रशः ॥ ९
देशान्जनपदां स्तां स्ता न्नगराणि वनानि च ।
आश्रमाणि च पुण्यानि मार्गमाणो महीपतिः ॥ १०

सपुत्रसहितं तात! सभार्यं रघुनन्दन! ।
भृगुतुंदे सहासीनमृचीकं सन्ददर्श ह ॥ ११
तमुवाच महातेजाः प्रणम्याभिप्रसाद्य च ।
ब्रह्मर्षिं तपसा दीप्तं राजर्षिरमितप्रभः ॥ १२
पृष्ट्वा सर्वत्र कुशलमृचीकं तमिदं वचः ।
"गवां शतसहस्रेण विक्रीणीषे सुतं यदि ॥ १३
पशोरर्थे महाभाग! कृतकृत्योऽस्मि भार्गव! ।
सर्वे परिसृता देशा यज्ञीयं न लभे पशुम् ॥ १४
दातुमर्हसि मूल्येन सुतमेकमितो मम ।"
एवमुक्तो महातेजा ऋचीकस्त्वब्रवीद्वचः ॥ १५
"नाहं ज्येष्ठं नरश्रेष्ठ! विक्रीणीयां कथंचन ।"
ऋचीकस्य वचश्श्रुत्वा तेषां माता महात्मनाम् ॥ १६
उवाच नरशार्दूलमम्बरीषं तपस्विनी ।
"अविक्रेयं सुतं ज्येष्ठं भगवानाह भार्गवः ॥ १७
ममापि दयितं विद्धि कनिष्ठं शुनकं नृप! ।
तस्मात्कनीयसं पुत्रं नदास्ये तव पार्थिव! ॥ १८
प्रायेण हि नरश्रेष्ठ! ज्येष्ठाः पितृषु वल्लभाः ।
मातॄणां तु कनीयांसस्तस्माद्रक्षे कनीयसम् ॥" १९
उक्तवाक्ये मुनौ तस्मिन्मुनिपत्न्यां तथैव च ।
शुनश्शेफस्स्वयं राम! मध्यमो वाक्यमब्रवीत् ॥ २०
"पिताज्येष्ठमविक्रेयं माता चाह कनीयसम् ।
विक्रीतं मध्यमं मन्ये राजन्! पुत्रं नयस्व माम् ॥ २१

गवां शतसहस्रेण शुनश्शेफं नरेश्वरः ।
गृहीत्वा परमप्रीतो जगाम रघुनन्दन! ॥ २२
अम्बरीषस्तु राजर्षी रथमारोप्य सत्वरः ।
शुनश्शेफं महातेजा जगाम सुमहायशाः ॥ २३

इति श्रीमद्बालकाण्डे एकषष्टितमस्सर्गः ॥

## ॥ द्विषष्टितमस्सर्गः ॥

शुनश्शेफं नरश्रेष्ठ! गृहीत्वा तु महायशाः ।
व्यश्राम्यत्पुष्करे राजा मध्याह्ने रघुनन्दन! ॥ १
तस्य विश्रममाणस्य शुनश्शेफो महायशाः ।
पुष्करक्षेत्र मासाद्य विश्वामित्रं ददर्शह ॥ २
तप्यन्त मृषिभि स्साधं मातुलं परमातुरः ।
विषण्णवदनो दीन स्तृष्णया च श्रमेण च ॥ ३
पपाताङ्कमुनेराशुवाक्यं चेदमुवाचह ।
"नमेऽस्ति मातानापिता ज्ञातयो बान्धवाः कुतः? ॥ ४
त्रातु मर्हसि मां सौम्य! धर्मेण मुनिपुङ्गव! ।
त्राता त्वं हि मुनिश्रेष्ठ! सर्वेषां त्वं हि भावनः ॥ ५
राजाच कृतकार्यस्स्यादहं दीर्घायु रव्ययः ।
स्वर्गलोक मुपाश्नीयां तप स्तप्त्वा ह्यनुत्तमम् ॥ ६
त्व मे नाथोह्यनाथस्य भव भव्येन चेतसा ।
पितेव पुत्रं धर्मात्मं! त्रातु मर्हसि किल्बिषात ॥ ७

तस्य तद्वचनं श्रुत्वा विश्वामित्रो महातपाः ।
सान्त्वयित्वा बहुविधं पुत्रानिद मुवाच ह ॥ ८
"यत्कृते पितरः पुत्रान्जनयन्ति शुभार्थिनः ।
परलोकहितार्थाय तस्य कालोऽय मागतः ॥ ९
अयं मुनिसुतो बालो मत्तश्शरणमिच्छति ।
अस्यजीवितमात्रेण प्रियं कुरुत पुत्रकाः ! ॥ १०
सर्वेसुकृतकर्माण स्सर्वे धर्मपरायणाः ।
पशुभूता नरेन्द्रस्य तृप्तिमग्नेः प्रयच्छत ॥ ११
नाथवांश्च शुनश्शेफो यज्ञश्चाविघ्नितो भवेत् ।
देवतास्तर्पिताश्च स्युर्मम चापि कृतं वचः ॥" १२
मुनेस्तु वचनं श्रुत्वा मधुष्यन्दादयस्सुताः ।
साभिमानं नरश्रेष्ठ ! सलील मिद मब्रुवन् ॥ १३
"कथ मात्मसुतान् हित्वा त्रायसेऽन्यसुतं विभो ! ।
अकार्य मिव पश्याम श्वमांस मिव भोजने ॥" १४
तेषां तद्वचनं श्रुत्वा पुत्राणां मुनिपुङ्गवः ।
क्रोधसंरक्तनयनो व्याहर्तु मुपचक्रमे ॥ १५
"निस्साध्वसमिदं प्रोक्तं धर्मादपि विगर्हितम् ।
अतिक्रम्य तु मद्वाक्यं दारुणं रोमहर्षणम् ॥ १६
श्वमांसभोजिन स्सर्वे वासिष्ठा इव जातिषु ।
पूर्णं वर्षसहस्रं तु पृथिव्यामनुवत्स्यथ ॥" १७
कृत्वा शापसमायुक्तान् पुत्रान्मुनिवरस्तथा ।
शुनश्शेफ मुवाचार्तं कृत्वा रक्षां निरामयाम् ॥ १८

[इद माह नरश्रेष्ठ! विश्वामित्रो महातपाः ।]
"पवित्रपाशै रासक्तो रक्तमाल्यानुलेपनः ॥ १९
वैष्णवं यूप मासाद्य वाग्भिरग्निमुदाहर ।
इमे तु गाथे द्वे दिव्ये गायेथा मुनिपुत्रक! ॥ २०
अम्बरीषस्य यज्ञेऽस्मि स्तत स्सिद्धि माप्स्यसि ।"
शुनश्शेफो गृहीत्वा ते गाथे द्वे सुसमाहितः ॥ २१
त्वरया राजसिंहं त मम्बरीष मुवाच ह ।
"राजसिंह! महासत्व! शीघ्रं गच्छावहे सदः ॥ २२
निर्वर्तयस्व राजेन्द्र! दीक्षां च समुपाविश ।"
तद्वाक्यं मुनिपुत्रस्य श्रुत्वा हर्षसमुत्सुकः ॥ २३
जगाम नृपति श्शीघ्रं यज्ञवाटमतन्द्रितः ।
सदस्यानुमते राजा पवित्रकृतलक्षणम् ॥ २४
पशुं रक्ताम्बरं कृत्वा यूपे तं समबन्धयत् ।
सबद्धो वाग्भि रग्र्याभि रभितुष्टाववै सुरौ ॥ २५
इन्द्र मिन्द्रानुजं चैव यथावन्मुनिपुत्रकः ।
ततः प्रीत स्सहस्राक्षो रहस्यस्तुतितर्पितः ॥ २६
दीर्घमायुस्तदा प्रादा च्छुनश्शेफाय राघव! ।
सच राजा नरश्रेष्ठ! यज्ञस्य च समाप्तवान् ॥ २७
फलं बहुगुणं राम! सहस्राक्षप्रसादजम् ।
विश्वामित्रोऽपि धर्मात्मा भूयस्तेपे महातपाः ॥ २८
पुष्करेषु नरश्रेष्ठ! दशवर्षशतानिच ॥

॥ इति श्रीमद्बालकाण्डे द्विषष्टितमस्सर्गः ॥



## ॥ त्रिषष्टितमस्सर्गः ॥

पूर्णे वर्षसहस्रेतु व्रतस्नातं महामुनिम् ।
अभ्यागच्छन्सुरास्सर्वे तपःफलचिकीर्षवः ॥ १
अब्रवीत्सुमहातेजा ब्रह्मा सुरुचिरं वचः ।
"ऋषिस्त्व मसि भद्रंते स्वार्जितैः कर्मभि श्शुभैः ॥" २
त मेव मुक्त्वा देवेश स्त्रिदिवं पुन रभ्यगात् ।
विश्वामित्रो महातेजा भूयस्तेपे महत्तपः ॥ ३
ततः कालेन महता मेनका परमाप्सराः ।
पुष्करेषु नरश्रेष्ठ! स्नातुं समुपचक्रमे ॥ ४
तां ददर्श महातेजा मेनकां कुशिकात्मजः ।
रूपेणाप्रतिमां तत्र विद्युतं जलदे यथा ॥ ५
दृष्ट्वा कंदर्पवशगो मुनिस्तामिदमब्रवीत् ।
"अप्सर! स्स्वागतं तेऽस्तु वस चेह ममाश्रमे ॥ ६
अनुगृह्णीष्व भद्रंते मदनेन सुमोहितम् ।"
इत्युक्ता सावरारोहा तत्राऽवास मथाकरोत् ॥ ७
[तपसो हि महाविघ्नो विश्वामित्र मुपागतः ।]
तस्यां वसन्त्यां वर्षाणि पञ्चपञ्चच राघव! ॥ ८
विश्वामित्राश्रमे राम! सुखेन व्यतिचक्रमुः ।
अथ काले गते तस्मिन्विश्वामित्रो महामुनिः ॥ ९
सव्रीळ इव संवृत्तश्चिन्ताशोकपरायणः ।
बुद्धिर्मुने स्समुत्पन्ना सामर्षा रघुनन्दन! ॥ १०

" सर्वं सुराणां कर्मैतत्तपोऽपहरणं महत् ।
अहोरात्रापदेशेन गता स्संवत्सरादश ॥ ११
काममोहाभिभूतस्य विघ्नोऽयं प्रत्युपस्थितः ।"
विनिश्वसन्मुनिवरः पश्चात्तापेन दुःखितः ॥ १२
भीतामप्सरसं दृष्ट्वा वेपन्तीं प्राञ्जलिं स्थिताम् ।
मेनकां मधुरै र्वाक्यैर्विसृज्य कुशिकात्मजः ॥ १३
उत्तरं पर्वतं राम! विश्वामित्रो जगाम ह ।
स कृत्वानैष्ठिकीं बुद्धिं जेतुकामो महायशाः ॥ १४
कौशिकीतीर मासाद्य तपस्तेपे सुदारुणम् ।
तस्य वर्षसहस्रं तु घोरं तप उपासतः ॥ १५
उत्तरे पर्वते राम! देवताना मभूद्भयम् ।
आमन्त्रय न्समागम्य सर्वे सर्षिगणास्सुराः ॥ १६
" महर्षिशब्दं लभतां साध्वयं कुशिकात्मजः ।"
देवतानां वच श्श्रुत्वा सर्वलोकपितामहः ॥ १७
अब्रवीन्मधुरं वाक्यं विश्वामित्रं तपोधनम् ।
" महर्षे! स्वागतं वत्स! तपसोग्रेण तोषितः ॥ १८
महत्त्व मृषिमुख्यत्वं ददामितवकौशिक ।"
ब्रह्मण स्स वच श्श्रुत्वा सर्वलोकेश्वरस्य ह ॥ १९
न विषण्णो न संतुष्टो विश्वामित्रस्तपोधनः ।
प्राञ्जलिः प्रणतो भूत्वा सर्वलोकपितामहम् ॥ २०
प्रत्युवाच ततो वाचा विश्वामित्रो महामुनिः ।
" महर्षिशब्द मतुलं स्वार्जितैः कर्मभिश्शुभैः ॥ २१

यदिमे भगवानाह ततोऽहं विजितेन्द्रियः ।
त मुवाच ततो ब्रह्मा न तावत्त्वं जितेन्द्रियः ॥ २२
यतस्व मुनिशार्दूल!" इत्युक्त्वा त्रिदिवं गतः ।
विप्रस्थितेषु देवेषु विश्वामित्रो महामुनिः ॥ २३
ऊर्ध्वबाहु र्निरालम्बो वायुभक्षस्तपश्चरन् ।
घर्मे पञ्चतपा भूत्वा वर्षास्वाकाशसंश्रयः ॥ २४
शिशिरे सलिलस्थायी रात्र्यहानि तपोधनः ।
एवं वर्षसहस्रं हि तपो घोर मुपागमत् ॥ २५
तस्मिन्सन्तप्यमाने तु विश्वामित्रे महामुनौ ।
सम्भ्रम स्सुमहानासी त्सुराणां वासवस्य च ॥ २६
रम्भामप्सरसं शक्र स्सह स्सर्वैर्मरुद्गणैः ।
उवाचात्महितं वाक्य महितं कौशिकस्य च ॥ २७

इति श्रीमद्बालकाण्डे त्रिषष्टितमस्सर्गः ॥

---

## ॥ चतुष्षष्टितमस्सर्गः ॥

"सुरकार्य मिदं रम्भे! कर्तव्यं सुमहत्त्वया ।
लोभनं कौशिकस्येह काममोहसमन्वितम् ॥" १
तथोक्ता साऽप्सरा राम! सहस्राक्षेण धीमता ।
व्रीडिता प्राञ्जलि र्वाक्यं प्रत्युवाच सुरेश्वरम् ॥ २
"अयं सुरपते! घोरो विश्वामित्रो महामुनिः ।
घोरमुत्स्रृजते क्रोधं मयि देव! न संशयः ॥ ३

ततो हि मे भयं देव! प्रसादं कर्तु मर्हसि ।"
एवमुक्तस्तया राम! रम्भया भीतया तदा ॥ ४
ता मुवाच सहस्राक्षो वेपमानां कृताञ्जलिम् ।
"माभैषिरम्भे! भद्रं ते कुरुष्व मम शासनम् ॥ ५
कोकिलो हृदयग्राही माधवे रुचिरद्रुमे ।
अहं कन्दर्पसहित स्स्थास्यामि तव पार्श्वतः ॥ ६
त्वं हि रूपं बहुगुणं कृत्वा परमभास्वरम् ।
तमृषिं कौशिकं रम्भे! भेदयस्व तपस्विनम् ॥" ७
सा श्रुत्वा वचनं तस्य कृत्वा रूप मनुत्तमम् ।
लोभयामास ललिता विश्वामित्रं शुचिस्मिता ॥ ८
कोकिलस्य तु शुश्राव वल्गुव्याहरतस्स्वनम् ।
सम्प्रहृष्टेन मनसा तत एना मुदैक्षत ॥ ९
अथ तस्यच शब्देन गीतेनाप्रतिमेन च ।
दर्शनेनच रम्भाया मुनि स्संदेह मागतः ॥ १०
सहस्राक्षस्य तत्कर्म विज्ञाय मुनिपुङ्गवः ।
रम्भां क्रोधसमाविष्ट श्शशाप कुशिकात्मजः ॥ ११
"यन्मां लोभयसे रम्भे! कामक्रोधजयैषिणम् ।
दशवर्षसहस्राणि शैली स्थास्यसि दुर्भगे! ॥ १२
ब्राह्मण स्सुमहातेजा स्तपोबलसमन्वितः ।
उद्धरिष्यति रम्भे! त्वं मत्क्रोधकलुषीकृताम् ॥" १३
एवमुक्त्वा महातेजा विश्वामित्रो महामुनिः ।
अशक्नुवन्धारयितुं क्रोधं सन्तापमागतः ॥ १४

तस्य शापेन महता रम्भा शैली तदाऽभवत् ।
वच श्श्रुत्वातु कन्दर्पो महर्षे स्सच निर्गतः ॥ १५
कोपेन स महातेजा स्तपोपहरणेकृते ।
इन्द्रियैराजितै राम! न लेभे शान्ति मात्मनः ॥ १६
बभूवास्य पुनश्चिन्ता तपोऽपहरणे कृते ।
"नैव क्रोधं गमिष्यामि नच वक्ष्ये कथंचन ॥ १७
अथवा नोच्छ्वसिष्यामि संवत्सरशतान्यपि ।
अहं विशोष यिष्यामि चात्मानं विजितेन्द्रियः ॥ १८
तावद्यावद्धिमे प्राप्तं ब्राह्मण्यं तपसाऽऽर्जितम् ।
अनुच्छ्वसन्नभुंजानास्तिष्ठेयं शाश्वतीस्समाः ॥ १९
न हि मे तप्यमानस्य क्षयं यास्यन्ति मूर्तयः ।"
एवं वर्षसहस्रस्य दीक्षां स मुनिपुङ्गवः ॥ २०
चकाराप्रतिमां लोके प्रतिज्ञां रघुनन्दन! ॥

इति श्रीमद्बालकाण्डे चतुष्षष्टितमस्सर्गः ॥

---

## ॥ पञ्चषष्टितमस्सर्गः ॥

अथ हैमवतीं राम! दिशं त्यक्त्वा महामुनिः ।
पूर्वांदिश मनुप्राप्य तपस्तेपे सुदारुणम् ॥ १
मौनं वर्षसहस्रस्य कृत्वा व्रत मनुत्तमम् ।
चकाराप्रतिमं राम! तपः परमदुष्करम् ॥ २
पूर्णे वर्षसहस्रेतु काष्ठभूतं महामुनिम् ।
विघ्नैर्बहुभि राधूतं क्रोधो नान्तर माविशत् ॥ ३

स कृत्वा निश्चयं राम! तप आतिष्ठदव्ययम् ।
तस्य वर्षसहस्रस्य व्रते पूर्णे महाव्रतः ॥ ४
भोक्तुमारब्धवानन्नं तस्मिन्काले रघूत्तम! ।
इन्द्रो द्विजातिर्भूत्वा तं सिद्ध मन्न मयाचत ॥ ५
तस्मै दत्वा तदा सिद्धं सर्वं विप्राय निश्चितः ।
निश्शेषितेऽन्ने भगवा नभुक्त्वैव महातपाः ॥ ६
नकिंचि द्वद द्विप्रं मौनव्रत मुपास्थितः ।
[तथैवासी त्पुनर्मौन मनुच्छ्वासं चकार ह ॥] ७
अथ वर्षसहस्रं वै नोच्छ्वसन्मुनिपुङ्गवः ।
तस्यानुच्छ्वसमानस्य मूर्ध्नि धूमो व्यजायत ॥ ८
त्रैलोक्यं येन संभ्रान्त मादीपितमिवाभवत् ।
ततो देवा स्सगन्धर्वाः पन्नगासुरराक्षसाः ॥ ९
मोहितास्तेजसा तस्य तपसा मन्दरश्मयः ।
कश्मलोपहतास्सर्वेपितामहमथाब्रुवन् ॥ १०
“ बहुभिः कारणैर्देव! विश्वामित्रो महामुनिः ।
लोभितःक्रोधितश्चैव तपसा चाभिवर्धते ॥ ११
न ह्यस्य वृजिनं किंचि दृश्यते सूक्ष्म मप्यथ ।
न दीयते यदि त्वस्य मनसा यदभीप्सितम् ॥ १२
विनाशयति त्रैलोक्यं तपसा सचराचरम् ।
व्याकुलाश्च दिश स्सर्वा न च किञ्चित्प्रकाशते ॥ १३
सागराः क्षुभिता स्सर्वे विशीर्यन्ते च पर्वताः ।
प्रकम्पते च पृथिवी वायु र्वाति भृशाकुलः ॥ १४

ब्रह्मन्! न प्रतिजानीमो नास्तिको जायते जनः ।
सम्मूढमिव त्रैलोक्यं सम्प्रक्षुभितमानसम् ॥ १५
भास्करो निष्प्रभश्चैव महर्षेस्तस्य तेजसा ।
बुद्धिं न कुरुते याव न्नाशे देव! महामुनिः ॥ १६
तावत्प्रसाद्यो भगवानग्निरूपो महाद्युतिः ।
कालाग्निनायथा पूर्वं त्रैलोक्यं दह्यतेऽखिलम् ॥ १७
देवराज्यं चिकीर्षेत दीयता मस्य यन्मतम् ।"
तत स्सुरगणा स्सर्वे पितामहपुरोगमाः ॥ १८
विश्वामित्रं महात्मानं मधुरं वाक्य मब्रुवन् ।
"ब्रह्मर्षे! स्वागतं तेऽस्तु तपसा स्म सुतोषिताः ॥ १९
ब्राह्मण्यं तपसोग्रेण प्राप्तवा नसि कौशिक! ।
दीर्घमायुश्च ते ब्रह्मन्! ददामि समरुद्गणः ॥ २०
स्वस्ति प्राप्नु हि भद्रंते गच्छ सौम्य! यथासुखम् ।"
पितामहवच श्श्रुत्वा सर्वेषां च दिवौकसाम् ॥ २१
कृत्वा प्रणामं मुदितो व्याजहार महामुनिः ।
"ब्राह्मण्यं यदि मे प्राप्तं दीर्घमायु स्तथैव च ॥ २२
ओङ्कारश्च वषट्कारो वेदाश्च वरयन्तु माम् ।
क्षत्रवेदविदां श्रेष्ठो ब्रह्मवेदविदा मपि ॥ २३
ब्रह्मपुत्रो वसिष्ठो मा मेवं वदतु देवताः! ।
यद्ययं परमःकामः कृतो यान्तु सुरर्षभाः" २४
ततः प्रसादितो देवै र्वसिष्ठो जपतां वरः ।
सख्यं चकार ब्रह्मर्षि "रेव मस्त्विति चाब्रवीत् ॥ २५

ब्रह्मर्षि स्त्वं नसंदेह स्सर्वं सम्पत्स्यते तव ।
इत्युक्त्वा देवता श्चापि सर्वा जग्मुर्यथाऽऽगतम् ॥ २६
[विश्वामित्रोऽपि धर्मात्मा लब्ध्वा ब्राह्मण्य मुत्तमम् ।
पूजयामास ब्रह्मर्षिं वसिष्ठं जपतां वरम् ॥ २७
कृतकामो महीं सर्वां चचार तपसि स्थितः ।]
एवं त्वनेन ब्राह्मण्यं प्राप्तं राम! महात्मना ॥ २८
एष राम! मुनिश्रेष्ठ एष विग्रहवां स्तपः ।
एष धर्मपरो नित्यं वीर्यस्यैष परायणम् ॥" २९
एव मुक्त्वा महातेजा विरराम द्विजोत्तमः ।
शतानन्दवचश्श्रुत्वा रामलक्ष्मणसन्निधौ ॥ ३०
जनकः प्राञ्जलि र्वाक्य मुवाच कुशिकात्मजम् ।
"धन्योऽस्म्यनुगृहीतोऽस्मि यस्य मे मुनिपुङ्गव! ॥ ३१
यज्ञं काकुत्स्थसहितः प्राप्तवानसि धार्मिक! ।
पालितोऽहं त्वया ब्रह्मन्दर्शनेन महामुने! ॥ ३२
[विश्वामित्र! महाभाग! ब्रह्मर्षीणां वरोत्तम ।]
गुणाब्रहुविधाः प्राप्ता स्तव सन्दर्शनान्मया ॥ ३३
विस्तरेण च ते ब्रह्मन् कीर्त्यमानं महत्तपः ।
श्रुतं मया महातेजो! रामेण च महात्मना ॥ ३४
सदस्यैः प्राप्य च सदश्श्रुता स्ते बहवो गुणाः ।
अप्रमेयं तपस्तुभ्य मप्रमेयं च ते बलम् ॥ ३५
अप्रमेया गुणा श्चैव नित्यं ते कुशिकात्मज! ।
[पितामहस्य च यथा यथा चैव ह्युमापतेः ॥] ३६

तृप्ति राश्चर्यभूतानां कथानां नास्ति मे विभो! ।
कर्मकालो मुनिश्रेष्ठ! लम्बते रविमण्डलम् ॥ ३७
श्वः प्रभाते महातेजो द्रष्टु मर्हसि मां पुनः ।
स्वागतं तपतां श्रेष्ठ! मामनुज्ञातु मर्हसि ॥" ३८
एव मुक्तो मुनिवरः प्रशस्य पुरुषर्षभम् ।
विससर्जाशु जनकं प्रीतं प्रीतमनास्तदा ॥ ३९
एव मुक्त्वा मुनिश्रेष्ठं वैदेहो मिथिलाधिपः ।
प्रदक्षिणं चकाराशु सोपाध्यायस्सबान्धवः ॥ ४०
विश्वामित्रोऽपि धर्मात्मा सहराम स्सलक्ष्मणः ।
स्ववाट मभिचक्राम पूज्यमानो महर्षिभिः ॥ ४१

॥ इति श्रीमद्बालकाण्डे पञ्चषष्टितमस्सर्ग. ॥

---

## ॥ षट्षष्टितमस्सर्गः ॥

ततः प्रभाते विमले कृतकर्मा नराधिपः ।
विश्वामित्रं महात्मान माजुहाव स राघवम् ॥ १
त मर्चयित्वा धर्मात्मा शास्त्रदृष्टेन कर्मणा ।
राघवौ च महात्मानौ तदा वाक्य मुवाच ह ॥ २
"भगवं! स्वागतं तेऽस्तु किं करोमि तवानघ! ।
भवानाज्ञापयतु मा माज्ञाप्यो भवताप्यहम् ॥" ३
एव मुक्त स्स धर्मात्मा जनकेन महात्मना ।
प्रत्युवाच मुनिर्वीरं वाक्यं वाक्यविशारदः ॥ ४

"पुत्रौ दशरथस्येमौ क्षत्रियौ लोकविश्रुतौ ।
द्रष्टुकामौ धनुश्श्रेष्ठं यदेतत्त्वयि तिष्ठति ॥ ५
एत द्दर्शय भद्रंते कृतकामौ नृपात्मजौ ।
दर्शनादस्य धनुषो यथेष्टं प्रतियास्यतः ॥" ६
एव मुक्तस्तु जनकः प्रत्युवाच महामुनिम् ।
श्रूयता मस्य धनुषो यदर्थ मिह तिष्ठति ॥ ७
देवरात इतिख्यातो निमेष्षष्ठो महीपतिः ।
न्यासोऽयं तस्य भगवन! हस्ते दत्तो महात्मना ॥ ८
दक्षयज्ञवधे पूर्व धनुरायम्य वीर्यवान् ।
रुद्रस्तु त्रिदशान्रोषात्सलील मिदमब्रवीत् ॥ ९
"यस्मा द्भागार्थिनो भागान्न कल्पयथ मे सुराः! ।
वरांगानि महार्हाणि धनुषा शातयामि वः ॥" १०
ततो विमनस स्सर्वे देवा वै मुनिपुङ्गव! ।
प्रसादयन्ति देवेशं तेषां प्रीतोऽभवद्भवः ॥ ११
प्रीतियुक्तस्स सर्वेषां ददौ तेषां महात्मनाम् ।
तदेत द्देवदेवस्य धनूरत्नं महात्मनः ॥ १२
न्यासभूतं तदान्यस्त मस्माकं पूर्वके विभो ।
अथ मे कृषतः क्षेत्रं लाङ्गला दुत्थिता मया ॥ १३
क्षेत्रं शोधयता लब्धा नाम्ना सीतेति विश्रुता ।
भूतला दुत्थिता सातु व्यवर्धत ममात्मजा ॥ १४
वीर्यशुल्केति मे कन्या स्थापितेय मयोनिजा ।
भूतला दुत्थितां तां तु वर्धमानां ममात्मजाम् ॥ १५

वरयामासु रागम्य राजानो मुनिपुङ्गव! ।
तेषां वरयतां कन्यां सर्वेषां पृथिवीक्षिताम् ॥ १६
वीर्यशुल्केति भगव! न्नददामि सुतामहम् ।
ततस्सर्वे नृपतय स्समेत्य मुनिपुङ्गव! ॥ १७
मिथिला मभ्युपागम्य वीर्यजिज्ञासवस्तदा ।
तेषां जिज्ञासमानानां वीर्यं धनुरुपाहृतम् ॥ १८
नशेकु र्ग्रहणे तस्य धनुषस्तोलनेऽपि वा ।
तेषां वीर्यवतां वीर्य मल्पं ज्ञात्वा महामुने ॥ १९
प्रत्याख्याता नृपतयस्तं निबोध तपोधन! ।
ततः परमकोपेन राजानो मुनिपुङ्गव! ॥ २०
न्यरुन्धन्मिथिलां सर्वे वीर्यसंदेहमागताः ।
आत्मान मवधूतं ते विज्ञाय नृपपुङ्गवाः ॥ २१
रोषेण महताऽऽविष्टाः पीडयन्मिथिलां पुरीम् ।
तत स्संवत्सरे पूर्णे क्षयं यातानि सर्वशः ॥ २२
साधनानि मुनिश्रेष्ठ! ततोऽहं भृशदुःखितः ।
ततो देवगणा न्सर्वा स्तपसाऽहं प्रसादये ॥ २३
ददुश्च परमप्रीता श्चतुरङ्गबलं सुराः ।
ततोभग्ना नृपतयो हन्यमाना दिशो ययुः ॥ २४
अवीर्या वीर्यसंदिग्धास्सामात्याः पापकर्मणः ।
तदेतन्मुनिशार्दूल! धनुः परमभास्वरम् ॥ २५

रामलक्ष्मणयो श्चापि दर्शयिष्यामि सुव्रत! ।
यद्यस्य धनुषो रामः! कुर्यादारोपणं मुने ॥ २६
सुता मयोनिजां सीतां दद्यां दाशरथे रहम् ।

इति श्रीमद्बालकाण्डे षट्षष्टितमस्सर्ग. ॥

## ॥ सप्तषष्टितमस्सर्गः ॥

जनकस्य वच श्शुत्वा विश्वामित्रो महामुनिः ।
"धनुर्दर्शय रामाय" इतिहोवाच पार्थिवम् ॥ १
तत स्स राजा जनक स्सचिवान्व्यादिदेश ह ।
"धनु रानीयतां दिव्यं गन्धमाल्यविभूषितम्" ॥ २
जनकेन समादिष्टास्सचिवाः प्राविशन्पुरीम् ।
तद्धनुः पुरतः कृत्वा निर्जग्मुः पार्थिवाज्ञया ॥ ३
नृणां शतानि पञ्चाशद्व्यायतानामहात्मनाम् ।
मंजूषामष्टचक्रांतांसमूहुस्ते कथचन ॥ ४
ता मादाय तु मंजूषा मायसीं यत्रतद्धनुः ।
सुरोपमं ते जनक मूचुर्नृपतिमन्त्रिणः ॥ ५
"इदं धनुर्वरं राजन्! पूजितं सर्वराजभिः ।
मिथिलाधिप! राजेन्द्र! दर्शनीयं यदिच्छसि ॥" ६
तेषां नृपो वचश्शुत्वा कृताञ्जलि रभाषत ।
विश्वामित्रं महात्मानं तौ चोभौ रामलक्ष्मणौ ॥ ७
"इदं धनुर्वरं ब्रह्मन्! जनकै रभिपूजितम् ।
राजभि श्च महावीर्यै रशक्तैः पूरितुं पुरा ॥ ८

नैतत्सुरगणा स्सर्वे नासुरा न च राक्षसाः ।
गन्धर्वयक्षप्रवरा स्सकिन्नरमहोरगाः ॥ ९
क्व गतिर्मानुषाणां तु धनुषोऽस्यप्रपूरणे ।
आरोपणे समायोगे वेपने तोलनेऽपि वा ॥ १०
तदेतद्धनुषां श्रेष्ठ मानीतं मुनिपुङ्गव! ।
दर्शयैतन्महाभाग! अनयो राजपुत्रयोः ॥" ११
विश्वामित्रस्तु धर्मात्मा श्रुत्वा जनकभाषितम् ।
"वत्स! राम धनुः पश्य" इति राघव मब्रवीत् ॥ १२
ब्रह्मर्षे र्वचना द्रामो यत्र तिष्ठति तद्धनुः ।
मंजूषां तामपावृत्य दृष्ट्वा धनुरथाब्रवीत् ॥ १३
"इदं धनुर्वरं ब्रह्मन्! संस्पृशामीह पाणिना ।
यत्नवां श्च भविष्यामि तोलने पूरणेऽपि वा ॥" १४
"बाढ"मित्येव तं राजामुनिश्च समभाषत ।
लीलया स धनुर्मध्ये जग्राह वचनान्मुनेः ॥ १५
पश्यतां नृसहस्राणां बहूनां रघुनन्दनः ।
[आरोपयत्स धर्मात्मा सलीलमिव तद्धनुः ॥] १६
आरोपयित्वा धर्मात्मा पूरयामास तद्धनुः ।
तद्बभंज धनुर्मध्ये नरश्रेष्ठो महायशाः ॥ १७
तस्य शब्दो महानासी न्निर्घातसमनिस्वनः ।
भूमिकम्पश्च सुमहान्पर्वतस्येवदीर्यतः ॥ १८
निपेतु श्च नरास्सर्वे तेन शब्देन मोहिताः ।
वर्जयित्वा मुनिवरं राजानं तौ च राघवौ ॥ १९

प्रत्याश्वस्ते जने तस्मि न्राजा विगतसाध्वसः ।
उवाच प्राञ्जलि र्वाक्यं वाक्यज्ञो मुनिपुङ्गवम् ॥ २०
"भगव! न्दृष्टवीर्यो मे रामो दशरथात्मजः ।
अत्यद्भुत मचिन्त्यं च न तर्कितमिदं मया ॥ २१
जनकानां कुले कीर्ति माहरिष्यति मे सुता ।
सीता भर्तारमासाद्य रामं दशरथात्मजम् ॥ २२
मम सत्या प्रतिज्ञा च वीर्यशुल्केति कौशिक! ।
सीता प्राणै र्बहुमता देया रामाय मे सुता ॥ २३
भवतोऽनुमते ब्रह्मन्शीघ्रं गच्छन्तु मन्त्रिणः ।
मम कौशिक! भद्रं ते अयोध्यां त्वरिता रथैः ॥ २४
राजानं प्रश्रितै र्वाक्यै रानयन्तु पुरं मम ।
प्रदानं वीर्यशुल्कायाः कथयन्तु च सर्वशः ॥ २५
मुनिगुप्तौ च काकुत्स्थौ कथयन्तु नृपाय वै ।
प्रीयमाणं तु राजान मानयन्तु सुशीघ्रगाः ॥" २६
कौशिक श्च "तथे"त्याह राजा चाभाष्य मन्त्रिणः ।
अयोध्यां प्रेषयामास धर्मात्मा कृतशासनान् ॥ २७
यथावृत्तं समाख्यातु मानेतुं च नृपं तदा ।

इति श्रीमद्बालकाण्डे सप्तषष्टितमस्सर्गः ॥

---

## ॥ अष्टषष्टितमस्सर्गः ॥

जनकेन समादिष्टादूतास्ते क्लान्तवाहनाः ।
त्रिरात्र मुषिता मार्गे तेऽयोध्यां प्राविशन्पुरीम् ॥ १

[राज्ञो भवन मासाद्य द्वारस्थानिद मब्रुवन ।
"शीघ्रं निवेद्यतां राज्ञे दूतान्नो जनकस्य च ॥" २
इत्युक्त्वा द्वारपालास्ते राघवाय न्यवेदयन् ।]
ते राजवचना दूता राजवेश्म प्रवेशिताः ॥ ३
ददृशु र्देवसंकाशं वृद्धं दशरथं नृपम् ।
बद्धाञ्जलिपुटा स्सर्वे दूता विगतसाध्वसाः ॥ ४
राजानं प्रयता वाक्य मब्रुवन्मधुराक्षरम् ।
"मैथिलो जनको राजा साग्निहोत्रपुरस्कृतम् ॥ ५
कुशलं चाव्ययं चैव सोपाध्यायपुरोहितम् ।
मुहुर्मुहुर्मधुरया स्नेहसंयुक्तया गिरा ॥ ६
जनकस्त्वां महातेजः पृच्छते स पुरस्सरम् ।
पृष्ट्वा कुशलमव्यग्रं वैदेहो मिथिलाधिपः ॥ ७
कौशिकानुमते वाक्यं भवन्तमिदमब्रवीत् ।
पूर्वं प्रतिज्ञा विदिता वीर्यशुल्का ममात्मजा ॥ ८
राजान श्च कृतामर्षा निर्वीर्या विमुखीकृताः ।
सेयं मम सुता राजन्विश्वामित्रपुरस्सरैः ॥ ९
यदृच्छयाऽऽगतै र्वीरै र्निर्जिता तव पुत्रकैः ।
तच्च राजन्! धनुर्दिव्यं मध्ये भग्नं महात्मना ॥ १०
रामेण हि महाराज! महत्यां जनसंसदि ।
अस्मै देया मयासीता वीर्यशुल्का महात्मने ॥ ११
प्रतिज्ञां कर्तु मिच्छामि तदनुज्ञातु मर्हसि ।
सोपाध्यायो महाराज! पुरोहितपुरस्सरः ॥ १२

शीघ्र मागच्छ भद्रंते द्रष्टु मर्हसि राघवौ ।
प्रीति च मम राजेन्द्र निर्वर्तयितु मर्हसि ॥ १३
पुत्रयो रुभयोरेव प्रीति त्व मपि लप्स्यसे ।
"एवं विदेहाधिपति र्मधुरं वाक्यमब्रवीत ॥ १४
विश्वामित्राभ्यनुज्ञात श्शतानन्दमते स्थितः ।"
[इत्युक्त्वा विरता दूताराजगौरवशङ्किताः ॥] १५
दूतवाक्यं तु तच्छ्रुत्वा राजा परमहर्षितः ।
वसिष्ठं वामदेवं च मन्त्रिणोऽन्यां श्च सोऽब्रवीत् ॥ १६
"गुप्तः कुशिकपुत्रेण कौसल्यानन्दवर्धनः ।
लक्ष्मणेन सहभ्राता विदेहेषु वसत्यसौ ॥ १७
दृष्टवीर्य स्तु काकुत्स्थो जनकेन महात्मना ।
सम्प्रदानं सुतायास्तु राघवे कर्तु मिच्छति ॥ १८
यदि वो रोचते वृत्तं जनकस्य महात्मनः ।
पुरीं गच्छामहे शीघ्रं माभूत्कालस्य पर्ययः ॥" १९
मन्त्रिणो "बाढ"मित्याहु स्सहसर्वै र्महर्षिभिः ।
सुप्रीत श्चाब्रवी द्राजा "श्वोयात्रे"ति समन्त्रिणः ॥ २०
मन्त्रिण स्तु नरेन्द्रस्य रात्रिं परमसत्कृताः ।
ऊषुस्ते मुदितास्सर्वे गुणै स्सर्वै स्समन्विताः ॥ २१

इति श्रीमद्बालकाण्डे अष्टषष्टितमस्सर्ग. ॥

## ॥ एकोनसप्ततितमस्सर्गः ॥

ततो रात्र्यां व्यतीतायां सोपाध्यायस्सबान्धवः ।
राजा दशरथो हृष्टस्सुमन्त्र मिद मब्रवीत् ॥ १

"अद्य सर्वे धनाध्यक्षा धन मादाय पुष्कलम् ।
व्रजन्त्वग्रे सुविहिता नानारत्नसमन्विताः ॥ २
चतुरङ्गं बलं चापि शीघ्रं निर्यातुसर्वशः ।
ममाज्ञासमकालं च यानयुग्यमनुत्तमम् ॥ ३
वसिष्ठो वामदेवश्चजाबालिरथकाश्यपः ।
मार्कण्डेयस्सुदीर्घायुर्ऋषिः कात्यायनस्तथा ॥ ४
एते द्विजाः प्रयान्त्वग्रे स्यन्दनं योजयस्व मे ।
यथा कालात्ययो नस्याद्दूताहित्वरयन्तिमाम् ॥" ५
वचना च्च नरेन्द्रस्य सा सेना चतुरङ्गिणी ।
राजान मृषिभि स्साधं व्रजन्तं पृष्ठतोऽन्वगात् ॥ ६
गत्वा चतुरहं मार्गं विदेहानभ्युपेयिवान् ।
राजा तु जनक श्श्रीमान् श्रुत्वा पूजा मकल्पयत् ॥ ७
ततो राजान मासाद्य वृद्धं दशरथं नृपम् ।
जनको मुदितो राजा हर्षं च परमं ययौ ॥ ८
उवाच च नरश्रेष्ठो नरश्रेष्ठं मुदाऽन्वितः ।
"स्वागतं ते महाराज! दिष्ट्या प्राप्तोऽसि राघव! ॥ ९
पुत्रयो रुभयोः प्रीति लप्स्यसे वीर्यनिर्जिताम् ।
दिष्ट्या प्राप्तो महातेजा वसिष्ठो भगवानृषिः ॥ १०
सह सर्वैर्द्विजश्रेष्ठै र्देवै रिव शतक्रतुः ।
दिष्ट्या मे निर्जिता विघ्ना दिष्ट्या मे पूजितं कुलम् ॥ ११
राघवै स्सह सम्बन्धा द्वीर्यश्रेष्ठै र्महात्मभिः ।
श्वः प्रभाते नरेन्द्रेन्द्र! निर्वर्तयितु मर्हसि ॥ १२

यज्ञस्यान्ते नरश्रेष्ठ! विवाह मृषिसम्मतम् ।"
तस्य तद्वचनं श्रुत्वा ऋषिमध्ये नराधिपः ॥ १३
वाक्यं वाक्यविदां श्रेष्ठः प्रत्युवाच महीपतिम् ।
"प्रतिग्रहो दातृवश श्श्रुतमेतन्मया पुरा ॥ १४
यथा वक्ष्यसि धर्मज्ञ! तत्करिष्यामहेवयम् ।"
धर्मिष्ठं च यशस्यं च वचनं सत्यवादिनः ॥ १५
श्रुत्वा विदेहाधिपतिः परं विस्मय मागतः
तत स्सर्वे मुनिगणाःपरस्परसमागमे ॥ १६
हर्षेण महता युक्तास्तां निशामवसन सुखम् ।
[अथरामो महातेजा लक्ष्मणेन समं ययौ ॥ १७
कौशिकं च पुरस्कृत्य पितुः पादावुपस्पृशत् ।]
राजाच राघवौ पुत्रौ निशाम्य परिहर्षितः ॥ १८
उवास परमप्रीतो जनकेन सुपूजितः ।
जनकोऽपिमहातेजाः क्रियां धर्मेण तत्त्ववित् ॥ १९
यज्ञस्य च सुताभ्या च कृत्वा रात्रि मुवास ह ॥

इति श्रीमद्बालकाण्डे एकोनसप्ततितमस्सर्गः ॥

---

## ॥ सप्ततितमस्सर्गः ॥

ततः प्रभाते जनकः कृतकर्मा महर्षिभिः ।
उवाच वाक्यं वाक्यज्ञ श्शतानन्दं पुरोहितम् ॥ १
"भ्राता मम महातेजा यवीयानतिधार्मिकः ।
'कुशध्वज' इति ख्यातः पुरीमध्यवसच्छुभाम् ॥ २

वार्याफलकपर्यन्तां पिबन्निक्षुमतीं नदीम् ।
साङ्काश्यां पुण्यसंकाशां विमान मिव पुष्पकम् ॥ ३
तमहं द्रष्टुमिच्छामि यज्ञगोप्ता समे मतः ।
प्रीति सोऽपि महातेजा इमां भोक्ता मया सह ॥ ४
[एव मुक्ते तु वचने शतानन्दस्य सन्निधौ ।
आगताः केचिदव्यग्रा जनकस्तान्समादिशत् ॥] ५
शासनात्तु नरेन्द्रस्य प्रययु श्शीघ्रवाजिभिः ।
समानेतुं नरव्याघ्रं विष्णु मिन्द्राज्ञया यथा ॥ ६
[साङ्काश्या ते समागत्य ददृशुश्च कुशध्वजम् ।
न्यवेदयन्यथावृत्तं जनकस्य च चिन्तितम् ॥ ७
तद्वृत्तं नृपति श्श्रुत्वा दूतश्रेष्ठै महाबलैः ।]
आज्ञयाऽथ नरेन्द्रस्य आजगाम कुशध्वजः ॥ ८
स ददर्श महात्मानं जनक धर्मवत्सलम् ।
सोऽभिवाद्य शतानन्दं राजान चापि धार्मिकम् ॥ ९
राजार्हं परमं दिव्यमासनं चाध्यरोहत ।
उपविष्टा वुभौ तौ तु भ्रातरा वतितेजसौ ॥ १०
प्रेषयामासतु र्वीरौ मन्त्रिश्रेष्ठं सुदामनम् ।
"गच्छ मन्त्रिपते! शीघ्र मैक्ष्वाकुममितप्रभम् ॥ ११
आत्मजै स्सहदुर्धर्ष मानयस्व समन्त्रिणम् ।"
औपकार्यां स गत्वा तु रघूणां कुलवर्धनम् ॥ १२
ददर्श शिरसा चैन मभिवाद्येद मब्रवीत् ।
"अयोध्याधिपते! वीर वैदेहो मिथिलाधिपः ॥ १३

स त्वां द्रष्टुं व्यवसित स्सोपाध्याय पुरोहितम् ।"
मन्त्रिश्रेष्ठवचश्श्रुत्वा राजा सर्षिगणस्तदा ॥ १४
सबन्धुरगमत्तत्र जनको यत्र वर्तते ।
स राजा मन्त्रिसहित स्सोपाध्यायस्सबान्धवः ॥ १५
वाक्यं वाक्यविदां श्रेष्ठो वैदेह मिदमब्रवीत् ।
"विदितं ते महाराज! इक्ष्वाकुकुलदैवतम् ॥ १६
वक्ता सर्वेषु कृत्येषु वसिष्ठो भगवा नृषिः ।
विश्वामित्राभ्यनुज्ञात स्सह सर्वैर्महर्षिभिः ॥ १७
एष वक्ष्यति धर्मात्मा वसिष्ठो मे यथाक्रमम् ।"
एव मुक्त्वा नरश्रेष्ठे राज्ञां मध्ये महात्मनाम् ॥ १८
तूष्णींभूते दशरथे वसिष्ठो भगवानृषिः ।
उवाच वाक्यं वाक्यज्ञो वैदेहं सपुरोधसम् ॥ १९
अव्यक्तप्रभवो ब्रह्मा शाश्वतो नित्य अव्ययः ।
तस्मान्मरीचि स्संजज्ञे मरीचेः काश्यपस्सुतः ॥ २०
विवस्वान्काश्यपाज्जज्ञे मनुर्वैवस्वत स्स्मृतः ।
मनुः प्रजापतिः पूर्वमिक्ष्वाकु स्तु मनो स्सुतः ॥ २१
तमिक्ष्वाकु मयोध्यायां राजानं विद्धि पूर्वकम् ।
इक्ष्वाको स्तु सुतश्श्रीमान्कुक्षिरित्येव विश्रुतः ॥ २२
कुक्षे रथात्मज श्श्रीमान्विकुक्षिरुदपद्यत ।
विकुक्षे स्तु महातेजा बाणः पुत्रः प्रतापवान् ॥ २३
बाणस्य तु महातेजा अनरण्यः प्रतापवान् ।
अनरण्या त्पृथुर्जज्ञे त्रिशङ्कु स्तु पृथोस्सुतः ॥ २४

त्रिशङ्को रभवत्पुत्रो दुंदुमारो महायशाः ।
[दुंदुमारान्महातेजा युवनाश्वो महारथः ॥] २५
युवनाश्वसुतस्त्वासी न्मान्धाता पृथिवीपतिः ।
मान्धातुस्तु सुतश्श्रीमान्सुसन्धि रुदपद्यत ॥ २६
सुसन्धे रपिपुत्रौ द्वौ ध्रुवसन्धिः प्रसेनजित् ।
यशस्वी ध्रुवसन्धे स्तु भरतो नाम नामतः ॥ २७
भरतात्तु महातेजा असितो नाम जातवान् ।
यस्यैते प्रतिराजान उदपद्यन्त शत्रवः ॥ २८
हैहया स्तालजङ्घाश्च शूराश्च शशिबिन्दवः ।
तांस्तु स प्रतियुद्ध्यन्वै युद्धे राजा प्रवासितः ॥ २९
हिमवन्त मुपागम्य भृगुप्रस्रवणेऽवसत् ।
असितोऽल्पबलोराजा मन्त्रिभि स्सहित स्तदा ॥ ३०
द्वेचास्य भार्ये गर्भिण्यौ बभूवतु रितिश्रुतम् ।
एका गर्भविनाशाय सपत्न्यै सगरन्ददौ ॥ ३१
तत श्शैलवरं रम्यं बभूवाभिरतो मुनिः ।
भार्गवच्यवनो नाम हिमवन्त मुपाश्रितः ॥ ३२
तत्रैकातु महाभागा भार्गवं देववर्चसम् ।
ववन्दे पद्मपत्राक्षी कांक्षन्ती सुतमात्मनः ॥ ३३
त मृषि साऽभ्युपागम्य कालिन्दी चाभ्यवादयत् ।
सतामभ्यवदद्विप्रः पुत्रेप्सुं पुत्रजन्मनि ॥ ३४
"तव कुक्षौ महाभागे ! सुपुत्र स्सुमहाबलः ।
महावीर्यो महातेजा अचिरात्संजनिष्यति ॥ ३५

गरेण सहित इश्रीमान्माशुचः कमलेक्षणे ।"
[एव मुक्ता महातेजा असिते स्वर्गते सति ॥ ३६
विधाय चेतो नृपतौ विद्युल्लेखेव सुप्रभा ।]
च्यवनं तु नमस्कृत्य राजपुत्री पतिव्रता ॥ ३७
पतिशोकातुरा तस्मात्पुत्रं देवी व्यजायत ।
सपत्न्यातु गरस्तस्यै दत्तो गर्भजिघांसया ॥ ३८
सह तेन गरेणैव जात स्स सगरोऽभवत् ।
सगरस्यासमञ्जस्तु असमञ्जादथांशुमान ॥ ३९
दिलीपोऽशुमतः पुत्रोदिलीपस्य भगीरथः ।
भगीरथा त्ककुत्स्थश्च ककुत्स्थस्य रघुस्सुतः ॥ ४०
रघोस्तु पुत्रस्तेजस्वी प्रवृद्धः पुरुषादकः ।
कल्माषपादो ह्यभवत्तस्मा ज्ञातस्तु शखणः ॥ ४१
सुदर्शन इशंखणस्य चाग्निवर्ण स्सुदर्शनात् ।
शीघ्रगस्त्वग्निवर्णस्य शीघ्रगस्य मरु स्सुतः ॥ ४२
मरोः प्रशुश्रुकस्त्वासी दम्बरीषः प्रशुश्रुकात् ।
अम्बरीषस्य पुत्रोऽभून्नहुषः पृथिवीपतिः ॥ ४३
नहुषस्य ययाति स्तु नाभागस्तु ययातिजः ।
नाभागस्य बभूवाजश्चाजाद्दशरथोऽभवत् ॥ ४४
अस्माद्दशरथाज्जातौ भ्रातरौ रामलक्ष्मणौ ।
आदिवंशविशुद्धानां राज्ञां परमधर्मिणाम् ॥ ४५

इक्ष्वाकुकुलजातानां वीराणां सत्यवादिनाम् ।
रामलक्ष्मणयो रर्थे त्वत्सुते वरये नृप ! ॥ ४६
सदृशाभ्यां नरश्रेष्ठ ! सदृश्यौ दातु मर्हसि ॥

इति श्रीमद्बालकाण्डे सप्ततितमस्सर्ग ॥

## ॥ एकसप्ततितमस्सर्गः ॥

एवं ब्रुवाणं जनकः प्रत्युवाच कृताञ्जलिः ।
"श्रोतु मर्हसि भद्रते कुलं नः परिकीर्तितम् ॥ १
प्रदाने हि मुनिश्रेष्ठ कुलं निरवशेषतः ।
वक्तव्य कुलजातेन तन्निबोध महामुने ॥ २
राजाऽभूत्त्रिषु लोकेषु विश्रुतस्स्वेन कर्मणा ।
निमिः परमधर्मात्मा सर्वसत्ववतां वरः ॥ ३
तस्य पुत्रो मिथिर्नाम मिथिला येन निर्मिता ।
प्रथमो जनको नाम जनकादप्युदावसुः ॥ ४
उदावसो स्तु धर्मात्मा जातो वै नन्दिवर्धनः ।
नन्दिवर्धनपुत्रस्तु सुकेतु र्नाम नामतः ॥ ५
सुकेतो रपि धर्मात्मा देवरातो महाबलः ।
देवरातस्य राजर्षे र्बृहद्रथ इतिस्मृतः ॥ ६
बृहद्रथस्य शूरोऽभून्महावीरः प्रतापवान् ।
महावीरस्य धृतिमान्सुधृति स्सत्यविक्रमः ॥ ७
सुधृते रपि धर्मात्मा दृष्टकेतु स्सुधार्मिकः ।
दृष्टकेतो स्तु राजर्षे हर्यश्व इति विश्रुतः ॥ ८

हर्यश्वस्य मरुःपुत्रो मरोःपुत्रः प्रतिन्धकः ।
प्रतिन्धकस्य धर्मात्मा राजा कीर्तिरथ स्सुतः ॥ ९
पुत्रः कीर्तिरथस्यापि देवमीढ इतिस्मृतः ।
देवमीढस्य विबुधो विबुधस्य महीध्रकः ॥ १०
महीध्रकसुतो राजा कीर्तिरातो महाबलः ।
कीर्तिरातस्य राजर्षेर्महारोमा व्यजायत ॥ ११
महारोम्ण स्तु धर्मात्मा स्वर्णरोमा व्यजायत ।
स्वर्णरोम्ण स्तु राजर्षि ह्रस्वरोमा व्यजायत ॥ १२
तस्य पुत्रद्वयं जज्ञे धर्मज्ञस्य महात्मनः ।
ज्येष्ठोऽह मनुजो भ्राता मम वीरः कुशध्वजः ॥ १३
मां तु ज्येष्ठं पिता राज्ये सोऽभिषिच्य नराधिपः ।
कुशध्वजं समावेश्य भारं मयि वनं गतः ॥ १४
वृद्धे पितरि स्वर्याते धर्मेण धुरमावहम् ।
भ्रातरं देवसंकाशं स्नेहात्पश्यन्कुशध्वजम् ॥ १५
कस्य चित्त्वथ कालस्य साङ्काश्यादगमत्पुरात् ।
सुधन्वा वीर्यवान्राजा मिथिलामवरोधकः ॥ १६
स च मे प्रेषयामास "शैवं धनु रनुत्तमम् ।
सीता कन्या च पद्माक्षी मह्यं वैदीयता "मिति ॥ १७
तस्याऽप्रदाना द्ब्रह्मर्षे युद्धमासीन्मया सह ।
स हतोऽभिमुखो राजा सुधन्वा तु मयारणे ॥ १८
निहत्य तं मुनिश्रेष्ठ! सुधन्वानं नराधिपम् ।
साङ्काश्ये भ्रातरं वीरमभ्यषिञ्चं कुशध्वजम् ॥ १९

कनीयानेष मे भ्राताचाहं ज्येष्ठो महामुने! ।
ददामि परमप्रीतो वध्वौ ते मुनिपुङ्गव! ॥ २०
सीतां रामाय भद्रं ते ऊर्मिळां लक्ष्मणाय च ।
वीर्यशुल्कां मम सुतां सीतां सुरसुतोपमाम् ॥ २१
द्वितीया मूर्मिळां चैव त्रिर्ददामि न संशयः ।
[ददामि परमप्रीतो वध्वौ ते रघुनन्दन! ॥] २२
रामलक्ष्मणयो राजन्! गोदानं कारयस्व ह ।
पितृकार्यं च भद्रं ते ततो वैवाहिकं कुरु ॥ २३
मघाह्यद्य महाबाहो! तृतीये दिवसे प्रभो ।
फल्गुन्या मुत्तरे राजं! स्तस्मिन्वैवाहिकं कुरु ॥ २४
रामलक्ष्मणयो राजन्! दानं कार्यं सुखोदयम् ।

इति श्रीमद्बालकाण्डे एकसप्ततितमस्सर्गः ॥

## ॥ द्विसप्ततितमस्सर्गः ॥

तमुक्तवन्तं वैदेहं विश्वामित्रो महामुनिः ।
उवाच वचनं वीरं वसिष्ठसहितो नृपम् ॥ १
"अचिन्त्यान्यप्रमेयानि कुलानि नरपुङ्गव! ।
इक्ष्वाकूणां विदेहानां नैषां तुल्योऽस्ति कश्चन ॥ २
सदृशो धर्मसम्बन्ध स्सदृशो रूपसम्पदा ।
रामलक्ष्मणयो राजन्! सीता चोर्मिळया सह ॥ ३
वक्तव्यं च नरश्रेष्ठ! श्रूयतां वचनं मम ।
भ्राता यवीयान्धर्मज्ञ एष राजा कुशध्वजः ॥ ४

अस्य धर्मात्मनो राजन्! रूपेणाप्रतिमं भुवि ।
सुताद्वयं नरश्रेष्ठ! पत्न्यर्थं वरयामहे ॥ ५
भरतस्य कुमारस्य शत्रुघ्नस्य च धीमतः ।
वरयामस्सुते राजन्! तयोरर्थे महात्मनोः ॥ ६
पुत्रादशरथस्येमे रूपयौवनशालिनः ।
लोकपालोपमास्सर्वे देवतुल्यपराक्रमाः ॥ ७
उभयोरपि राजेन्द्र! सम्बन्धेनानुबध्यताम् ।
इक्ष्वाकूणां कुलं चाग्र्यं भवतः पुण्यकर्मणः ॥" ८
विश्वामित्रवचश्श्रुत्वा वसिष्ठस्य मते तदा ।
जनकः प्राञ्जलिर्वाक्यमुवाच मुनिपुङ्गवौ ॥ ९
"कुलं धन्यमिदं मन्ये येषां नो मुनिपुङ्गवौ ।
सदृशं कुलसम्बन्धं यदाज्ञापयथ स्वयम् ॥ १०
एवं भवतु भद्रंवः कुशध्वजसुते इमे ।
पत्न्यौ भजेतां सहितौ शत्रुघ्नभरतावुभौ ॥ ११
एकाह्ना राजपुत्रीणां चतसृणां महामुने! ।
पाणीन् गृह्णन्तु चत्वारो राजपुत्रा महाबलाः ॥ १२
उत्तरे दिवसे ब्रह्मन्! फल्गुनीभ्यां मनीषिणः ।
वैवाहिकं प्रशंसन्ति भगो यत्र प्रजापतिः ॥" १३
एव मुक्त्वा वचस्सौम्यं प्रत्युत्थाय कृताञ्जलिः ।
उभौ मुनिवरौ राजा जनको वाक्य मब्रवीत् ॥ १४
"परोधर्मः कृतो मह्यं शिष्योऽस्मि भवतो स्सदा ।
इमान्यासनमुख्यानि आसातां पुनिपुङ्गवौ! ॥ १५

यथा दशरथस्येयं तथाऽयोध्या पुरी मम ।
प्रभुत्वे नास्ति संदेहो यथार्हं कर्तुमर्हथ ॥" १६
तथा ब्रुवति वैदेहे जनके रघुनन्दनः । ।
राजा दशरथो हृष्टः प्रत्युवाच महीपतिम् ॥ १७
"युवामसंख्येयगुणौ भ्रातरौ मिथिलेश्वरौ ।
ऋषयो राजसङ्घाश्च भवद्भ्या मभिपूजिताः ॥ १८
स्वस्तिप्राप्नुहि भद्रं ते गमिष्यामि स्वमालयम् ।
श्राद्धकर्माणि सर्वाणि विधास्यामी"ति चाब्रवीत् ॥ १९
तमापृष्ट्वा नरपति राजा दशरथ स्तदा ।
मुनीन्द्रौ तौ पुरस्कृत्य जगामाशु महायशाः ॥ २०
स गत्वानिलयं राजा श्राद्धं कृत्वा विधानतः ।
प्रभाते काल्य मुत्थाय चक्रे गोदान मुत्तमम् ॥ २१
गवां शतसहस्राणि ब्राह्मणेभ्यो नराधिपः ।
एकैकशो ददौ राजा पुत्रानुद्दिश्य धर्मतः ॥ २२
सुवर्णशृङ्गास्सम्पन्ना स्सवत्साः कांस्यदोहनाः ।
गवां शतसहस्राणि चत्वारि पुरुषर्षभः ॥ २३
वित्तमन्यच्च सुबहु द्विजेभ्यो रघुनन्दनः ।
ददौ गोदान मुद्दिश्य पुत्राणां पुत्रवत्सलः ॥ २४
स सुतैः कृतगोदानै र्वृत स्तु नृपति स्तदा ।
लोकपालै रिवाभाति वृत स्सौम्यः प्रजापतिः ॥ २५

इति श्रीमद्बालकाण्डे द्विसप्ततितमस्सर्गः ॥

## ॥ त्रिसप्ततितमस्सर्गः ॥

यस्मिंस्तु दिवसे राजा चक्रे गोदान मुत्तमम् ।
तस्मिंस्तु दिवसे शूरो युधाजित्समुपेयिवान् ॥ १
पुत्रः केकयराजस्य साक्षा द्भरतमातुलः ।
दृष्ट्वा पृष्ट्वा च कुशलं राजान मिदमब्रवीत् ॥ २
"केकयाधिपती राजा स्नेहात्कुशलमब्रवीत् ।
येषां कुशलकामोऽसि तेषां सम्प्रत्यनामयम् ॥ ३
स्वस्रीयं मम राजेन्द्र! द्रष्टुकामो महीपतिः ।
तदर्थ मुपयातोऽह मयोध्यां रघुनन्दन! ॥ ४
श्रुत्वा त्वह मयोध्यायां विवाहार्थं तवात्मजान् ।
मिथिला मुपयातां स्तु त्वया सह महीपते! ॥ ५
त्वरया ह्युपयातोऽहं द्रष्टुकाम स्स्वसुस्सुतम् ।"
अथ राजा दशरथः प्रियातिथि मुपस्थितम् ॥ ६
दृष्ट्वा परमसत्कारैः पूजार्हं समपूजयत् ।
तत स्ता मुषितो रात्रिं सहपुत्रै र्महात्मभिः ॥ ७
प्रभाते पुनरुत्थाय कृत्वा कर्माणि कर्मवित् ।
ऋषीं स्तदा पुरस्कृत्य यज्ञवाट मुपागमत् ॥ ८
युक्ते मुहूर्ते विजये सर्वाभरणभूषितैः ।
भ्रातृभि स्सहितो रामः कृतकौतुकमङ्गळः ॥ ९
वसिष्ठं पुरतः कृत्वा महर्षीनपरानपि ।
[पितु स्समीप माश्रित्य तस्थौ भ्रातृभि रावृतः ॥] १०

वसिष्ठो भगवानेत्य वैदेहमिदमब्रवीत् ।
"राजा दशरथो राजन्! कृतकौतुकमङ्गळैः ॥ ११
पुत्रै र्नरवरश्रेष्ठ! दातार मभिकांक्षते ।
दातृप्रतिगृहीतृभ्यां सर्वार्थाः प्रभवन्तिहि ॥ १२
स्वधर्मं प्रतिपद्यस्व कृत्वा वैवाह्यमुत्तमम् ।"
इत्युक्तः परमोदारो वसिष्ठेन महात्मना ॥ १३
प्रत्युवाच महातेजा वाक्यं परमधर्मवित् ।
"कस्स्थितः प्रतिहारो मे कस्याज्ञा सम्प्रतीक्ष्यते ॥ १४
स्वगृहेको विचारोऽस्ति यथा राज्यमिदं तव ।
कृतकौतुकसर्वस्वा वेदिमूलमुपागताः ॥ १५
मम कन्या मुनिश्रेष्ठ! दीप्तावह्नेरिवार्चिषः ।
सज्जोऽहं त्वत्प्रतीक्षोऽस्मि वेद्यामस्यां प्रतिष्ठितः ॥ १६
अविघ्नं कुरुतां राजा किमर्थं प्रविलम्बसे ।"
तद्वाक्यं जनकेनोक्तं श्रुत्वा दशरथ स्तदा ॥ १७
प्रवेशयामास सुतान्सर्वानृषिगणानपि ।
ततो राजा विदेहानां वसिष्ठ मिदमब्रवीत् ॥ १८
"कारयस्व ऋषे! सर्वं मृषिभि स्सहधार्मिक! ।
रामस्य लोकरामस्य क्रियां वैवाहिकीं विभो! ॥" १९
"तथे"त्युक्त्वा तु जनकं वसिष्ठो भगवानृषिः ।
विश्वामित्रं पुरस्कृत्य शतानन्दं च धार्मिकम् ॥ २०
प्रपामध्ये तु विधिव द्वेदिं कृत्वा महातपाः ।
अलंचकार तां वेदिं गन्धपुष्पै स्समन्ततः ॥ २१

सुवर्णपालिकाभि श्च छिद्रकुम्भै श्च साङ्कुरैः ।
अङ्कुराढ्यै श्शरावै श्च धूपपात्रै स्सधूपकैः ॥ २२
शंखपात्रै स्स्रुवै स्स्रुग्भिः पात्रै रर्घ्याभिपूरितैः ।
लाजपूर्णै श्च पात्रीभि रक्षतै रभिसंस्कृतैः ॥ २३
दर्भै स्समैस्समास्तीर्य विधिवन्मन्त्रपूर्वकम् ।
अग्निमादाय वेद्यां तु विधिमन्त्रपुरस्कृतम् ॥ २४
जुहावाग्नौ महातेजा वसिष्ठो भगवानृषिः ।

॥ श्रीसीतापाणिग्रहणम् ॥

तत स्सीतां समानीय सर्वाभरणभूषिताम् ॥ २५
समक्षमग्ने स्संस्थाप्य राघवाभिमुखे तदा ।
अब्रवीज्जनको राजा कौसल्यानन्दवर्धनम् ॥ २६
"इयं सीता मम सुता सहधर्मचरी तव ।
प्रतीच्छ चैनां भद्रंते पाणिं गृह्णीष्व पाणिना ॥ २७
पतिव्रता महाभागा छायेवानुगता सदा ।"
इत्युक्त्वा प्राक्षिप द्राजा मन्त्रपूतं जलं तदा ॥ २८
"साधु साध्वि" ति देवानामृषीणां वदतां तदा ।
देवदुन्दुभिनिर्घोषः पुष्पवर्षो महानभूत् ॥ २९
एवं दत्त्वा तदा सीतां मन्त्रोदकपुरस्कृताम् ।
अब्रवीज्जनको राजा हर्षेणाभिपरिप्लुतः ॥ ३०
"लक्ष्मणागच्छ भद्रं ते ऊर्मिळा मुद्यतां मया ।
प्रतीच्छपाणिं गृह्णीष्व माभूत्कालस्य पर्ययः ॥" ३१

तमेव मुक्त्वा जनको भरतं चाभ्यभाषत ।
"गृहाण पाणिं माण्डव्याः पाणिना रघुनन्दन!" ॥ ३२
शत्रुघ्नं चापि धर्मात्मा अब्रवीज्जनकेश्वरः ।
"श्रुतकीर्त्या महाबाहो पाणिं गृह्णीष्व पाणिना ॥ ३३
सर्वे भवन्त स्सौम्या श्च सर्वे सुचरितव्रताः ।
पत्नीभि स्सन्तु काकुत्स्था! माभूत्कालस्य पर्ययः ॥" ३४
जनकस्य वचश्श्रुत्वा पाणीन्पाणिभिरस्पृशन् ।
चत्वारस्ते चतसृणां वसिष्ठस्य मतेस्थिताः ॥ ३५
अग्निं प्रदक्षिणीकृत्य वेदिं राजान मेव च ।
ऋषीं श्चैव महात्मान स्सभार्या रघुसत्तमाः ॥ ३६
यथोक्तेन तदा चक्रुर्विवाहं विधिपूर्वकम् ।
[काकुत्स्थैस्तु गृहीतेषु ललितेषु च पाणिषु ॥] ३७
पुष्पवृष्टिर्महत्यासीदन्तरिक्षात्सुभास्वरा ।
दिव्यदुन्दुभिनिर्घोषैर्गीतवादित्रनिस्वनैः ॥ ३८
ननृतु श्चाप्सरस्सङ्घा गन्धर्वा श्च जगुः कलम् ।
विवाहे रघुमुख्यानां तदद्भुत मदृश्यत ॥ ३९
ईदृशे वर्तमानेतु तूर्योद्धुष्टनिनादिते ।
त्रि रग्निंते परिक्रम्य ऊहुर्भार्या महौजसः ॥ ४०
अथोपकार्यां जग्मुस्ते सभार्या रघुनन्दनाः ।
राजाऽप्यनुययौ पश्यन् सर्षिसङ्घ स्सबान्धवः ॥ ४१

इति श्रीमद्बालकाण्डे त्रिसप्ततितमस्सर्गः ॥

## ॥ चतुस्सप्ततितमस्सर्गः ॥

अथ रात्र्यां व्यतीतायां विश्वामित्रो महामुनिः ।
आपृष्ट्वातौ च राजानौ जगामोत्तरपर्वतम् ॥ १
[आशीर्भिः पूरयित्वा च कुमारांश्च स राघवान् ।
विश्वामित्रे गते राजा वैदेहं मिथिलाधिपम् ॥ २
आपृष्ट्वाथ जगामाशु राजा दशरथः पुरीम् ।
गच्छन्तं तं तु राजान मन्वगच्छन्नराधिपः ॥ ३
अथ राजा विदेहानां ददौ कन्याधनं बहु ।
गवां शतसहस्राणि बहूनि मिथिलेश्वरः ॥ ४
कम्बळानांच मुख्यानां क्षौमकोट्यम्बराणिच ।
हस्त्यश्वरथपादातं दिव्यरूपं स्वलङ्कृतम् ॥ ५
ददौ कन्यापिता तासां दासीदास मनुत्तमम् । ।
हिरण्यस्य सुवर्णस्य मुक्तानां विद्रुमस्यच ॥ ६
ददौ परमसंहृष्टः कन्याधन मनुत्तमम् ।
दत्वा बहुधनं राजा समनुज्ञाप्य पार्थिवम् ॥ ७
प्रविवेश स्वनिलयं मिथिलां मिथिलेश्वरः ।
राजा प्ययोध्याधिपति स्सह पुत्रैर्महात्मभिः ॥ ८
ऋषीन्सर्वा न्पुरस्कृत्य जगाम सबलानुगः ।
गच्छन्तं तं नरव्याघ्रं सर्षिसङ्घं सराघवम् ॥ ९
घोरास्स्मपक्षिणो वाचो व्याहरन्ति ततस्ततः ।
भौमाश्चैव मृगा स्सर्वे गच्छन्ति स्मप्रदक्षिणम् ॥ १०

तान् दृष्ट्वा राजशार्दूलो वसिष्ठं पर्यपृच्छत ।
"असौम्याः पक्षिणो घोरामृगाश्चापि प्रदक्षिणाः ॥ ११
किमिदं हृदयोत्कम्पि मनो मम विषीदति" ।
राज्ञो दशरथस्यैतच्छ्रुत्वा वाक्यं महानृषिः ॥ १२
उवाच मधुरां वाणीं "श्रूयता मस्य यत्फलम् ।
उपस्थितं भयं घोरं दिव्यं पक्षिमुखाच्च्युतम् ॥ १३
मृगाः प्रशमयन्त्येते सन्तापस्त्यज्यता मयम् ।"
तेषां संवदतां तत्र वायुः प्रादुर्बभूवह ॥ १४
कम्पयन्पृथिवीं सर्वां पातयंश्च द्रुमा न्शुभान् ।
तमसा संवृत स्सूर्य स्सर्वा न प्रबभुर्दिशः ॥ १५
भस्मनाचावृतं सर्वं सम्मूढ मिव तद्बलम् ।
वसिष्ठश्चर्षयश्चान्ये राजा च ससुतस्तदा ॥ १६
ससंज्ञा इव तत्रासन्सर्वं मन्य द्विचेतनम् ।
तस्मि स्तमसि घोरेतु भस्मच्छन्नेव सा चमूः ॥ १७
ददर्श भीमसंकाशं जटामण्डलधारिणम् ।
भार्गवं जामदग्न्यं तं राजा राजविमर्दिनम् ॥ १८
कैलासमिव दुर्धर्षं कालाग्निमिव दुस्सहम् ।
ज्वलंतमिव तेजोभिर्दुर्निरीक्ष्यं पृथग्जनैः ॥ १९
स्कन्धे चासज्य परशुंधनुर्विद्युद्गणोपमम् ।
प्रगृह्य शरमुख्यं च त्रिपुरघ्नं यथा शिवम् ॥ २०
तं दृष्ट्वा भीमसंकाशं ज्वलन्त मिव पावकम् ।
वसिष्ठप्रमुखा विप्रा जपहोमपरायणाः ॥ २१

सङ्गता मुनय स्सर्वे सजजल्पुरथो मिथः ।
"कच्चित्पितृवधामर्षी क्षत्रं नोत्सादयिष्यति ? ॥ २२
पूर्वं क्षत्त्रवधं कृत्वा गतमन्युर्गतज्वरः ।
क्षत्रस्योत्सादनं भूयो नखल्वस्य चिकीर्षितम्" ॥ २३
एवमुक्त्वाऽर्घ्य मादाय भार्गवं भीमदर्शनम् ।
ऋषयो "रामरामे"ति वचो मधुरमब्रुवन् ॥ २४
प्रतिगृह्यतु तां पूजा मृषिदत्तां प्रतापवान् ।
रामं दाशरथिं रामो जामदग्न्योऽभ्यभाषत ॥ २५

इति श्रीमद्बालकाण्डे चतुस्सप्ततितमस्सर्गः ॥

---

## ॥ पञ्चसप्ततितमस्सर्गः ॥

"राम ! दाशरथे राम ! वीर्यंते श्रूयतेऽद्भुतम् ।
धनुषो भेदनं चैव निखिलेन मया श्रुतम् ॥ १
तदद्भुत मचिन्त्यं च भेदनं धनुषस्त्वया ।
तच्छ्रुत्वाऽह मनुप्राप्तो धनुर्गृह्य परं शुभम् ॥ २
तदिदं घोरसङ्काशं जामदग्न्यं महद्धनुः ।
पूरयस्व शरेणैव स्वबलं दर्शयस्व च ॥ ३
तदहंते बलं दृष्ट्वा दनुषोऽस्य प्रपूरणे ।
द्वंद्वयुद्धं प्रदास्यामि वीर्यश्लाध्यस्य राघव ! ॥" ४
तस्य तद्वचनं श्रुत्वा राजा दशरथ स्तदा ।
विषण्णवदनो दीनः प्राञ्जलि र्वाक्य मब्रवीत् ॥ ५

"क्षत्ररोषात्प्रशान्तस्त्वं ब्राह्मणश्च महायशाः ।
बालानां मम पुत्राणा मभयं दातु मर्हसि ॥ ६
भार्गवाणां कुले जात! स्वाध्यायव्रतशालिनाम् ।
सहस्राक्षे प्रतिज्ञाय शस्त्रं निक्षिप्तवानसि ॥ ७
सत्वं धर्मपरो भूत्वा काश्यपाय वसुन्धराम् ।
दत्वा वन मुपागम्य महेन्द्रकृतकेतनः ॥ ८
मम सर्वविनाशाय सम्प्राप्तस्त्वं महामुने! ।
न चैकस्मिन्हते रामे सर्वे जीवामहे वयम् ॥" ९
ब्रुवत्येवं दशरथे जामदग्न्यः प्रतापवान ।
अनादृत्यैव तद्वाक्यं राममेवाभ्यभाषत ॥ १०
"इमे द्वे धनुषी श्रेष्ठे दिव्ये लोकाभिविश्रुते ।
दृढे बलवती मुख्ये सुकृते विश्वकर्मणा ॥ ११
अतिसृष्टं सुरैरेकं त्र्यम्बकाय युयुत्सवे ।
त्रिपुरघ्नं नरश्रेष्ठ! भग्नं काकुत्स्थ! यत्त्वया ॥ १२
[इदं द्वितीयं दुर्धर्षं विष्णोर्दत्तं सुरोत्तमैः ।]
तदिदं वैष्णवं राम! धनुः परमभास्वरम् ॥ १३
समानसारं काकुत्स्थ! रौद्रेण धनुषात्विदम् ।
तदा तु देवतास्सर्वाः पृच्छन्ति स्म पितामहम् ॥ १४
शितिकंठस्य विष्णोश्च बलाबलनिरीक्षया ।
अभिप्रायं तु विज्ञाय देवतानां पितामहः ॥ १५
विरोधं जनयामास तयो स्सत्यवतांवरः ।
विरोधेच महद्युद्धमभवद्रोमहर्षणम् ॥ १६

शितिकंठस्य विष्णोश्च परस्परजयैषिणोः ।
तदा तु जृम्भितं शैवं धनुर्भीमपराक्रमम् ॥
हुंकारेण महादेव स्स्तम्भितोऽथ त्रिलोचनः ।
देवै स्तदा समागम्य सर्षिसंघै स्सचारणैः ॥
याचितौ प्रशमं तत्र जग्मतु स्तौ सुरोत्तमौ ।
जृम्भितं तद्धनु र्दृष्ट्वा शैवं विष्णुपराक्रमैः ॥
अधिकं मेनिरे विष्णुं देवा स्सर्षिगणा स्तदा ।
धनू रुद्रस्तु संक्रुद्धो विदेहेषु महायशाः ॥
देवरातस्य राजर्षे र्ददौ हस्ते स सायकम् ।
इदं तु वैष्णवं राम! धनुः परपुरञ्जयम् ॥
ऋचीके भार्गवे प्रादा द्विष्णुस्सन्न्यासमुत्तमम् ।
ऋचीक स्तु महातेजाः पुत्रस्याप्रतिकर्मणः ॥
पितुर्मम ददौ दिव्यं जमदग्नेर्महात्मनः ।
न्यस्तशस्त्रे पितरि मे तपोबलसमन्विते ॥
अर्जुनो विदधे मृत्युं प्राकृतां बुद्धि मास्थितः ।
वधमप्रतिरूपं तु पितु श्श्रुत्वा सुदारुणम् ॥
क्षत्रमुत्सादयन्रोषा ज्जातंजातमनेकशः ।
पृथिवीं चाखिलां प्राप्य काश्यपाय महात्मने ॥
यज्ञस्यान्ते तदा राम! दक्षिणां पुण्यकर्मणे ।
दत्वा महेन्द्रनिलय स्तपोबलसमन्वितः ॥
[स्थितोऽस्मि तस्मिंस्तप्यन्वै सुसुखं सुरसेविते ।
अद्यतूत्तमवीर्येण त्वया राम! महाबल! ॥]

श्रुतवान्धनुषोभेदं विस्मितानां नभस्स्थले ।
भाषतां देवसङ्घानां ततोऽहं द्रुतमागतः ॥ २८
तदिदं वैष्णवं राम! पितृपैतामहं महत् ।
क्षत्रधर्मं पुरस्कृत्य गृह्णीष्व धनुरुत्तमम् ॥ २९
योजयस्व धनुश्श्रेष्ठे शरं परपुरञ्जयम् ।
यदि शक्नोषि काकुत्स्थ द्वंद्वं दास्यामि ते ततः ॥" ३०

इति श्रीमद्बालकाण्डे पञ्चसप्ततितमस्सर्गः ॥

## ॥ षट्सप्ततितमस्सर्गः ॥

श्रुत्वा तज्जामदग्न्यस्य वाक्यं दाशरथि स्तदा ।
गौरवाद्यान्त्रितकथः पितू राममथाब्रवीत् ॥ १
"श्रुतवानस्मियत्कर्म कृतवानसि भार्गव! ।
अनुरुन्ध्यामहे ब्रह्मन्! पितुरानृण्यमास्थितः ॥ २
वीर्यहीन मिवाशक्तं क्षत्रधर्मेण भार्गव! ।
अवजानासि मे तेजः पश्य मेऽद्य पराक्रमम् ॥" ३
इत्युक्त्वा राघवः क्रुद्धो भार्गवस्य शरासनम् ।
शरं च प्रतिजग्राह हस्ताल्लघुपराक्रमः ॥ ४
आरोप्य स धनू रामश्शरं सज्यं चकार ह ।
जामदग्न्यं ततो रामं रामः क्रुद्धोऽब्रवी द्वचः ॥ ५
"ब्राह्मणोऽसीति पूज्यो मे विश्वामित्रकृतेन च ।
तस्माच्छक्तोन ते राम! मोक्तुं प्राणहरं शरम् ॥ ६

इमां पादगतिं राम! तपोबलसमार्जितान्।
लोका नप्रतिमान्वाते हनिष्यामि यदीच्छसि ॥ ७
न ह्ययं वैष्णवो दिव्यश्शरः परपुरञ्जयः ।
मोघः पतति वीर्येण परदर्पविनाशनः ॥" ८
वरायुधधरं रामं द्रष्टुं सर्षिगणा स्सुराः ।
पितामहं पुरस्कृत्य समेता स्तत्र सङ्घशः ॥ ९
गन्धर्वाप्सरसश्चैव सिद्धचारणकिन्नराः ।
यक्षराक्षसनागाश्च तद्द्रष्टुं महदद्भुतम् ॥ १०
जडीकृते तदा लोके रामे वरधनुर्धरे ।
निर्वीर्यो जामदग्न्योऽसौ रामो राममुदैक्षत ॥ ११
तेजोभिहतवीर्यत्वा ज्जामदग्न्यो जडीकृतः ।
रामं कमलपत्राक्षं मन्दं मन्दमुवाच ह ॥ १२
"काश्यपाय मया दत्ता यदा पूर्वं वसुन्धरा ।
"विषये मे न वस्तव्य"मिति मां काश्यपोऽब्रवीत् ॥ १३
सोऽहं गुरुवचः कुर्वन्पृथिव्यां न वसे निशाम् ।
कृता प्रतिज्ञा काकुत्स्थ! कृताभूः काश्यपस्य हि ॥ १४
तदिमां त्वं गतिं वीर! हन्तुं नार्हसि राघव! ।
मनोजवं गमिष्यामि महेन्द्रं पर्वतोत्तमम् ॥ १५
लोका स्त्वप्रतिमा राम! निर्जिता स्तपसा मया ।
जहि तान्शरमुख्येन माभूत्कालस्य पर्ययः ॥ १६
अक्षय्यं मधुहन्तारं जानामि त्वां सुरेश्वरम् ।
धनुषोऽस्य परामर्शा त्स्वस्ति तेऽस्तु परन्तप! ॥ १७

एते सुरगणा स्सर्वे निरीक्षन्ते समागताः ।
त्वा मप्रतिमकर्माण मप्रतिद्वंद्व माहवे ॥ १८
न चेयं मम काकुत्स्थ! व्रीडा भवितु मर्हति ।
त्वया त्रैलोक्यनाथेन यदहं विमुखीकृतः ॥ १९
शर मप्रतिमं राम! मोक्तु मर्हसि सुव्रत! ।
शरमोक्षे गमिष्यामि महेन्द्रं पर्वतोत्तमम् ॥" २०
तथा ब्रुवति रामे तु जामदग्न्ये प्रतापवान् ।
रामो दाशरथि श्श्रीमां श्चिक्षेप शरमुत्तमम् ॥ २१
सहता न्दृश्य रामेण स्वान्लोकान तपसाऽऽर्जितान् ।
जामदग्न्यो जगामाशु महेन्द्रं पर्वतोत्तमम् ॥ २२
ततो वितिमिरा स्सर्वा दिशश्चोपदिश स्तदा ।
सुरा स्सर्षिगणा राम प्रशशंसु रुदायुधम् ॥ २३
रामं दाशरथि रामो जामदग्न्यः प्रशस्य च ।
ततः प्रदक्षिणं कृत्वा जगामात्मगति प्रभुः ॥ २४

इति श्रीमद्बालकाण्डे षट्सप्ततितमस्सर्ग ॥

## ॥ सप्तसप्ततितमस्सर्गः ॥

गते रामे प्रशान्तात्मा रामो दाशरथि र्धनुः ।
वरुणायाप्रमेयाय ददौ हस्ते स सायकम् ॥ १
अभिवाद्य ततो रामो वसिष्ठप्रमुखानृषीन् ।
पितरं विह्वलं दृष्ट्वा प्रोवाच रघुनन्दनः २

"जामदग्न्यो गतो रामः प्रयातु चतुरङ्गिणी ।
अयोध्याभिमुखी सेना त्वया नाथेन पालिता" ॥ ३
[संदिशस्व महाराज! सेनां त्वच्छासने स्थिताम् ।
शासनं कांक्षते सेनाचातकाळिर्जलं यथा ॥] ४
रामस्य वचनं श्रुत्वा राजा दशरथ स्सुतम् ।
बाहुभ्यां सम्परिष्वज्य मूर्ध्नि चाघ्राय राघवम् ॥ ५
"गतो राम" इति श्रुत्वा हृष्टः प्रमुदितो नृपः ।
पुनर्जातं तदा मेने पुत्र मात्मान मेव च ॥ ६
चोदयामास तां सेनां जगामाशु ततः पुरीम् ।
पताकाध्वजिनीं रम्यां तूर्योद्घुष्टनिनादिताम् ॥ ७
सिक्तराजपथां रम्यां प्रकीर्णकुसुमोत्कराम् ।
राजप्रवेशसुमुखैः पौरै र्मङ्गळवादिभिः ॥ ८
सम्पूर्णां प्राविश द्राजा जनौघैस्समलङ्कृताम् ।
पौरैः प्रत्युद्गतो दूरं द्विजैश्च पुरवासिभिः ॥ ९
पुत्रै रनुगत श्श्रीमान् श्रीमद्भिश्च महायशाः ।
प्रविवेश गृहं राजा हिमवत्सदृशं पुनः ॥ १०
ननन्द सजनो राजा गृहे कामैस्सुपूजितः ।
कौसल्या च सुमित्राच कैकेयीच सुमध्यमाः ॥ ११
वधूप्रतिग्रहे युक्तायाश्चान्या राजयोषितः ।
तत स्सीतां महाभागा मूर्मिळां च यशस्विनीम् ॥ १२
कुशध्वज सुते चोभे जगृहुर्नृपपत्नयः ।
मङ्गळालापनैश्चैव शोभिताः क्षौमवाससः ॥ १३

देवतायतनान्याशु सर्वास्ताः प्रत्यपूजयन् ।
अभिवाद्याभिवाद्यांश्च सर्वा राजसुता स्तदा ॥ १४
[स्वं स्वं गृह मथास्याद्य कुबेरभवनोपमम् ।
गोभिर्धनैश्चधान्यैश्च तर्पयित्वा द्विजोत्तमान् ॥] १५
रेमिरे मुदिताः सर्वा भर्तृभिस्सहिता रहः ।
कुमाराश्च महात्मानो वीर्येणाप्रतिमा भुवि ॥ १६
कृतदाराः कृतास्त्राश्च सधना स्ससुहृज्जनाः ।
शुश्रूषमाणाः पितरं वर्तयन्ति नरर्षभाः ॥ १७
[काले कालेतु नीतिज्ञा स्तोषयन्तो गुरुं गुणैः ।]
कस्यचित्त्वथ कालस्य राजा दशरथ स्सुतम् ॥ १८
भरतं कैकयी पुत्र मब्रवी द्रघुनन्दनः ।
"अयं केकयराजस्य पुत्रो वसति पुत्रक! ॥ १९
त्वां नेतु मागतो वीर! युधाजिन्मातुलस्तव ।"
प्रार्थितस्तेन धर्मज्ञ! मिथिलाया महं तथा ॥ २०
ऋषिमध्येतु तस्य त्वं प्रीति कर्तु मिहार्हसि ।
श्रुत्वा दशरथस्यै तद्भरतः केकयीसुतः ॥ २१
[अभिवाद्य गुरुं रामं परिष्वज्य च लक्ष्मणम् ।]
गमनायाभिचक्राम शत्रुघ्नसहित स्तदा ॥ २२
आपृच्छ्य पितरं शूरो रामं चाक्लिष्टकारिणम् ।
मातृश्चापि नरश्रेष्ठ श्शत्रुघ्नसहितो ययौ ॥ २३
गते तु भरते रामो लक्ष्मणश्च महाबलः ।
पितरं देवसङ्काशं पूजयामासतु स्तदा ॥ २४

पितु राज्ञां पुरस्कृत्य पौरकार्याणि सर्वशः ।
चकार रामो धर्मात्मा प्रियाणि च हितानिच ॥ २५
मातृभ्यो मातृकार्याणि कृत्वा परमयन्त्रितः ।
गुरूणां गुरुकार्याणि काले कालेऽन्ववैक्षत ॥ २६
एवं दशरथः प्रीतो ब्राह्मणा नैगमास्तथा ।
रामस्य शीलवृत्तेन सर्वे विषयवासिनः ॥ २७
तेषामतियशालोके रामस्सत्यपराक्रमः ।
स्वयम्भूरिव भूतानां बभूव गुणवत्तरः ॥ २८
रामस्तु सीतया सार्धं विजहार बहूनृतून् ।
मनस्वी तद्गत स्तस्या नित्यं हृदिसमर्पितः ॥ २९
प्रियातु सीतारामस्य दाराः पितृकृता इति ।
गुणा द्रूपगुणाच्चापि प्रीति भूयो व्यवर्धत ॥ ३०
तस्या श्च भर्ता द्विगुणं हृदये परिवर्तते ।
अन्तर्जातमपिव्यक्त माख्याति हृदयं हृदा ॥ ३१
तस्य भूयो विशेषेण मैथिली जनकात्मजा ।
देवताभिस्समा रूपे सीता श्रीरिवरूपिणी ३२
तया स राजर्षिसुतोऽभिरामया समेयिवानुत्तमराजकन्यया ।
अतीव रामश्शुशुभेऽतिकामया विभुश्श्रिया विष्णुरिवामरेश्वरः ॥ ३३

इत्यार्षे श्रीरामायणे आदिकाव्ये
श्रीमद्वाल्मीकीये चतुर्विंशत्सहस्रिकाया संहिताया
बालकाण्डे सप्तसप्ततितमस्सर्गः ॥

---

Printed by V Ramaswamy Sastrulu & Sons, at 'Vavilla' Press, Madras

# AYODHYAKANDAM

OF

# SRIMADRAMAYANAM



MADRAS

V. RAMASWAMY SASTRULU & SONS

*292, Esplanade*

**1929**

श्रीमद्वाल्मीकिरामायणे

# ॥ अयोध्याकाण्डः ॥



चेन्नपुर्यां

वाविळ्ळ रामस्वामिशास्त्रुलु अण्ड् सन्स्

इत्येतैः प्रकटितः

१९२९.

## ॥ श्रीरामायणायोध्याकाण्ड फलश्रुतिः ॥

पट्टाभिषेकसंभारान्वसिष्ठेन प्रचोदितान् ।
शृण्वन्महीपति र्भूत्वा स्थिरं राज्य मवाप्नुयात् ॥ १

तुरीयवर्णक मिदं ब्रह्मविष्णुशिवात्मकम् ।
शृण्वतां सर्वपापघ्नं संसारभयनाशनम् ॥ २

वनवासस्य संख्याये यत्र पञ्चमवर्णकम् ।
गायत्र्या मानव श्श्रुत्वा सूर्यद्वारात्परंव्रजेत् ॥ ३

राजा सत्यञ्च धर्मश्च यत्र षष्ठाक्षरं बुधः ।
श्रुत्वादेवान्समाप्नोति राघवस्य सरूपताम् ॥ ४

निरीक्ष्य स मुहूर्तं त्वित्यत्र देव्यास्तु सप्तमम् ।
वर्ण श्रुत्वा धूतपापो रामसायुज्यमाप्नुयात् ॥ ५

रामः कृतार्थं भरतं समाश्वासयदात्मवान् ।
इत्यादिश्रवणात्पुंसां वैराग्यं जायते भृशम् ॥

रघुनाथस्य मातुश्च भरतस्य सुभाषितम् ।
शृण्वतां सर्वकार्याणि सिद्ध्यत्येव न संशयः ॥ ७

रघुनाथप्रसादेन रामसायुज्यमाप्नुयात् ।
अत्रेश्च दर्शनं पश्चा दनसूयाभिदर्शनम् ॥ ८

अनसूयाप्रणामं च पातिव्रत्यस्तुति तथा ।
सीताकल्याणसंप्रश्न मङ्गरागस्य चार्पणम् ॥ ९

श्रुत्वा कन्या सदा भर्त्रा रमतेऽरुंधती यथा ।
साकेतकाण्डस्य फलं वक्तुं वर्षायुतैरपि ॥ १०

न शक्यते महादेवि! कचित्किंचित्प्रवच्म्यहम् ।
अयोध्याकाण्ड मखिलं ये शृण्वन्ति नरोत्तमाः ॥ ११

ते सर्वे हरिसायुज्यं प्राप्नुवन्ति न संशयः ॥

॥ श्रीः ॥

# स्मार्तादीनां सर्वेषां श्रीरामायणपारायणादौ
# ॥ कर्तव्यपूजाविधानम् ॥

आचम्य। प्राणानायम्य। ममोपात्त....शुभे शोभने मुहूर्ते अस्यां शुभतिथौ श्रीसीतालक्ष्मणभरतशत्रुघ्न हनुमत्समेत श्रीरामचन्द्र-देवता प्रीत्यर्थं यावच्छक्तिध्यानावाहनादिषोडशोपचारपूजां करिष्ये ॥ आदौ निर्विघ्नेन परिसमाप्त्यर्थं गणाधिपतिपूजां करिष्ये ॥ तदंगत्वेन कलशपूजां करिष्ये ॥ कलशपूजां गणपतिपूजाच कृत्वा ॥

सुरद्रुमतले हैमे महामंटपे
मध्ये पुष्पकमासने मणिमये वीरासने सुस्थितम्।
अग्रे वाचयति प्रभञ्जनसुते तत्त्वं मुनिभ्यः
व्याख्यांतं भरतादिभिः परिवृतं रामं भजे श्यामलम् ॥

तत श्रीमत्कोशोपरि श्रीरामध्यानावाहनादिनैवेद्यांतपूजा-विधेया ॥ श्रीरामचन्द्रदेवताभ्यां नमः ॥ ध्यानावाहनादिषोडशोप-चारपूजां च कृत्वा ॥



## ॥ श्रीमद्रामायणपारायणारम्भक्रमः ॥

सद्गुरुसकाशाल्लब्धोपदेशोवक्ष्यमाणरीत्या श्रीरामायणपारायणं कुर्यात्-देशकालौ संकीर्त्य—

अस्य श्रीरामायणमहामंत्रस्य वाल्मीकि भगवान् ऋषिः - अनुष्टुप्छन्दः - श्रीसीतालक्ष्मणभरतशत्रुघ्न हनुमत्समेत श्रीरामचन्द्रो देवता - रां बीजं - श्रीं शक्तिः - मं कीलकं - मम श्रीसीतालक्ष्मण-भरतशत्रुघ्नहनुमत्समेतश्रीरामचन्द्रप्रसादसिद्ध्यर्थे पारायणजपे विनि-

योगः - रां अंगुष्ठाभ्यान्नमः - रीं तर्जनीभ्यां स्वाहा - रूं मध्यमाभ्यां वषट् - रैं अनामिकाभ्यां हुं - रौं कनिष्ठिकाभ्यां वौषट् - रः करतलकरपृष्ठाभ्यां फट् - रां हृदयाय नमः - रीं शिरसे स्वाहा - रूं शिखायै वषट् - रैं कवचाय हुं - रौं नेत्रत्रयाय वौषट् - रः अस्त्राय फट् ॥ लोकत्रयेण दिग्बंधः ॥

यानम् .—

कालांभोधरकांतिकांत मनिशं वीरासनाध्यासिनं
मुद्रां ज्ञानमयीं दधान मपरं हस्तांबुजं जानुनि ।
सीतां पार्श्वगतां सरोरुहकरां विद्युन्निभां राघवं
पश्यतं मकुटांगदादिविविधाकल्पोज्ज्वलांगं भजे ॥

## ॥ अथ मानसिकपूजा ॥

लं पृथिव्यात्मने श्रीरामचन्द्रपरब्रह्मणे गंधं समर्पयामि - हं आकाशात्मने श्रीरामचन्द्रपरब्रह्मणे पुष्पं समर्पयामि - यं वाय्वात्मने श्रीरामचन्द्रपरब्रह्मणे धूपमाघ्रापयामि - रं अग्न्यात्मने श्रीरामचन्द्रपरब्रह्मणे दीपं दर्शयामि - वं अमृतात्मने श्रीरामचन्द्रपरब्रह्मणे अमृतोपहारं समर्पयामि - सं सर्वात्मने श्रीरामचन्द्रपरब्रह्मणे सर्वोपचारपूजास्समर्पयामि - इति मानसिकपूजा ॥

मूलमन्त्रः—

धर्मात्मा सत्यसंधश्च रामो दाशरथि र्यदि ।
पौरुषे चा प्रतिद्वंद्व श्शरैनं जहि रावणिम् ॥

इति यथाशक्ति जपित्वा श्रीरामायणपारायणं कुर्यात् ॥ अनंतरं पुनः ध्यानं मानसिकपूजां हृदयादिन्यासं च कुर्यात् - लोकत्रयेण दिग्विमोकः ॥

गुह्यातिगुह्यगोप्ता त्वं गृहाणास्मत्कृतं जपम् ।
सिद्धिर्भवतु मे देव ! त्वत्प्रसादा द्रघूद्वह ! ॥

---

## श्रीवैष्णवानां

## ॥ श्रीमद्रामायणपठनोपक्रमानुसंधेयक्रमः ॥

प्रथमतः(रामानुज) श्रीशैलेशेत्यादि स्वस्वसंप्रदाय निर्वाहकाचार्यानुसंधानम् । ततः 'लक्ष्मीनाथे' त्यारभ्य 'प्रणतोऽस्मिनित्य' मित्यंतम् । अनंतरं श्रीशैलपूर्णविषयम् 'पितामह'स्येति श्लोकमारभ्य श्रीभाष्यकारप्रभृतिस्वाचार्यपर्यंत विषया स्सांप्रदायिकश्लोका अनुसंधेयाः ॥ यद्वा श्रीधरादिस्वाचार्यपर्यंताः प्रतिव्यक्तिश्लोका अनुसंधेयाः ॥

ततः —

कूजंतं रामरामेति मधुरं मधुराक्षरम् ।
आरुह्य कविताशाखां वन्दे वाल्मीकिकोकिलम् ॥ १
वाल्मीकेर्मुनिसिंहस्य कवितावनचारिणः ।
शृण्वन्रामकथानादं को न याति परां गतिम् ॥ २
यःपिबन्सततं रामचरितामृतसागरम् ।
अतृप्त स्तं मुनिं वन्दे प्राचेतस मकल्मषम् ॥ ३
गोष्पदीकृतवाराशिं मशकीकृतराक्षसम् ।
रामायणमहामालारत्नं वन्देऽनिलात्मजम् ॥ ४

अञ्जनानन्दनं वीरं जानकीशोकनाशनम् ।
कपीश मक्षहंतारं वन्दे लङ्काभयंकरम् ॥ ५
मनोजवं मारुततुल्यवेगं जितेंद्रियं बुद्धिमतां वरिष्ठम् ।
वातात्मजं वानरयूथमुख्यं श्रीरामदूतं शिरसा नमामि ॥ ६
उल्लङ्घ्य सिन्धोस्सलिलं सलीलं यश्शोकवह्निं जनकात्मजायाः ।
आदायतेनैव ददाह लङ्कां नमामि तं प्राञ्जलि राञ्जनेयम् ॥ ७
आञ्जनेयमतिपाटलाननं काञ्चनाद्रिकमनीयविग्रहम् ।
पारिजाततरुमूलवासिनं भावयामि पवमाननन्दनम् ॥ ७
यत्रयत्र रघुनाथकीर्तनं तत्रतत्र कृतमस्तकाञ्जलिम् ।
बाष्पवारिपरिपूर्णलोचनं मारुतिं नमत राक्षसान्तकम् ॥ ९
वेदवेद्ये परे पुंसि जाते दशरथात्मजे ।
वेदः प्राचेतसादासीत्साक्षाद्रामायणात्मना ॥ १०
तदुपगतसमाससन्धियोगं सममधुरोपनतार्थवाक्यबद्धम् ।
रघुवरचरितं मुनिप्रणीतं दशशिरसश्च वधं निशामयध्वम् ॥ ११
श्रीराघवं दशरथात्मज मप्रमेयं सीतापतिं रघुकुलान्वयरत्नदीपम् ।
आजानुबाहु मरविन्ददळायताक्षं राम निशाचरविनाशकरं नमामि ॥
वैदेहीसहितं सुरद्रुमतले हैमे महामण्डपे
मध्येपुष्पकमासने मणिमये वीरासने सुस्थितम् ।
अग्रे वाचयति प्रभञ्जनसुते तत्त्वं मुनिभ्यः परं
व्याख्यान्तं भरतादिभिः परिवृतं रामं भजे श्यामलम् ॥ १३

ततो यथाशक्ति श्रीकोशोपरि भगवदाराधनं कर्तव्यम् ॥



## ॥ पारायणसमापनक्रमः ॥

एव मेतत्पुरावृत्त माख्यानं भद्र मस्तु वः ।
प्रव्याहरत विस्रब्धं बलं विष्णोः प्रवर्धताम् ॥ १

लाभस्तेषां जयस्तेषां कुतस्तेषां पराभवः ।
येषामिन्दीवरश्यामो हृदये सुप्रतिष्ठितः ॥ २

काले वर्षतु पर्जन्यः पृथिवी सस्यशालिनी ।
देशोऽयं क्षोभरहितो ब्राह्मणा स्सन्तु निर्भयाः ॥ ३

कावेरी वर्धतां काले काले वर्षतु वासवः ।
श्रीरङ्गनाथो जयतु श्रीरङ्गश्रीश्च वर्धताम् ॥ ४

स्वस्ति प्रजाभ्यः परिपालयन्तां न्याय्येन मार्गेण मही महीशाः ।
गोब्राह्मणेभ्य श्शुभमस्तु नित्यं लोका स्समस्ता स्सुखिनो भवन्तु ॥

मङ्गळं कोसलेन्द्राय महनीयगुणाब्धये ।
चक्रवर्तितनूजाय सार्वभौमाय मङ्गळम् ॥ ६

वेदवेदान्तवेद्याय मेघश्यामलमूर्तये ।
पुंसां मोहनरूपाय पुण्यश्लोकाय मङ्गळम् ॥ ७

विश्वामित्रान्तरङ्गाय मिथिलानगरीपतेः ।
भाग्यानां परिपाकाय भव्यरूपाय मङ्गळम् ॥ ८

पितृभक्ताय सततं भ्रातृभि स्सहसीतया ।
नन्दिताखिललोकाय रामभद्राय मङ्गळम् ॥ ९

त्यक्तसाकेतवासाय चित्रकूटविहारिणे ।
सेव्याय सर्वयमिनां धीरोदाराय मङ्गळम् ॥ १०

सौमित्रिणा च जानक्या चापबाणासिधारिणे ।
संसेव्याय सदाभक्त्या स्वामिने मम मङ्गळम् ॥ ११

दण्डकारण्यवासाय खण्डितामरशत्रवे ।
गृध्रराजाय भक्ताय मुक्तिदायास्तु मङ्गळम् ॥ १२

सादरं शबरीदत्तफलमूलाभिलाषिणे ।
सौलभ्यपरिपूर्णाय सत्त्वोद्रिक्ताय मङ्गळम् ॥ १३

हनुमत्समवेताय हरीशाभीष्टदायिने ।
वालिप्रमथनायास्तु महाधीराय मङ्गळम् ॥ १४

श्रीमते रघुवीराय सेतूल्लङ्घितसिन्धवे ।
जितराक्षसराजाय रणधीराय मङ्गळम् ॥ १५

आसाद्य नगरीं दिव्यामभिषिक्ताय सीतया ।
राजाधिराजराजाय रामभद्राय मङ्गळम् ॥ १६

मङ्गळाशासनपरैर्मदाचार्यपुरोगमैः ।
सर्वैश्च पूर्वैराचार्यैस्सत्कृतायास्तु मङ्गळम् ॥ १७

[कायेनवाचा मनसेन्द्रियैर्वा बुद्ध्याऽऽत्मनावा प्रकृते स्स्वभावात् ।
करोमि यद्यत्सकलं परस्मै नारायणायेति समर्पयामि ॥]

ततः 'पितामह' स्येत्यारभ्य स्वाचार्यान्ताश्श्लोका अनुसन्धेयाः ॥

## श्रीस्मार्तमध्वादीनां श्रीमद्रामायण

## ॥ पठनोपक्रमानुसन्धेयक्रमः ॥

शुक्लांबरधरं विष्णुं शशिवर्णं चतुर्भुजम् ।
प्रसन्नवदनं ध्यायेत्सर्वविघ्नोपशान्तये ॥ १

वागीशाद्या स्सुमनस स्सर्वार्थाना मुपक्रमे ।
यं नत्वा कृतकृत्यास्स्युस्तं नमामि गजाननम् ॥ २

तत: श्रीमच्छङ्कराचार्यादि गुरुपरम्परानुसन्धेया ॥

दोर्भिर्युक्ता चतुर्भि स्स्फटिकमणिमयी मक्षमालां दधाना
हस्तेनैकेन पद्मं सितमपिच शुकं पुस्तकं चापरेण ।
भासा कुन्देन्दुशङ्खस्फटिकमणिनिभा भासमानाऽसमाना
सा मे वाग्देवतेयं निवसतु वदने सर्वदा सुप्रसन्ना ॥ ३

कूजन्तं रामरामेति मधुरं मधुराक्षरम् ।
आरुह्यकविताशाखां वन्दे वाल्मीकिकोकिलम् ॥ ४

वाल्मीकेर्मुनिसिंहस्य कवितावनचारिणः ।
शृण्वन् रामकथानादं को न याति परां गतिम् ॥ ५

यः पिबन् सततं रामचरितामृतसागरम् ।
अतृप्तस्तं मुनिं वन्दे प्राचेतस मकल्मषम् ॥ ६

गोष्पदीकृतवाराशिं मशकीकृतराक्षसम् ।
रामायणमहामालारत्नं वन्देऽनिलात्मजम् ॥ ७

अञ्जनानन्दनं वीरं जानकीशोकनाशनम् ।
कपीशमक्षहन्तारं वन्दे लङ्काभयङ्करम् ॥ ८

उल्लङ्घ्यसिन्धो स्सलिलं सलीलं यश्शोकवह्निं जनकात्मजायाः ।
आदाय तेनैव ददाह लङ्कां नमामि तं प्राञ्जलि राञ्जनेयम् ॥ ९
आञ्जनेय मतिपाटलाननं काञ्चनाद्रिकमनीयविग्रहम् ।
पारिजाततरुमूलवासिनं भावयामि पवमाननन्दनम् ॥ १०
यत्रयत्र रघुनाथकीर्तनं तत्रतत्र कृतमस्तकाञ्जलिम् ।
बाष्पवारिपरिपूर्णलोचनं मारुतिं नमत राक्षसान्तकम् ॥ ११
मनोजवं मारुततुल्यवेगं जितेन्द्रियं बुद्धिमतां वरिष्ठम् ।
वातात्मजं वानरयूथमुख्यं श्रीरामदूतं शिरसा नमामि ॥ १२
यः कर्णाञ्जलिसंपुटै रहरह स्सम्यक्पिबत्यादरा-
द्वाल्मीके र्वदनारविन्दगलितं रामायणाख्यं मधु ।
जन्मव्याधिजराविपत्तिमरणै रत्यन्तसोपद्रवं
संसारं स विहाय गच्छति पुमान्विष्णोः पदं शाश्वतम् ॥ १३
तदुपगतसमाससन्धियोगं सममधुरोपनतार्थवाक्यबद्धम् ।
रघुवरचरितं मुनिप्रणीतं दशशिरसश्च वधं निशामयध्वम् ॥ १४
वाल्मीकिगिरिसंभूता रामसागरगामिनी ।
पुनाति भुवनं पुण्या रामायणमहानदी ॥ १५
श्लोकसारसमाकीर्णं सर्गकल्लोलसङ्कुलम् ।
काण्डग्राहमहामीनं वन्दे रामायणार्णवम् ॥ १६
वेदवेद्ये परेपुंसि जाते दशरथात्मजे ।
वेदः प्राचेतसादासीत्साक्षाद्रामायणात्मना ॥ १७
वैदेहीसहितं सुरद्रुमतले हैमे महामण्डपे
मध्येपुष्पक मासने मणिमये वीरासने सुस्थितम् ।

अग्रे वाचयति प्रभञ्जनसुते तत्त्वं मुनिभ्यःपरं
व्याख्यान्तं भरतादिभिः परिवृतं रामं भजे श्यामलम् ॥ १८

वामे भूमिसुता पुरश्च हनुमान् पश्चात्सुमित्रासुत-
श्शत्रुघ्नो भरत श्च पार्श्वदळयो र्वाय्वादिकोणेषु च ।
सुग्रीव श्च विभीषण श्च युवराट्तारासुतो जाम्बवा-
न्मध्ये नीलसरोजकोमलरुचिं रामं भजे श्यामलम् ॥ १९

नमोऽस्तु रामाय स लक्ष्मणाय देव्यै च तस्यै जनकात्मजायै ।
नमोऽस्तु रुद्रेन्द्रयमानिलेभ्यो नमोऽस्तु चन्द्रार्कमरुद्गणेभ्यः ॥ २०

[ततश्श्रीकोशोपरि श्रीरामावाहनादिनैवेद्यान्तपूजा विधेया। पारायणावसाने च पुनः पूजा कर्तव्या ॥]

## ॥ पारायणसमापनसमयानुसन्धेयक्रमः ॥

स्वस्ति प्रजाभ्यः परिपालयन्तां न्याय्येनमार्गेण महींमहीशाः ।
गोब्राह्मणेभ्य श्शुभमस्तु नित्यं लोकास्समस्ता स्सुखिनो भवन्तु ॥ १

काले वर्षतु पर्जन्यः पृथिवी सस्यशालिनी ।
देशोऽयं क्षोभरहितो ब्राह्मणा स्सन्तुनिर्भयाः ॥ २

अपुत्त्राः पुत्त्रिणस्सन्तु पुत्त्रिणस्सन्तु पौत्त्रिणः ।
अधना स्सधना स्सन्तुजीवन्तु शरदां शतम् ॥ ३

चरितं रघुनाथस्य शतकोटिप्रविस्तरम् ।
एकैक मक्षरं प्रोक्तं महापातकनाशनम् ॥ ४

शृण्वन् रामायणं भक्त्या यः पादं पद मेव वा।
स याति ब्रह्मणः स्थानं ब्रह्मणा पूज्यते सदा ॥ ५

रामाय रामभद्राय रामचन्द्राय वेधसे ।
रघुनाथाय नाथाय सीतायाः पतये नमः ॥ ६

यन्मङ्गळं सहस्राक्षे सर्वदेवनमस्कृते ।
वृत्रनाशे समभवत्तत्ते भवतु मङ्गळम् ॥ ७

यन्मङ्गळं सुपर्णस्य विनताऽकल्पयत्पुरा ।
अमृतं प्रार्थयानस्य तत्ते भवतु मङ्गळम् ॥ ८

मङ्गळं कोसलेन्द्राय महनीयगुणाब्धये ।
चक्रवर्तितनूजायसार्वभौमायमङ्गळम् ॥ ९

अमृतोत्पादने दैत्यान् घ्नतो वज्रधरस्य यत् ।
अदितिर्मङ्गळं प्रादात्तत्ते भवतु मङ्गळम् ॥ १०

त्रीन्विक्रमान् प्रक्रमतो विष्णोरमिततेजसः ।
यदासीन्मङ्गळं राम तत्ते भवतु मङ्गळम् ॥ ११

ऋतवस्सागराद्वीपा वेदा लोकादिशश्चते ।
मङ्गळानि महाबाहो दिशन्तु तव सर्वदा ॥ १२

कायेन वाचा मनसेन्द्रियैर्वा बुद्ध्याऽऽत्मनावा प्रकृतेस्स्वभावात् ।
करोमि यद्यत्सकलं परस्मै श्रीराघवायेति समर्पयामि ॥ १३



## ॥ श्रीगायत्रीरामायणम् ॥

तपस्स्वाध्यायनिरतं तपस्वी वाग्विदां वरम् ।
नारदं परिपप्रच्छ वाल्मीकिर्मुनिपुङ्गवम् ॥ १

स हत्वा राक्षसान् सर्वान् यज्ञघ्नान रघुनन्दनः ।
ऋषिभिः पूजित स्सम्य ग्यथेन्द्रो विजयी पुरा ॥ २

विश्वामित्र स्स धर्मात्मा श्रुत्वा जनकभाषितम् ।
वत्स राम धनुः पश्य इति राघव मब्रवीत् ॥ ३

तुष्टावास्य तदा वंशं प्रविश्य स विशांपतेः ।
शयनीय नरेन्द्रस्य तदासाद्यव्यतिष्ठत ॥ ४

वनवासं हि संख्याय वासांस्याभरणानिच ।
भर्तार मनुगच्छन्त्यै सीतायै श्वशुरो ददौ ॥ ५

राजा सत्यं च धर्मश्च राजा कुलवतां कुलम् ।
राजा माता पिता चैव राजा हितकरो नृणाम् ॥ ६

निरीक्ष्य स मुहूर्तंतु ददर्श भरतो गुरुम् ।
उटजे राम मासीनं जटावल्कलधारिणम् ॥ ७

यदि बुद्धिः कृता द्रष्टु मगस्त्यं तं महामुनिम् ।
अद्यैव गमने बुद्धिं रोचयस्व महायशाः ॥ ८

भरतस्यार्यपुत्रस्य श्वश्रूणां मम च प्रभो ।
मृगरूपमिदं व्यक्तं विस्मयं जनयिष्यति ॥ ९

गच्छ शीघ्र मितोरामसुग्रीवंतं महाबलम् ।
वयस्यं तं कुरुक्षिप्रमितो गत्वाऽद्य राघव ॥ १०

देशकालौ प्रतीक्षस्व क्षममाणः प्रियाप्रिये ।
सुखदुःखसहः काले सुग्रीववशगोभव ॥ ११

वन्द्यास्तेतु तपस्सिद्धास्तपसावीतकल्मषाः ।
प्रष्टव्यास्तेऽपिसीतायाः प्रवृत्ति विनयान्वितैः ॥ १२

स निर्जित्य पुरीं श्रेष्ठां लङ्कां ता कामरूपिणीम् ।
विक्रमेण महातेजा हनूमान मारुतात्मजः ॥ १३

धन्या देवा स्सगन्धर्वा स्सिद्धाश्च परमर्षयः ।
मम पश्यन्ति ये नाथं रामं राजीवलोचनम् ॥ १४

मङ्गलाभिमुखी तस्य सा तदाऽसीन्महाकपेः ।
उपतस्थे विशालाक्षी प्रयताहव्यवाहनम् ॥ १५

हितं महार्थं मृदुपूर्व संहितं व्यतीतकालायतिसंप्रतिक्षमम् ।
निशम्य तद्वाक्य मुपस्थितज्वरः प्रसङ्गवानुत्तरमेतदब्रवीत् ॥ १६

धर्मात्मा रक्षसां श्रेष्ठ स्संप्राप्तोऽयं विभीषणः ।
लंकैश्वर्यं ध्रुवं श्रीमानयं प्राप्नोत्यकण्डकम् ॥ १७

यो वज्रपाताशनिसन्निपातान्न चुक्षुभे नापि चचाल राजा ।
स रामबाणाभिहतो भृशार्तश्चचाल चापंचमुमोच वीरः ॥ १८

यस्यविक्रममासाद्य राक्षसा निधनं गताः ।
तं मन्ये राघवं वीरं नारायण मनामयम् ॥ १९.

नते ददृशिरे रामं दहन्तमरिवाहिनीम् ।
मोहिताः परमास्त्रेण गान्धर्वेण महात्मना ॥ २०

प्रणम्य देवताभ्यश्चब्राह्मणेभ्यश्च मैथिली ।
बद्धाञ्जलिपुटा चेद मुवाचाग्निसमीपतः ॥ २१

चलनात्पर्वतेन्द्रस्य गणा देवाश्च कम्पिताः ।
चचाल पार्वती चापितदाऽश्लिष्टामहेश्वरम् ॥ २२

दाराः पुत्त्राः पुरं राष्ट्रं भोगाच्छादनभाजनम् ।
सर्वमेवाविभक्तं नो भविष्यति हरीश्वरः ॥ २३

या मेव रात्रि शत्रुघ्नः पर्णशालां समाविशत् ।
ता मेव रात्रि सीताऽपि प्रसूता दारकद्वयम् ॥ २४

इदं रामायणं कृत्स्नंगायत्रीबीजसंयुतम् ।
त्रिसन्ध्यं यः पठेन्नित्यं सर्वपापैः प्रमुच्यते ॥ २५

गायत्रीरामायण सपूर्णम ॥



## ॥ देवताप्रार्थना ॥

शुक्लाम्बरधरं विष्णुं शशिवर्णं चतुर्भुजम् ।
प्रसन्नवदनं ध्याये त्सर्वविघ्नोपशान्तये ॥ १

रामाय रामभद्राय रामचन्द्राय वेधसे ।
रघुनाथाय नाथाय सीतायाःपतये नमः ॥ २

## ॥ वाल्मीकिप्रार्थना ॥

कूजंतं रामरामेति मधुरं मधुराक्षरम् ।
आरुह्य कविताशाखां वन्दे वाल्मीकिकोकिलम् ॥ १

वाल्मीकेर्मुनिसिंहस्य कवितावनचारिणः ।
शृण्वन् रामकथानादं कोनयाति परांगतिम् ॥ २



## ॥ आंजनेयपार्थना ॥

अंजनानंदनं वीरं जानकीशोकनाशनम् ।
कपिशि मक्षहंतारं वन्दे लङ्काभयंकरम् ॥ १

गोष्पदीकृतवाराशिं मशकीकृतराक्षसम् ।
रामायणमहामालारत्नं वन्देऽनिलात्मजम् ॥ २

मनोजवं मारुततुल्यवेगं जितेन्द्रियं बुद्धिमतां वरिष्ठम् ।
वातात्मजं वानरयूथमुख्यं श्रीरामदूतं शिरसा नमामि ॥ ३

## ॥ श्रीरामायणप्रशंसा ॥

श्रीमद्ब्रह्मतदेव बीज ममलं यस्याङ्कुर श्चिन्मयः
काण्डै स्सप्तभि रन्वितोऽतिविततो ऋव्यालवालोदितः ।
पत्रैस्तत्त्वसहस्रकै स्सुविलसच्छाखाशतैः पञ्चभिः
स्वात्मप्राप्तिफलप्रदो विजयते रामायणस्वस्तरुः ॥

यः कर्णांजलिसंपुटै रहरह स्सम्य क्पिबत्यादरा-
द्वाल्मीके र्वदनारविन्दगलितं रामायणाख्यं मधु ।
जन्मव्याधिजराविपत्तिमरणै रत्यन्तसोपद्रव
संसारं स विहाय गच्छति पुमान्विष्णोःपदं शाश्वतम् ॥

वाल्मीकिगिरिसंभूता रामांभोनिधिसंगता ।
श्रीमद्रामायणी गंगा पुनातु भुवनत्रयम् ॥



॥ श्रीरस्तु ॥

# श्रीमद्रामायणे-अयोध्याकाण्डे

## ॥ प्रथमस्सर्गः ॥

गच्छता मातुलकुलं भरतेन तदाऽनघः ।
शत्रुघ्नो नित्यशत्रुघ्नोनीतः प्रीतिपुरस्कृतः ॥ १
सतत्र न्यवसद्भ्रात्रा सह सत्कारसत्कृतः ।
मातुलेनाश्वपतिना पुत्रस्नेहेन लालितः ॥ २
तत्रापि निवसन्तौ तौ तर्प्यमाणौ च कामतः ।
भ्रातरौ स्मरतां वीरौ वृद्धं दशरथं नृपम् ॥ ३
राजाऽपितौ महातेजास्सस्मार प्रोषितौ सुतौ ।
उभौ भरतशत्रुघ्नौ महेन्द्रवरुणोपमौ ॥ ४
सर्व एव तु तस्येष्टाश्चत्वारः पुरुषर्षभाः ।
स्वशरीरा द्विनिर्वृत्ता श्चत्वार इव बाहवः ॥ ५
तेषा मपि महातेजा रामो रतिकरः पितुः ।
स्वयम्भू रिव भूतानां वभूव गुणवत्तरः ॥ ६
स हि देवैरुदीर्णस्य रावणस्य वधार्थिभिः ।
अर्थितो मानुषे लोके जज्ञे विष्णु स्सनातनः ॥ ७
कौसल्या शुशुभे तेन पुत्रेणामिततेजसा ।
यथा वरेण देवाना मदितिर्वज्रपाणिना ॥ ८

स हि रूपोपपन्नश्च वीर्यवाननसूयकः ।
भूमा वनुपम स्सूनुर्गुणैर्दशरथोपमः ॥ ९
स तु नित्यं प्रशान्तात्मा मृदुपूर्वं प्रभाषते ।
उच्यमानोऽपि परुषं नोत्तरं प्रतिपद्यते ॥ १०
कथंचिदुपकारेण कृतेनैकेन तुष्यति ।
न स्मरत्यपकाराणां शतमप्यात्मवत्तया ॥ ११
शीलवृद्धै र्वयोवृद्धै र्ज्ञानवृद्धैश्च सज्जनैः ।
कथय न्नास्त वै नित्य मस्त्रयोग्यान्तरेष्वपि ॥ १२
बुद्धिमान्मधुराभाषी पूर्वभाषी प्रियंवदः ।
वीर्यवान्न तु वीर्येण महता स्वेन विस्मितः ॥ १३
नचानृतकथो विद्वान्वृद्धाना प्रति पूजकः ।
अनुरक्तः प्रजाभिश्च प्रजाश्चाप्यनुरञ्जते ॥ १४
सानुक्रोशो जितक्रोधो ब्राह्मणप्रतिपूजकः ।
दीनानुकम्पी धर्मज्ञो नित्यं प्रग्रहवाञ्छुचिः ॥ १५
कुलोचितमतिः क्षात्रं धर्मं स्वं बहुमन्यते ।
मन्यते परया कीर्त्या महत्स्वर्गफलं ततः ॥ १६
नाश्रेयसि रतो विद्वान्न विरुद्धकथारुचिः ।
उत्तरोत्तरयुक्तौ च वक्ता वाचस्पति र्यथा ॥ १७
अरोगस्तरुणो वाग्मी वपुष्मान्देशकालवित् ।
लोके पुरुषसारज्ञस्साधुरेको विनिर्मितः ॥ १८
स तु श्रेष्ठैर्गुणैर्युक्तः प्रजानां पार्थिवात्मजः ।
बहिश्चर इव प्राणोबभूव गुणतः प्रियः ॥ १९

सम्यग्विद्याव्रतस्नातो यथावत्साङ्गवेदवित् ।
इष्वस्त्रे च पितुश्श्रेष्ठो बभूव भरताग्रजः ॥ २०
कल्याणाभिजन स्साधु रदीन स्सत्यवा गृजुः ।
वृद्धै रभिविनीतश्च द्विजै धर्मार्थदर्शिभिः ॥ २१
धर्मकामार्थतत्त्वज्ञः स्मृतिमान्प्रतिभानवान् ।
लौकिके समयाचारे कृतकल्पो विशारदः ॥ २२
निभृतस्संवृताकारो गुप्तमन्त्रस्सहायवान् ।
अमोघक्रोधहर्षश्च त्यागसंयमकालवित् ॥ २३
दृढभक्तिस्स्थिरप्रज्ञो नासद्ग्राहीन दुर्वचाः ।
निस्तन्द्रिरप्रमत्तश्च स्वदोषपरदोषवित् ॥ २४
शास्त्रज्ञश्च कृतज्ञश्च पुरुषान्तरकोविदः ।
यः प्रग्रहानुग्रहयो र्यथान्याय विचक्षणः ॥ २५
सत्सङ्ग्रहप्रग्रहणे स्थानविन्निग्रहस्य च ।
आयकर्मण्युपायज्ञ स्सन्दृष्टव्ययकर्मवित् ॥ २६
श्रैष्ठ्यं शास्त्रसमूहेषु प्राप्तो व्यामिश्रकेषुच ।
अर्थधर्मौच सङ्गृह्य सुखतन्त्रो न चालसः ॥ २७
वैहारिकाणां शिल्पानां विज्ञाताऽर्थविभागवित् ।
आरोहे विनये चैव युक्तो वारणवाजिनाम् ॥ २८
धनुर्वेदविदां श्रेष्ठो लोकेऽतिरथसम्मतः ।
अभियाता प्रहर्ता च सेनानयविशारदः ॥ २९
अप्रधृष्यश्च सङ्ग्रामे क्रुद्धैरपि सुरासुरैः ।
अनसूयो जितक्रोधो न दृप्तो न च मत्सरी ॥ ३०

न चावमन्ता भूतानां न च कालवशानुगः ।
एवं श्रेष्ठगुणैर्युक्तः प्रजानां पार्थिवात्मजः ॥ ३१
सम्मत स्त्रिषु लोकेषु वसुधायाः क्षमागुणैः ।
बुद्ध्या बृहस्पते स्तुल्यो वीर्येणापि शचीपतेः ॥ ३२
तथा सर्वप्रजाकान्तैः प्रीतिसञ्जननैः पितुः ।
गुणैर्विरुरुचे रामो दीप्त स्सूर्य इवांशुभिः ॥ ३३
त मेवं व्रतसम्पन्न मप्रधृष्यपराक्रमम् ।
लोकपालोपमं नाथ मकामयत मेदिनी ॥ ३४
एतैस्तु बहुभिर्युक्तं गुणै रनुपमै स्सुतम् ।
दृष्ट्वा दशरथो राजा चक्रे चिन्तां परन्तपः ॥ ३५
अथ राज्ञो बभूवैवं वृद्धस्य चिरजीविनः ।
"प्रीति रेषा कथं रामो राजास्यान्मयि जीवति ॥" ३६
एषा ह्यस्य परा प्रीति र्हृदि संपरिवर्तते ।
"कदा नाम सुतं द्रक्ष्याम्यभिषिक्त महं प्रियम् ॥ ३७
वृद्धिकामो हि लोकस्य सर्वभूतानुकम्पनः ।
मत्तः प्रियतरो लोके पर्जन्य इव वृष्टिमान् ॥ ३८
यमशक्रसमो वीर्ये बृहस्पतिसमो मतौ ।
महीधरसमो धृत्यां मत्तश्च गुणवत्तरः ॥ ३९
महीं मह मिमां कृत्स्ना मधितिष्ठन्त मात्मजम् ।
अनेन वयसा दृष्ट्वा यथास्वर्ग मवाप्नुयाम् " ॥ ४०
इत्येतैर्विविधै स्तैस्तै रन्यपार्थिवदुर्लभैः ।
शिष्टै रपरिमेयैश्च लोके लोकोत्तरैर्गुणैः ॥ ४१

तं समीक्ष्य महाराजो युक्तं समुदितै श्शुभैः ।
निश्चित्य सचिवै स्सार्धं "युवराज" ममन्यत ॥ ४२
दिव्यन्तरिक्षे भूमौ च घोर मुत्पातजं भयम् ।
संचचक्षे च मेधावी शरीरे चात्मनो जराम् ॥ ४३
पूर्णचन्द्राननस्याथ शोकापनुदमात्मनः ।
लोके रामस्य बुबुधे सम्प्रियत्वं महात्मनः ॥ ४४
आत्मन श्च प्रजानां च श्रेयसे च प्रियेण च ।
प्राप्तकालेन धर्मात्मा भक्त्या त्वरितवान्नृपः ॥ ४५
नानानगरवास्तव्यान्पृथग्जानपदानपि ।
समानिनाय मेदिन्याः प्रधानान्पृथिवीपतीन् ॥ ४६
न तु केकयराजानं जनकं वा नराधिपः ।
त्वरया चानयामास पश्चात्तौ श्रोष्यतः प्रियम् ॥ ४७
तान्वेश्म नानाभरणै र्यथाऽर्हं प्रतिपूजितान् ।
ददर्शालङ्कृतो राजा प्रजापति रिव प्रजाः ॥ ४८
अथोपविष्टे नृपतौ तस्मिन्परबलार्दने ।
ततः प्रविविशुश्शेषा राजानो लोकसम्मताः ॥ ४९
अथ राजवितीर्णेषु विविधेष्वासनेषु च ।
राजान मेवाभिमुखा निषेदु र्नियता नृपाः ॥ ५०
स लब्धमानै र्विनयान्वितै र्नृपैः पुरालयै र्जानपदै श्च मानवैः ।
उपोपविष्टै र्नृपति र्वृतो बभौ सहस्रचक्षु र्भगवानिवामरैः ॥ ५१

इति श्रीमदयोध्याकाण्डे प्रथमस्सर्गः ॥

## ॥ द्वितीयस्सर्गः ॥

ततः परिषदं सर्वा मामन्त्र्य वसुधाधिपः ।
हित मुद्धर्षणं चैव मुवाच प्रथितं वचः ॥ १
दुन्दुभिस्वनकल्पेन गम्भीरेणानुनादिना ।
स्वरेण महता राजा जीमूत इव नादयन् ॥ २
राजलक्षणयुक्तेन कान्तेनानुपमेन च ।
उवाच रसयुक्तेन स्वरेण नृपति र्नृपान् ॥ ३
"विदितं भवता मेत द्यथा मे राज्य मुत्तमम् ।
पूर्वकै र्मम राजेन्द्रै स्सुतवत्परिपालितम् ॥ ४
सोऽह मिक्ष्वाकुभिस्सर्वै र्नरेंद्रैः परिपालितम् ।
श्रेयसा योक्तु कामोऽस्मि सुखार्ह मखिलं जगत् ॥ ५
मया प्याचरितं पूर्वैः पन्थान मनुगच्छता ।
प्रजा नित्य मनिद्रेण यथाशक्त्यभिरक्षिताः ॥ ६
इदं शरीरं कृत्स्नस्य लोकस्य चरता हितम् ।
पांडुरस्याऽतपत्रस्य छायायां जरितं मया ॥ ७
प्राप्य वर्षसहस्राणि बहून्यायूंषि जीवतः ।
जीर्णस्यास्य शरीरस्य विश्रान्तिमभिरोचये ॥ ८
राजप्रभावजुष्टां हि दुर्वहा मजितेन्द्रियैः ।
परिश्रान्तोऽस्मि लोकस्य गुर्वीं धर्मधुरं वहन् ॥ ९
सोऽहं विश्रम मिच्छामि पुत्रं कृत्वा प्रजाहिते ।
सन्निकृष्टा निमान्सर्वा ननुमान्य द्विजर्षभान् ॥ १०

अनुजातो हि मां सर्वै र्गुणै र्ज्येष्ठो ममात्मजः ।
पुरंदरसमो वीर्ये रामः परपुरञ्जयः ॥ ११
तं चन्द्र मिव पुष्येण युक्तं धर्मभृतां वरम् ।
यौवराज्येन योक्तास्मि प्रीतः पुरुषपुङ्गवम् ॥ १२
अनुरूप स्स वै नाथो लक्ष्मीवान् लक्ष्मणाग्रजः ।
त्रैलोक्यमपि नाथेन येनस्या न्नाथवत्तरम् ॥ १३
अनेन श्रेयसा सद्यस्संयोज्यैवं महीमिमाम् ।
गतक्लेशो भविष्यामि सुते तस्मि न्निवेश्यवै ॥ १४
यदिदं मेऽनुरूपार्थं मया साधु सुमन्त्रितम् ।
भवन्तो मेऽनुमन्यन्तां कथं वा करवाण्यहम् ॥ १५
यद्यप्येषा मम प्रीतिर्हित मन्य द्विचिन्त्यताम् ।
अन्या मध्यस्थचिन्ता हि विमर्दाभ्यधिकोदया ॥" १६
इति ब्रुवंतं मुदिताः प्रत्यनन्दन्नृपानृपम् ।
वृष्टिमन्तं महामेघं नर्दन्त इव बर्हिणः ॥ १७
स्निग्धोऽनुनादी संजज्ञे तत्र हर्षसमीरितः ।
जनौघोद्घुष्ट संवादो विमानं कम्पयन्निव ॥ १८
तस्य धर्मार्थविदुषो भाव माज्ञाय सर्वशः ।
ब्राह्मणा जनमुख्या श्च पौरजानपदै स्सह ॥ १९
समेत्य मन्त्रयित्वा तु समतागतबुद्धयः ।
ऊचु श्च मनसा ज्ञात्वा वृद्धं दशरथं नृपम् ॥ २०
"अनेकवर्षसाहस्रो वृद्ध स्त्वमसि पार्थिव ! ।
स रामं युवराजान मभिषिञ्चस्व धार्मिकम् ॥ २१

इच्छामो हि महाबाहुं रघुवीरं महाबलम् ।
गजेन महता यान्तं रामं छत्रावृताननम् ॥" २२
इति तद्वचनं श्रुत्वा राजा तेषां मनःप्रियम् ।
अजानन्निव जिज्ञासु रिदं वचनमब्रवीत् ॥ २३
"श्रुत्वैव वचनं यन्मे राघवं पति मिच्छथ ।
राजान! स्संशयोऽयं मे किमिदं ब्रूत तत्त्वतः ॥ २४
कथं नु मयि धर्मेण पृथिवी मनुशासति ।
भवन्तो द्रष्टु मिच्छन्ति युवराजं ममात्मजम् ॥" २५
ते तमूचुर्महात्मानं पौरजानपदै स्सह ।
"बहवो नृप! कल्याणगुणाः पुत्रस्य सन्तिते ॥ २६
गुणान्गुणवतो देव! देवकल्पस्य धीमतः ।
प्रियानानन्दनान्कृत्स्नान्प्रवक्ष्यामोऽद्यतान् शृणु ॥ २७
दिव्यै र्गुणै श्शक्रसमो रामस्सत्यपराक्रमः ।
इक्ष्वाकुभ्योऽपि सर्वेभ्यो ह्यतिरिक्तो विशांपते! ॥ २८
रामस्सत्पुरुषो लोके सत्यधर्मपरायणः ।
साक्षाद्रामाद्विनिर्वृत्तो धर्म श्चापि श्रिया सह ॥ २९
प्रजासुखत्वे चन्द्रस्य वसुधायाः क्षमागुणैः ।
बुद्ध्या बृहस्पतेस्तुल्यो वीर्ये साक्षाच्छचीपतेः ॥ ३०
धर्मज्ञ स्सत्यसन्धश्च शीलवाननसूयकः ।
क्षान्त स्सांत्वयिता श्लक्ष्णः कृतज्ञो विजितेन्द्रियः ॥ ३१
मृदुश्च स्थिरचित्तश्च सदा भव्योऽनसूयकः ।
प्रियवादी च भूतानां सत्यवादी च राघवः ॥ ३२

बहुश्रुतानां वृद्धानां ब्राह्मणानामुपासिता ।
तेनास्येहातुला कीर्ति र्यशस्तेज श्च वर्धते ॥ ३३
देवासुरमनुष्याणां सर्वास्त्रेषु विशारदः ।
सम्यग्विद्याव्रतस्नातो यथावत्साङ्गवेदवित् ॥ ३४
गान्धर्वे च भुवि श्रेष्ठो बभूव भरताग्रजः ।
कल्याणाभिजन स्साधु रदीनात्मा महामतिः ॥ ३५
द्विजै रभिविनीतश्च श्रेष्ठै धर्मार्थनैपुणैः ।
यदा व्रजति सङ्ग्रामं ग्रामार्थे नगरस्य वा ॥ ३६
गत्वा सौमित्रिसहितो नाविजित्य निवर्तते ।
सङ्ग्रामात्पुनरागम्य कुञ्जरेण रथेन वा ॥ ३७
पौरान्स्वजनवन्नित्यं कुशलं परिपृच्छति ।
पुत्रेष्वग्निषु दारेषु प्रेष्यशिष्यगणेषु च ॥ ३८
निखिलेनानुपूर्व्याच्च पिता पुत्रानिवौरसान् ।
शुश्रूषन्ते च व श्शिष्याः कच्चित्कर्मसु दंशिताः ॥ ३९
इति नः पुरुषव्याघ्र स्सदा रामोऽभिभाषते ।
व्यसनेषु मनुष्याणां भृशं भवति दुःखितः ॥ ४०
उत्सवेषु च सर्वेषु पितेव परितुष्यति ।
सत्यवादी महेष्वासो वृद्धसेवी जितेन्द्रियः ॥ ४१
स्मितपूर्वाभिभाषी च धर्मं सर्वात्मना श्रितः ।
सम्यग्योक्ता श्रेयसां च न विगृह्य कथारुचिः ॥ ४२
उत्तरोत्तरयुक्तौ च वक्ता वाचस्पतिर्यथा ।
सुभ्रूरायतताम्राक्ष स्साक्षा द्विष्णुरिवस्वयम् ॥ ४३

रामो लोकाभिरामोऽयं शौर्यवीर्यपराक्रमैः ।
प्रजापालनतत्त्वज्ञो न रागोपहतेन्द्रियः ॥ ४४

शक्तस्त्रैलोक्यमप्येकोभोक्तुं किनु मही मिमाम् ।
नास्य क्रोधः प्रसादश्च निरर्थोऽस्ति कदाचन ॥ ४५

हन्त्येव नियमाद्वध्यानवध्ये न च कुप्यति ।
युनक्त्यर्थैः प्रहृष्टश्च तमसौ यत्र तुष्यति ॥ ४६

शान्तैः स्सर्वप्रजाकान्तैः प्रीतिसञ्जननैर्नृणाम् ।
गुणैर्विरुरुचे रामो दीप्त स्सूर्य इवांशुभिः ॥ ४७

त मेवं गुणसम्पन्नं राम सत्यपराक्रमम् ।
लोकपालोपमं नाथ मकामयत मेदिनी ॥ ४८

वत्सश्श्रेयसि जातस्ते दिष्ट्याऽसौ तव राघवः ।
दिष्ट्या पुत्रगुणै र्युक्तो मारीच इव काश्यपः ॥ ४९

बल मारोग्य मायुश्च रामस्य विदितात्मनः ।
देवासुरमनुष्येषु सगन्धर्वोरगेषुच ॥ ५०

आशंसते जनस्सर्वो राष्ट्रे पुरवरे तथा ।
आभ्यन्तरश्च बाह्यश्च पौरजानपदो जनः ॥ ५१

स्त्रियो वृद्धास्तरुण्यश्च सायं प्रात स्समाहिताः ।
सर्वान्देवान्नमस्यन्ति रामस्यार्थे यशस्विनः ॥ ५२

तेषा मायाचितं देव! त्वत्प्रसादा त्समृद्ध्यताम् ।
राम मिन्दीवरश्यामं सर्वशत्रुनिबर्हणम् ॥ ५३

पश्यामो यौवराज्यस्थं तव राजोत्तमात्मजम् ।

तं देवदेवोपम मात्मजं ते सर्वस्यलोकस्य हिते निविष्टम् ।
हिताय नः क्षिप्र मुदारजुष्टं मुदाऽभिषेक्तुं वरद! त्व मर्हसि" ॥

इति श्रीमदयोध्याकाण्डे द्वितीयस्सर्गः ॥

## ॥ तृतीयस्सर्गः ॥

तेषा मञ्जलिपद्मानि प्रगृहीतानि सर्वशः ।
प्रतिगृह्याब्रवीद्राजा तेभ्यः प्रियहितं वचः ॥ १
"अहोऽस्मि परमप्रीतः प्रभावश्चातुलो मम ।
यन्मे ज्येष्ठं प्रियं पुत्रं यौवराज्यस्थ मिच्छथ ॥" २
इति प्रत्यर्च्य तान्राजा ब्राह्मणा निद मब्रवीत् ।
वसिष्ठं वामदेवंच तेषा मेवोपश्रृण्वताम् ॥ ३
"चैत्र श्श्रीमा नयं मासः पुण्यः पुष्पितकाननः ।
यौवराज्याय रामस्य सर्वमेवोपकल्प्यताम् ॥" ४
राज्ञस्तूपरते वाक्ये जनघोषो महानभूत् ।
शनैस्तस्मिन्प्रशान्ते च जनघोषे जनाधिपः ॥ ५
वसिष्ठं मुनिशार्दूलं राजा वचन मब्रवीत् ।
"अभिषेकाय रामस्य यत्कर्म सपरिच्छदम् ॥ ६
तदद्य भगव! न्सर्वं माज्ञापयितु मर्हसि ।
तच्छ्रुत्वा भूमिपालस्य वसिष्ठो द्विजसत्तमः ॥ ७
आदिदेशाग्रतो राज्ञस्स्थितान्युक्तान्कृताञ्जलीन् ।
"सुवर्णादीनि रत्नानि बलीन् सर्वौषधी रपि ॥ ८

शुक्लमाल्यांश्च लाजांश्च पृथक्च मधुसर्पिषी ।
अहतानि च वासांसि रथं सर्वायुधान्यपि ॥ ९
चतुरङ्गं बलंचैव गजं च शुभलक्षणम् ।
चामरव्यजने श्वेते ध्वजं छत्रं च पाण्डुरम् ॥ १०
शतं च शातकुम्भानां कुम्भाना मग्निवर्चसाम् ।
हिरण्यशृङ्ग मृषभं समग्रं व्याघ्र चर्म च ॥ ११
उपस्थापयत प्रात रग्न्यगारं महीपतेः ।
यच्चान्यत्किंचि देष्टव्यं तत्सर्वमुपकल्प्यताम् ॥ १२
अन्तःपुरस्य द्वाराणि सर्वस्य नगरस्य च ।
चन्दन स्रग्भिरच्यन्तां धूपैश्च घ्राणहारिभिः ॥ १३
प्रशस्त मन्नं गुणव द्दधिक्षीरोपसेचनम् ।
द्विजानां शतसाहस्रे यत्प्रकाम मलंभवेत् ॥ १४
सत्कृत्य द्विजमुख्यानां श्वः प्रभाते प्रदीयताम् ।
घृतं दधि च लाजाश्च दक्षिणा श्चापि पुष्कलाः ॥ १५
सूर्येऽभ्युदितमात्रे श्वो भविता स्वस्तिवाचनम् ।
ब्राह्मणाश्च निमन्त्र्यन्तां कल्प्यन्ता मासनानि च ॥ १६
आबध्यन्तां पताकाश्च राजमार्गश्च सिच्यताम् ।
सर्वे च ताळावचरा गणिकाश्च स्वलङ्कृताः ॥ १७
कक्ष्यां द्वितीया मासाद्य तिष्ठन्तु नृपवेश्मनः ।
देवायतनचैत्येषु सान्नभक्षा स्सदक्षिणाः ॥ १८
उपस्थापयितव्यास्स्युर्माल्ययोग्याः पृथक्पृथक् ।
दीर्घासिबद्धायोधाश्च सन्नद्धा मृष्टवाससः ॥ १९

महाराजाङ्गणं सर्वे प्रविशन्तु महोदयम् ।"
एवं व्यादिश्य विप्रौ तौ क्रियास्तत्र सुनिष्ठितौ ॥ २०
चक्रतुश्चैव यच्छेषं पार्थिवाय निवेद्य च ।
"कृत"मित्येव चाब्रूता मभिगम्य जगत्पतिम् ॥ २१
यथोक्तवचनं प्रीतौ हर्षयुक्तौ द्विजर्षभौ ।
तत स्सुमन्त्रं द्युतिमा न्राजा वचनमब्रवीत् ॥ २२
"रामः कृतात्मा भवता शीघ्र मानीयता" मिति ।
स "तथे"ति प्रतिज्ञाय सुमन्त्रो राजशासनात् ॥ २३
रामं तत्रानयाञ्चक्रे रथेन रथिनां वरम् ।
अथ तत्र समासीना स्तदा दशरथं नृपम् ॥ २४
प्राच्योदीच्याः प्रतीच्याश्च दाक्षिणात्याश्च भूमिपाः ।
म्लेच्छाचार्याश्चये चान्ये वनशैलान्तवासिनः ॥ २५
उपासाञ्चक्रिरे सर्वे तं देवा इव वासवम् ।
तेषां मध्ये स राजर्षिर्मरुता मिव वासवः ॥ २६
प्रासादस्थो रथगतं ददर्शायान्त मात्मजम् ।
गन्धर्वराजप्रतिमं लोके विख्यातपौरुषम् ॥ २७
दीर्घबाहुं महासत्त्वं मत्तमातङ्गगामिनम् ।
चन्द्रकान्ताननं राममतीव प्रियदर्शनम् ॥ २८
रूपौदार्य गुणैः पुंसां दृष्टिचित्तापहारिणम् ।
घर्माभितप्ताः पर्जन्यं ह्लादयन्त मिव प्रजाः ॥ २९
न ततर्प समायान्तं पश्यमानो नराधिपः ।
अवतार्य सुमन्त्रस्तं राघवं स्यन्दनोत्तमात् ॥ ३०

पितु स्समीपं गच्छन्तं प्राञ्जलिः पृष्ठतोऽन्वगात् ।
स तं कैलासशृङ्गाभं प्रासाद नरपुङ्गवः ॥ ३१
आरुरोह नृपं द्रष्टुं सहसूतेन राघवः ।
स प्राञ्जलि रभिप्रेत्य प्रणतः पितुरन्तिके ॥ ३२
नाम स्वं श्रावयन्रामो ववन्दे चरणौ पितुः ।
तं दृष्ट्वा प्रणतं पार्श्वे कृताञ्जलिपुट नृपः ॥ ३३
गृह्याञ्जलौ समाकृष्य सस्वजे प्रिय मात्मजम् ।
तस्मै चाभ्युदितं दिव्यं मणिकाञ्चनभूषितम् ॥ ३४
दिदेश राजा रुचिरं रामाय परमासनम् ।
तदासनवरं प्राप्य व्यदीपयत राघवः ॥ ३५
स्वयैव प्रभया मेरु मुदये विमलो रविः ।
तेन विभ्राजिता तत्र सा सभाऽभिव्यरोचत ॥ ३६
विमलग्रहनक्षत्रा शारदी द्यौ रिवेन्दुना ।
तं पश्यमानो नृपति स्तुतोष प्रियमात्मजम् ॥ ३७
अलङ्कृत मिवात्मान मादर्शतलसंस्थितम् ।
स तं सस्मित माभाष्य पुत्रं पुत्रवतां वरः ॥ ३८
उवाचेदं वचो राजा देवेन्द्र मिवकाश्यपः ।
"ज्येष्ठाया मसि मे पत्न्यां सदृश्यां सदृश स्सुतः ॥ ३९
उत्पन्न स्त्वं गुणश्रेष्ठो मम रामात्मजः प्रियः ।
त्वया यतः प्रजा श्चेमा स्स्वगुणै रनुरञ्जिताः ॥ ४०
तस्मात्त्वं पुष्ययोगेन यौवराज्य मवाप्नुहि ।
कामतस्त्वं प्रकृत्यैव विनीतो गुणवानसि ॥ ४१

गुणवत्यपि तु स्नेहात्पुत्र! वक्ष्यामि ते हितम् ।
भूयो विनय मास्थाय भवनित्यं जितेन्द्रियः ॥ ४२
कामक्रोधसमुत्थानि त्यजेथा व्यसनानि च ।
परोक्षया वर्तमानो वृत्त्या प्रत्यक्षया यथा ॥ ४३
अमात्यप्रभृतीस्सर्वाः प्रकृती श्चानुरञ्जयन् ।
कोष्ठागारायुधागारैः कृत्वा सन्निचयान्बहून् ॥ ४४
तुष्टानुरक्तप्रकृति र्यः पालयति मेदिनीम् ।
तस्य नन्दन्ति मित्राणि लब्ध्वाऽमृत मिवामराः ॥ ४५
तस्मात्त्वमपि चात्मानं नियम्यैवं समाचर ।"
तच्छ्रुत्वा सुहृदस्तस्य रामस्य प्रियकारिणः ॥ ४६
त्वरिता श्शीघ्रमभ्येत्य कौसल्यायै न्यवेदयन् ।
सा हिरण्यं च गाश्चैव रत्नानि विविधानि च ॥ ४७
व्यादिदेश प्रियाख्येभ्यः कौसल्या प्रमदोत्तमा ।
अथाभिवाद्य राजानं रथमारुह्य राघवः ॥ ४८
ययौ स्वं द्युतिमद्वेश्म जनौघैः प्रतिपूजितः ।
ते चापि पौरा नृपते र्वचस्त च्छ्रुत्वा तथा लाभ मिवेष्टमाशु ।
नरेन्द्र मामन्त्र्य गृहाणि गत्वा देवान्समानर्चु रतिप्रहृष्टाः ॥ ४९

इति श्रीमदयोध्याकाण्डे तृतीयस्सर्गः ॥

## ॥ चतुर्थस्सर्गः ॥

गतेष्वथ नृपो भूयः पौरेषु सह मन्त्रिभिः ।
मन्त्रयित्वा ततश्चक्रे निश्चयज्ञस्स निश्चयम् ॥ १

"श्व एव पुष्यो भविता श्वोऽभिषेच्य स्तु मे सुतः ।
रामो राजीवताम्राक्षो यौवराज्य" इति प्रभुः ॥ २
अथान्तर्गृहमाविश्य राजा दशरथ स्तदा ।
सूत मामन्त्रयामास "रामं पुन रिहानय ॥" ३
प्रतिगृह्य स तद्वाक्यं सूतः पुनरुपाययौ ।
रामस्य भवनं शीघ्रं राममानयितुं पुनः ॥ ४
द्वार्स्थै रावेदितं तस्य रामायाऽऽगमनं पुनः ।
श्रुत्वैवचापि रामस्तं प्राप्तं शङ्कान्वितोऽभवत् ॥ ५
प्रवेश्य चैनं त्वरितं रामो वचनमब्रवीत् ।
"यदागमनकृत्यं ते भूयस्तद्ब्रूह्यशेषतः ॥ ६
त मुवाच तत स्सूतो "राजा त्वां द्रष्टु मिच्छति ।
श्रुत्वा प्रमाण मत्र त्वं गमनायेतराय वा ॥" ७
इति सूतवच श्श्रुत्वा रामोऽथ त्वरयाऽन्वितः ।
प्रययौ राजभवनं पुनर्द्रष्टुं नरेश्वरम् ॥ ८
तं श्रुत्वा समनुप्राप्तं रामं दशरथो नृपः ।
प्रवेशयामास गृहं विवक्षुः प्रियमुत्तमम् ॥ ९
प्रविशन्नेव च श्रीमान् राघवो भवनं पितुः ।
ददर्श पितरं दूरात्प्रणिपत्य कृताञ्जलिः ॥ १०
प्रणमन्तं समुत्थाप्य तं परिष्वज्य भूमिपः ।
प्रदिश्य चास्मै रुचिरमासनं पुनरब्रवीत् ॥ ११
"राम ! वृद्धोऽस्मि दीर्घायु र्भुक्ताभोगा मयेप्सिताः ।
अन्नवद्भिः क्रतुशतैस्तथेष्टं भूरिदक्षिणैः ॥ १२

जात मिष्ट मपत्यं मे त्वमद्यानुपमं भुवि ।
दत्त मिष्ट मधीतं च मया पुरुषसत्तम ॥ १३
अनुभूतानि चेष्टानि मया वीर! सुखान्यपि ।
देवर्षिपितृविप्राणा मनृणोऽस्मि तथाऽऽत्मनः ॥ १४
न किञ्चिन्मम कर्तव्यं तवान्यत्राभिषेचनात् ।
अतो यत्त्वा महं ब्रूयां तन्मे त्वं कर्तु मर्हसि ॥ १५
अद्य प्रकृतय स्सर्वा स्त्वा मिच्छन्ति नराधिपम् ।
अत स्त्वां युवराजान मभिषेक्ष्यामि पुत्रक! ॥ १६
अपि चाद्याशुभान् राम! स्वप्ने पश्यामि दारुणान् ।
सनिर्घातादिवोल्का च पततीह महास्वना ॥ १७
अवष्टब्धं च मे राम! नक्षत्रं दारुणै र्ग्रहैः ।
आवेदयन्ति दैवज्ञा स्सूर्याङ्गारकराहुभिः ॥ १८
प्रायेण हि निमित्तानामीदृशानां समुद्भवे ।
राजा हि मृत्युमाप्नोति घोरां वाऽऽपद मृच्छति ॥ १९
तद्यावदेव मे चेतो न विमुह्यति राघव! ।
तावदेवाभिषिञ्चस्व चला हि प्राणिनां मतिः ॥ २०
अद्य चन्द्रोऽभ्युपगतः पुष्यात्पूर्वं पुनर्वसू ।
श्वः पुष्ययोगं नियतं वक्ष्यन्ते दैवचिन्तकाः ॥ २१
ततः पुष्येऽभिषिञ्चस्व मनस्त्वरयतीव माम् ।
श्वस्त्वाऽह मभिषेक्ष्यामि यौवराज्ये परन्तप! ॥ २२
तस्मात्त्वयाऽद्य प्रभृति निशेयं नियतात्मना ।
सहवध्वोपवस्तव्या दर्भप्रस्तरशायिना ॥ २३

सुहृदश्चाप्रमत्ता स्त्वां रक्षन्त्वद्य समन्ततः ।
भवन्ति बहुविघ्नानि कार्याण्येवं विधानि हि ॥ २४
विप्रोषित श्च भरतो यावदेव पुरादितः ।
तावदेवाभिषेक स्ते प्राप्तकालो मतो मम ॥ २५
कामं खलु सतां वृत्ते भ्राता ते भरत स्स्थितः ।
ज्येष्ठानुवर्ती धर्मात्मा सानुक्रोशो जितेन्द्रियः ॥ २६
किं तु चित्तं मनुष्याणा मनित्य मिति मे मतिः ।
सतां च धर्मनित्यानां कृतशोभि च राघव! ॥ २७
"इत्युक्त स्सोऽभ्यनुज्ञात श्श्वोभाविन्यभिषेचने ।
व्रजेति" रामः पितर मभिवाद्याभ्ययाद्गृहम् ॥ २८
प्रविश्य चात्मनो वेश्म राज्ञोद्दिष्टेऽभिषेचने ।
तत्क्षणेन विनिर्गम्य मातु रन्तःपुरं ययौ ॥ २९
तत्र तां प्रवणा मेव मातरं क्षौमवासिनीम् ।
वाग्यतां देवतागारे ददर्शायाचतीं श्रियम् ॥ ३०
प्रागेव चागता तत्र सुमित्रा लक्ष्मणस्तदा ।
सीता चानयिता श्रुत्वा प्रियं रामाभिषेचनम् ॥ ३१
तस्मिन्कालेहि कौसल्या तस्थावामीलितेक्षणा ।
सुमित्रयाऽन्वास्यमाना सीतया लक्ष्मणेन च ॥ ३२
श्रुत्वा पुष्येण पुत्रस्य यौवराज्येऽभिषेचनम् ।
प्राणायामेन पुरुषं ध्यायमाना जनार्दनम् ॥ ३३
तथा सनियमा मेव सोऽभिगम्याभिवाद्य च ।
उवाच वचनं रामो हर्षयंस्ता मनिन्दिताम् ॥ ३४

"अम्ब! पित्रा नियुक्तोऽस्मि प्रजापालनकर्मणि ।
भविता श्वोऽभिषेको मे यथा मे शासनं पितुः ॥ ३५
सीतयाप्युपवस्तव्या रजनीयं मयासह ।
एव मृत्विगुपाध्यायै स्सह मामुक्तवान्पिता ॥ ३६
यानियान्यत्रयोग्यानि श्वो भाविन्यभिषेचने ।
तानि मे मङ्गळान्यद्य वैदेह्याश्चापि कारय ॥" ३७
एतच्छ्रुत्वातु कौसल्या चिरकालाभिकांक्षितम् ।
हर्षबाष्पकलं वाक्यमिदं राममभाषत ॥ ३८
"वत्स! राम! चिरंजीव हतास्ते परिपन्थिनः ।
ज्ञातीन्मे त्वं श्रिया युक्त स्सुमित्रायाश्च नन्दय ॥ ३९
कल्याणे बत नक्षत्रे मयि जातोऽसि पुत्रक! ।
येन त्वया दशरथो गुणै राराधितः पिता ॥ ४०
अमोघं बत मे क्षान्तं पुरुषे पुष्करेक्षणे ।
येय मिक्ष्वाकुराज्यश्रीः पुत्र! त्वां संश्रयिष्यति ॥" ४१
इत्येव मुक्तो मातेदं रामो भ्रातर मब्रवीत् ।
प्राञ्जलि प्रह्व मासीन मभिवीक्ष्य स्मयन्निव ॥ ४२
"लक्ष्मणेमां मयासार्धं प्रशाधि त्वं वसुन्धराम् ।
द्वितीयं मेऽन्तरात्मानं त्वामियं श्रीरुपस्थिता ॥ ४३
सौमित्रे! भुङ्क्ष्वभोगां स्त्वमिष्टान्राज्यफलानि च ॥
जीवितंच हिराज्यं च त्वदर्थमभिकामये ॥" ४४
इत्युक्त्वा लक्ष्मणं रामो मातरावभिवाद्य च ।
अभ्यनुज्ञाप्य सीतां च जगाम स्वं निवेशनम् ॥ ४५

इति श्रीमदयोध्याकाण्डे चतुर्थस्सर्गः ॥

## ॥ पञ्चमस्सर्गः ॥

संदिश्य रामं नृपति श्श्वोभाविन्यभिषेचने ।
पुरोहितं समाहूय वसिष्ठ मिद मब्रवीत् ॥ १
" गच्छोपवासं काकुत्स्थं! कारयाद्य तपोधन! ।
श्रीयशो राज्यलाभाय वध्वा सह यतव्रतम् ॥" २
" तथे "ति च स राजान मुक्त्वा वेदविदां वरः ।
स्वयं वसिष्ठो भगवान्ययौ रामनिवेशनम् ॥ ३
उपवासयितुं रामं मन्त्रवन्मन्त्रकोविदः ।
ब्राह्मं रथवरं युक्तमास्थायसुधृतव्रतः ॥ ४
स रामभवनं प्राप्य पाण्डुराभ्रघनप्रभम् ।
तिस्रः कक्ष्यारथेनैव विवेश मुनिसत्तमः ॥ ५
तमागत मृषिं रामस्त्वरन्निव ससम्भ्रमः ।
मानयिष्यन्समानार्हंनिश्चक्राम निवेशनात् ॥ ६
अभ्येत्य त्वरमाणश्च रथाभ्याशं मनीषिणः ।
ततोऽवतारयामास परिगृह्य रथात्स्वयम् ॥ ७
स चैनं प्रश्रितं दृष्ट्वा सम्भाष्याभिप्रसाद्य च ।
प्रियार्हं हर्षयन्राम मित्युवाच पुरोहितः ॥ ८
" प्रसन्नस्ते पिता राम! यौवराज्य मवाप्स्यसि ।
उपवासं भवानद्य करोतु सह सीतया ॥ ९
प्रातस्त्वामभिषेक्ताहि यौवराज्ये नराधिपः ।
पिता दशरथः प्रीत्या ययातिं नहुषो यथा ॥" १०

इत्युक्त्वा स तदा राम मुपवासंयतव्रतम् ।
मन्त्रवित्कारयामास वैदेह्यासहितंमुनिः ॥ ११
ततो यथावद्रामेणसराज्ञो गुरुरर्चितः ।
अभ्यनुज्ञाप्यकाकुत्स्थं ययौ रामनिवेशनात् ॥ १२
सुहृद्भिस्तत्र रामोऽपि सहासीनः प्रियंवदैः ।
सभाजितो विवेशाथतानानुज्ञाप्य सर्वशः ॥ १३
हृष्टनारीनरयुतं रामवेश्म तदा बभौ ।
यथामत्तद्विजगणं प्रफुल्लनळिनं सरः ॥ १४
स राजभवनप्रख्यात्तस्माद्रामनिवेशनात् ।
निर्गत्य ददृशे मार्गं वसिष्ठो जनसंवृतम् ॥ १५
बृन्दबृन्दै रयोध्यायां राजमार्गास्समन्ततः ।
बभूवु रभिसम्बाधाः कुतूहलजनैर्वृताः ॥ १६
जनबृन्दोर्मिसंघर्ष हर्षस्वनवतस्तदा ।
बभूव राजमार्गस्य सागरस्येव निस्वनः ॥ १७
सिक्तसंमृष्टरथ्या हि तदह र्वनमालिनी ।
आसीदयोध्या नगरी समुच्छ्रितगृहध्वजा ॥ १८
तदा ह्ययोध्यानिलय स्सस्त्रीबालाबलोजनः ।
रामाभिषेकमाकांक्षन्नाकांक्ष दुदयं रवेः ॥ १९
प्रजालंकारभूतं च जनस्यानन्दवर्धनम् ।
उत्सुकोऽभूज्जनो द्रष्टुं तमयोध्यामहोत्सवम् ॥ २०
एवं तं जनसम्बाधं राजमार्गं पुरोहितः ।
व्यूहन्निव जनौघं तं शनै राजकुलं ययौ ॥ २१

सिताभ्रशिखरप्रख्यं प्रासादमधिरुह्य सः ।
समीयाय नरेन्द्रेण शक्रेणेव बृहस्पतिः ॥ २२

त मागत मभिप्रेक्ष्य हित्वा राजासनं नृपः ।
पप्रच्छ स च तस्मै तत्कृतमित्यभ्यवेदयत् ॥ २३

तेन चैव तदा तुल्यं सहासीना स्सभासदः ।
आसनेभ्य स्समुत्तस्थुः पूजयन्तः पुरोहितम् ॥ २४

गुरुणा त्वभ्यनुज्ञातो मनुजौघं विसृज्यतम् ।
विवेशान्तःपुरं राजा सिंहो गिरिगुहा मिव ॥ २५

तदग्र्यवेषप्रमदाजनाकुलं महेन्द्रवेश्मप्रतिमं निवेशनम् ।
विदीपयं श्चारु विवेश पार्थिव श्शशीव तारागणसङ्कुलं नभः ॥

इति श्रीमदयोध्याकाण्डे पञ्चमस्सर्गः ॥

---

## ॥ षष्ठस्सर्गः ॥

गते पुरोहिते राम स्स्नातो नियतमानसः ।
सह पत्न्या विशालाक्ष्या नारायण मुपागमत् ॥ १

प्रगृह्य शिरसा पात्रीं हविषोविधिवत्तदा ।
महते दैवतायाज्यं जुहावज्वलितेऽनले ॥ २

शेषं च हविषस्तस्य प्राश्याशास्यात्मनः प्रियम् ।
ध्यायन्नारायणं देवं स्वास्तीर्णे कुशसंस्तरे ॥ ३

वाग्यत स्सहवैदेह्या भूत्वा नियतमानसः ।
श्रीमत्यायतने विष्णोश्शिश्ये नरवरात्मजः ॥ ४

एकयामावशिष्टायां रात्र्यां प्रतिविबुध्य सः ।
अलङ्कारविधिं कृत्स्नंकारयामास वेश्मनः ॥ ५
तत्र शृण्वन्सुखा वाच स्सूतमागधवन्दिनाम् ।
पूर्वां सन्ध्या मुपासीनो जजाप यतमानसः ॥ ६
तुष्टाव प्रणतश्चैव शिरसा मधुसूदनम् ।
विमलक्षौमसंवीतो वाचयामास च द्विजान् ॥ ७
तेषां पुण्याहघोषोऽथ गम्भीरमधुरस्तदा ।
अयोध्यां पूरयामास तूर्यघोषानुनादितः ॥ ८
कृतोपवासं तु तदा वैदेह्या सह राघवम् ।
अयोध्यानिलय श्श्रुत्वा सर्वः प्रमुदितो जनः ॥ ९
ततः पौरजन स्सर्व श्श्रुत्वा रामाभिषेचनम् ।
प्रभातां रजनीं दृष्ट्वा चक्रे शोभयितु पुरीम् ॥ १०
सिताभ्रशिखराभेषु देवतायतनेषु च ।
चतुष्पथेषु रथ्यासु चैत्येष्वट्टालकेषु च ॥ ११
नानापण्यसमृद्धेषु वणिजा मापणेषु च ।
कुटुम्बिनां समृद्धेषु श्रीमत्सु भवनेषु च ॥ १२
[सभासु चैव सर्वासु वृक्षेष्वालक्षितेषु च ।]
ध्वजा स्समुच्छ्रिता श्चित्राः पताका श्चाभवं स्तदा ॥ १३
नटनर्तकसङ्घानां गायकानां च गायताम् ।
मनःकर्ण सुखावाच श्शुश्रुवु श्च ततस्ततः ॥ १४
रामाभिषेकयुक्ता श्च कथा श्चक्रु र्मिथो जनाः ।
रामाभिषेके सम्प्राप्ते चत्वरेषु गृहेषु च ॥ १५

बाला अपि क्रीडमाना गृहद्वारेषु संघशः ।
रामाभिषवसंयुक्ता श्चक्रुरेव मिथः कथाः ॥ १६
कृतपुष्पोपहार श्च धूपगन्धाधिवासितः ।
राजमार्गः कृतश्श्रीमान्पौरै रामाभिषेचने ॥ १७
प्रकाशकरणार्थं च निशागमनशङ्कया ।
दीपवृक्षांस्तथा चक्रु रनुरथ्यासु सर्वशः ॥ १८
अलङ्कारं पुरस्यैवं कृत्वा तत्पुरवासिनः ।
आकांक्षमाणा रामस्य यौवराज्याभिषेचनम् ॥ १९
समेत्य संघश स्सर्वे चत्वरेषु सभासु च ।
कथयन्तो मिथस्तत्र प्रशशंसु र्जनाधिपम् ॥ २०
अहो महात्मा राजाऽय मिक्ष्वाकुकुलनन्दनः ।
ज्ञात्वा यो वृद्ध मात्मानं रामं राज्येऽभिषेक्ष्यति ॥ २१
सर्वेह्यनुगृहीतास्स्मो यन्नो रामो महीपतिः ।
चिराय भविता गोप्ता दृष्टलोकपरावरः ॥ २२
अनुद्धतमना विद्वान्धर्मात्मा भ्रातृवत्सलः ।
यथा च भ्रातृषु स्निग्ध स्तथाऽस्मास्वपि राघवः ॥ २३
चिरंजीवतु धर्मात्मा राजा दशरथोऽनघः ।
यत्प्रसादेनाभिषिक्तं रामं द्रक्ष्यामहे वयम् ॥ २४
एवं विधं कथयतां पौराणां शुश्रुवु स्तदा ।
दिग्भ्योऽपि श्रुतवृत्तान्ताः प्राप्ता जानपदा जनाः ॥ २५
ते तु दिग्भ्यः पुरीं प्राप्ता द्रष्टुं रामाभिषेचनम् ।
रामस्य पूरयामासुः पुरीं जानपदा जनाः ॥ २६

जनौघै स्तै र्विसर्पद्भि श्शुश्रुवे तत्र निस्वनः ।
पर्वसूदीर्णवेगस्य सागरस्येव निस्वनः ॥ २७
तत स्तदिन्द्रक्षयसन्निभं पुरं दिदृक्षुभि र्जानपदै रुपागतैः ।
समन्तत स्सस्वन माकुलं बभौ समुद्रयादोभिरिवार्णवोदकम् ॥ २८

इति श्रीमदयोध्याकाण्डे षष्ठस्सर्गः ॥

## ॥ सप्तमस्सर्गः ॥

ज्ञातिदासी यतो जाता कैकेय्या स्तु सहोषिता ।
प्रासादं चन्द्रसंकाश मारुरोह यदृच्छया ॥ १
सिक्तराजपथां रम्यां प्रकीर्णकुसुमोत्कराम् ।
अयोध्यां मन्थरा तस्मात्प्रासादादन्ववैक्षत ॥ २
पताकाभि र्वरार्हाभि र्ध्वजै श्च समलङ्कृताम् ।
वृतां छन्दपथै श्चापि शिरस्स्नात जनैर्वृताम् ॥ ३
माल्यमोदकहस्तै श्च द्विजेन्द्रै रभिनादिताम् ।
शुक्लदेवगृहद्वारां सर्ववादित्रनिस्वनाम् ॥ ४
सम्प्रहृष्टजनाकीर्णां ब्रह्मघोषाभिनादिताम् ।
प्रहृष्टवरहस्त्यश्वां सम्प्रणर्दितगोवृषाम् ॥ ५
प्रहृष्ट मुदितैः पौरै रुच्छ्रितध्वजमालिनीम् ।
अयोध्यां मन्थरा दृष्ट्वा परं विस्मय मागता ॥ ६
प्रहर्षोत्फुल्लनयनां पाण्डुरक्षौमवासिनीम् ।
अविदूरे स्थितां दृष्ट्वा धात्रीं पप्रच्छ मन्थरा ॥ ७

उत्तमेनाभिसंयुक्ता हर्षेणार्थपरा सती ।
राममाता धनं किन्नु जनेभ्य स्सम्प्रयच्छति ॥ ८
अतिमात्रप्रहर्षोऽयं किं जनस्य च शंसमे ।
कारयिष्यति किं वापि सम्प्रहृष्टो महीपतिः ॥ ९
विदीर्यमाणा हर्षेण धात्री तु परया मुदा ।
आचचक्षेऽथ कुब्जायै भूयसीं राघवश्रियम् ॥ १०
श्वः पुष्येण जितक्रोधं यौवराज्येन राघवम् ।
राजा दशरथो राममभिषेचयिताऽनघम् ॥ ११
धात्र्या स्तु वचनं श्रुत्वा कुब्जाक्षिप्रममर्षिता ।
कैलासशिखराकारात्प्रासादा दवरोहत ॥ १२
सा दह्यमाना कोपेन मन्थरा पापदर्शिनी ।
शयाना मेत्य कैकेयी मिदं वचनमब्रवीत् ॥ १३
"उत्तिष्ठ मूढे! किं शेषे भयं त्वा मभिवर्तते ।
उपप्लुत मघौघेन कि मात्मानं न बुध्यसे ॥ १४
अनिष्टे! सुभगाकारे! सौभाग्येन विकत्थसे ।
चलं हि तव सौभाग्यं नद्या स्स्रोत इवोष्णगे ॥" १५
एव मुक्ता तु कैकेयी रुष्टया परुषं वचः ।
कुब्जया पापदर्शिन्या विषाद मगमत्परम् ॥ १६
कैकेयी त्वब्रवीत्कुब्जां "कच्चित्क्षेमं नु मन्थरे! ।
विषण्णवदनां हि त्वां लक्षये भृशदुःखिताम् ॥" १७
मन्थरा तु वचश्श्रुत्वा कैकेय्या मधुराक्षरम् ।
उवाच क्रोधसंयुक्ता वाक्यं वाक्यविशारदा ॥ १८

सा विषण्णतरा भूत्वा कुब्जा तस्या हितैषिणी ।
विषादयन्ती प्रोवाच भेदयन्ती च राघवम् ॥ १९
"अक्षय्यं सुमहद्देवि! प्रवृत्तं त्वद्विनाशनम् ।
रामं दशरथो राजा यौवराज्येऽभिषेक्ष्यति ॥ २०
साऽस्म्यगाधे भये मग्ना दुःखशोकसमन्विता ।
दह्यमानाऽनलेनेव त्वद्धितार्थमिहागता ॥ २१
तव दुःखेन कैकेयि! मम दुःखं महद्भवेत् ।
त्वद्वृद्धौ मम वृद्धि श्च भवेदत्र नसंशयः ॥ २२
नराधिपकुले जाता महिषी त्वं महीपतेः ।
उग्रत्वं राजधर्माणां कथं देवि! न बुध्यसे ॥ २३
धर्मवादी शठोभर्ता श्लक्ष्णवादी च दारुणः ।
शुद्धभावेन जानीषे तेनैव मतिसन्धिता ॥ २४
उपस्थितं प्रयुंजान स्त्वयि सान्त्व मनर्थकम् ।
अर्थेनैवाद्य ते भर्ता कौसल्यां योजयिष्यति ॥ २५
अपवाह्य स दुष्टात्मा भरतं तव बन्धुपु ।
काल्ये स्थापयिता रामं राज्ये निहतकण्टके ॥ २६
शत्रुः पतिप्रवादेन मात्रेव हितकाम्यया ।
आशीविष इवाङ्केन बाले! परिहृत स्त्वया ॥ २७
यथा हि कुर्यात्सर्पो वा शत्रुर्वा प्रत्युपेक्षितः ।
राज्ञा दशरथेनाद्य सपुत्रा त्वं तथा कृता ॥ २८
पापेनानृतसान्त्वेन बाले! नित्यं सुखोचिते ।
रामं स्थापयता राज्ये सानुबन्धा हता ह्यसि ॥ २९

सा प्राप्तकालं कैकेयि! क्षिप्रं कुरु हितं तव ।
त्रायस्व पुत्र मात्मानं मां च विस्मयदर्शने! ॥" ३०

मन्थराया वच श्श्रुत्वा शयाना सा शुभानना ।
उत्तस्थौ हर्षसंपूर्णा चन्द्रलेखेव शरदी ॥ ३१

अतीव सा तु संहृष्टा कैकेयी विस्मयान्विता ।
एक माभरणं तस्यै कुब्जायै प्रददौ शुभम् ॥ ३२

दत्वा त्वाभरणं तस्यै कुब्जायै प्रमदोत्तमा ।
कैकेयी मन्थरां दृष्ट्वा पुनरेवाब्रवीदिदम् ॥ ३३

"इदं तु मन्थरे! मह्य माख्यासि परमं प्रियम् ।
एतन्मे प्रिय माख्यातुः किं वा भूयः करोमि ते ॥ ३४

रामे वा भरते वाहं विशेषं नोपलक्षये ।
तस्मात्तुष्टास्मि यद्राजा रामं राज्येऽभिषेक्ष्यति ॥ ३५

न मे परं किंचि दित स्त्वयापुनः प्रियं प्रियार्हे! सुवचं वचः परम् ।
तथा ह्यवोच स्त्वमतः प्रियोत्तरं परं वरं ते प्रददामि तं वृणु ॥"

॥ इति श्रीमदयोध्याकाण्डे सप्तमस्सर्गः ॥

## ॥ अष्टमस्सर्गः ॥

मन्थरा त्वभ्यसूयैना मुत्सृज्याभरणं च तत् ।
उवाचेदं "ततो वाक्यं कोपदुःखसमन्विता ॥ १

हर्षं किं मिद मस्थाने कृतवत्यसि बालिशे! ।
शोकसागरमध्यस्थ मात्मानं नावबुध्यसे ॥ २

मनसा प्रहसामि त्वां देवि! दुःखार्दिता सती ।
यच्छोचितव्ये हृष्टासि प्राप्येदं व्यसनं महत् ॥ ३
शोचामि दुर्मतिं त्वां ते काहि प्राज्ञा प्रहर्षयेत्? ।
अरे स्सपत्नी पुत्रस्य वृद्धिं मृत्योरिवागताम् ॥ ४
भरता देव रामस्य राज्यसाधारणाद्भयम् ।
तद्विचिन्त्य विषण्णाऽस्मि भयं भीताद्धि जायते ॥ ५
लक्ष्मणो हि महेष्वासो रामं सर्वात्मना गतः ।
शत्रुघ्न श्चापि भरतं काकुत्स्थं लक्ष्मणो यथा ॥ ६
प्रत्यासन्नक्रमेणापि भरतस्यैव भामिनि! ।
राज्यक्रमो विप्रकृष्ट स्तयो स्तावत्कनीयसोः ॥ ७
विदुषः क्षत्त्रचारित्रे प्राज्ञस्य प्राप्तकारिणः ।
भयात्प्रवेपे रामस्य चिन्तयन्ती तवात्मजम् ॥ ८
सुभगा खलु कौसल्या यस्याः पुत्रोऽभिषेक्ष्यते ।
यौवराज्येन महता श्वः पुष्येण द्विजोत्तमैः ॥ ९
प्राप्तां सुमहतीं प्रीतिं प्रतीतां ता हतद्विषम् ।
उपस्थास्यसि कौसल्यां दासीवत्त्वं कृताञ्जलिः ॥ १०
एवं चे त्त्वं सहास्माभिस्तस्याः प्रेष्या भविष्यसि ।
पुत्र श्च तव रामस्य प्रेष्यभावं गमिष्यति ॥ ११
हृष्टाः खलु भविष्यन्ति रामस्य परमा स्त्रियः ।
अप्रहृष्टा भविष्यन्ति स्नुषास्ते भरतक्षये ॥" १२
तां दृष्ट्वा परमप्रीतां ब्रुवन्तीं मन्थरां ततः ।
रामस्यैव गुणान्देवी कैकेयी प्रशशंस ह ॥ १३

"धर्मज्ञो गुरुभि र्दान्तः कृतज्ञस्सत्यवाक्छुचिः ।
रामो राज्ञस्सुतो ज्येष्ठो यौवराज्यमतोऽर्हति ॥ १४
भ्रातॄन्भृत्यांश्च दीर्घायुः पितृवत्पालयिष्यति ।
संतप्स्यसे कथं कुब्जे! श्रुत्वा रामाभिषेचनम् ॥ १५
भरतश्चापिरामस्य ध्रुवं वर्षशतात्परम् ।
पितृपैतामहं राज्यमवाप्ता पुरुषर्षभः ॥ १६
सा त्व मभ्युदये प्राप्ते वर्तमाने च मन्थरे! ।
भविष्यति च कल्याणे किमर्थं परितप्यसे? ॥ १७
यथा मे भरतो मान्य स्तथा भूयोऽपि राघवः ।
कौसल्यातोऽतिरिक्तं च सोऽनुशुश्रूषते हिमाम् ॥ १८
राज्यं यदि हि रामस्य भरतस्यापि तत्तदा ।
मन्यते हि यथात्मानं तथा भ्रातॄंश्च राघवः ॥" १९
कैकेयीवचनं श्रुत्वा मन्थरा भृशदुःखिता ।
दीर्घ मुष्णं विनिश्वस्य कैकेयी मिद मब्रवीत् ॥ २०
"अनर्थदर्शिनी मौर्ख्या न्नात्मान मवबुद्ध्यसे ।
शोकव्यसनविस्तीर्णे मज्जन्ती दुःखसागरे ॥ २१
भविताराघवोराजा राघवस्य च यस्सुतः ।
राजवंशात्तु कैकेयि! भरतः परिहास्यते ॥ २२
नहि राज्ञ स्सुता स्सर्वे राज्ये तिष्ठन्ति भामिनि! ।
स्थाप्यमानेषु सर्वेषु सुमहाननयो भवेत् ॥ २३
तस्माज्ज्येष्ठे हि कैकेयि! राज्यतन्त्राणि पार्थिवाः ।
स्थापयन्त्यनवद्याङ्गि! गुणवत्स्वितरेष्वपि ॥ २४

असावत्यन्तनिर्भग्न स्तव पुत्रो भविष्यति ।
अनाथवत्सुखेभ्यश्च राजवंशाच्चवत्सले! । २५
साऽहं त्वदर्थे सम्प्राप्ता त्वं तु मां नावबुद्ध्यसे ।
सपत्निवृद्धौ या मे त्वं प्रदेयं दातु मिच्छसि ॥ २६
ध्रुवं तु भरतं रामः प्राप्य राज्य मकण्टकम् ।
देशान्तरं वा नयिता लोकान्तर मथाऽपि वा ॥ २७
बाल एव हि मातुल्यं भरतोऽऽनायित स्त्वया ।
सन्निकर्षा च्च सौहार्दं जायते स्थावरेष्वपि ॥ २८
भरतस्याप्यनुवशश्शत्रुघ्नोऽपि ममंगतः ।
लक्ष्मणो हि यथा रामं तथाऽसौ भरतं गतः ॥ २९
श्रूयते हि द्रुमः कश्चिच्छेत्तव्यो वनजीविभिः ।
सन्निकर्षा दिषीकाभि र्मोचितः परमा द्भयात् ॥ ३०
गोप्ताहि रामं सौमित्रि र्लक्ष्मणं चापि राघवः ।
अश्विनो रिव सौभ्रात्रं तयोर्लोकेषु विश्रुतम् ॥ ३१
तस्मा न्न लक्ष्मणे रामः पापं किंचि त्करिष्यति ।
रामस्तु भरते पापं कुर्यादिति न संशयः ॥ ३२
तस्मा द्राजगृहा देव वनं गच्छतु ते सुतः ।
एतद्धिरोचते मह्यं भृशं चापि हितं तव ॥ ३३
एवं ते ज्ञातिपक्षस्य श्रेयश्चैव भविष्यति ।
यदि चे द्भरतो धर्मात्पित्र्यं राज्य मवाप्स्यति ॥ ३४
स ते सुखोचितो बालो रामस्य सहजो रिपुः ।
समृद्धार्थस्य नष्टार्थो जीविष्यति कथं वशे ? ॥ ३५

अभिद्रुत मिवारण्ये सिंहेन गजयूथपम् ।
प्रच्छाद्यमानं रामेण भरतं त्रातु मर्हसि ॥ ३६

दर्पान्निराकृता पूर्वं त्वया सौभाग्यवत्तया ।
राममाता सपत्नी ते कथं वैरं न यातयेत् ॥ ३७

यदा हि रामः पृथिवीमवाप्स्यति प्रभूतरत्नाकरशैलपत्तनाम् ।
तदा गमिष्यस्यशुभं पराभवं सहैव दीना भरतेन भामिनि ! ॥ ३८

यदा हि रामः पृथिवीमवाप्स्यति ध्रुवं प्रणष्टो भरतो भविष्यति ।
अतो हि संचिन्तय राज्य मात्मजे परस्य चैवाद्य विवासकारणम् ॥"

इति श्रीमदयोध्याकाण्डे अष्टमस्सर्गः ॥

---

## ॥ नवमस्सर्गः ॥

एव मुक्ता तु कैकेयी क्रोधेन ज्वलितानना ।
दीर्घ मुष्णं विनिश्वस्य मन्थरा मिदमब्रवीत् ॥ १

"अद्य राम मितः क्षिप्रं वनं प्रस्थापयाम्यहम् ।
यौवराज्ये च भरतं क्षिप्र मेवाभिषेचये ॥ २

इदं त्विदानीं सम्पश्य केनोपायेन मन्थरे ! ।
भरतः प्राप्नुया द्राज्यं न तु रामः कथंचन ॥" ३

एव मुक्ता तया देव्या मन्थरा पापदर्शिनी ।
रामार्थ मुपहिंसन्ती कैकेयी मिदमब्रवीत् ॥ ४

"हन्तेदानीं प्रवक्ष्यामि कैकेयि ! श्रूयतां च मे ।
यथा ते भरतो राज्यं पुत्रः प्राप्स्यति केवलम् ॥ ५

किं न स्मरसि कैकेयि! स्मरन्ती वा निगूहसे ।
यदुच्यमानमात्मार्थं मत्तस्त्वं श्रोतु मिच्छसि ॥ ६
मयोच्यमानं यदि ते श्रोतुं छन्दो विलासिनि! ।
श्रूयतामभिधास्यामि श्रुत्वा चापि विमृश्यताम् ॥" ७
श्रुत्वैवं वचनं तस्या मन्थरायास्तु कैकयी ।
किंचि दुत्थाय शयनात्स्वास्तीर्णादिदमब्रवीत् ॥ ८
"कथय त्वं ममोपायं केनोपायेन मन्थरे! ।
भरतः प्राप्नुया द्राज्यं न तु रामः कथंचन ॥" ९
एव मुक्ता तया देव्या मन्थरा पापदर्शिनी ।:
रामार्थ मुपहिंसन्ती कुब्जा वचनमब्रवीत् ॥ १०
"तत्र दैवासुरे युद्धे सह राजर्षिभिः पतिः ।
अगच्छत्त्वामुपादाय देवराजस्य साह्यकृत् ॥ ११
दिश मास्थाय वै देवि! दक्षिणां दण्डकान्प्रति ।
वैजयन्तमिति ख्यातं पुरं यत्र तिमिध्वजः ॥ १२
स शम्बर इति ख्यात श्शतमायो महासुरः ।
ददौ शक्रस्य सङ्ग्रामं देवसंघै रनिर्जितः ॥ १३
तस्मिन्महति सङ्ग्रामे पुरुषान्क्षतविक्षतान् ।
रात्रौ प्रसुप्तान्घ्नन्ति स्म तरसाऽऽसाद्य राक्षसाः ॥ १४
तत्राकरोन्महद्युद्धं राजा दशरथ स्तदा ।
असुरै श्च महाबाहु श्शस्त्रै श्च शकलीकृतः ॥ १५
अपवाह्य त्वया देवि! सङ्ग्रामान्नष्टचेतनः ।
तत्रापि विक्षत श्शस्त्रैः पतिस्ते रक्षित स्त्वया ॥ १६

तुष्टेन तेन दत्तौ ते द्वौ वरौ शुभदर्शने! ।
स त्वयोक्तः पतिर्देवि! यदेच्छेयं तदा वरौ ॥ १७
गृह्णीयामिति तत्तेन तथेत्युक्तं महात्मना ।
अनभिज्ञा ह्यहं देवि! त्वयैव कथिता पुरा ॥ १८
कथैषा तव तु स्नेहान्मनसा धार्यते मया ।
रामाभिषेक सम्भारान्निगृह्य विनिवर्तय ॥ १९
तौ वरौ याच भर्तारं भरतस्याभिषेचनम् ।
प्रव्राजनं च रामस्य त्वं वर्षाणि चतुर्दश ॥ २०
चतुर्दश हि वर्षाणि रामे प्रव्राजिते वनम् ।
प्रजाभावगतस्नेहस्स्थिरः पुत्रो भवियति ॥ २१
क्रोधागारं प्रविश्याऽद्य क्रुद्धेवाश्वपते स्सुते! ।
शेष्वानन्तर्हितायां त्व भूमौ मलिनवासिनी ॥ २२
मास्मैनं प्रत्युदीक्षेथा मा चैनमभिभाषथाः ।
रुदती चापि तं दृष्ट्वा जगत्यां शोकलालसा ॥ २३
दयिता त्वं सदा भर्तुरत्र मे नास्ति संशयः ।
त्वत्कृते च महाराजो विशेदपि हुताशनम् ॥ २४
न त्वां क्रोधयितुं शक्तो न क्रुद्धां प्रत्युदीक्षितुम् ।
तव प्रियार्थं राजा हि प्राणानपि परित्यजेत् ॥ २५
न ह्यतिक्रमितुं शक्त स्तव वाक्यं महीपतिः ।
मंदस्वभावे! बुद्ध्यस्व सौभाग्यबलमात्मनः ॥ २६
मणिमुक्तं सुवर्णानि रत्नानि विविधानि च ।
दद्या दशरथो राजा मास्मतेषु मनःकृथाः ॥ २७

यौ तौ दैवासुरे युद्धे वरौ दशरथोऽदात् ।
तौ स्मारय महाभागे! सोऽर्थोमा त्वा मतिक्रमेत् ॥ २८
यदा तु ते वर दद्या त्स्वयमुत्थाप्य राघवः ।
व्यवस्थाप्य महाराजं त्व मिमं वृणुयावरम् ॥ २९
रामं प्रव्राजयारण्ये नववर्षाणि पञ्चच
भरतः क्रियतां राजा पृथिव्याः पार्थिवर्षभः ॥ ३०
चतुर्दशहि वर्षाणि रामे प्रव्राजिते वनम् ।
रूढश्च कृतमूलश्च शेषं स्थास्यति ते सुतः ॥ ३१
रामप्रव्राजनं चैव देवि! याचस्व तं वरम् ।
एवं सिध्यन्ति पुत्रस्य सर्वार्था स्तव भामिनि! ॥ ३२
एवं प्रव्राजितश्चैव रामोऽरामो भविष्यति ।
भरतश्च हतामित्र स्तवराजा भविष्यति ॥ ३३
येन कालेन रामश्च वनात्प्रत्यागमिष्यति ।
तेन कालेन पुत्रस्ते कृतमूलो भविष्यति ॥ ३४
संगृहीतमनुष्यश्च सुहृद्भि स्साधमात्मवान् ।
प्राप्तकालं तु ते मन्ये राजानं वीतसाध्वसा ॥ ३५
रामाभिषेकसंभारान्निगृह्य विनिवर्तय ।
अनर्थ मर्थरूपेण ग्राहिता सा ततस्तया ॥ ३६
हृष्टा प्रतीता कैकेयी मन्थरा मिदमब्रवीत् ।
"सा हि वाक्येन कुब्जायाः किशोरीवोत्पथं गता ॥ ३७
कैकेयी विस्मयं प्राप्ता परं परमदर्शना ।
कुब्जे! त्वां नाभिजानामि श्रेष्ठां श्रेष्ठभिधायिनीम् ॥ ३८

पृथिव्या मसि कुब्जाना मुत्तमा बुद्धिनिश्चये ।
त्व मेव तु ममार्थेषु नित्ययुक्ता हितैषिणी ॥ ३९
नाहं समवबुद्धयेयं कुब्जे! राज्ञ श्चिकीर्षितम् ।
सन्ति दुस्संस्थिताः कुब्जा वक्राः परमदारुणाः ॥ ४०
त्वं पद्ममिव वातेन सन्नता प्रियदर्शना ।
उरस्तेऽभिनिविष्टं वै यावत्स्कन्धात्समुन्नतम् ॥ ४१
अधस्ता च्चोदरं शातं सुनाभ मिव लज्जितम् ।
परिपूर्ण च जघनं सुपीनौ च पयोधरौ ॥ ४२
विमलेन्दुसमं वक्त्र महो राजसि मन्थरे! ।
जघनं तव निर्घुष्टं रशनादामशोभितम् ॥ ४३
जङ्घे भृशमुपन्यस्ते पादौ चाप्यायता वुभौ ।
त्व मायताभ्यां सक्थिभ्यां मन्थरे! क्षौमवासिनी ॥ ४४
अग्रतो मम गच्छन्ती राजहंसीव राजसे ।
आसन्याश्शम्बरे माया स्सहस्र मसुराधिपे ॥ ४५
सर्वा स्त्वयि निविष्टा स्ता भूयश्चान्या स्सहस्रशः ।
तवेदं स्थगु यद्दीर्घं रथघोण मिवायतम् ॥ ४६
मतयः क्षत्रविद्या श्च मायाश्चात्र वसन्ति ते ।
अत्र ते प्रतिमोक्ष्यामि मालां कुब्जे! हिरण्मयीम् ॥ ४७
अभिषिक्ते च भरते राघवे च वनं गते ।
जात्येन च सुवर्णेन सुनिष्टप्तेन मन्थरे! ॥ ४८
लब्धार्था च प्रतीता च लेपयिष्यामि ते स्थगु ।
मुखेच तिलकं चित्रं जातरूपमयं शुभम् ॥ ४९

कारयिष्यामि ते कुब्जे! शुभान्याभरणानि च ।
परिधाय शुभे वस्त्रे देवतेव चरिष्यसि ॥ ५०
चन्द्र माह्वयमानेन मुखेनाप्रतिमानना ।
गमिष्यसि गतिं मुख्यां गरयन्ती द्विषज्जनम् ॥ ५१
तवापिकुब्जाः कुब्जाया स्सर्वाभरणभूषिताः ।
पादौ परिचरिष्यन्ति यथैवत्वं सदा मम" ॥ ५२
इति प्रशस्यमाना सा कैकेयी मिद मब्रवीत् ।
"शयानां शयने शुभ्रे वेद्यामग्निशिखामिव ॥ ५३
गतोदके सेतुबन्धो न कल्याणि! विधीयते ।
उत्तिष्ठ कुरु कल्याणि! राजान मनुदर्शय ॥" ५४
तथा प्रोत्साहिता देवी गत्वा मन्थरया सह ।
क्रोधागारं विशालाक्षी सौभाग्यमदगर्विता ॥ ५५
[अनेकशतसाहस्रं मुक्ताहारं वरांगना ।
अवमुच्य वरार्हाणि शुभान्याभरणानि च ॥] ५६
ततो हेमोपमातत्र कुब्जा वाक्यवशंगता ।
संविश्य भूमौ कैकेयी मन्थरा मिदमब्रवीत् ॥ ५७
"इह वा मां मृतां कुब्जे! नृपायावेदयिष्यसि ।
वनं तु राघवे प्राप्ते भरतः प्राप्स्यति क्षितिम् ॥ ५८
न सुवर्णेन मे ह्यर्थो न रत्नैर्न च भूषणैः ।
एष मे जीवितस्यान्तो रामो यद्यभिषिच्यते ॥" ५९
अथो पुनस्तां महिषीं महीक्षितो वचोभि रत्यर्थमहापराक्रमैः ।
उवाच कुब्जा भरतस्य मातरं हितं वचो राम मुपेत्य चाहितम् ॥

"प्रपत्स्यते राज्य मिदं हि राघवो यदि ध्रुवं त्वं ससुता च तप्स्यसे ।
अतो हि कल्याणि! यतस्व तत्तथा यथा सुतस्ते भरतोऽभिषेक्ष्यते॥"
तथाऽतिविद्धा महिषी तु कुब्जया समाहता वागिषुभिर्मुहुर्मुहुः ।
निधाय हस्तौ हृदयेऽतिविस्मिता शशंस कुब्जां कुपिता पुनःपुनः ॥
यमस्य वा मां विषयं गता मितो निशाम्य कुब्जे! प्रतिवेदयिष्यसि ।
वनं गते वा सुचिराय राघवे समृद्धकामो भरतो भविष्यति ॥ ६३
अहं हि नैवास्तरणानि न स्रजो न चन्दनं नाञ्जनपानभोजनम् ।
न किंचि दिच्छामि न चेह जीवितं न चेदितो गच्छति राघवो वनम् ॥"
अथैत दुक्त्वा वचनं सुदारुणं निधाय सर्वाभरणानि भामिनी ।
असंवृता मास्तरणेन मेदिनीं तदाऽधिशिश्ये पतितेव किन्नरी ॥ ६५
उदीर्णसंरम्भतमोवृतानना तथाऽवमुक्तोत्तममाल्यभूषणा ।
नरेन्द्रपत्नी विमना बभूव सा तमोवृता द्यौरिव मग्नतारका ॥ ६६

॥ इति श्रीमदयोध्याकाण्डे नवमस्सर्गः ॥

---

## ॥ दशमस्सर्गः ॥

विदर्शिता यदा देवी कुब्जया पापया भृशम् ।
तथा शेतेस्म सा भूमौ दिग्धविद्धेव किन्नरी ॥ १
निश्चित्य मनसा कृत्यं सा सम्यगिति भामिनी ।
मन्थरायै शनै स्सर्वं माचचक्षे विचक्षणा ॥ २
सादीना निश्चयं कृत्वा मन्थरावाक्यमोहिता ।
नागकन्येव निश्वस्य दीर्घ मुष्णं च भामिनी ॥ ३

मुहूर्तं चिन्तयामास मार्ग मात्मसुखावहम् ।
सा सुहृच्चार्थकामाच तं निशम्य सुनिश्चयम् ॥ ४
बभूव परमप्रीता सिद्धिं प्राप्येव मन्थरा ।
अथ सा रुषिता देवी सम्यक्कृत्वाविनिश्चयम् ॥ ५
संविवेशाबला भूमौ निवेश्य भृकुटीं मुखे ।
तत श्चित्राणि माल्यानि दिव्यान्याभरणानि च ॥ ६
अपविद्धानि कैकेय्या तानि भूमिं प्रपेदिरे ।
तया तान्यपविद्धानि माल्यान्याभरणानि च ॥ ७
अशोभयन्त वसुधां नक्षत्राणि यथा नभः ।
क्रोधागारे निपतिता सा बभौ मलिनाम्बरा ॥ ८
एकवेणीं दृढं बद्ध्वा गतसत्त्वेव किन्नरी ।
आज्ञाप्य च महाराजो राघवस्याभिषेचनम् ॥ ९
उपस्थान मनुज्ञाप्य प्रविवेश निवेशनम् ।
अद्य रामाभिषेको वै प्रसिद्ध इति जज्ञिवान् ॥ १०
प्रियार्हां प्रियमाख्यातुं विवेशान्तःपुरं वशी ।
सकैकेय्या गृहं श्रेष्ठं प्रविवेश महायशाः ॥ ११
पाण्डुराभ्रमिवाकाशं राहुयुक्तं निशाकरः ।
शुकबर्हिणसंघुष्टं क्रौञ्चहंसरुतायुतम् ॥ १२
वादित्ररवसंघुष्टं कुब्जावामनिकायुतम् ।
लतागृहैश्चित्रगृहै श्चम्पकाशोकशोभितैः ॥ १३
दान्तराजतसौवर्ण वेदिकाभि स्समायुतम् ।
नित्यपुष्पफलैर्वृक्षै र्वापीभि श्चोपशोभितम् ॥ १४

दान्त राजत सौवर्णै स्संवृतं परमासनैः ।
विविधै रन्नपानैश्च भक्ष्यैश्च विविधै रपि ॥ १५
उपपन्नं महार्हैश्च भूषितै स्त्रिदिवोपमम् ।
तत्प्रविश्य महाराज स्स्वमन्तःपुरमृद्धिमत् ॥ १६
न ददर्श प्रियां राजाकैकेयीं शयनोत्तमे ।
स कामबलसंयुक्तो रत्यर्थं मनुजाधिपः ॥ १७
अपश्यन्दयितां भार्यां पप्रच्छ विषसाद च ।
न हि तस्य पुरादेवी तां वेला मत्यवर्तत ॥ १८
न च राजा गृहं शून्यं प्रविवेश कदाचन ।
ततो गृहगतो राजा कैकेयीं पर्यपृच्छत ॥ १९
यथापूर्व मविज्ञाय स्वार्थलिप्सु मपण्डिताम् ।
प्रतिहारी त्वथोवाच संत्रस्तासुकृताञ्जलिः ॥ २०
"देव! देवीभृशं क्रुद्धा क्रोधागार मभिद्रुता।"
प्रतिहार्या वचश्श्रुत्वा राजा परमदुर्मनाः ॥ २१
विषसाद पुनर्भूयो लुलितव्याकुलेन्द्रियः ।
तत्र तां पतितां भूमौ शयाना मतथोचिताम् ॥ २२
प्रतप्त इव दुःखेन सोऽपश्य ज्जगतीपतिः ।
स वृद्धस्तरुणीं भार्यां प्राणेभ्योऽपि गरीयसीम् ॥ २३
अपापः पापसङ्कल्पां ददर्श धरणीतले ।
लतामिव विनिष्कृत्तां पतितां देवता मिव ॥ २४
किन्नरी मिव निर्धूतां च्युता मप्सरसं यथा ।
माया मिव परिभ्रष्टां हरिणी मिव संयताम् ॥ २५

करेणु मिव दिग्धेन विद्धां मृगयुना वने ।
महागज इवारण्ये स्नेहात्परिममर्शताम् ॥ २६
परिमृश्य च पाणिभ्या मभिसन्त्रस्तचेतनः ।
कामी कमलपत्राक्षी मुवाच वनिता मिदम् ॥ २७
न तेऽहमभिजानामि क्रोधमात्मनि संश्रितम् ।
देवि! केनाभिशप्ताऽसि? केन वाऽसि विमानिता? ॥ २८
यदिदं मम दुःखाय शेषे कल्याणि! पांसुषु ।
भूमौ शेषे किमर्थं त्वं मयि कल्याणि जीवति ॥ २९
भूतोपहतचित्तेव मम चित्तप्रमाथिनी ।
सन्ति मे कुशला वैद्या स्त्वभितुष्टा श्च सर्वशः ॥ ३०
सुखितां त्वां करिष्यन्ति व्याधिमाचक्ष्व भामिनि! ।
कस्य वा ते प्रियं कार्यम्? केन वा विप्रियं कृतम्? ॥ ३१
कः प्रियं लभता मद्य? को वा सुमहदप्रियम्? ।
मारोदीर्मा च कार्षी स्त्वं देवि! संपरिशोषणम् ॥ ३२
अवध्यो वध्यतां कोवा कोवा वध्यो विमुच्यताम्? ।
दरिद्रः को भवत्वाढ्यो द्रव्यवान्वाऽप्यकिंचनः? ॥ ३३
अहं चैव मदीया श्च सर्वे तववशानुगाः ।
न ते किंचि दभिप्रायं व्याहन्तु मह मुत्सहे ॥ ३४
आत्मनो जीवितेनापि ब्रूहि यन्मनसेच्छसि ।
बलमात्मनि जानन्ती न मां शङ्कितु मर्हसि ॥ ३५
करिष्यामि तव प्रीतिं सुकृतेनापितेशपे ।
यावदावर्तते चक्रं तावती मे वसुन्धरा ॥ ३६

प्राचीना स्सिन्धुसौवीरा स्सौराष्ट्रा दक्षिणापथाः ।
वंगांगमगधा मत्स्या स्समृद्धाः काशिकोसलाः ॥ ३७
तत्र जातं बहुद्रव्यं धनधान्यमजाविकम् ।
ततो वृणीष्व! कैकेयि यद्यत्त्वं मनसेच्छसि ॥ ३८
किं मायासेन ते भीरु! उत्तिष्ठोत्तिष्ठ शोभने! ।
तत्त्वं मे ब्रूहि कैकेयि! यतस्ते भय मागतम् ॥ ३९
तत्ते व्यपनयिष्यामि नीहार मिव रश्मिवान् ।"
तथोक्ता सा समाश्वस्ता वक्तुकामा तदप्रियम् ॥ ४०
परिपीडयितुं भूयो भर्तार मुपचक्रमे ।

इति श्रीमदयोध्याकाण्डे दशमस्सर्गः ॥

## ॥ एकादशस्सर्गः ॥

तं मन्मथशरै र्विद्धं कामवेगवशानुगम् ।
उवाच पृथिवीपालं कैकेयी दारुणं वचः ॥ १
"नास्मि विप्रकृता देव! केनचि न्नावमानिता ।
अभिप्राय स्तु मे कश्चित्त मिच्छामि त्वया कृतम् ॥ २
प्रतिज्ञां प्रतिजानीष्व यदि त्वं कर्तु मिच्छसि ।
अथ तद्व्याहरिष्यामि यदभिप्रार्थितं मया ॥" ३
ता मुवाच महातेजाः कैकेयी मीषदुत्स्मितः ।
कामी हस्तेन संगृह्य मूर्धजेषु शुचिस्मिताम् ॥ ४
"अवलिप्ते! न जानासि त्वत्तः प्रियतमा मम ।
मनुजो मनुजव्याघ्रा द्रामादन्यो न विद्यते ॥ ५

तेनाजय्येन मुख्येन राघवेण महात्मना ।
शपे ते जीवनार्हेण ब्रूहि यन्मनसेच्छसि ॥ ६
यं मुहूर्त मपश्य स्तु न जीवेय महं ध्रुवम् ।
तेन रामेण कैकेयि! शपे ते वचनक्रियाम् ॥ ७
आत्मना वात्मजै श्चान्यै र्वृणेयं मनुजर्षभम् ।
तेन रामेण कैकेयि! शपे ते वचनक्रियाम् ॥ ८
भद्रे! हृदय म[प्येत दनुमृश्योद्धरस्वमे ।
एत त्समीक्ष्य कैकेयि! ब्रूहि यत्साधु मन्यसे ॥] ९
बलमात्मनि जानन्ती न मां शङ्कितु मर्हसि ।
करिष्यामि तव प्रीतिं सुकृतेनापि ते शपे ॥" १०
सा तदर्थमना देवी त मभिप्राय मागतम् ।
निर्माध्यस्थ्या च्च हर्षा च्च बभाषे दुर्वचं वचः ॥ ११
तेन वाक्येन संहृष्टा तमभिप्राय मागतम् ।
व्याजहार महाघोर मभ्यागत मिवान्तकम् ॥ १२
"यथाक्रमेण शपसि वरं मम ददासि न ।
तच्छृण्वन्तु त्रयस्त्रिंश देवा स्साग्निपुरोगमाः ॥ १३
चन्द्रादित्यौनभ श्चैव ग्रहारात्र्यहनी दिशः ।
जगच्च पृथिवी चेयं स गन्धर्वा स राक्षसा ॥ १४
निशाचराणि भूतानि गृहेषु गृहदेवताः ।
यानि चान्यानि भूतानि जानीयु र्भाषितं तव ॥ १५
सत्यसन्धो महातेजा धर्मज्ञ स्सु समाहितः ।
वरं मम ददात्येष तन्मे शृण्वन्तु देवताः ॥" १६

इति देवी महेष्वासं परिगृह्याभिशस्य च ।
ततः पर मुवाचेदं वरदं काममोहितम् ॥ १७
स्मरराज ! न्पुरावृत्तं तस्मिन् दैवासुरे रणे ।
तत्रचाच्यावय च्छत्रुस्तव जीवित मन्तरा ॥ १८
तत्रचापि मया देव ! यत्त्वं समभिरक्षितः ।
जाग्रत्या यतमानायास्ततो मे प्राददा वरौ ॥ १९
तौ तु दत्तौ वरौ देव ! निक्षेपौ मृगयाम्यहम् ।
तवैव पृथिवीपाल ! सकाशे सत्यसङ्गर ! ॥ २०
तत्प्रतिश्रुत्य धर्मेण न चेद्दास्यसि मे वरम् ।
अद्यैव हि प्रहास्यामि जीवितं त्वद्विमानिता ॥" २१
वाङ्मात्रेण तदा राजा कैकेय्या स्ववशेकृतः ।
प्रचस्कन्द विनाशाय पाश मृग इवात्मनः ॥ २२
ततः पर मुवाचेदं वरदं काममोहितम् ।
"वरौ यौ मे त्वया देव ! तदा दत्तौ महीपते ! ॥ २३
तौ ताव दहमद्यैव वक्ष्यामि शृणुमे वचः ।
अभिषेक समारम्भो राघवस्योपकल्पितः ॥ २४
अनेनैवाभिषेकेण भरतो मेऽभिषिच्यताम् ।
यो द्वितीयो वरो देव ! दत्तः प्रीतेन मे त्वया ॥ २५
तदा दैवासुरे युद्धे तस्य कालोऽय मागतः ।
नव पञ्च च वर्षाणि दण्डकारण्य माश्रितः ॥ २६
चीराजिनजटाधारी रामो भवतु तापसः ।
भरतो भजता मद्य यौवराज्य मकंटकम् ॥ २७

एष मे परमःकामो दत्त मेव वरं वृणे ।
अद्य चैव हि पश्येयं प्रयान्तं राघवं वनम् ॥ २८
स राजराजो भव सत्यसङ्गरः कुलं च शीलं च हि रक्ष जन्म च ।
परत्रवासे हि वदन्त्यनुत्तमं तपोधना स्सत्यवचो हितं नृणाम् ॥"

इति श्रीमदयोध्याकाण्डे एकादशस्सर्गः ॥

## ॥ द्वादशस्सर्गः ॥

तत श्श्रुत्वा महाराजः कैकेय्या दारुण वचः ।
चिन्ता मभिसमापेदे मुहूर्तं प्रतताप च ॥ १
"किं नु मे यदि वा स्वप्न श्चित्तमोहोऽपि वा मम ।
अनुभूतोऽपसर्गो वा मनसो वा प्युपद्रवः ॥" २
इति संचिन्त्य तद्राजा नाध्यगच्छत्तदा सुखम् ।
प्रतिलभ्य चिरा त्संज्ञां कैकेयी वाक्यताडितः ॥ ३
व्यथितो विक्लब श्चैव व्याघ्रीं दृष्ट्वा यथा मृगः ।
असंवृताया मासीनो जगत्यां दीर्घ मुच्छ्वसन् ॥ ४
मण्डले पन्नगोरुद्धो मन्त्रैरिव महाविषः ।
'अहोधि'गिति सामर्षो वाचमुक्त्वा नराधिपः ॥ ५
मोहमापेदिवान्भूय श्शोकोपहतचेतनः ।
चिरेण तु नृपस्संज्ञां प्रतिलभ्य सुदुःखितः ॥ ६
कैकेयी मब्रवी त्क्रुद्धः प्रदहन्निव चक्षुषा ।
"नृशंसे! दुष्टचारित्रे! कुलस्यास्य विनाशिनि! ॥ ७

किं कृतं तव रामेण? पापं पापे! मयाऽपि वा? ।
यदा ते जननीतुल्यां वृत्तिं वहति राघवः ॥ ८
तस्यैव त्व मनर्थाय किं निमित्तमिहोद्यता ।
त्वं मयाऽऽत्मविनाशार्थं भवनं स्वं प्रवेशिता ॥ ९
अविज्ञाना न्नृपसुता व्याळी तीक्ष्णविषा यथा ।
जीवलोको यदा सर्वो रामस्याह गुणस्तवम् ॥ १०
अपराधं क मुद्दिश्य त्यक्ष्यामीष्ट महं सुतम् ।
कौसल्यां वा सुमित्रां वा त्यजेय मपि वाश्रियम् ॥ ११
जीवितं वाऽत्मनो रामं न त्वेव पितृवत्सलम् ।
परा भवति मे प्रीति दृष्ट्वा तनय मग्रजम् ॥ १२
अपश्यतस्तु मे रामं नष्टा भवति चेतना ।
तिष्ठे ल्लोको विना सूर्यं सस्यं वा सलिलं विना ॥ १३
न तु रामं विना देहे तिष्ठेत्तु मम जीवितम् ।
तदलं त्यज्यता मेष निश्चयः पापनिश्चये! ॥ १४
अपिते चरणौमूर्ध्ना स्पृशाम्येष प्रसीदमे ।
कि मिदं चिन्तितं पापे! त्वयापरमदारुणम् ॥ १५
अथजिज्ञाससे मां त्वं भरतस्य प्रियाप्रिये ।
अस्तु यत्तत्त्वया पूर्वं व्याहृतं राघवं प्रति ॥ १६
स मे ज्येष्ठ स्सुत श्श्रीमान्धर्मज्येष्ठ इतीव मे ।
तत्त्वया प्रियवादिन्या सेत्रार्थं कथितं भवेत् ॥ १७
तच्छ्रुत्वा शोकसंतप्ता सन्तापयसि मां भृशम् ।
आविष्टाऽसि गृहं शून्यं सा त्वं परवशंगता ॥ १८

इक्ष्वाकूणां कुले देवि। सम्प्राप्त स्सुमहानयम् ।
अनयो नयसम्पन्ने यत्रते विकृता मतिः ॥ १९
नहि किंचि दयुक्तं वा विप्रियंवा पुरा मम ।
अकरोस्त्वं विशालाक्षि! तेन न श्रद्दधाम्यहम् ॥ २०
ननु ते राघवस्तुल्यो भरतेन महात्मना ।
बहुशो हि सुबाले! त्वं कथाः कथयसे मम ॥ २१
तस्य धर्मात्मनो देवि! वने वासं यशस्विनः ।
कथं रोचसे भीरु! नव वर्षाणि पञ्च च ॥ २२
अत्यन्तसुकुमारस्य तस्य धर्मे धृतात्मनः ।
कथ रोचयसे वास मरण्ये भृशदारुणे ॥ २३
रोचयस्यभिरामस्य रामस्य शुभलोचने! ।
तव शुश्रूषमाणस्य किमर्थ विप्रवासनम् ॥ २४
रामोहि भरता द्भूयस्तव शुश्रूषते सदा ।
विशेषं त्वयि तस्मात्तु भरतस्य न लक्षये ॥ २५
शुश्रूषां गौरवं चैव प्रमाणं वचनक्रियाम् ।
कस्ते भूयस्तरां कुर्यादन्यत्र मनुजर्षभात् ॥ २६
बहूनां स्त्रीसहस्राणां बहूनां चोपजीविनाम् ।
परिवादोऽपवादो वा राघवे नोपपद्यते ॥ २७
सान्त्वय न्सर्वभूतानि रामश्शुद्धेन चेतसा ।
गृह्णाति मनुजव्याघ्रः प्रियैर्विषयवासिनः ॥ २८
सत्येन लोकाञ्जयति दीनान् दानेन राघवः ।
गुरू न्छुश्रूषया वीरो धनुषायुधि शात्रवान् ॥ २९

सत्यं दानं तपस्त्यागो मित्रता शौच मार्जवम् ।
विद्या च गुरुशुश्रूषा ध्रुवाण्येतानि राघवे ॥ ३०
तस्मिन्नार्जवसम्पन्ने देवि! देवोपमे कथम् ।
पाप माशंससे रामे महर्षि समतेजसि ॥ ३१
न स्मराम्यप्रियं वाक्यं लोकस्य प्रियवादिनः ।
स कथं त्वत्कृते रामं वक्ष्यामि प्रिय मप्रियम् ॥ ३२
क्षमा यस्मिन्दमस्त्याग स्सत्यं धर्मः कृतज्ञता ।
अविहिंसा च भूतानां तमृते कागतिर्मम ॥ ३३
मम वृद्धस्यकैकेयि! गतान्तस्य तपस्विनः ।
दीनं लालप्यमानस्य कारुण्यं कर्तु मर्हसि ॥ ३४
पृथिव्यां सागरान्तायां यत्किञ्चि दधिगम्यते ।
तत्सर्वं तव दास्यामिमाच त्वां मन्यु राविशेत् ॥ ३५
अञ्जलि कुर्मि कैकेयि! पादौ चापि स्पृशामि ते ।
शरणं भव रामस्य माऽधर्मो मामिह स्पृशेत् ॥" ३६
इति दुःखाभिसन्तप्तं विलपन्त मचेतनम् ।
घूर्णमानं महाराजं शोकेन समभिप्लुतम् ॥ ३७
पारं शोकार्णवस्याशुप्रार्थयन्तं पुनःपुनः ।
प्रत्युवाचाथकैकेयी रौद्रारौद्रतरं वचः ॥ ३८
यदि दत्वा वरौ राज! न्पुनः प्रत्यनुतप्यसे ।
धार्मिकत्वं कथं वीर! पृथिव्यां कथयिष्यसि ॥ ३९
यदा समेता बहव स्त्वया राजर्षय स्सह ।
कथयिष्यन्ति धर्मज्ञ! तत्र किं प्रतिवक्ष्यसि ? ॥ ४०

यस्याः प्रसादे जीवामि याच मा मभ्यपालयत् ।
तस्याः कृतं मया मिथ्याकैकेय्या इति वक्ष्यसि ॥ ४१
किल्बिषत्वं नरेन्द्राणां करिष्यसि नराधिप ।
यो दत्वा वर मद्यैव पुनरन्यानि भाषसे ॥ ४२
शैब्य श्श्येनकपोतीये स्वमांसं पक्षिणे ददौ ।
अलर्क श्चक्षुषी दत्वा जगाम गति मुत्तमाम् ॥ ४३
सागर स्समयं कृत्वा न वेलामतिवर्तते ।
समयं माऽनृतं कार्षीः पूर्ववृत्त मनुस्मरन् ॥ ४४
स त्वं धर्मं परित्यज्य रामं राज्येऽभिषिच्य च ।
सह कौसल्यया नित्यं रन्तु मिच्छसि दुर्मते! ॥ ४५
भवत्वधर्मो धर्मोवा सत्यं वा यदि वाऽनृतम् ।
यत्त्वया संश्रुतं मह्यं तस्य नास्ति व्यतिक्रमः ॥ ४६
अहं हि विषमद्यैव पीत्वा बहु तवाग्रतः ।
पश्यतस्ते मरिष्यामि रामो यद्यभिषिच्यते ॥ ४७
एकाहमपि पश्येयं यद्यहं राममातरम् ।
अञ्जलि प्रतिग्रह्णान्तीं श्रेयो ननु मृति र्मम ॥ ४८
भरतेनात्मना चाहं शपे ते मनुजाधिप! ।
यथा नान्येन तुष्येय मृते रामविवासनात् ॥" ४९
एतावदुक्त्वा वचनं कैकेयी विरराम ह ।
विलपन्तंच राजानं न प्रतिव्याजहार सा ॥ ५०
श्रुत्वा तु राजा कैकेय्या वृतं पर मशोभनम् ।
रामस्य च वने वास मैश्वर्यं भरतस्य च ॥ ५१

नाभ्यभाषत कैकेयीं मुहूर्तं व्याकुलेन्द्रियः ।
प्रैक्षतानिमिषो देवीं प्रिया मप्रियवादिनीम् ॥ ५२
तां हि वज्रसमां वाच माकर्ण्य हृदयाप्रियाम् ।
दुःखशोकमयीं घोरां राजा न सुखितोऽभवत् ॥ ५३
स देव्या व्यवसायंच घोरंच शपथं कृतम् ।
ध्यात्वा रामेति निश्वस्य छिन्नस्तरुरिवापतत् ॥ ५४
नष्टचित्तोयथोन्मत्तो विपरीतो यथाऽऽतुरः ।
हृततेजा यथा सर्पो बभूव जगतीपतिः ॥ ५५
दीनयातु गिरा राजा इति होवाच कैकयीम् ।
"अनर्थ मिम मर्थाभं केन त्व मुपदर्शिता? ॥ ५६
भूतोपहतचित्तेव ब्रुवन्ती मां न लज्जसे ।
शीलव्यसन मेतत्ते नाभिजानाम्यहं पुरा ॥ ५७
बालाया स्तत्विदानीं ते लक्षये विपरीतवत् ।
कुतो वा ते भयं जातं या त्वमेवं विधं वरम् ॥ ५८
राष्ट्रे भरतमासीनं वृणीषे राघवं वने ।
विरमैतेन भावेन त्व मेतेनानृतेन वा ॥ ५९
यदि भर्तुः प्रियं कार्यं लोकस्य भरतस्य च ।
नृशंसे! पापसङ्कल्पे! क्षुद्रे! दुष्कृतकारिणि! ॥ ६०
किं नु दुःख मळीकं वा मयि रामे च पश्यसि ।
न कथंचिदृते रामाद्भरतो राज्यमावसेत् ॥ ६१
रामा दपिहितं मन्ये धर्मतो बलवत्तरम् ।
कथं द्रक्ष्यामि रामस्य वनं गच्छेति भाषिते ॥ ६२

मुखवर्णं विवर्णं तं यथैवेन्दुमुपप्लुतम् ।
तां हि मे सुकृतां बुद्धिं सुहृद्भि स्सहनिश्चिताम् ॥ ६३
कथं द्रक्ष्याम्यपावृत्तां परैरिव हतां चमूम् ।
किं मां वक्ष्यन्ति राजानो नानादिग्भ्य स्समागताः ॥ ६४
बालो बतायमैक्ष्वाक श्चिरं राज्यमकारयत् ।
यदा तु बहवोवृद्धा गुणवन्तो बहुश्रुताः ॥ ६५
परिप्रक्ष्यन्ति काकुत्स्थं वक्ष्यामि किमहं तदा ।
कैकेय्या क्लिश्यमानेन रामः प्रव्राजितो मया ॥ ६६
यदि सत्यं ब्रवीम्येतत्तदसत्यं भविष्यति ।
किं मां वक्ष्यति कौसल्या राघवे वनमास्थिते ॥ ६७
किंचैनां प्रतिवक्ष्यामि कृत्वा विप्रियमीदृशम् ।
यदा यदा हि कौसल्या दासीवच्च सखीवच ॥ ६८
भार्यावद्भगिनीवच्च मातृवच्चोपतिष्ठति ।
सततं प्रियकामा मे प्रियपुत्रा प्रियंवदा ॥ ६९
न मया सत्कृता देवी सत्कारार्हा कृते तव ।
इदानीं तत्तपति मां यन्मया सुकृतं त्वयि ॥ ७०
अपथ्यव्यञ्जनोपेतं भुक्तमन्नमिवातुरम् ।
विप्रकारं च रामस्य सम्प्रयाणं वनस्य च ॥ ७१
सुमित्राप्रेक्ष्य वै भीता कथं मे विश्वसिष्यति ।
कृपणं बत वैदेही श्रोष्यति द्वय मप्रियम् ॥ ७२
मां च पञ्चत्वमापन्नं रामं च वनमाश्रितम् ।
वैदेही बत मे प्राणान्शोचन्ती क्षपयिष्यति ॥ ७३

हीना हिमवतः पार्श्वे किन्नरेणेव किन्नरी ।
न हि राम महं दृष्ट्वा प्रवसन्तं महावने ॥ ७४
चिरंजीवितु माशंसे रुदन्तीं चापि मैथिलीम् ।
सा नूनं विधवा राज्यं सपुत्राकारयिष्यसि ॥ ७५
न हि प्रव्राजिते रामे देवि! जीवितु मुत्सहे ।
सतीं त्वा महमत्यन्तं व्यवस्याम्यसतीं सतीम् ॥ ७६
रूपिणीं विषसंयुक्तां पीत्वेव मदिरां नरः ।
अनृतैर्बहु मां सान्त्वै स्सान्त्वयन्ती स्म भाषसे ॥ ७७
गीतशब्देन संरुद्ध्य लुब्धोमृगमिवावधीः ।
अनार्य इति मामार्याः पुत्रविक्रायिकं ध्रुवम् ॥ ७८
धिक्करिष्यन्ति रथ्यासु सुरापं ब्राह्मणं यथा ।
अहो! दुःखमहो! कृच्छ्रं यत्र वाचः क्षमे तव ॥ ७९
दुःख मेवं विधं प्राप्तं पुराकृतमिवाशुभम् ।
त्वद्रक्षणं प्रमादेन स्वनाशाय कृतं कृतम् ॥ ८०
चिरं खलु मया पापे! त्वं पापेनाभिरक्षिता ।
अज्ञाना दुपसम्पन्ना रज्जुरुद्बन्धिनी यथा ॥ ८१
रममाण स्त्वयासार्धं मृत्युं त्वां नाभिलक्षये ।
बालोरहसि हस्तेन कृष्णसर्पमिवास्पृशम् ॥ ८२
मयाह्यपितृकः पुत्रस्स महात्मा दुरात्मना ।
तं तु मां जीवलोकोऽयं नून माक्रोष्टु मर्हति ॥ ८३
बालिशो बत कामात्मा राजा दशरथो भृशम् ।
यः स्त्रीकृते प्रियं पुत्रं वनं प्रस्थापयिष्यति ॥ ८४

व्रतै श्च ब्रह्मचर्यै श्च गुरुभि श्चोपकर्शितः ।
भोगकाले महत्कृच्छ्रं पुनरेव प्रपत्स्यते ॥ ८५
नालं द्वितीयं वचनं पुत्रो मां प्रतिभाषितुम् ।
स वनं प्रव्रजेत्युक्तो बाढमित्येव वक्ष्यति ॥ ८६
यदि मे राघवः कुर्याद्वनंगच्छेति चोदितः ।
प्रतिकूलं प्रियं मे स्यान्नतु वत्सः करिष्यति ॥ ८७
शुद्धभावो हि भावं मे नतु ज्ञास्यति राघवः ।
स वनं प्रव्रजेत्युक्तो बाढमित्येव वक्ष्यति ॥ ८८
राघवे हि वनं प्राप्ते सर्वलोकस्य धिक्कृतम् ।
मृत्यु रक्षमणीयं मां नयिष्यति यमक्षयम् ॥ ८९
मृते मयि गते रामे वनं मनुजपुङ्गवे ।
इष्टे मम जने शेषे कि पापं प्रतिपत्स्यसे ॥ ९०
कौसल्यां मां च रामं च पुत्रौ च यदि हास्यति ।
दुःखान्यसहती देवी मामेवानुमरिष्यति ॥ ९१
कौसल्यां च सुमित्रां च मां च पुत्रैस्त्रिभि स्सह ।
प्रक्षिप्य नरके सा त्वं कैकेयि! सुखिता भव ॥ ९२
मया रामेण च त्यक्तं शाश्वतं सत्कृतं गुणैः ।
इक्ष्वाकुकुलमक्षोभ्य माकुलं पालयिष्यसि ॥ ९३
प्रियं चेद्भरतस्यैतद्रामप्रव्राजनं भवेत् ।
मास्म मे भरतः कार्षीत्प्रेतकृत्यं गतायुषः ॥ ९४
हन्तानार्ये! ममामित्रे! सकामा भव कैकयि!।
मृते मयिगते रामे वनं पुरुषपुङ्गवे ॥ ९५

सेदानीं विधवा राज्यं सपुत्राकारयिष्यसि ।
त्वं राजपुत्रीवादेनन्यवशो मम वेश्मनि ॥ ९६
अकीर्तिश्चातुलालोके ध्रुवः परिभवश्च मे ।
सर्वभूतेषु चावज्ञा यथा पापकृतस्तथा ॥ ९७
कथं रथैर्विभुर्यात्वा गजाश्वै श्च मुहुर्मुहुः ।
पद्भ्यां रामो महारण्ये वत्सो मे विचरिष्यति ॥ ९८
यस्य त्वाहारसमये सूदाः कुण्डलधारिणः ।
अहं पूर्वाः पचन्ति स्म प्रशस्तं पानभोजनम् ॥ ९९
स कथं नुकषायाणि तिक्तानि कटुकानि च ।
भक्षयन्वन्यमाहारं सुतो मे वर्तयिष्यति ॥ १००
महार्हवस्त्रसंवीतो भूत्वा चिरसुखोषितः ।
काषायपरिधान स्तु कथं भूमौ निवत्स्यति ॥ १०१
कस्यैतद्दारुणं वाक्य मेवंविध मचिन्तितम् ।
रामस्यारण्यगमनं भरतस्याभिषेचनम् ॥ १०२
धिगस्तु योषितोनाम शठास्स्वार्थपरा स्सदा ।
नब्रवीमि स्त्रियस्सर्वा भरतस्यैव मातरम् ॥ १०३
अनर्थभावेऽर्थपरे! नृशंसे! ममानुतापाय निविष्टभावे! ।
किमप्रियं पश्यसि मन्निमित्तं हितानुकारिण्यथवाऽपि रामे ॥ १०४
परित्यजेयुः पितरो हि पुत्रान्भार्याः पतींश्चापि कृतानुरागाः ।
कृत्स्नं हि सर्वं कुपितं जगत्स्या दृष्ट्वैव रामं व्यसने निमग्नम् ॥ १०५
अहं पुनर्देवकुमाररूपमलङ्कृतं तं सुतमाव्रजन्तम् ।
नन्दामि पश्यन्नपि दर्शनेन भवामि दृष्ट्वा च पुनर्युवेव ॥ १०६

विनाऽपि सूर्येण भवेत्प्रवृत्ति रवर्षता वज्रधरेण वाऽपि ।
रामं तु गच्छन्त मित स्समीक्ष्य जीवेन्न कश्चित्त्विति चेतना मे ॥

विनाशकामामहिता ममित्रामावासयं मृत्युमिवात्मनस्त्वाम् ।
चिरं बताङ्केन धृताऽसि सर्पी महाविषा तेन हतोऽस्मिमोहात् ॥

मयाच रामेण च लक्ष्मणेन प्रशास्तु हीनो भरतस्त्वया सह ।
पुरंच राष्ट्रंच निहत्य बान्धवान्ममाहितानां च भवाभिहर्षिणी ॥

नृशंसवृत्ते! व्यसनप्रहारिणि! प्रसह्य वाक्यं यदिहाद्यभाषसे ।
न नाम ते केन मुखात्पतन्त्यधो विशीर्यमाणा दशना स्सहस्रधा ॥

न किंचि दाहाहितमप्रियं वचो न वेत्ति रामः परुषाणि भाषितुम् ।
कथंनुरामेह्यभिरामवादिनि! ब्रवीषिदोषान्गुणनित्यसम्मते ॥ १११

प्रताम्य वा प्रज्वल वा प्रणश्य वा सहस्रशो वा स्फुटिता महीं व्रज ।
न ते करिष्यामि वच स्सुदारुणं ममाहितं केकयराजपांसनि! ॥

क्षुरोपमां नित्य मसत्प्रियंवदां प्रदुष्टभावां स्वकुलोपघातिनीम् ।
न जीवितुं त्वां विषहेऽमनोरमां दिधक्षमाणां हृदयं सबन्धनम् ॥

न जीवितं मेऽस्ति पुनः कुत स्सुखं विनाऽऽत्मजेनाऽत्मवतः कुतो रतिः।
ममाहितं देवि! नकर्तु मर्हसि स्पृशामि पादावपि ते प्रसीद मे ॥

स भूमिपालो विलपन्ननाथवत् स्त्रिया गृहीतो हृदयेऽतिमात्रया ।
पपात देव्याश्चरणौ प्रसारिता वुभा वसंस्पृश्य यथाऽऽतुरस्तथा ॥

इति श्रीमदयोध्याकाण्डे द्वादशस्सर्गः ॥

## ॥ त्रयोदशस्सर्गः ॥

अतदर्हं महाराजं शयान मतथोचितम् ।
ययाति मिव पुण्यान्ते देवलोकात्परिच्युतम् ॥ १
अनर्थरूपा सिद्धार्था ह्यभीता भयदर्शिनी ।
पुनराकारयामास तमेव वर मङ्गना ॥ २
"त्वं कत्थसे महाराज! सत्यवादी दृढव्रतः ।
मम चेमं वरं कस्माद्विधारयितु मिच्छसि ॥" ३
एव मुक्तस्तु कैकेय्या राजा दशरथस्तदा ।
प्रत्युवाच ततः क्रुद्धो मुहूर्तं विह्वलन्निव ॥ ४
"मृते मयि गते रामे वनं मनुजपुङ्गवे ।
हन्ताऽनार्ये! ममामित्रे! सकामा सुखिनी भव ॥ ५
स्वर्गेऽपि खलु रामस्य कुशलं दैवतैरहम् ।
प्रत्यादेशा दभिहितं धारयिष्ये कथं बत ॥ ६
कैकेय्याः प्रियकामेन रामः प्रव्राजितो मया ।
यदि सत्यं ब्रवीम्येतत्तदसत्यं भविष्यति ॥ ७
अपुत्रेण मया पुत्र श्श्रमेण महता महान् ।
रामो लब्धो महाबाहु स्स कथं त्यज्यते मया ॥ ८
शूरश्च कृतविद्यश्च जितक्रोधः क्षमापरः ।
कथं कमलपत्राक्षो मया रामो विवास्यते ॥ ९
कथ मिन्दीवर श्यामं दीर्घबाहुं महाबलम् ।
अभिराम महं रामं प्रेषयिष्यामि दण्डकान् ॥ १०

सुखानामुचितस्यैव दुःखै रनुचितस्य च ।
दुःखं नामा नुपश्येय कथं रामस्य धीमतः ॥ ११
यदि दुःख मकृत्वाऽद्य मम संक्रमणं भवेत् ।
अदुःखार्हस्य रामस्य तत स्सुख मवाप्नुयाम् ॥ १२
नृशंसे! पापसङ्कल्पे! रामं सत्यपराक्रमम् ।
किं विप्रियेण कैकेयि! प्रियं योजयसे मम ॥ १३
अकीर्ति रतुला लोके ध्रुवः परिभवश्च मे ।"
तथा विलपतस्तस्य परिभ्रमितचेतसः ॥ १४
अस्त मभ्यगमत्सूर्यो रजनी चाभ्यवर्तत ।
सात्रियामा तथाऽऽर्तस्य चन्द्रमण्डलमण्डिता ॥ १५
राज्ञो विलपमानस्य न व्यभासत शर्वरी ।
तथैवोष्णं विनिश्वस्य वृद्धो दशरथो नृपः ॥ १६
विललापार्तवद्दुःखं गगनासक्तलोचनः ।
"न प्रभातं त्वयेच्छामि निशे! नक्षत्रभूषणे ॥ १७
क्रियतां मे दयाभद्रे! मयाऽयं रचितोऽञ्जलिः ।
अथवा गम्यतां शीघ्रं नाहमिच्छामि निर्घृणाम् ॥ १८
नृशंसां कैकयीं द्रष्टुं यत्कृते व्यसनं महत् ।"
एव मुक्त्वा ततो राजा कैकेयीं संयताञ्जलिः ॥ १९
प्रसादयामास पुनः कैकेयीं चेद मब्रवीत् ।
"साधुवृत्तस्य दीनस्य त्वद्गतस्य गतायुषः ॥ २०
प्रसादः क्रियतां देवि! मम राज्ञो विशेषतः ।
शून्येन खलु सुश्रोणि! मयेदं समुदाहृतम् ॥ २१

कुरु साधु प्रसादं मे बाले! सहृदया ह्यसि ।
प्रसीद देवि! रामो मे त्वद्दत्तं राज्यमव्ययम् ॥ २२
लभता मसितापाङ्गे! यशः पर मवाप्नुहि ।
मम रामस्य लोकस्य गुरूणां भरतस्य च ॥ २३
प्रिय मेत द्गुरुश्रोणि! कुरु चारुमुखेक्षणे! ।
"विशुद्धभावस्य सुदुष्टभावा ताम्रेक्षणस्याश्रुकलस्य राज्ञः ।
श्रुत्वा विचित्रं करुणं विलापं भर्तु र्नृशंसा न चकार वाक्यम् ॥
तत स्स राजा पुनरेव मूर्छितः प्रियामदुष्टां प्रतिकूलभाषिणीम् ।
समीक्ष्य पुत्रस्य विवासनं प्रतिक्षितौ विसंज्ञो निपपात दुःखितः ॥
इतीव राज्ञो व्यथितस्य सा निशा जगाम घोरं श्वसतो मनस्विनः ।
विबोध्यमानः प्रतिबोधनं तदा निवारयामास स राजसत्तमः ॥

इति श्रीमदयोध्याकाण्डे त्रयोदशस्सर्गः ॥

## ॥ चतुर्दशस्सर्गः ॥

पुत्रशोकार्दितं पापा विसंज्ञं पतितं भुवि ।
विवेष्टमान मुत्प्रेक्ष्य सैक्ष्वाक मिद मब्रवीत् ॥ १
"पापं कृत्वैव किमिदं मम संश्रित्य संश्रवम् ।
शेषे क्षितितले सन्नः स्थित्यां त्वं स्थातु मर्हसि ॥ २
आहु स्सत्यं हि परमं धर्मं धर्मविदो जनाः ।
सत्य माश्रित्य हि मया त्वं च धर्मं प्रचोदितः ॥ ३
संश्रुत्य शैब्य श्श्येनाय स्वां तनुं जगतीपतिः ।
प्रदाय पक्षिणे राज! ञ्जगाम गतिमुत्तमाम् ॥ ४

तथा ह्यलर्कस्तेजस्वी ब्राह्मणे वेदपारगे ।
याचमाने स्वके नेत्रे उद्धृत्य सुमना ददौ ॥ ५
सरितां तु पति स्स्वल्पां मर्यादां सत्यमन्वितः ।
सत्यानुरोधात्समये स्वां वेलां नातिवर्तते ॥ ६
सत्य मेकपदं ब्रह्म सत्ये धर्मः प्रतिष्ठितः ।
सत्यमेवाक्षया वेदा स्सत्येनैवाप्यते परम् ॥ ७
सत्यं समनुवर्तस्व यदिधर्मेधृतामतिः ।
सफल स्स वरो मेऽस्तु वरदो ह्यसि सत्तम ॥ ८
धर्मस्यैवाभिकामार्थं मम चैवाभिचोदनात् ।
प्रव्राजय सुतं रामं त्रिः खलुत्वां ब्रवीम्यहम् ॥ ९
समयं च ममाद्येमं यदि त्वं न करिष्यसि ।
अग्रतस्ते परित्यक्ता परित्यक्ष्यामि जीवितम् ॥" १०
एवं प्रचोदितो राजा कैकेय्या निर्विशङ्कया ।
नाऽशकत्पाश मुन्मोक्तुं बलि रिन्द्रकृतं यथा ॥ ११
उद्भ्रान्तहृदयश्चापि विवर्णवदनोऽभवत् ।
सधुर्यो वै परिस्पन्दन्युगचक्रान्तरं यथा ॥ १२
विह्वलाभ्यां च नेत्राभ्या मपश्यन्निवभूपतिः ।
कृच्छ्राद्धैर्येण संस्तभ्य कैकेयीमिद मब्रवीत् ॥ १३
"यस्ते मन्त्रकृतः पाणि रग्नौ पापे! मया धृतः ।
तं त्यजामि स्वजंचैव तव पुत्रं सह त्वया ॥ १४
प्रयाता रजनी देवी सूर्यस्योदयनं प्रति ।
अभिषेकं गुरुजन स्त्वरयिष्यति मांध्रुवम् ॥ १५

रामाभिषेकसंभारै स्तदर्थ मुपकल्पितैः ।
रामः कारयितव्यो मे मृतस्य सलिलक्रियाम् ॥ १६
त्वया सपुत्रया नैव कर्तव्या सलिलक्रिया ।
व्याहन्ताऽस्यशुभाचारे! यदि रामाभिषेचनम् ॥ १७
नच शक्तोऽस्म्यहं द्रष्टुं दृष्ट्वा पूर्व तथा सुखम् ।
हतहर्ष निरानन्दं पुनर्जन मवाङ्मुखम् ॥" १८
तां तथा ब्रुवतस्तस्य भूमिपस्य महात्मनः ।
प्रभाताशर्वरी पुण्या चन्द्रनक्षत्रशालिनी ॥ १९
ततः पापसमाचारा कैकेयी पार्थिवं पुनः ।
उवाच परुषं वाक्यं वाक्यज्ञा रोषमूर्छिता ॥ २०
"किं मिदं भाषसे राज! न्वाक्यं गररुजोपमम् ।"
आनाययितु मक्लिष्टं पुत्रं राम मिहार्हसि ॥ २१
स्थाप्य राज्ये मम सुतं कृत्वा रामं वनेचरम् ।
निस्सपत्नां च मां कृत्वा कृतकृत्यो भविष्यसि ॥" २२
स नुन्न इव तीक्ष्णेन प्रतोदेन हयोत्तमः ।
राजा प्रचोदितोऽभीक्ष्णं कैकेयी मिद मब्रवीत् ॥ २३
"धर्मबन्धेन बद्धोऽस्मि नष्टाच मम चेतना ।
ज्येष्ठं पुत्रं प्रियं रामं द्रष्टु मिच्छामि धार्मिकम् ॥" २४
ततः प्रभातां रजनी मुदिते च दिवाकरे ।
पुण्ये नक्षत्रयोगे च मुहूर्ते च समाहिते ॥ २५
वसिष्ठो गुणसम्पन्न श्शिष्यैः परिवृत स्तदा ।
उपगृह्याशु संभारा न्प्रविवेश पुरोत्तमम् ॥ २६

सिक्तसम्मार्जितपथां पताकोत्तमभूषिताम् ॥
विचित्रकुसुमाकीर्णां नानास्रग्भिर्विराजिताम् ॥ २७
संहृष्टमनुजोपेतां समृद्धविपणापणाम् ।
महोत्सवसमाकीर्णां राघवार्थे समुत्सुकाम् ॥ २८
चन्दनागरुधूपैश्च सर्वतः प्रतिधूपिताम् ।
तां पुरीं समतिक्रम्य पुरन्दरपुरोपमाम् ॥ २९
ददर्शान्तःपुरं श्रेष्ठं नानाद्विजगणायुतम् ।
पौरजानपदाकीर्णं ब्राह्मणै रुपशोभितम् ॥ ३०
यज्ञविद्भि स्सुसंपूर्णं सदस्यैः परमद्विजैः ।
तदन्तःपुरमासाद्य व्यतिचक्राम तं जनम् ॥ ३१
वसिष्ठः परमप्रीतः परमर्षि र्विवेश च ।
सत्वपश्यद्विनिष्क्रान्तं सुमन्त्रं नाम सारथिम् ॥ ३२
द्वारे मनुजसिंहस्य सचिवं प्रियदर्शनम् ।
त मुवाच महातेजा स्सूतपुत्रं विशारदम् ॥ ३३
वसिष्ठः "क्षिप्र माचक्ष्व नृपते र्मामिहागतम् ।
इमे गङ्गोदकघटा स्सागरेभ्य श्च काञ्चनाः ॥ ३४
औदुम्बरं भद्रपीठ मभिषेकार्थ माहृतम् ।
सर्वबीजानि गन्धा श्च रत्नानि विविधानि च ॥ ३५
क्षौद्रं दधि घृतं लाजा दर्भा स्सुमनसः पयः ।
अष्टौ च कन्या रुचिरा मत्तश्च वरवारणः ॥ ३६
चतुरश्वो रथश्श्रीमान्निस्त्रिंशो धनुरुत्तमम् ।
वाहनं नरसंयुक्तं छत्रं च शशिसन्निभम् ॥ ३७

श्वेतेच वालव्यजने भृङ्गारु श्च हिरण्मयः ।
हेमदामपिनद्धश्च ककुद्मा न्पाण्डुरो वृषः ॥ ३८
केसरी च चतुर्दंष्ट्रो हरिश्रेष्ठो महाबलः ।
सिंहासनं व्याघ्रतनु स्समिद्धश्च हुताशनः ॥ ३९
सर्ववादित्र सङ्घाश्च वेश्याश्चालङ्कृतास्स्त्रियः ।
आचार्या ब्राह्मणा गावः पुण्याश्च मृगपक्षिणः ॥ ४०
पौरजानपदश्रेष्ठा नैगमाश्च गणै स्सह ।
एते चान्ये च बहवः प्रीयमाणाः पियंवदाः ॥ ४१
अभिषेकाय रामस्य सह तिष्ठन्ति पार्थिवैः ।
न पश्यामि च राजान मुदितश्च दिवाकरः ॥ ४२
त्वरयस्व महाराजं यथा समुदितेऽहनि ।
पुण्ये नक्षत्रयोगे च रामो राज्य मवाप्नुयात् ॥" ४३
इति तस्य वच श्श्रुत्वा सूतपुत्रो महात्मनः ।
स्तुवन्नृपतिशार्दूलं प्रविवेश निवेशनम् ॥ ४४
तंतु पूर्वोदितं वृद्धं द्वारस्था राजसम्मतम् ।
न शेकु रभिसंरोद्धं राज्ञः प्रियचिकीर्षवः ॥ ४५
ससमीपस्थितो राज्ञ स्तामवस्थामजाज्ञिवान् ।
वाग्भिः परमतुष्टाभि रभिष्टोतुं प्रचक्रमे ॥ ४६
तत स्सूतो यथाकालं पार्थिवस्य निवेशने ।
सुमन्त्रः प्राञ्जलि र्भूत्वा तुष्टाव जगतीपतिम् ॥ ४७
यथा नन्दति तेजस्वीसागरो भास्करोदये ।
प्रीतः प्रीतेन मनसा तथाऽऽनन्दघ्ननस्त्वतः ॥ ४८

“इन्द्रमस्यांतु वेळाया मभितुष्टाव मातलिः ।
सोऽजयद्दानवान्सर्वां स्तथा त्वां बोधयाम्यहम् ॥ ४९
वेदा स्सहाङ्गविद्याश्च यथा ह्यात्मभुवं विभुम् ।
ब्रह्माणं बोधयन्त्यद्य तथा त्वां बोधयाम्यहम् ॥ ५०
आदित्य स्सह चन्द्रेण यथा भूतधरां शुभाम् ।
बोधयत्यद्य पृथिवीं तथा त्वां बोधयाम्यहम् ॥ ५१
उत्तिष्ठाशु महाराज! कृतकौतुकमङ्गळः ।
विराजमानो वपुषा मेरो रिव दिवाकरः ॥ ५२
सोमसूर्यौ च काकुत्स्थ! शिववैश्रवणावपि ।
वरुणश्चाग्निरिन्द्रश्च विजयं प्रदिशन्तु ते ॥ ५३
गता भगवती रात्रिः कृतं कृत्यमिदं तव ।
बुद्ध्यस्व नरशार्दूल! कुरु कार्य मनन्तरम् ॥ ५४
उदतिष्ठत रामस्य समग्रमभिषेचनम् ।
पौरजानपदैश्चापि नैगमैश्च कृताञ्जलिः ॥ ५५
स्वयं वसिष्ठो भगवा न्ब्राह्मणै स्सह तिष्ठति ।
क्षिप्र माज्ञाप्यतां राज! न्राघवस्याभिषेचनम् ॥ ५६
यथाह्यपालाः पशवो यथासेनाह्यनायका ।
यथाचन्द्रं विनारात्रि र्यथागावो विनावृषम् ॥ ५७
एवंहि भविता राष्ट्रं यत्र राजा नदृश्यते ।”
इति तस्य वचश्श्रुत्वा सान्त्वपूर्वमिवार्थवत् ॥ ५८
अभ्यकीर्यत शोकेन भूय एव महीपतिः ।
तत स्स राजा तं सूतं सन्नहर्ष स्सुतं प्रति ॥ ५९

शोकरक्तेक्षण श्श्रीमा नुद्वीक्ष्योवाच धार्मिकः ।
"वाक्यै स्तु खलु मर्माणि मम भूयो निकृन्तसि ॥" ६०

सुमन्त्रः करुणं श्रुत्वा दृष्ट्वा दीनं च पार्थिवम् ।
प्रगृहीताञ्जलिः किंचित्तस्माद्देशादपाक्रमत् ॥ ६१

यदावक्तुं स्वयं दैन्यान्नशशाक महीपतिः ।
तदासुमन्त्रं मन्त्रज्ञा कैकेयी प्रत्युवाच ह ॥ ६२

"सुमन्त्र! राजा रजनीं रामहर्षसमुत्सुकः ।
प्रजागरपरिश्रान्तो निद्राया वशमेयिवान् ॥ ६३

तद्गच्छ त्वरितं सूत! राजपुत्रं यशस्विनम् ।
राम मानय भद्रं ते नात्रकार्या विचारणा" ॥ ६४

स मन्यमानः कल्याणं हृदयेन ननन्द च ।
निर्जगाम च संप्रीत्या त्वरितो राजशासनात् ॥ ६५

सुमन्त्र श्चिन्तयामास त्वरितं चोदितस्तया ।
व्यक्तं रामोऽभिषेकार्थ मिहाऽऽयास्यति धर्मवित् ॥ ६६

इति सूतो मतिं कृत्वा हर्षेण महताऽऽवृतः ।
निर्जगाम महाबाहो राघवस्य दिदृक्षया ॥ ६७

सागरह्रदसङ्काशात्सुमन्त्रोऽन्तःपुराच्छुभात् ।
निष्क्रम्य जनसंबाधं ददर्श द्वारमग्रतः ॥ ६८

ततः पुरस्तात्सहसा विनिर्गतो महीपतीन्द्वारगतो विलोकयन् ।
ददर्श पौरान्विविधान्महाधनानुपस्थितान्द्वार मुपेत्य विष्ठितान् ॥

इति श्रीमदयो याकाण्डे चतुर्दशस्सर्गः ॥

## ॥ पञ्चदशस्सर्गः ॥

ते तु तां रजनी मुष्य ब्राह्मणा वेदपारगाः ।
उपतस्थु रुपस्थानं सहराजपुरोहिताः ॥ १

अमात्या बलमुख्या श्च मुख्या ये निगमस्य च ।
राघवस्याभिषेकार्थे प्रीयमाणास्तु संगताः ॥ २

उदिते विमले सूर्ये पुष्ये चाभ्यागतेऽहनि ।
लग्ने कर्कटके प्राप्ते जन्म रामस्य च स्थिते ॥ ३

अभिषेकाय रामस्य द्विजेंद्रै रुपकल्पितम् ।
काञ्चना जलकुंभाश्च भद्रपीठं स्वलङ्कृतम् ॥ ४

रथश्च सम्यगास्तीर्णो भास्वता व्याघ्रचर्मणा ।
गङ्गायमुनयोः पुण्यात्संगमादाहृतं जलम् ॥ ५

याश्चान्यास्सरितः पुण्याह्रदाः कूपास्सरांसि च ।
प्राग्वाहाश्चोर्ध्ववाहाश्च तिर्यग्वाहास्समाहिताः ॥ ६

ताभ्य श्चैवाहृतं तोयं समुद्रेभ्य श्च सर्वशः ।
सलाजाः क्षीरिभि श्छन्ना घटाः काञ्चनराजताः ॥ ७

पद्मोत्पलयुता भान्ति पूर्णाः परमवारिणा ।
क्षौद्रं दधिघृतं राजा दर्भा स्सुमनसः पयः ॥ ८

वेश्याश्चैव शुभाचारा स्सर्वाभरणभूषिताः ।
चन्द्रांशुविकचप्रख्यं काञ्चनं रत्नभूषितम् ॥ ९

सज्जं तिष्ठति रामस्य वालव्यजन मुत्तमम् ।
चन्द्रमण्डलसङ्काश मातपत्रं च पाण्डुरम् ॥ १०

सज्जं द्युनिकरं श्रीमदभिषेकपुरस्कृतम् ।
पाण्डुर श्च वृषस्सज्जः पाण्डुरोऽश्व श्च सुस्थितः ॥ ११
प्रसृतश्च गजश्श्रीमानौपवाह्यः प्रतीक्षते ।
अष्टौ च कन्या माङ्गळ्या स्सर्वाभरणभूषिताः ॥ १२
वादित्राणि च सर्वाणि वन्दिन श्च तथापरे ।
इक्ष्वाकूणां यथाराज्ये सम्भ्रियेताभिषेचनम् ॥ १३
तथाजातीयमादाय राजपुत्राभिषेचनम् ।
ते राजवचनात्तत्र समवेतामहीपतिम् ॥ १४
अपश्यन्तोऽब्रुव "न्कोनुराज्ञो नः प्रतिवेदयेत् ।
न पश्यामश्च राजान मुदित श्च दिवाकरः ॥ १५
यौवराज्याभिषेक श्च सज्जो रामस्य धीमतः ।"
इति तेषु ब्रुवाणेषु सार्वभौमान्महीपतीन् ॥ १६
अब्रवीत्तानिदं सर्वान्सुमन्त्रो राजसत्कृतः ।
"रामं राज्ञो नियोगेन त्वरया प्रस्थितोऽस्म्यहम् ॥ १७
पूज्या राज्ञो भवन्त स्तु रामस्य च विशेषतः ।
अयं पृच्छामि वचनात्सुखमायुष्मता महम् ॥ १८
राज्ञस्सम्प्रति बुद्धस्य यच्चागमनकारणम् ।"
इत्युक्त्वान्तःपुरद्वार माजगाम पुराणवित् ॥ १९
सदाऽसक्तं च तद्वेश्म सुमन्त्रः प्रविवेश ह ।
तुष्टावास्य तदा वंशं प्रविश्य सविशां पतेः ॥ २०
शयनीयं नरेन्द्रस्य तदाऽऽसाद्यव्यतिष्ठत ।
सोऽत्यासाद्य तु तद्वेश्म तिरस्करिणि मन्तरा ॥ २१

आशीर्भि र्गुणयुक्ताभि रभितुष्टाव राघवम् ।
सोमसूर्यौ च काकुत्स्थ! शिववैश्रवणावपि ॥ २२
वरुणश्चाग्नि रिन्द्र श्च विजयं प्रदिशन्तु ते ।
[यथासाङ्गा श्च वेदाश्च ब्रह्माणं बोधयन्ति ते ॥ २३
तथा त्वां बोधयिष्यामि ह्युत्तिष्ठ पुरुषर्पभ ।]
गता भगवती रात्रिः कृतं कृत्यमिदं तव ॥ २४
बुद्ध्यस्व नृपशार्दूल! कुरुकार्य मनन्तरम् ।
ब्राह्मणा बलमुख्याश्च नैगमाश्चाऽगता नृप! ॥ २५
दर्शनं तेऽभिकाङ्क्षन्ते प्रतिबुद्ध्यस्व राघव! ।"
स्तुवन्तं तं तदासूतं सुमन्त्रं मन्त्रकोविदम् ॥ २६
प्रतिबुद्ध्य ततो राजा इदं वचनमब्रवीत् ।
"राम मानय सूतेति यदस्यभिहितोऽनया ॥ २७
किमिदं कारणं येन मदाज्ञा प्रतिहन्यते ।
न चैव सम्प्रसुप्तोऽह मानयेहाशु राघवम् ॥" २८
इति राजा दशरथस्सूतं तत्रान्वशात्पुनः ।
स राजवचनं श्रुत्वा शिरसा प्रतिपूज्यतम् ॥ २९
निर्जगाम नृपावासान्मन्यमानः प्रियं महत् ।
प्रपन्नो राजमार्गं च पताकाध्वजशोभितम् ॥ ३०
हृष्टः प्रमुदितस्सूतो जगामाशुविलोकयन् ।
ससूत स्तत्र शुश्राव रामाधिकरणाः कथाः ॥ ३१
अभिषेचन संयुक्ता स्सर्वलोकस्य हृष्टवत् ।
ततो ददर्श रुचिरं कैलासशिखरप्रभम् ॥ ३२

रामवेश्म सुमन्त्र स्तु शक्रवेश्म समप्रभम् ।
महाकवाटपिहितं वितर्दिशतशोभितम् ॥ ३३
काञ्चनप्रतिमैकाग्रं मणिविद्रुमतोरणम् ।
शारदाभ्रघनप्रख्यं दीप्तं मेरुगुहोपमम् ॥ ३४
मणिभिर्वरमाल्यानां सुमहद्भि रलङ्कृतम् ।
मुक्तामणिभिराकीर्णं चन्दनागरुधूपितम् ॥ ३५
गन्धान्मनोज्ञान्विसृजद्दार्दरं शिखरं यथा ।
सारसै श्च मयूरै श्च निनदद्भिर्विराजितम् ॥ ३६
सुकृतेहामृगाकीर्णं सुकीर्णं भक्तिभि स्तथा ।
मनश्चक्षुश्च भूताना माददत्तिग्मतेजसा ॥ ३७
चन्द्रभास्करसङ्काशं कुबेरभवनोपमम् ।
महेन्द्रधामप्रतिमं नानापक्षिसमाकुलम् ॥ ३८
मेरुशृङ्गसमं सूतो रामवेश्म ददर्शह ।
उपस्थितै स्समाकीर्णं जनै रञ्जलि कारिभिः ३९
उपादाय समाक्रान्तैस्तथा जानपदै र्जनैः ।
रामाभिषेकसुमुखै रुन्मुखै स्समलङ्कृतम् ॥ ४०
महामेघसमप्रख्य मुदग्रं सुविभूषितम् ।
नानारत्न समाकीर्णं कुब्जकै रातकावृतम् ॥ ४१
स वाजियुक्तेन रथेन सारथिर्नराकुलं राजपथं विलोकयन् ।
वरूथिना रामगृहाभिपातिना पुरस्य सर्वस्यमनांसिहर्षयन् ॥ ४२
ततस्समासाद्य महाधनं महत्प्रहृष्टरोमासबभूवसारथिः ।
मृगैर्मयूरैश्च समाकुलोल्बणं गृहं वरार्हस्य शचीपतेरिव ॥ ४३

स तत्र कैलासनिभा स्स्वलङ्कृताः प्रविश्य कक्ष्यास्त्रिदशालयोपमाः ।
प्रियान्नरान् राममते स्थितान्बहूनपोह्य शुद्धान्तमुपस्थितो रथी ॥
स तत्र शुश्राव च हर्षयुक्ता रामाभिषेकार्थकृता जनानाम् ।
नरेन्द्रसूनो रभिमङ्गळार्था स्सर्वस्य लोकस्य गिरः प्रहृष्टः ॥ ४५
महेन्द्रसद्मप्रतिमं तु वेश्म रामस्य रम्यं मृगपक्षिजुष्टम् ।
ददर्श मेरो रिव शृङ्ग मुच्चं विभ्राजमानं प्रभया सुमन्त्रः ॥ ४६
उपस्थितै रञ्जलिकारकैश्च सोपायनैर्जानपदैश्च मर्त्यैः ।
कोट्यापरार्धैश्च विमुक्तयानैस्समाकुलं द्वारवथं ददर्श ॥ ४७
ततो महामेघमहीधराभं प्रभिन्न मत्यंकुश मप्रसह्यम् ।
रामौपवाह्यं रुचिरं ददर्श शत्रुञ्जयं नाग मुदग्रकायम् ॥ ४८
स्वलङ्कृतान्साश्वरथान्सकुञ्जरानमात्यमुख्यान् शतशश्च वल्लभान् ।
व्यपोह्य सूतस्सहितान्समंतत स्समृद्ध मन्तःपुर माविवेश ॥ ४९
तदद्रिकूटाचलमेघसन्निभं महाविमानोत्तमवेश्मसंघवत् ।
अवार्यमाणः प्रविवेश सारथिः प्रभूतरत्नं मकरो यथाऽर्णवम् ॥ ५०

इति श्रीमदयोध्याकाण्डे पञ्चदशस्सर्गः ॥



## ॥ षोडशस्सर्गः ॥

स तदन्तः पुरद्वारं समतीत्य जनाकुलम् ।
प्रविविक्तां ततः कक्ष्या माससाद पुराणवित् ॥ १
प्रासकार्मुकबिभ्रद्भिर्युवभिर्मृष्टकुण्डलैः ।
अप्रमादिभि रेकाग्रै स्स्वनुरक्तै रधिष्ठिताम् ॥ २

तत्र काषायिणो वृद्धान्वेत्रपाणीन् स्वलङ्कृतान् ।
ददर्श विष्ठितान् द्वारिस्त्र्यध्यक्षान्सुसमाहितान् ॥ ३
ते समीक्ष्य समायान्तं रामप्रियचिकीर्षवः ।
सहसोत्पतिता स्सर्वे स्वासनेभ्यस्ससंभ्रमाः ॥ ४
तानुवाचविनीतात्मा सूतपुत्रः प्रदक्षिणः ।
"क्षिप्रमाख्यात रामाय सुमन्त्रो द्वारितिष्ठति ॥" ५
ते राम मुपसंगम्य भर्तुः प्रियचिकीर्षवः ।
सहभार्याय रामायक्षिप्रमेवाभिचक्षिरे ॥ ६
प्रतिवेदितमाज्ञाय सूत मभ्यन्तरं पितुः ।
तत्रैवानाययामास राघवप्रियकाम्यया ॥ ७
तं वैश्रवणसंकाश मुपविष्टं स्वलङ्कृतम् ।
ददर्श सूतः पर्यङ्के सौवर्णे सोत्तरच्छदे ॥ ८
वराहरुधिराभेण शुचिना च सुगन्धिना ।
अनुलिप्तं परार्ध्येन चन्दनेन परन्तपम् ॥ ९
स्थितया पार्श्वतश्चापि वालव्यजनहस्तया ।
उपेतं सीतया भूय श्चित्रया शशिनं यथा ॥ १०
तं तपन्तमिवादित्य मुपपन्नं स्वतेजसा ।
ववन्दे वरदं वन्दी विनयज्ञो विनीतवत् ॥ ११
प्राञ्जलिस्तु सुखं पृष्ट्वा विहारशयनासने ।
राजपुत्र मुवाचेदं सुमन्त्रो राजसत्कृतः ॥ १२
"कौसल्या सुप्रजाराम! पिता त्वां द्रष्टु मिच्छति ।
महिष्या सहकैकेय्या गम्यतां तत्र माचिरम् ॥" १३

एवमुक्तस्तु संहृष्टो नरसिंहो महाद्युतिः ।
तत स्सम्मानयामास सीता मिद मुवाचह ॥ १४
"देवि! देवश्चदेवी च समागम्य मदन्तरे ।
मन्त्रयेते ध्रुवं किञ्चिदभिषेचनसंहितम् ॥ १५
लक्षयित्वा ह्यभिप्रायं प्रियकामा सुदक्षिणा ।
संचोदयति राजानं मदर्थं मदिरेक्षणे! ॥ १६
सा प्रहृष्टा महाराजं हितकामानुवर्तिनी ।
जननी चार्थकामामे केकयाधिपते! स्सुता ॥ १७
दिष्ट्याखलु महाराजा महिष्या प्रियया सह ।
सुमन्त्रं प्राहिणोद्दूत मर्थकामकरं मम ॥ १८
यादृशीपरिषत्तत्र तादृशो दूत आगतः ।
ध्रुव मद्यैव मां राजा यौवराज्येऽभिषेक्ष्यति ॥ १९
हन्त! शीघ्रमितो गत्वा द्रक्ष्यामि च महीपतिम् ।
सह त्वं परिवारेण सुख मास्व रमस्वच ॥" २०
पतिसम्मानिता सीता भर्तारमसितेक्षणा ।
आद्वार मनुवव्राज मङ्गळान्यभिदध्युषी ॥ २१
"राज्यं द्विजातिभिर्जुष्टं राजसूयाभिषेचनम् ।
कर्तु मर्हति ते राजा वासवस्येव लोककृत् ॥ २२
दीक्षितं व्रतसम्पन्नं वराजिनधरं शुचिम् ।
कुरङ्गशृङ्गपाणिं च पश्यन्ती त्वां भजाम्यहम् ॥ २३
पूर्वां दिशं वज्रधरो दक्षिणां पातु ते यमः ।
वरुणः पश्चिमा माशां धनेश स्तूत्तरां दिशम् ॥" २४

अथ सीता मनुज्ञाप्य कृतकौतुकमङ्गलः ।
निश्चक्राम सुमन्त्रेण सह रामो निवेशनात् ॥ २५
पर्वता दिव निष्क्रम्य सिंहो गिरिगुहाशयः ।
लक्ष्मणं द्वारि सोऽपश्य त्प्रह्वाञ्जलिपुटं स्थितम् ॥ २६
अथ मध्यमकक्ष्यायां समागच्छ त्सुहृज्जनैः ।
स सर्वानर्थिनो दृष्ट्वा समेत्य प्रतिनन्द्यच ॥ २७
ततः पावकसंकाशमारुरोह रथोत्तमम् ।
वैयाघ्रं पुरुषव्याघ्रो राजतं राजनन्दनः ॥ २८
मेघनाद मसंबाधं मणिहेमविभूषितम् ।
मुषणन्तमिव चक्षूंषि प्रभया सूर्यवर्चसम् ॥ २९
करेणुशिशुकल्पैश्च युक्तं परमवाजिभिः ।
हरियुक्तं सहस्राक्षो रथमिन्द्र इवाशुगम् ॥ ३०
प्रययौ तूर्ण मास्थाय राघवो ज्वलितश्श्रिया ।
स पर्जन्य इवाकाशे स्वनवानभिनादयन् ॥ ३१
निकेतान्निर्ययौ श्रीमान्महेन्द्रादिव चन्द्रमाः ।
छत्रचामरपाणिस्तु लक्ष्मणो राघवानुजः ॥ ३२
जुगोप भ्रातरं भ्राता रथ मास्थाय पृष्ठतः ।
ततो हलहलाशब्दस्तुमुलस्समजायत ॥ ३३
तस्य निष्क्रममाणस्य जनौघस्य समंततः ।
ततो हयवरामुख्या नागा श्च गिरिसन्निभाः ॥ ३४
अनुजग्मुस्तदा रामं शतशोऽथ सहस्रशः ।
अग्रतश्चास्य सन्नद्धा श्चन्दनागरुभूषिताः ॥ ३५

खड्गचापधराश्शूरा जग्मुराशंसवो जनाः ।
ततो वादित्रशब्दा श्च स्तुतिशब्दा श्च वन्दिनाम् ॥ ३६
सिंहनादाश्च शूराणां तदा शुश्रुविरे पथि ।
हर्म्यवातायनस्थाभि र्भूषिताभि स्समंततः ॥ ३७
कीर्यमाण स्स पुष्पौघै र्ययौ स्त्रीभि ररिन्दमः ।
रामं सर्वानवद्यांग्यो रामपिप्रीषया ततः ॥ ३८
वचोभिरग्र्यै र्हर्म्यस्थाः क्षितिस्था श्च ववन्दिरे ।
नूनं नन्दति ते माता कौसल्या मातृनन्दन! ॥ ३९
पश्यन्ती सिद्धयात्रं त्वां पित्र्यं राज्यमवस्थितम् ।
सर्वसीमन्तिनीभ्यश्च सीता सीमन्तिनीं पराम् ॥ ४०
अमन्यन्त हि तानार्यो रामस्य हृदयप्रियाम् ।
तयासुचरितं देव्या पुरानूनं महत्तपः ॥ ४१
रोहिणीव शशाङ्केन रामसंयोग मापया ।
इति प्रासादशृङ्गेषु प्रमदाभि र्नरोत्तमः ॥ ४२
शुश्राव राजमार्गस्थः प्रियावाच उदाहृताः ।
स राघवस्तत्रकथाप्रपञ्चान् शुश्रावलोकस्य समागतस्य ।
आत्माधिकारा विविधा श्च वाचः प्रहृष्टरूपस्य पुरोजनस्य ॥ ४३
एष श्रियं गच्छति राघवोऽद्य राजप्रसादा द्विपुलां गमिष्यन् ।
एते वयं सर्वसमृद्धकामा येषा मयं नो भविता प्रशास्ता ॥ ४४
लाभो जनस्यास्य यदेष सर्वं प्रपत्स्यते राष्ट्रमिदं चिराय ।
ह्यप्रियं किंचनजातु कश्चित्पश्येन्न दुःखं मनुजाधिपेऽस्मिन् ॥ ४५

सघोषवद्भि श्च हयैर्मतङ्गैः पुरस्सरै स्स्वस्तिकसूतमागधैः ।
महीयमानः प्रवरैश्च वादकै रभिष्टुतो वैश्रवणो यथा ययौ ॥ ४६
करेणुमातङ्गरथाश्वसंकुलं महाजनौघप्रतिपूर्णचत्वरम् ।
प्रभूतरत्नं बहुपुण्यसंचयं ददर्शरामो रुचिरं महापथम् ॥ ४७

इति श्रीमदयोध्याकाण्डे षोडशस्सर्गः ॥

## ॥ सप्तदशस्सर्गः ॥

स रामो रथमास्थाय सम्प्रहृष्टसुहृज्जनः ।
पताकाध्वजसम्पन्नं महार्हागरुधूपितम् ॥ १
अपश्यन्नगरं श्रीमान्नानाजनसमाकुलम् ।
सगृहै रभ्रसङ्काशैः पाण्डुरै रुपशोभितम् ॥ २
राजमार्गं ययौरामो मध्येनागरुधूपितम् ।
चन्दनानां च मुख्याना मगरूणां च संचयैः ॥ ३
उत्तमानां च गन्धानां क्षौमकोशाम्बरस्य च ।
अविद्धाभि श्च मुक्ताभि रुत्तमै स्स्फाटिकै रपि ॥ ४
शोभमान मसम्बाधै स्तं राजपथमुत्तमम् ।
संवृतं विविधैःपण्यै र्भक्ष्यै रुच्चावचै रपि ॥ ५
ददर्श तं राजपथं दिवि देवपथं यथा ।
रगरुचन्दनैः ॥ ६
नानामाल्योपगंधै श्च सदाऽभ्यर्चितचत्वरम् ।
आशीर्वादान्बहून्श्शृण्वन्सुहृद्भि स्समुदीरितान् ॥

यथार्हं चापि संपूज्य सर्वानेव नरान्ययौ ।
पितामहै राचरितं तथैव प्रपितामहैः ॥ ८
अद्योपादाय तं मार्ग मभिषिक्तोऽनुपालय ।
यथास्म लालिताःपित्रा यथापूर्वैः पितामहैः ॥ ९
तत स्सुखतरं रामे वत्स्याम स्सति राजनि ।
अलमद्यहि भुक्तेन परमार्थैरलंचनः ॥ १०
यथा पश्याम निर्यातं रामं राज्ये प्रतिष्ठितम् ।
अतो हि नःप्रियतरं नान्यत्किंचि द्भविष्यति ॥ ११
यदाऽभिषेको रामस्य राज्येनामिततेजसः ।
एता श्चान्याश्च सुहृदा मुदासीनः कथाश्शुभाः ॥ १२
आत्मसंपूजनी श्शृण्वन्ययौ रामो महापथम् ।
नहि तस्मान्मनः कश्चि च्चक्षुषी वानरोत्तमात् ॥ १३
नरश्शक्तोत्यपाक्रष्टु मतिक्रान्तेऽपि राघवे ।
यश्च रामं नपश्येत्तु यं च रामो नपश्यति ॥ १४
निन्दितस्सवसेल्लोके स्वात्माऽप्येनं विगर्हते ।
सर्वेषां हि स धर्मात्मा वर्णानां कुरुते दयाम् ॥ १५
चतुर्णां हि वयस्थानां तेन ते तमनुव्रताः ।
चतुष्पथान्देवपथां श्चैत्यान्यायतनानि च ॥ १६
प्रदक्षिणं परिहरन् जगाम नृपतेस्सुतः ।
स राजकुल मासाद्य मेघसंघोपमै श्शुभैः ॥ १७
प्रासादशृंगैर्विविधैः कैलासशिखरोपमैः ।
आवारयद्भि र्गगनं विमानै रिव पाण्डुरैः ॥ १८

वर्धमानगृहैश्चापि रत्नजालपरिष्कृतैः ।
तत्पृथिव्यां गृहवरं महेन्द्रभवनोपमम् ॥ १९
राजपुत्रः पितुर्वेश्म प्रविवेश श्रियाज्वलन ।
सकक्ष्या धन्विभि र्गुप्तास्तिस्रोऽतिक्रम्य वाजिभिः ॥ २०
पदातिरपरे कक्ष्ये द्वे जगाम नरोत्तमः ।
स सर्वा स्समतिक्रम्य कक्ष्या दशरथात्मजः ॥ २१
सन्निवर्त्य जनं सर्वं शुद्धान्तं पुनरभ्यगात् ।
ततः प्रविष्टे पितुरन्तिकं तदा जनस्ससर्वो मुदितो नृपात्मजे ।
प्रतीक्षते तस्य पुनश्चनिर्गमं यथोदयं चन्द्रमसस्सरित्पतिः ॥ २२

॥ इति श्रीमदयोध्याकाण्डे सप्तदशस्सर्गः ॥

## ॥ अष्टादशस्सर्गः ॥

सददर्शासने रामो निषण्णं पितरं शुभे ।
कैकेयीसहितं दीनं मुखेन परिशुष्यता ॥ १
स पितु श्चरणौ पूर्व मभिवाद्य विनीतवत् ।
ततो ववन्दे चरणौ कैकेय्यास्सुसमाहितः ॥ २
'रामे' त्युक्त्वाच वचनं बाष्पपर्याकुलेक्षणः ।
शशाक नृपतिर्दीनो नेक्षितुं नाभिभाषितुम् ॥ ३
तदपूर्वं नरपतेर्दृष्ट्वा रूपं भयावहम् ।
रामोऽपि भयमापन्नः पदा स्पृष्ट्वेव पन्नगम् ॥ ४
इन्द्रियैरप्रहृष्टैस्तं शोकसन्तापकर्शितम् ।
निश्वसन्तं महाराजं व्यथिताकुलचेतसम् ॥ ५

ऊर्मिमालिन मक्षोभ्यं क्षुभ्यन्त मिवसागरम् ।
उपप्लुतमिवादित्यमुक्तानृतमृषियथा ॥ ६
अचिन्त्यकल्पं हि पितुस्तंशोकमुपधारयन् ।
बभूव संरब्धतरस्समुद्र इव पर्वणि ॥ ७
चिन्तयामास चतदा रामःपितृहिते रतः ।
'किस्विदद्यैव नृपतिर्नमां प्रत्यभिनन्दति ॥ ८
अन्यदा मां पिता दृष्ट्वा कुपितोऽपि प्रसीदति ।
तस्य मामद्य संप्रेक्ष्य कि मायासः प्रवर्तते ॥ ९
स दीन इव शोकार्तो विषण्णवदनद्युतिः ।
कैकेयी मभिवाद्यैव रामो वचन मब्रवीत् ॥ १०
"कच्चिन्मया नापराद्ध मज्ञाना द्येन मे पिता ।
कुपितस्तन्ममाचक्ष्व त्वं चैवैनं प्रसादय ॥ ११
अप्रसन्नमनाः किन्नु सदामां प्रति वत्सलः ।
विवर्णवदनो दीनो नहि मा मभिभाषते ॥ १२
शारीरो मानसो वापि कच्चि देनं न बाधते ? ।
सन्तापो वाऽभितापोवा दुर्लभं हि सदा सुखम् ॥ १३
कच्चिन्न किंचि द्भरते कुमारे प्रियदर्शने ।
शत्रुघ्नेवा महासत्त्वे मातृणां वा ममाशुभम् ? ॥ १४
अतोषयन्महाराज मकुर्वन्वापितुर्वचः ।
मुहूर्तमपि नेच्छेयं जीवितुं कुपिते नृपे ॥ १५
यतो मूलं नरः पश्येत्प्रादुर्भावमिहात्मनः ।
कथं तस्मिन्नवर्तेत प्रत्यक्षे सति दैवते ॥ १६

कच्चित्तेपरुषंकिंचिदभिमानात्पितामम ।
उक्तोभवत्या कोपेन यत्रास्य लुलितं मनः ॥ १७
एतदाचक्ष्व मे देवि! तत्त्वेन परिपृच्छतः ।
किं निमित्त मपूर्वोऽयं विकारो मनुजाधिपे ॥" १८
एव मुक्तातु कैकेयी राघवेण महात्मना ।
उवाचेदं सुनिर्लज्जा धृष्टमात्महितं वचः ॥ १९
"न राजा कुपितो राम! व्यसनं नास्य किंचन ।
किञ्चिन्मनोगतं त्वस्य त्वद्भया न्नाभिभाषते ॥ २०
प्रियं त्वा मप्रियं वक्तुं वाणी नास्योपवर्तते ।
तदवश्यं त्वया कार्यं यदनेनाश्रुतं मम ॥ २१
एष मह्यं वरं दत्वा पुरा मामभिपूज्य च ।
स पश्चात्तप्यते राजा यथाऽन्यः प्राकृत स्तथा ॥ २२
अतिसृज्य ददानीति वरं मम विशांपतिः ।
स निरर्थं गतजले सेतुं बंधितु मिच्छति ॥ २३
धर्ममूल मिदं राम! विदितं च सतामपि ।
तत्सत्यं नत्यजेद्राजा कुपितस्त्वत्कृते यथा ॥ २४
यदि तद्वक्ष्यते राजा शुभं वा यदि वाऽशुभम् ।
करिष्यासि ततस्सर्वं माख्यास्यामि पुनस्त्वहम् ॥ २५
यदि त्वभिहितं राज्ञा त्वयि तन्नविपत्स्यते ।
ततोऽह मभिधास्यामि नह्येष त्वयि वक्ष्यति ॥" २६
एतत्तु वचनं श्रुत्वा कैकेय्या समुदाहृतम् ।
उवाच व्यथितो राम स्तांदेवीं नृपसन्निधौ ॥ २७

"अहो! धिङ्नार्हसे देवि वक्तुं मामीदृशं वचः ।
अहं हि वचनाद्राज्ञः पतेयमपि पावके ॥ २८
भक्षयेयं विषं तीक्ष्ण म्मज्जेय मपि चार्णवे ।
नियुक्तो गुरुणा पित्रा नृपेण च हितेन च ॥ २९
तद्ब्रूहि वचनं देवि राज्ञो यदभिकांक्षितम् ।
करिष्ये प्रतिजानेच रामो द्विर्नाभिभाषते ॥ ३०
तमार्जवसमायुक्त मनार्या सत्यवादिनम् ।
उवाच रामं कैकेयी वचनं भृशदारुणम् ॥ ३१
"पुरा दैवासुरे युद्धे पित्राते मम राघव! ।
रक्षितेन वरौ दत्तौ सशल्येन महारणे ॥ ३२
तत्र मेयाचितो राजा भरतस्याभिषेचनम् ।
गमनं दण्डकारण्ये तव चाद्यैव राघव! ॥ ३३
यदि सत्यप्रतिज्ञं त्वं पितरं कर्तुमिच्छसि ।
आत्मानं च नरश्रेष्ठ! मम वाक्य मिदं शृणु ॥ ३४
सन्निदेशे पितुस्तिष्ठ यथा तेन प्रतिश्रुतम् ।
त्वयाऽरण्यं प्रवेष्टव्यं नववर्षाणि पञ्च च ॥ ३५
भरतश्चाभिषिच्येत यदेतदभिषेचनम् ।
त्वदर्थे विहितं राज्ञा तेन सर्वेण राघव! ॥ ३६
सप्तसप्त च वर्षाणि दण्डकारण्यमाश्रितः ।
अभिषेक मिमं त्यक्त्वा जटाजिनधरो वस ॥ ३७
भरतः कोसलपुरे प्रशास्तु वसुधामिमाम् ।
नानारत्नसमाकीर्णां सवाजिरथकुञ्जराम् ॥ ३८

एतेन त्वां नरेन्द्रोऽयं कारुण्येन समाप्लुतः ।
शोकसंक्लिष्टवदनो न शक्नोति निरीक्षितुम् ॥ ३९
एतत्कुरु नरेन्द्रस्य वचनं रघुनन्दन! ।
सत्येन महता राम! तारयस्व नरेश्वरम् ॥" ४०
इतीव तस्यां परुषं वदन्त्यां न चैव रामः प्रविवेश शोकम् ।
प्रविव्यथे चापि महानुभावो राजा तु पुत्रव्यसनाभितप्तः ॥ ४१

इति श्रीमदयोध्याकाण्डे अष्टादशस्सर्गः ॥

---

## ॥ एकोनविंशस्सर्गः ॥

तमप्रियममित्रघ्नो वचनं मरणोपमम् ।
श्रुत्वा नविव्यथे रामः कैकेयीं चेद मब्रवीत् ॥ १
"एव मस्तु गमिष्यामि वनं वस्तु महं त्वितः ।
जटाजिनधरो राज्ञः प्रतिज्ञामनुपालयन् ॥ २
इदं तु ज्ञातु मिच्छामि किमर्थं मां महीपतिः ।
नाभिनन्दति दुर्धर्षो यथापुर मरिन्दमः ॥ ३
मन्युर्नचत्वया कार्यो देवि! ब्रूमि तवाग्रतः ।
यास्यामि भव सुप्रीता वनं चीरजटाधरः ॥ ४
हितेन गुरुणा पित्रा कृतज्ञेन नृपेण च ।
नियुज्यमानो विस्रब्धः कि न कुर्या महं प्रियम् ॥ ५
अळीकं मानसं त्वेकं हृदयं दहतीव मे ।
स्वयं यन्नाहमां राजा भरतस्याभिषेचनम् ॥ ६

अहं हि सीतां राज्यं च प्राणानिष्टान्धनानि च ।
हृष्टो भ्रात्रे स्वयं दद्यां भरतायाप्रचोदितः ॥ ७
किं पुनर्मनुजेन्द्रेण स्वयंपित्रा प्रचोदितः ।
तव च प्रियकामार्थं प्रतिज्ञा मनुपालयन् ॥ ८
तदाश्वासय हीमं त्वं किन्विदं यन्महीपतिः ।
वसुधासक्तनयनो मन्दमश्रूणिमुञ्चति ॥ ९
गच्छन्तु चै वानयितुं दूता श्शीघ्रजवैर्हयैः ।
भरतं मातुलकुलादद्यैव नृपशासनात् ॥ १०
दण्डकारण्यमेषोऽह मितो गच्छामि सत्वरः ।
अविचार्य पितुर्वाक्यं समावस्तुं चतुर्दश ॥" ११
सा हृष्टा तस्य तद्वाक्यं श्रुत्वा रामस्य कैकयी ।
प्रस्थानं श्रद्दधाना हि त्वरयामास राघवम् ॥ १२
"एवं भवतु यास्यन्ति दूता श्शीघ्रजवैर्हयैः ।
भरतं मातुलकुला दुपावर्तयितुं नराः ॥ १३
तवत्वहं क्षमं मन्ये नोत्सुकस्य विलम्बनम् ।
राम! तस्मादित श्शीघ्रं वनं त्वं गन्तु मर्हसि ॥ १४
व्रीळान्वित स्स्वयं यच्च नृपस्त्वां नाभिभाषते ।
नैतत्किंचिन्नरश्रेष्ठ! मन्युरेषोऽपनीयताम् ॥ १५
यावत्त्वं न वनं यातः पुरादस्मा दभित्वरन् ।
पिता तावन्न ते राम! स्नास्यते भोक्ष्यतेऽपि वा ॥" १६
'धिक्कष्ट' मिति निश्श्वस्य राजा शोकपरिप्लुतः ।
मूर्छितो न्यपतत्तस्मिन्पर्यङ्के हेमभूषिते ॥ १७

रामोऽप्युत्थाप्य राजानं कैकेय्याभिप्रचोदितः ।
कशयेवाहतो वाजी वनं गन्तुं कृतत्वरः ॥ १८
तदप्रिय मनार्याया वचन दारुणोदयम् ।
श्रुत्वागतव्यथो रामः कैकेयीं वाक्य मब्रवीत् ॥ १९
"नाह मर्थपरो देवि! लोकमावस्तु मुत्सहे ।
विद्धि मा मृषिभिस्तुल्यं केवलं धर्ममास्थितम् ॥ २०
यदत्र भवतः किञ्चि च्छक्यं कर्तु प्रियं मया ।
प्राणानपि परित्यज्य सर्वथा कृत मेव तत् ॥ २१
न ह्यतो धर्मचरणं किंचि दस्ति महत्तरम् ।
यथा पितरि शुश्रूषा तस्य वा वचनक्रिया ॥ २२
अनुक्तोऽप्यत्र भवता भवत्या वचना दहम् ।
वने वत्स्यामि विजने वर्षाणीह चतुर्दश ॥ २३
न नूनं मयि कैकेयि किञ्चि दाशंससे गुणम् ।
यद्राजानमवोचस्त्वं ममेश्वरतरा सती ॥ २४
यावन्मातर मापृच्छे सीतां चानुनयाम्यहम् ।
ततोऽद्यैव गमिष्यामि दण्डकानां मह द्वनम् ॥ २५
भरतः पालयेद्राज्यं शुश्रूषे च्च पितुर्यथा ।
तथा भवत्या कर्तव्यं सहि धर्म स्सनातनः ॥" २६
स रामस्य वच श्श्रुत्वा भृशं दुःखहतः पिता ।
शोकादशक्नुवन्बाष्पं प्ररुरोद महास्वनम् ॥ २७
वन्दित्वा चरणौ रामो विसंज्ञस्य पितुस्तथा ।
कैकेय्याश्चाप्यनार्याया निष्पपात महाद्युतिः ॥ २८

स रामः पितरं कृत्वा कैकेयीं च प्रदक्षिणम् ।
निष्क्रम्यान्तःपुरात्तस्मात्स्वं ददर्श सुहृज्जनम् ॥ २९
तं बाष्पपरिपूर्णाक्षः पृष्ठतोऽनुजगाम ह ।
लक्ष्मणः परमक्रुद्ध स्सुमित्रानन्दवर्धनः ॥ ३०
आभिषेचनिकं भाण्डं कृत्वा रामः प्रदक्षिणम् ।
शनैर्जगाम सापेक्षो दृष्टिं तत्राविचारयन् ॥ ३१
न चास्य महतीं लक्ष्मीं राज्यनाशोऽपकर्षति ।
लोककान्तस्य कान्तत्वाच्छीतरश्मेरिव क्षपा ॥ ३२
न वनं गन्तुकामस्य त्यजतश्च वसुन्धराम् ।
सर्वलोकातिगस्येव लक्ष्यते चित्तविक्रिया ॥ ३३
प्रतिषिध्य शुभं छत्रं व्यजने च स्वलङ्कृते ।
विसर्जयित्वा स्वजनं रथं पौरां स्तथा जनान् ॥ ३४
धारयन्मनसा दुःख मिन्द्रियाणि निगृह्य च ।
प्रविवेशात्मवान् वेश्म मातु रप्रियशंसिवान् ॥ ३५
सर्वोह्यभिजन श्श्रीमान् श्रीमतस्सत्यवादिनः ।
नालक्षयत रामस्य किञ्चिदाकारमानने ॥ ३६
उचित च महाबाहु र्नजहौ हर्ष मात्मनः ।
शारद स्समुदीर्णांशु श्चन्द्र स्तेज इवात्मजम् ॥ ३७
वाचामधुरया राम स्सर्वं सम्मानयञ्जनम् ।
मातु स्समीपं धीरात्मा प्रविवेश महायशाः ॥ ३८
तं गुणै स्समतां प्राप्तो भ्राता विपुलविक्रमः ।
सौमित्रि रनुवव्राज धारयन्दुःखमात्मजम् ॥ ३९

प्रविश्य वेश्मातिभृशं मुदाऽन्वितं समीक्ष्य तां चार्थविपत्तिमागताम् ।
नचैव रामोऽत्र जगाम विक्रियां सुहृज्जनस्यात्मविपत्तिशङ्कया ॥ ४०

इति श्रीमदयोध्याकाण्डे एकोनविंशस्सर्गः ॥

---

## ॥ विंशस्सर्गः ॥

तस्मिंस्तु पुरुषव्याघ्रे निष्क्रामति कृताञ्जलौ ।
आर्तशब्दो महान् जज्ञे स्त्रीणा मन्तःपुरे तदा ॥ १
कृत्येष्वचोदितः पित्रा सर्वस्यान्तःपुरस्यच ।
गतिर्यश्शरणं चापि स रामोऽद्य प्रवत्स्यति ॥ २
कौसल्यायां यथा युक्तो जनन्यां वर्तते सदा ।
तथैव वर्ततेऽस्मासु जन्मप्रभृति राघवः ॥ ३
नक्रुध्यत्यभिशप्तोऽपिक्रोधनीयानि वर्जयन् ।
क्रुद्धान्प्रसादयन्सर्वान्सइतोऽद्य प्रवत्स्यति ॥ ४
अबुद्धिर्बतनो राजा जीवलोकं चरत्ययम् ।
यो गतिं सर्वभूतानां परित्यजति राघवम् ॥ ५
इति सर्वा महिष्यस्ता विवत्सा इव धेनवः ।
पतिं माचुक्रुशुश्चैव सस्वरं चापि चुक्रुशुः ॥ ६
स हि चान्तःपुरे घोर मार्तशब्दं महीपतिः ।
पुत्रशोकाभिसन्तप्त श्श्रुत्वा व्यालीयताऽऽसने ॥ ७
रामस्तु भृश मायस्तो निश्श्वसन्निव कुञ्जरः ।
जगाम सहितो भ्रात्रा मातु रन्तःपुरं वशी ॥ ८

सोऽपश्यत्पुरुषं तत्र वृद्धं परमपूजितम् ।
उपविष्टं गृहद्वारि तिष्ठतश्चापरान्बहून् ॥ ९
दृष्ट्वैवतु तदा रामं ते सर्वे सहसोत्थिताः ।
जयेन जयतां श्रेष्ठं वर्धयन्तिस्म राघवम् ॥ १०
प्रविश्य प्रथमां कक्ष्यां द्वितीयायां ददर्शसः ।
ब्राह्मणान्वेदसम्पन्नान्वृद्धा न्राज्ञाऽभिसत्कृतान् ॥ ११
प्रणम्य रामस्तान्विप्रां स्तृतीयायां ददर्श सः ।
स्त्रियो वृद्धा स्तथा बाला द्वाररक्षणतत्पराः ॥ १२
वर्धयित्वा प्रहृष्टास्ताः प्रविश्य च गृहं स्त्रियः ।
न्यवेदयन्त त्वरिता राममातुः प्रियं तदा ॥ १३
कौसल्यापि तदा देवी रात्रिं स्थित्वा समाहिता ।
प्रभाते त्वकरोत्पूजां विष्णोः पुत्रहितैषिणी ॥ १४
साक्षौमवसना हृष्टा नित्यव्रतपरायणा ।
अग्निं जुहोतिस्म तदा मन्त्रवत्कृतमङ्गळा ॥ १५
प्रविश्य च तदा रामो मातु रन्तः पुरं शुभम् ।
ददर्श मातरं तत्र हावयन्तीं हुताशनम् ॥ १६
देवकार्यनिमित्तं च तत्रापश्यत्समुद्यतम् ।
दध्यक्षतं घृतं चैव मोदकान्हविषस्तथा ॥ १७
लाजान्माल्यानि शुक्लानि पायसं कृसरं तथा ।
समिधः पूर्णकुम्भांश्च ददर्श रघुनन्दनः ॥ १८
तां शुक्लक्षौमसंवीतां व्रतयोगेन कर्शिताम् ।
तर्पयन्तीं ददर्शाद्भिर्देवतां देववर्णिनीम् ॥ १९

सा चिरस्यात्मजं दृष्ट्वा मातृनन्दनमागतम् ।
अभिचक्राम संहृष्टा किशोरं बडबा यथा ॥ २०
स मातर मभिक्रान्तामुपसंगृह्य राघवः ।
[पर्यष्वजत धर्मात्मा मात्रा चैव परन्तपः ॥] २१
परिष्वक्तश्च बाहुभ्या मुपघ्रातश्च मूर्धनि ।
तमुवाच दुराधर्ष राघवं सुत मात्मनः ॥ २२
कौसल्या पुत्रवात्सल्या दिदं प्रियाहितंवचः ।
"वृद्धानां धर्मशीलानां राजर्षीणां महात्मनाम् ॥ २३
प्राप्नुह्यायुश्च कीर्तिं च धर्मं चोपाहितं कुले ।
सत्यप्रतिज्ञं पितरं राजानं पश्य राघव! ॥ २४
अद्यैव हि त्वां धर्मात्मा यौवराज्येऽभिषेक्ष्यति ।"
दत्तमासनमालभ्य भोजनेन निमन्त्रितः ॥ २५
मातरं राघवः किञ्चिद्व्रीळात्प्राञ्जलिरब्रवीत् ।
स स्वभावविनीत श्च गौरवाच्च तदानतः ॥ २६
प्रस्थितो दण्डकारण्यमाप्रष्टु मुपचक्रमे ।
"देवि! नूनं नजनीषे महद्भय मुपस्थितम् ॥ २७
इदं तव च दुःखाय वैदेह्या लक्ष्मणस्य च ।
गमिष्ये दण्डकारण्यं किमनेनासनेन मे ॥ २८
विष्टरासनयोग्यो हि कालोऽयं मामुपस्थितः ।
चतुर्दश हि वर्षाणि वत्स्यामि विजने वने ॥ २९
मधुमूलफलैर्जीवन्हित्वा मुनिवदामिषम् ।
भरताय महाराजो यौवराज्यं प्रयच्छति ॥ ३०

मां पुनर्दण्डकारण्ये विवासयति तापसम् ।
स षट्चाष्टौ च वर्षाणि वत्स्यामि विजने वने ॥ ३१
आसेवमानो वन्यानि फलमूलैश्च वर्तयन् ।"
सा निकृत्तेव सालस्य यष्टिः परशुना वने ॥ ३२
पपात सहसा देवी देवतेव दिवश्च्युता ।
तामदुःखोचितां दृष्ट्वा पतितां कदळीमिव ॥ ३३
रामस्तूत्थापयामास मातरं गतचेतसम् ।
उपावृत्योत्थितां दीनां बडबामिव वाहिताम् ॥ ३४
पांसुकुण्ठितसर्वाङ्गीं विममर्श च पाणिना ।
सा राघव मुपासीनमसुखार्ता सुखोचिता ॥ ३५
उवाच पुरुषव्याघ्र मुपशृण्वति लक्ष्मणे ।
"यदि पुत्र! न जायेथा मम शोकाय राघव! ॥ ३६
न स्म दुःखमतो भूयः पश्येय महमप्रजाः ।
एक एव हि वन्ध्यायाश्शोको भवति मानसः ॥ ३७
अप्रजाऽस्मीति सन्तापो नह्यन्यः पुत्र! विद्यते ।
नदृष्टपूर्वं कल्याणं सुखं वा पतिपौरुषे ॥ ३८
अपि पुत्रेऽपि पश्येय मिति रामाऽस्थितं मया ।
सा बहून्यमनोज्ञानि वाक्यानि हृदयच्छिदाम् ॥ ३९
अहं श्रोष्ये सपत्नीना मवराणां वरासती ।
अतो दुःखतरं किंनु प्रमदानां भविष्यति ॥ ४०
मम शोको विलापश्च यादृशोऽय मनन्तकः ।
त्वयि सन्निहिते ह्येव मह मासं निराकृता ॥ ४१

किं पुनः प्रोषिते तात ध्रुवं मरण मेव मे ।
अत्यन्तं निगृहीताऽस्मि भर्तुर्नित्यमतंद्रिता ॥ ४२
परिवारेण कैकेय्यास्समावाप्यथवाऽवरा ।
योहि मां सेवते कश्चिदथवाऽप्यनुवर्तते ॥ ४३
कैकेय्याः पुत्रमन्वीक्ष स्वजनो नाभिभाषते ।
नित्यक्रोधतया तस्याः कथं नु खरवादि तत् ॥ ४४
कैकेय्या वदनं द्रष्टुं पुत्र! शक्ष्यामि दुर्गता ।
दशसप्तच वर्षाणि तव जातस्य राघव! ॥ ४५
आसितानि प्रकाङ्क्षन्त्या मया दुःखपरिक्षयम् ।
तदक्षयं महद्दुःखं नोत्सहे सहितुं चिरम् ॥ ४६
विप्रकारं सपत्नीना मेवं जीर्णाऽपि राघव! ।
अपश्यन्ती तव मुखं परिपूर्ण शशिप्रभम् ॥ ४७
कृपणावर्तयिष्यामि कथं कृपणजीविकाम् ।
उपवासैश्च योगैश्च बहुभिश्च परिश्रमैः ॥ ४८*
दुःखं संवर्धितो मोघं त्वं हि दुर्गतया मया ।
स्थिरं तु हृदयं मन्ये ममेदं यन्नदीर्यते ॥ ४९
प्रावृषीव महानद्या स्स्पृष्टं कूलं नवाम्भसा ।
ममैव नूनं मरणं नविद्यते नचावकाशोऽस्ति यमक्षयेऽपिवा ।
यदन्तकोऽद्यैव न मां जिहीर्षति प्रसह्य सिंहो रुदतीं मृगीमिव ॥
स्थिरं हि नूनं हृदयं ममायसं नभिद्यते य द्भुवि नावदीर्यते ।
अनेन दुःखेन च देहमर्पितं ध्रुवं ह्यकाले मरणं नविद्यते ॥ ५१

इदं हि दुःखं यदनर्थकानि मे व्रतानि दानानि च संयमा श्च हि ।
तपश्च तप्तं यदपत्यकारणात्सुनिष्फलं बीजमिवोप्तमूषरे ॥ ५२
यदि ह्यकाले मरणं स्वयेच्छया लभेत कश्चिद्गुरुदुःखकार्शितः ।
गताहमद्यैव परेतसंसदं विना त्वया धेनु रिवात्मजेन वै ॥ ५३
अथापि किं जीवित मद्यमे वृथा त्वया विना चन्द्रनिभाननप्रभ ! ।
अनुव्रजिष्यामि वनं त्वयैव गौस्सुदुर्बला वत्समिवानुकांक्षया ॥"
भृशमसुखममर्षिता तदा बहु विललाप समीक्ष्य राघवम् ।
व्यसनमुपनिशाम्य सा महत्सुतमिवबद्धमवेक्ष्य किन्नरी ॥ ५५

इति श्रीमदयोध्याकाण्डे विंशस्सर्गः ॥

---

## ॥ एकविंशस्सर्गः ॥

तथा तु विलपन्तीं तां कौसल्यां राममातरम् ।
उवाच लक्ष्मणो दीन स्तत्कालसदृशं वचः ॥ १
*"नरोचते ममाप्येतदार्ये ! यद्राघवो वनम् ।
त्यक्त्वा राज्यश्रियं गच्छेत् स्त्रिया वाक्यवशं गतः ॥ २
विपरीतश्च वृद्धश्च विषयैश्च प्रधर्षितः ।
नृपः किमिव नब्रूयाच्चोद्यमानस्समन्मथः ॥ ३
नास्यापराधं पश्यामि नापिदोषं तथाविधम् ।
येन निर्वास्यते राष्ट्राद्वनवासाय राघवः ॥ ४
[अहं हनिष्ये पितरं वृद्धं कामवशं गतम् ।
स्त्रिया युक्तं च निर्लज्जं धर्मायुक्तं नृपं यथा ॥]

न तं पश्याम्यहं लोके परोक्षमपि योनरः ।
स्वमित्रोऽपि निरस्तोऽपियोऽस्यदोषमुदाहरेत् ॥ ५
देवकल्पमृजुंदान्तं रिपूणामपि वत्सलम् ।
अवेक्षमाणः को धर्मं त्यजेत्पुत्रमकारणात् ॥ ६
तदिदं वचनं राज्ञः पुनर्बाल्यमुपेयुषः ।
पुत्रः को हृदये कुर्या द्राजवृत्तमनुस्मरन् ॥ ७
'यावदेव न जानाति कश्चिदर्थमिमं नरः ।
तावदेव मया सार्ध मात्मस्थं कुरुशासनम् ॥ ८
मया पार्श्वे सधनुषा तव गुप्तस्य राघव! ।
कस्समर्थोऽधिकं कर्तुं कृतान्तस्येव तिष्ठतः ॥ ९
निर्मनुष्या मिमां कृत्स्ना मयोध्यां मनुजर्षभ! ।
करिष्यामि शरै स्तीक्ष्णैर्यदि स्थास्यति विप्रिये ॥ १०
भरतस्याथ पक्ष्योवा यो वाऽस्य हित मिच्छति ।
सर्वानेतान्वधिष्यामि मृदुर्हि परिभूयते ॥ ११
प्रोत्साहितोऽयं कैकेय्या स दुष्टो यदि नःपिता ।
अमित्रभूतो निस्सङ्गं वध्यतां बध्यता मपि ॥ १२
गुरोरप्यवलिप्तस्य कार्याकार्यमजानतः ।
उत्पथं प्रतिपन्नस्य कार्यं भवति शासनम् ॥ १३
बल मेष कि माश्रित्य हेतुं वा पुरुषर्षभ! ।
दातु मिच्छति कैकेय्यै राज्यं स्थित मिदं तव ॥ १४
त्वया चैव मया चैव कृत्वा वैर मनुत्तमम् ।
काऽस्य शक्ति श्श्रियं दातुं भरतायारिशासन! ॥ १५

अनुरक्तोऽस्मि भावेन भ्रातरं देवि! तत्त्वतः ।
सत्येन धनुषा चैव दत्तेनेष्टेन ते शपे ॥ १६
दीप्तमग्निमरण्यं वा यदि रामः प्रवेक्ष्यति ।
प्रविष्टं तत्र मां देवि! त्वं पूर्वमवधारय ॥ १७
हरामि वीर्याद्दुखं ते तमस्सूर्य इवोदितः ।
देवीपश्यतु मे वीर्यं राघवश्चैव पश्यतु ॥" १८
[हनिष्ये पितरं वृद्धं कैकेय्या सक्तमानसम् ।
कृपणं चास्थिरं बालं वृद्धभावेन गर्वितम् ॥] १९
एततु वचनं श्रुत्वा लक्ष्मणस्य महात्मनः ।
उवाच रामं कौसल्या रुदन्ती शोकलालसा ॥ २०
"भ्रातुस्ते वदतः पुत्र! लक्ष्मणस्य श्रुतं त्वया ।
यदत्रानंतरं कार्यं कुरुष्व यदि रोचते ॥ २१
न चाधर्मं वच इश्रुत्वा सपत्न्या मम भाषितम् ।
विहाय शोकसंतप्तां गंतु मर्हसि मामितः ॥ २२
धर्मज्ञ! यदि धर्मिष्ठो धर्मं चरितु मिच्छसि ।
शुश्रूष मामिहस्थ स्त्वं चर धर्म मनुत्तमम् ॥ २३
शुश्रूषुर्जननीं पुत्र! स्वगृहे नियतो वसन् ।
परेण तपसा युक्तः काश्यपस्त्रिदिवं गतः ॥ २४
यथैव राजा पूज्यस्ते गौरवेण तथास्म्यहम् ।
त्वां नाह मनुजानामि नगन्तव्य मितो वनम् ॥ २५
त्वद्वियोगान्नमे कार्यं जीवितेन सुखेन वा ।
त्वया सह मम श्रेयस्तृणानामपि भक्षणम् ॥ २६

यदि त्वं यास्यसि वनं त्यक्त्वा मां शोकलालसाम् ।
अहं प्राय मिहासिष्ये न हि शक्ष्यामि जीवितुम् ॥ २७
तत स्त्वं प्राप्स्यसे पुत्र! निरयं लोकविश्रुतम् ।
ब्रह्महत्यामिवाधर्मात्समुद्र स्सरितां पतिः ॥" २८
विलपन्तीं तथा दीनां कौसल्यां जननीं ततः ।
उवाच रामो धर्मात्मा वचनं धर्मसंहितम् ॥ २९
"नास्तिशक्तिः पितुर्वाक्यं समतिक्रमितुं मम ।
प्रसादये त्वां शिरसा गंतुमिच्छाम्यहं वनम् ॥ ३०
ऋषिणा च पितुर्वाक्यं कुर्वता व्रतचारिणा ।
गौर्हता जानता धर्मं कण्डुनाऽपि विपश्चिता ॥ ३१
अस्माकं च कुले पूर्वं सगरस्याज्ञया पितुः ।
खनद्भि स्सागरैर्भूमि मवाप्त स्सुमहान्वधः ॥ ३२
जामदग्न्येन रामेण रेणुका जननी स्वयम् ।
कृत्तापरशुनाऽरण्ये पितुर्वचनकारिणा ॥ ३३
एतै रन्यै श्च बहुभिर्देवि! देवसमैः कृतम् ।
पितुर्वचन मक्लीबं करिष्यामि पितुर्हितम् ॥ ३४
नखल्वेतन्मयैकेन क्रियते पितृशासनम् ।
एतै रपिकृतं देवि! ये मया तवकीर्तिताः ॥ ३५
नाहं धर्म मपूर्वं ते प्रतिकूलं प्रवर्तये ।
पूर्वैरय मभिप्रेतो गतो मार्गोऽनुगम्यते ॥ ३६
तदेतत्तु मयाकार्यं क्रियते भुवि नान्यथा ।
पितुर्हि वचनं कुर्वन्न कश्चिन्ना महीयते ॥" ३७

तामेव मुक्त्वा जननीं लक्ष्मणं पुनरब्रवीत् ।
वाक्यं वाक्यविदां श्रेष्ठ श्श्रेष्ठस्सर्वधनुष्मताम् ॥ ३८
"तव लक्ष्मण! जानामि मयिस्नेहमनुत्तमम् ।
विक्रमं चैव सत्त्वंच तेजश्च सुदुरासदम् ॥ ३९
मम मातु र्महद्दुःख मतुलं शुभलक्षण! ।
अभिप्राय मविज्ञाय सत्यस्य च शमस्य च ॥ ४०
धर्मोहि परमो लोके धर्मे सत्यं प्रतिष्ठितम् ।
धर्मसंश्रित मेतच्च पितुर्वचन मुत्तमम् ॥ ४१
संश्रुत्य च पितुर्वाक्यं मातुर्वा ब्राह्मणस्यवा ।
नकर्तव्यं वृथा वीर! धर्ममाश्रित्य तिष्ठता ॥ ४२
सोऽहं न शक्ष्यामि पितुर्नियोग मतिवर्तितुम् ।
पितुर्हिवचनाद्वीर! कैकेय्याऽहं प्रचोदितः ॥ ४३
तदेतां विसृजानार्यां क्षत्रधर्माश्रितां मतिम् ।
धर्ममाश्रय मा तैक्ष्ण्यं मद्बुद्धि रनुगम्यताम् ॥" ४४
तमेव मुक्त्वा सौहार्दाद्भ्रातरं लक्ष्मणाग्रजः ।
उवाच भूयः कौसल्यां प्राञ्जलिश्शिरसा नतः ॥ ४५
"अनुमन्यस्व मां देवि! गमिष्यन्तमितो वनम् ।
शापिताऽसि मम प्राणैः कुरु स्वस्त्ययनानिमे ॥ ४६
तीर्णप्रतिज्ञश्च वनात्पुनरेष्याम्यहंपुरीम् ।
ययाति रिव राजर्षिः पुरा हित्वा पुनर्दिवम् ॥ ४७
शोक स्सन्धार्यतां मात! हृदये साधु माशुचः ।
वनवासादिहैष्यामि पुनः कृत्वा पितुर्वचः ॥ ४८

त्वया मया च वैदेह्या लक्ष्मणेन सुमित्रया ।
पितुर्नियोगे स्थातव्य मेष धर्मस्सनातनः ॥ ४९
अम्ब संहृत्य संभारान् दुःखं हृदि निगृह्य च ।
वनवासकृता बुद्धिर्मम धर्म्याऽनुवर्त्यताम् ॥" ५०
एतद्वचस्तस्य निशम्य माता सुधर्म्य मव्यग्र मविक्लबञ्च ।
मृतेव संज्ञां प्रतिलभ्य देवी समीक्ष्य रामं पुनरित्युवाच ॥ ५१
"यथैव ते पुत्र! पिता तथाऽहं गुरु स्स्वधर्मेण सुहृत्तया च ।
न त्वाऽनुजानामि न मां विहाय सुदुःखिता मर्हसि गन्तु मेवम् ॥
किं जीवितेनेह विना त्वया मे लोकेन वा किं स्वधयाऽमृतेन ।
श्रेयो मुहूर्तं तव सन्निधानं ममेह कृत्स्ना दपि जीवलोकात् ॥"
नरै रिवोल्काभि रपोह्यमानो महागजोऽध्वान मनुप्रविष्टः ।
भूयः प्रजज्वाल विलाप मेतं निशम्य रामः करुणं जनन्याः ॥ ५४
स मातरं चैव विसंज्ञकल्पा मार्तं च सौमित्रि मभिप्रतप्तम् ।
धर्मे स्थितो धर्म्यमुवाच वाक्यं यथा स एवार्हति तत्र वक्तुम् ॥ ५५
"अहं हि ते लक्ष्मण! नित्यमेव जानामि भक्तिच पराक्रमं च ।
मम त्वभिप्रायमसन्निरीक्ष्य मात्रा सहाभ्यर्दसि मां सुदुःखम् ॥
धर्मार्थकामाः खलु तात! लोके समीक्षिता धर्मफलोदयेषु ।
ते तत्र सर्वेस्यु रसंशयं मे भार्येववश्याऽभिमता सुपुत्रा ॥ ५७
यस्मिस्तु सर्वेस्यु रसन्निविष्टा धर्मो यतस्स्यात्तदुपक्रमेत ।
द्वेष्यो भवत्यर्थपरो हि लोके कामात्मता खल्वपि न प्रशस्ता ॥
गुरुश्च राजाच पिताच वृद्धः क्रोधात्प्रहर्षा यदि वाऽपि कामात् ।
यद्व्यादिशेत्कार्य मवेक्ष्य धर्मं कस्तन्नकुर्यादनृशंसवृत्तिः ॥ ५९

सर्वै न शक्नोमि पितुः प्रतिज्ञा मिमामकर्तुं सकलां यथावत् ।
स ह्यावयो स्तात! गुरुर्नियोगे देव्याश्च भर्ता स गति स्स धर्मः ॥
तस्मिन्पुनर्जीवति धर्मराजे विशेषत स्स्वे पथि वर्तमाने ।
देवी मया सार्धं मितोपगच्छे त्कथं स्विदन्या विधवेव नारी ॥"
"सामाऽनुमन्यस्ववनं व्रजंतं कुरुष्व नस्स्वस्त्ययनानि देवि ।
यथा समाप्ते पुनराव्रजेयं यथा हि सत्येन पुनर्ययातिः ॥ ६२
यशोह्यहं केवलराज्यकारणा न्न पृष्ठतः कर्तुमलं महोदयम् ।
अदीर्घकालेन तु देवि! जीविते वृणेऽवरा मद्यमही मधर्मतः ॥"
प्रसादयन्नरवृषभ स्समातरं पराक्रमा ज्जिगमिषुरेव दण्डकान् ।
अथानुजं भृशमनुशास्य दर्शनं चकार तां हृदिजननीं प्रदक्षिणम् ॥

इति श्रीमदयोध्याकाण्डे एकविंशस्सर्गः ॥

---

## ॥ द्वाविंशस्सर्गः ॥

अथ तं व्यथया दीनं सविशेष ममर्षितम् ।
श्वसन्त मिव नागेन्द्रं रोषविष्फारितेक्षणम् ॥ १
आसाद्य राम स्सौमित्रि सुहृदं भ्रातरं प्रियम् ।
उवाचेदं स धैर्येण धारयन्सत्व मात्मवान् ॥ २
" निगृह्य रोषं शोकं च धैर्यमाश्रित्य केवलम् ।
अवमानं निरस्येमं गृहीत्वा हर्ष मुत्तमम् ॥ ३
उपकॢप्तं हि यत्किञ्चिदभिषेकार्थमद्यमे ।
सर्वं विसर्जय क्षिप्रं कुरुकार्यं निरत्ययम् ॥ ४

सौमित्रे! योऽभिषेकार्थे मम संभारसम्भ्रमः ।
अभिषेकनिवृत्त्यर्थे सोऽस्तु संभारसम्भ्रमः ॥ ५
यस्या मदभिषेकार्थे मानसं परितप्यते ।
माता मे सा यथा नस्यात्सविशङ्का तथा कुरु ॥ ६
तस्याः शङ्कामयं दुःखं मुहूर्तमपि नोत्सहे ।
मनसि प्रतिसंजातं सौमित्रे! ऽहमुपेक्षितुम् ॥ ७
न बुद्धिपूर्वं नाबुद्धं स्मरामीह कदाचन ।
मातॄणां वा पितुर्वाऽहं कृतमल्पं च विप्रियम् ॥ ८
सत्यस्सत्याभिसन्धश्च नित्यं सत्यपराक्रमः ।
परलोकभयाद्भीतो निर्भयोऽस्तु पितामम ॥ ९
तस्याऽपि हि भवेदस्मिन्कर्मण्यप्रतिसंहृते ।
सत्यं नेति मनस्ताप स्तस्य ताप स्तपेच्चमाम् ॥ १०
अभिषेकविधानं तु तस्मात्संहृत्य लक्ष्मण! ।
अन्वगेवाह मिच्छामि वनं गन्तु मितः पुनः ॥ ११
मम प्रव्राजना दद्य कृतकृत्या नृपात्मजा ।
सुतं भरतमव्यग्र मभिषेचयिता ततः ॥ १२
मयि चीराजिनधरे जटामण्डलधारिणि ।
गतेऽरण्यं च कैकेय्या भविष्यति मनस्सुखम् ॥ १३
बुद्धिः प्रणीता येनेयं मनश्च सुसमाहितम् ।
तं तु नार्हामि संक्लेष्टुं प्रव्रजिष्यामि माचिरम् ॥ १४
कृतान्तस्त्वेव सौमित्रे! द्रष्टव्यो मत्प्रवासने ।
राज्यस्य च वितीर्णस्य पुनरेव निवर्तने ॥ १५

कैकेय्याः प्रतिपत्तिर्हि कथं स्या न्ममपीडने ।
यदि भावो न दैवोऽयं कृतान्तविहितो भवेत् ॥ १६

जानासि हि यथा सौम्य! न मातृषु ममान्तरम् ।
भूतपूर्वं विशेषो वा तस्या मयि सुतेऽपि वा ॥ १७

सोऽभिषेक निवृत्त्यर्थैः प्रवासार्थै श्च दुर्वचैः ।
उग्रैर्वाक्यै रहं तस्या नान्यद्दैवात्समर्थये ॥ १८

कथं प्रकृति सम्पन्ना राजपुत्री तथागुणा ।
ब्रूयात्सा प्राकृतेव स्त्री मत्पीडां भर्तृसन्निधौ ॥ १९

यदचिन्त्यं तु तद्दैवं भूतेष्वपि नहन्यते ।
व्यक्तं मयि च तस्यांच पतितो हि विपर्ययः ॥ २०

कश्चिद्दैवेन सौमित्रे! योद्धु मुत्सहते पुमान् ।
यस्य नग्रहणं किञ्चित्कर्मणोऽन्यत्र दृश्यते ॥ २१

सुखदुःखे भयक्रोधौ लाभालाभौ भवाभवौ ।
यच्चकिञ्चित्तथाभूतं ननुदैवस्य कर्मतत् ॥ २२

ऋषयोऽप्युग्रतपसो दैवेनाभिप्रपीडिताः ।
उत्सृज्य नियमां स्तीव्रान्भ्रश्यन्ते काममन्युभिः ॥ २३

असङ्कल्पित मेवेह यदकस्मात्प्रवर्तते ।
निवर्त्यारम्भमारब्धं ननुदैवस्य कर्मतत् ॥ २४

एतया तत्त्वया बुद्ध्या संस्तभ्यात्मान मात्मना ।
व्याहतेऽप्यभिषेके मे परितापो नविद्यते ॥ २५

तस्मादपरिताप स्संस्त्वमप्यनुविधाय माम् ।
प्रतिसंहारय क्षिप्र माभिषेचनिकीं क्रियाम् ॥ २६

एभिरेव घटैस्सर्वै रभिषेचन सम्भृतैः ।
मम लक्ष्मण! तापस्ये व्रतस्नानं भविष्यति ॥ २७
अथवा किं ममैतेन राजद्रव्यमयेन तु ।
उद्धृतं मे स्वयं तोयं व्रतादेशं करिष्यति ॥ २८
माच लक्ष्मण! सन्तापं कार्षीर्लक्ष्म्या विपर्यये ।
राज्यं वा वनवासो वा वनवासो महोदयः ॥ २९
न लक्ष्मणास्मिन्खलुकर्मविघ्ने माता यवीयस्यतिशङ्कनीया ।
दैवाभिपन्ना हि वदन्त्यनिष्टं जानासि दैवं च तथा प्रभावम् ॥"

॥ इति श्रीमदयोध्याकाण्डे द्वाविंशस्सर्गः ॥

## ॥ त्रयोविंशस्सर्गः ॥

इति ब्रुवति रामे तु लक्ष्मणोऽधश्शिरा मुहुः ।
श्रुत्वा मध्यं जगामेव मनसा दुःखहर्षयोः ॥ १
तदा तु बद्ध्वा भ्रुकुटीं भ्रुवो र्मध्ये नरर्षभः ।
निशश्वास महासर्पो बिलस्थ इव रोषितः ॥ २
तस्य दुष्प्रतिवीक्ष्यं तद्भ्रुकुटीसहितं तदा ।
बभौ क्रुद्धस्य सिंहस्य मुखस्य सदृशं मुखम् ॥ ३
अग्रहस्तं विधून्वं स्तु हस्ती हस्तमिवात्मनः ।
तिर्यगूर्ध्वं शरीरे च पातयित्वा शिरोधराम् ॥ ४
अग्राक्ष्णा वीक्षमाण स्तु तिर्यग्भ्रातरमब्रवीत् ।
"अस्थाने सम्भ्रमो यस्य जातो वै सुमहानयम् ॥ ५

धर्मदोषप्रसङ्गेन लोकस्यानतिशङ्कया ।
कथं ह्येतदसंभ्रान्त स्त्वद्विधो वक्तुमर्हति ॥ ६
यथा दैव मशौण्डीरं शौण्डीर! क्षत्रियर्षभ! ।
किं नाम कृपणं दैव मशक्त मभिशंससि ॥ ७
पापयो स्ते कथं नाम तयोश्शङ्का नविद्यते ।
सन्ति धर्मोपधाश्श्लक्ष्णाः धर्मात्म! न्किं न बुध्यसे ॥ ८
तयो स्सुचरितं स्वार्थं शाठ्यात्परिजिहीर्षतोः ।
यदि नैवं व्यवसितं स्याद्धिप्रागेव राघव! ॥ ९
तयोः प्रागेव दत्त श्च स्याद्वरः प्रकृत श्च सः ।
लोकविद्विष्ट मारब्धं त्वदन्यस्याभिषेचनम् ॥ १०
नोत्सहे सहितुं वीर! तत्र मे क्षन्तु मर्हसि ।
येनेय मागता द्वैधं तव बुद्धि र्महामते! ॥ ११
सहि धर्मो मम द्वेष्यः प्रसङ्गाद्यस्य मुह्यसि ।
कथं त्वं कर्मणा शक्तः कैकेयीवशवर्तिनः ॥ १२
करिष्यसि पितुर्वाक्य मधर्मिष्ठं विगर्हितम् ।
यद्ययं किल्बिषा द्भेदः कृतोऽप्येवं न गृह्यते ॥ १३
जायते तत्र मे दुःखं धर्मसङ्गश्च गर्हितः ।
मनसाऽपि कथं कामं कुर्यास्त्वं कामवृत्तयोः ॥ १४
तयोस्त्वहितयोर्नित्यं शत्र्वोः पित्रभिधानयोः ।
यद्यपि प्रतिपत्तिस्ते दैवी चापि तयोर्मतम् ॥ १५
तथाप्युपेक्षणीयं ते न मे तदपि रोचते ।
विक्लबो वीर्यहीनो य स्सदैव मनुवर्तते ॥ १६

वीरास्संभावितात्मानो न दैवं पर्युपासते ।
दैवं पुरुषकारेण य स्समर्थः प्रबाधितुम् ॥ १७
नदैवेन विपन्नार्थः पुरुषस्सोऽवसीदति ।
द्रक्ष्यन्ति त्वद्य दैवस्य पौरुषं पुरुषस्य च ॥ १८
दैवमानुषयो रद्य व्यक्ताव्यक्ति र्भविष्यति ।
अद्य मत्पौरुषहतं दैवं द्रक्ष्यन्ति वै जनाः ॥ १९
यद्दैवादाहतं तेऽद्य दृष्टं राज्याभिषेचनम् ।
अत्यङ्कुशमिवोद्दामं गज मदबलोद्धतम् ॥ २०
प्रधावित महं दैवं पौरुषेण निवर्तये ।
लोकपाला स्समस्तास्ते नाद्य रामाभिषेचनम् ॥ २१
नचकृत्स्ना स्त्रयो लोकाविहन्युः किंपुनः पिता ।
यैर्विवासस्तवारण्ये मिथो राज ! न्समर्थितः ॥ २२
अरण्ये ते विवत्स्यन्ति चतुर्दश समास्तथा ।
अहं तदाशां छेत्स्यामि पितुस्तस्याश्च या तव ॥ २३
अभिषेकविघातेन पुत्रराज्याय वर्तते ।
मद्बलेन विरुद्धाय न स्याद्दैवबलं तथा ॥ २४
प्रभविष्यति दुःखाय यथोग्रं पौरुषं मम ।
ऊर्ध्वं वर्षसहस्रान्ते प्रजापाल्य मनन्तरम् ॥ २५
आर्यपुत्राः करिष्यन्ति वनवासं गते त्वयि ।
पूर्वराजर्षिवृत्त्या हि वनवासो विधीयते ॥ २६
प्रजा निक्षिप्य पुत्रेषु पुत्रवत्परिपालने ।
स चे द्राजन्यनेकाग्रे राज्यविभ्रमशङ्कया ॥ २७

नैवमिच्छसि धर्मात्म! त्राज्यं राम! त्वमात्मनि ।
प्रतिजाने च ते वीर! माभूवं वीरलोकभाक् ॥ २८
राज्यं च तव रक्षेय महं वेलेव सागरम् ।
मङ्गळै रभिषिञ्चस्व तत्र त्वं व्यापृतो भव ॥ २९
अहमेको महीपालानलं वारयतुं बलात् ।
न शोभार्थाविमौ बाहू न धनु र्भूषणायमे ॥ ३०
नासि राबन्धनार्थाय न शरास्तम्भहेतवः ।
अमित्रदमनार्थं मे सर्वमेत च्चतुष्टयम् ॥ ३१
स चाहं कामयेऽत्यर्थं यस्याच्छत्रुर्मतो मम ।
असिना तीक्ष्णधारेण विद्युच्चलितवर्चसा ॥ ३२
प्रगृहीतेन वै शत्रुं वज्रिणं वा न कल्पये ।
खड्गनिष्पेषनिष्पिष्टै र्गहनादुश्चरा च मे ॥ ३३
हस्त्यश्वनरहस्तोरुशिरोभिर्भविता मही ।
खड्गधाराहता मेऽद्य दीप्यमाना इवाद्रयः ॥ ३४
पतिष्यन्ति द्विपा भूमौ मेघा इव सविद्युतः ।
बद्धगोधाङ्गुळित्राणे प्रगृहीतशरासने ॥ ३५
कथं पुरुषमानी स्यात्पुरुषाणां मयि स्थिते ।
बहुभिश्चैकमत्यस्य न्नेकेनच बहूञ्जनान् ॥ ३६
विनियोक्ष्याम्यहं बाणान्नृवाजिगजमर्मसु ।
अद्य मेऽस्त्रप्रभावस्य प्रभावः प्रभविष्यति ॥ ३७
राज्ञश्चाप्रभुतां कर्तुं प्रभुत्वं तव च प्रभो! ।
अद्य चन्दनसारस्य केयूरा मोक्षणस्य च ॥ ३८

वसूनां च विमोक्षस्य सुहृदां पालनस्य च ।
अनुरूपा विमौ बाहू राम! कर्मकरिष्यतः ॥ ३९
अभिषेचनविघ्नस्य कर्तॄणां ते निवारणे ।
ब्रवीहि कोऽद्यैव मया वियुज्यतां तवासुहृत्प्राणयशस्सुहृज्जनैः ।
यथा तवेयं वसुधा वशे भवेत्तथैव मां शाधि तवास्मि किङ्करः ॥"
विमृज्य बाष्पं परिसान्त्व्यचासकृत्सलक्ष्मणं राघववंशवर्धनः ।
उवाच "पित्र्ये वचने व्यवस्थितं निबोध मा मेष हि सौम्य! सत्पथः॥"

इति श्रीमदयोध्याकाण्डे त्रयोविंशस्सर्गः ॥

---

## ॥ चतुर्विंशस्सर्गः ॥

तं समीक्ष्य त्ववहितं पितुर्निर्देशपालने ।
कौसल्या बाष्पसंरुद्धा वचो धर्मिष्ठ मब्रवीत् ॥ १
"अदृष्ट दुःखो धर्मात्मा सर्वभूतप्रियंवदः ।
मयि जातो दशरथात्कथमुञ्छेन वर्तयेत् ॥ २
यस्य भृत्याश्च दासाश्च मृष्टान्यन्नानि भुञ्जते ।
कथं स भोक्ष्यतेऽनाथो वने मूलफलान्ययम् ॥ ३
क एतच्छ्रद्दधेच्छ्रुत्वा कस्यवान भवेद्भयम् ।
गुणवान्दयितो राज्ञा राघवो यद्विवास्यते ॥ ४
नूनं तु बलवान् लोके कृतान्त स्सर्व मादिशन् ।
लोके रामाभिरामस्त्वं वनं यत्र गमिष्यसि ॥ ५
अयन्तु मामात्मभवस्तवादर्शनमारुतः ।
विलापदुःख सामिधो रुदिताश्रुहुताहुतिः ॥ ६

चिन्ताबाष्पमहाधूम स्त्वादर्शन चित्तजः ।
कर्शयित्वा भृशं पुत्र! निश्श्वासायाससम्भवः ॥ ७
त्वया विहीना मिह मां शोकाग्नि रतुलो महान् ।
प्रधक्ष्यति यथा कक्षं चित्रभानुर्हिमात्यये ॥ ८
कथं हि धेनु स्स्वं वत्सं गच्छन्तं नानुगच्छति ।
अहं त्वाऽनुगमिष्यामि यत्र पुत्र! गमिष्यसि ॥" ९
तथा निगदितं मात्रा तद्वाक्यं पुरुषर्षभः ।
श्रुत्वा रामोऽब्रवी द्वाक्यं मातरं भृशदुःखिताम् ॥ १०
"कैकेय्या वंचितो राजा मयि चारण्य माश्रिते ।
भवत्याच परित्यक्तो न नूनं वर्तयिष्यति ॥ ११
भर्तुः किल परित्यागो नृशंसः केवलं स्त्रियाः ।
स भवत्या न कर्तव्यो मनसाऽपि विगर्हितः ॥ १२
यावज्जीवति काकुत्स्थः पिता मे जगतीपतिः ।
शुश्रूषा क्रियतां ताव त्सहि धर्म स्सनातनः ॥" १३
एवमुक्तातु रामेण कौसल्या शुभदर्शना ।
'तथे' त्युवाच सुप्रीता राम मक्लिष्टकारिणम् ॥ १४
एव मुक्तस्तु वचनं रामो धर्मभृतां वरः ।
भूयस्तामब्रवी द्वाक्यं मातरं भृशदुःखिताम् ॥ १५
"मया चैव भवत्या च कर्तव्यं वचनं पितुः ।
राजा भर्ता गुरुश्श्रेष्ठ स्सर्वेषा मीश्वरः प्रभुः ॥ १६
इमानि तु महारण्ये विहृत्य नवपञ्च च ।
वर्षाणि परमप्रीतः स्थास्यामि वचने तव ॥" १७

एव मुक्त्वा प्रियं पुत्रं बाष्पपूर्णानना तदा ।
उवाच परमार्ता तु कौसल्या पुत्रवत्सला ॥ १८
[विषादनक्राध्युषिते परित्रासोर्मिमालिनि ।
किं मां नत्रायसे मग्नां विपुले शोकसागरे ॥ १९
"आसां राम! सपत्नीनां वस्तुं मध्ये न मे क्षमम् ।
नय मामपि काकुत्स्थ! वनं वन्यां मृगीं यथा ॥ २०
यदि ते गमने बुद्धिः कृता पितुरपेक्षया ।"
तां तथा रुदतीं रामो रुदन्वचन मब्रवीत् ॥ २१
"जीवन्त्या हि स्त्रिया भर्ता दैवतं प्रभुरेव च ।
भवत्या मम चैवाद्य राजा प्रभवति प्रभुः ॥ २२
नह्यनाथा वयं राज्ञा लोकनाथेन धीमता ।
भरतश्चापि धर्मात्मा सर्वभूतप्रियंवदः ॥ २३
भवती मनुवर्तेत सहि धर्मरत स्सदा ।
यथा मयि तु निष्क्रान्ते पुत्रशोकेन पार्थिवः ॥ २४
श्रमं नावाप्नुयात्किंचिदप्रमत्ता तथा कुरु ।
दारुणश्चाप्ययं शोको यथैनं न विनाशयेत् ॥ २५
राज्ञो वृद्धस्य सततं हितं चर समाहिता ।
व्रतोपवासनिरता या नारी परमोत्तमा ॥ २६
भर्तारं नानुवर्तेत सा तु पापगति र्भवेत् ।
भर्तुश्शुश्रूषया नारी लभते स्वर्गमुत्तमम् ॥ २७
अपि यानिर्नमस्कारा निवृत्ता देवपूजनात् ।
शुश्रूषामेव कुर्वीत भर्तुः प्रियहिते रता ॥ २८

एष धर्मः पुरादृष्टो लोके वेदे श्रुतः स्मृतः ।
अग्निकार्येषु च सदा सुमनोभि श्च देवताः ॥ २९
पूज्यास्ते मत्कृते देवि! ब्राह्मणा श्चैव सुव्रताः ।
एवं कालं प्रतीक्षस्व ममागमनकांक्षिणी ॥ ३०
नियता नियताहारा भर्तृशिश्रूषणे रता ।
प्राप्स्यसे परमं कामं मयि प्रत्यागते सति ॥ ३१
यदि धर्मभृतां श्रेष्ठो धारयिष्यति जीवितम ।"
एव मुक्ता तु रामेण बाष्पपर्याकुलेक्षणा ॥ ३२
कौसल्या पुत्रशोकार्ता रामं वचनमब्रवीत् ।
"गमने सुकृतां बुद्धि न ते शक्नोमि पुत्रक! ॥ ३३
विनिवर्तयितुं वीर नूनं कालो दुरत्ययः ।
गच्छ पुत्र! त्व मेकाग्रो भद्रं तेऽस्तु सदा विभो! ॥ ३४
पुनस्त्वयि निवृत्ते तु भविष्यामि गतव्यथा ।
प्रत्यागते महाभागे कृतार्थे चरितव्रते ॥ ३५
पितुरानृण्यतां प्राप्ते त्वयि लप्स्ये परं सुखम् ।
कृतान्तस्य गतिः पुत्र! दुर्विभाव्या सदा भुवि ॥ ३६
यस्त्वां संचोदयति मे वच आच्छिद्य राघव! ।
गच्छेदानीं महाबाहो! क्षेमेण पुनरागतः ॥ ३७
नन्दयिष्यासि मां पुत्र! साम्ना वाक्येन चारुणा ।
अपीदानीं सकालस्स्या द्वनात्प्रत्यागतं पुनः ॥ ३८
यत्वां पुत्रक! पश्येयं जटावल्कलधारिणम् ।"

तदा हि रामं वनवासनिश्चितं समीक्ष्य देवी परमेण चेतसा ।
उवाच रामं शुभलक्षणं वचो बभूव च स्वस्त्ययनाभिकांक्षिणी ॥ ३९

इति श्रीमदयोध्याकाण्डे चतुर्विंशस्सर्गः ॥

---

## ॥ पञ्चविंशस्सर्गः ॥

साऽपनीय तमायास मुपस्पृश्य जलं शुचि ।
चकार माता रामस्य मङ्गळानि मनस्विनी ॥ १
"नशक्यसे वारयितुं गच्छेदानीं रघूत्तम ! ।
शीघ्रं च विनिवर्तस्व वर्तस्व च सतांक्रमे ॥ २
यं पालयसि धर्मं त्वं धृत्या च नियमेन च ।
सवै राघवशार्दूल ! धर्मस्त्वामभिरक्षतु ॥ ३
येभ्यः प्रणमसे पुत्र ! चैत्येष्वायतनेषु च ।
ते चत्वा मभिरक्षन्तु वने सह महर्षिभिः ॥ ४
यानि दत्तानि तेऽस्त्राणि विश्वामित्रेण धीमता ।
तानि त्वा मभिरक्षन्तु गुणै स्समुदितं सदा ॥ ५
पितृशिश्रूषया पुत्र मातृशिश्रूषया तथा ।
सत्येन च महाबाहो ! चिरंजीवाभिरक्षितः ॥ ६
समित्कुशपवित्राणि वेद्य श्चायतनानि च ।
स्थंडिलानि च चित्राणि शैलावृक्षाः क्षुपाह्रदाः ॥ ७
पतङ्गाः पन्नगा स्सिंहा स्त्वां रक्षन्तु नरोत्तम ! ।
स्वस्तिसाध्या श्च विश्वे च मरुतश्च महर्षयः ॥ ८

स्वस्ति धाता विधाता च स्वस्तिपूषा भगोऽर्यमा ।
लोकपाला श्च ते सर्वे वासवप्रमुखा स्तथा ॥ ९
ऋतव श्चैव पक्षा श्च मासा स्संवत्सराः क्षपाः ।
दिनानि च मुहूर्ता श्च स्वस्ति कुर्वन्तु ते सदा ॥ १०
स्मृतिर्धृति श्च धर्मश्च पान्तु त्वां पुत्र! सर्वतः ।
स्कन्दश्च भगवान्देव स्सोमश्च स बृहस्पतिः ॥ ११
सप्तर्षयो नारदश्च ते त्वां रक्षन्तु सर्वतः ।
याश्चापि सर्वत स्सिद्धा दिशश्च सदिगीश्वराः ॥ १२
स्तुता मया वने तस्मिन्पान्तु त्वां पुत्र! नित्यशः ।
शैलास्सर्वे समुद्राश्च राजा वरुण एव च ॥ १३
द्यौ रन्तरिक्षं पृथिवी नद्यस्सर्वा स्तथैव च ।
नक्षत्राणि च सर्वाणि गृहाश्च सहदेवताः ॥ १४
अहोरात्रे तथा सन्ध्ये पान्तु त्वां वनमाश्रितम् ।
ऋतव श्चैव षट्पुण्य मासा स्संवत्सरा स्तथा ॥ १५
कलाश्च काष्ठाश्च तथा तव शर्मदिशन्तु ते ।
महावने विचरतो मुनिवेषस्य धीमतः ॥ १६
तवादित्याश्च दैत्याश्च भवन्तु सुखदा स्सदा ।
राक्षसानां पिशाचानां रौद्राणां क्रूरकर्मणाम् ॥ १७
क्रव्यादानां च सर्वेषां माभूत्पुत्रक! ते भयम् ।
प्लवगा वृश्चिका दंशामशका श्चैव कानने ॥ १८
सरीसृपाश्च कीटाश्च माभूवन्गहने तव ।
महाद्विपाश्च सिंहाश्च व्याघ्रा ऋक्षाश्च दंष्ट्रिनः ॥ १९

महिषा श्शृङ्गिणो रौद्रा नते द्रुह्यन्तु पुत्रक! ।
नृमांसभोजना रौद्रा ये चान्ये सत्त्वजातयः ॥ २०
मा च त्वां हिंसिषुः पुत्र! मया सम्पूजिता स्त्विह ।
आगमास्ते शिवास्सन्तु सिध्यन्तु च पराक्रमाः ॥ २१
सर्वसम्पत्तये राम! स्वस्तिमान्गच्छ पुत्रक! ।
स्वस्ति तेऽस्त्वान्तरिक्षेभ्यः पार्थिवेभ्यः पुनःपुनः ॥ २२
सर्वेभ्य श्चैव देवेभ्यो ये च वै परिपन्थिनः ।
गुरुस्सोमश्च सूर्यश्च धनदोऽथ यमस्तथा ॥ २३
पान्तु त्वा मर्चिता राम! दण्डकारण्यमाश्रितम् ।
अग्निर्वायु स्तथा धूमो मन्त्राश्चर्षिमुखाच्च्युताः ॥ २४
उपस्पर्शनकाले तु पान्तु त्वां रघुनन्दन! ।
सर्वलोकप्रभुर्ब्रह्मा भूतभर्ता तथर्षयः ॥ २५
ये च शेषास्सुरास्ते त्वां रक्षन्तु वनवासिनम् ।"
इति माल्यै स्सुरगणा न्गन्धैश्चापि यशस्विनी ॥ २६
स्तुतिभिश्चानुरूपाभि रानर्चाऽयतलोचना ।
ज्वलनं स मुपादाय ब्राह्मणेन महात्मना ॥ २७
हावयामास विधिना राममङ्गलकारणात् ।
घृतं श्वेतानि माल्यानि समिधश्श्वेतसर्षपान् ॥ २८
उपसम्पादयामास कौसल्या परमाङ्गना ।
उपाध्याय स्स विधिना हुत्वा शान्ति मनामयम् ॥ २९
हुतहव्यावशेषेण बाह्यं बलिमकल्पयत् ।
मधुदध्यक्षतघृतैः स्वस्ति वाच्य द्विजां स्ततः ॥ ३०

वाचयामास रामस्य वने स्वस्त्ययनक्रियाः ।
तत स्तस्मै द्विजेन्द्राय राममाता यशस्विनी ॥ ३१
दक्षिणां प्रददौ काम्यां राघवं चेद मब्रवीत् ।
"यन्मङ्गळं सहस्राक्षे सर्वदेवनमस्कृते ॥ ३२
वृत्रनाशे समभवत्तत्ते भवतु मङ्गळम् ।
यन्मङ्गळं सुपर्णस्य विनताऽकल्पयत्पुरा ॥ ३३
अमृतं प्रार्थयानस्य तत्ते भवतु मङ्गळम् ।
अमृतोत्पादने दैत्यान् घ्नतो वज्रधरस्य यत् ॥ ३४
अदिति र्मङ्गळं प्रादात्तत्ते भवतु मङ्गळम् ।
त्रीन्विक्रमान्प्रक्रमतो विष्णो रमिततेजसः ॥ ३५
यदासीन्मङ्गळं राम! तत्ते भवतु मङ्गळम् ।
ऋतवस्सागरा द्वीपा वेदा लोका दिशश्च ते ॥ ३६
मङ्गळानि महाबाहो! दिशन्तु शुभमङ्गळाः ।"
इति पुत्रस्य शेषांश्च कृत्वा शिरसि भामिनी ॥ ३७
गन्धैश्चापि समालभ्य राममायतलोचना ।
ओषधिं चापि सिद्धार्थां विशल्यंकरणीं शुभाम् ॥ ३८
चकार रक्षां कौसल्या मन्त्रै रभिजजाप च ।
उवाचातिप्रहृष्टेव सा दुःखवशवर्तिनी ॥ ३९
वाङ्मात्रेण न भावेन वाचा संसज्जमानया ।
आनम्य मूर्ध्नि चाघ्राय परिष्वज्य यशस्विनी ॥ ४०
अवद "त्पुत्र! सिद्धार्थो गच्छ राम! यथासुखम् ।
अरोगं सर्वसिद्धार्थ मयोध्यां पुन रागतम् ॥ ४१

पश्यामि त्वां सुखं वत्स! सुस्थितं राजवर्त्मनि ।
प्रणष्टदुःखसङ्कल्पा हर्षविद्योतितानना ॥ ४२
द्रक्ष्यामि त्वां वनात्प्राप्तं पूर्णचन्द्रमिवोदितम् ।
भद्रासनगतं राम! वनवासा दिहागतम् ॥ ४३
द्रक्ष्यामि च पुन स्त्वां तु तीर्णवन्तं पितु र्वचः ।
मङ्गलै रुपसंपन्नो वनवासादिहागतः ॥ ४४
वध्वा मम च नित्यं त्वं कामान्संवर्ध याहि भो! ।
मयाऽर्चिता देवगणा श्शिवादयो महर्षयो भूतमहासुरोरगाः ।
अभिप्रयातस्य वनं चिराय ते हितानि कांक्षन्तु दिशश्च राघव! ॥"
इतीव साऽश्रुप्रातिपूर्णलोचना समाप्यच स्वस्त्ययन यथाविधि ।
प्रदक्षिणं चैव चकार राघवं पुनःपुनश्चापि निपीड्य सस्वजे ॥ ४६
तथा तु देव्याच कृतप्रदक्षिणो निपीड्य मातुश्चरणौ पुनःपुनः ।
जगाम सीतानिलयं महायशास्स राघवः प्रज्वलित स्स्वया श्रिया ॥

इति श्रीमदयोध्याकाण्डे पञ्चविंशस्सर्गः ॥

## ॥ षड्विंशस्सर्गः ॥

अभिवाद्य तु कौसल्यां रामस्सम्प्रस्थितो वनम् ।
कृतस्वस्त्ययनो मात्रा धर्मिष्ठे वर्त्मनि स्थितः ॥ १
विराजयन्राजसुतो राजमार्गं नरै र्वृतम् ।
हृदयान्याममन्थेव जनस्य गुणवत्तया ॥ २
वैदेही चापि तत्सर्वं न शुश्राव तपस्विनी ।
तदेव हृदि तस्याश्च यौवराज्याभिषेचनम् ॥ ३

देवकार्यं स्वयं कृत्वा कृतज्ञा हृष्टचेतना ।
अभिज्ञा राजधर्माणां राजपुत्रं प्रतीक्षते ॥ ४
प्रविवेशाथ रामस्तु स्वं वेश्म सुविभूषितम् ।
प्रहृष्टजनसम्पूर्णं ह्रिया किञ्चिदवाङ्मुखः ॥ ५
अथ सीता समुत्पत्य वेपमाना च तंपतिम् ।
अपश्यच्छोकसंतप्तं चिन्ताव्याकुलितेन्द्रियम् ॥ ६
तां दृष्ट्वा स हि धर्मात्मा न शशाक मनोगतम् ।
तं शोकं राघवस्सोढुं ततो विवृततां गतः ॥ ७
विवर्णवदनं दृष्ट्वा तं प्रस्विन्नममर्षिणम् ।
आह दुःखाभिसन्तप्ता "किमिदानीमिदं प्रभो! ॥ ८
अद्य बार्हस्पत श्श्रीमा नुक्तः पुष्योऽनु राघव! ।
प्रोच्यते ब्राह्मणैः प्राज्ञैः केन त्वमसि दुर्मनाः ॥ ९
न ते शतशलाकेन जलफेननिभेन च ।
आवृतं वदनं वल्गु छत्रेणापि विराजते ॥ १०
व्यजनाभ्यां च मुख्याभ्यां शतपत्रनिभेक्षणम् ।
चन्द्रहंसप्रकाशाभ्यां वीज्यते न तवाननम् ॥ ११
वाग्मिनो वन्दिनश्चापि प्रहृष्टास्त्वां नरर्षभ! ।
स्तुवन्तो नात्र दृश्यन्ते मङ्गळै स्सूतमागधाः ॥ १२
न ते क्षौद्रं च दधि च ब्राह्मणा वेदपारगाः ।
मूर्ध्नि मूर्धावसिक्तस्य ददति स्म विधानतः ॥ १३
न त्वां प्रकृतय स्सर्वा श्श्रेणीमुख्याश्च भूषिताः ।
अनुव्रजितु मिच्छन्ति पौरजानपदास्तथा ॥ १४

चतुर्भि र्वेगसम्पन्नै र्हयैः काञ्चनभूषितैः ।
मुख्यः पुष्यरथो युक्तः किं न गच्छति तेऽग्रतः ॥ १५
न हस्ती चाग्रतश्श्रीमां स्तवलक्षणपूजितः ।
प्रयाणे लक्ष्यते वीर! कृष्णमेघगिरिप्रभः ॥ १६
न च काञ्चनचित्रं ते पश्यामि प्रियदर्शन! ।
भद्रासनं पुरस्कृत्य यान्तं वीरपुरस्कृतम् ॥ १७
अभिषेको यथा सज्जः किमिदानी मिदं तव ।
अपूर्वो मुखवर्णश्च न प्रहर्षश्च लक्ष्यते ॥" १८
इतीव विलपन्तीं तां प्रोवाच रघुनन्दनः ।
"सीते! तत्रभवांस्तातः प्रव्राजयति मां वनम् ॥ १९
कुले महति सम्भूते! धर्मज्ञे! धर्मचारिणि! ।
शृणु जानकि! येनेदं क्रमेणाभ्यागतं मम ॥ २०
राज्ञा सत्यप्रतिज्ञेन पित्रा दशरथेन च ।
कैकेय्यै मम मात्रेतु पुरा दत्तौ महावरौ ॥ २१
तयाऽद्य मम सज्जेऽस्मि न्नभिषेके नृपोद्यते ।
प्रचोदितस्स समयो धर्मेण प्रतिनिर्जितः ॥ २२
चतुर्दश हि वर्षाणि वस्तव्यं दण्डके मया ।
पित्रा मे भरतश्चापि यौवराज्ये नियोजितः ॥ २३
सोऽहं त्वामागतो द्रष्टुं प्रस्थितो विजनं वनम् ।
भरतस्य समीपेतु नाहं कथ्यः कदाचन ॥ २४
ऋद्धियुक्ता हि पुरुषा न सहन्ते परस्तवम् ।
तस्मा न्न ते गुणाः कथ्या भरतस्याग्रतो मम ॥ २५

नापि त्वं तेन भर्तव्या विशेषेण कदाचन ।
अनुकूलतया शक्यं समीपे ह्यस्य वर्तितुम् ॥ २६
तस्मै दत्तं नृपतिना यौवराज्यं सनातनम् ।
स प्रसाद्य स्त्वया सीते! नृपति श्च विशेषतः ॥ २७
अहं चापि प्रतिज्ञां तां गुरो स्समनुपालयन् ।
वनमद्यैव यास्यामि स्थिरा भव मनस्विनि! ॥ २८
याते च मयि कल्याणि! वनं मुनिनिषेवितम् ।
व्रतोपवासरतया भवितव्यं त्वयाऽनघे! ॥ २९
काल्यमुत्थाय देवानां कृत्वा पूजां यथाविधि ।
वन्दितव्यो दशरथः पिता मम नरेश्वरः ॥ ३०
माता च मम कौसल्या वृद्धा सन्तापकर्शिता ।
धर्ममेवाग्रतः कृत्वा त्वत्तस्सम्मान मर्हति ॥ ३१
वन्दितव्या श्च ते नित्यं याश्शेषा मम मातरः ।
स्नेहप्रणयसम्भोगै स्समा हि मम मातरः ॥ ३२
भ्रातृपुत्रसमौ चापि द्रष्टव्यौ च विशेषतः ।
त्वया भरतशत्रुघ्नौ प्राणैः प्रियतरौ मम ॥ ३३
विप्रियं न च कर्तव्यं भरतस्य कदाचन ।
सहि राजा प्रभुश्चैव देशस्य च कुलस्य च ॥ ३४
आराधिता हि शीलेन प्रयत्नैश्चोपसेविताः ।
राजान स्सम्प्रसीदन्ति कुप्यन्ति च विपर्यये ॥ ३५
[स्पृशन्निव गजोहन्ति जिघ्रन्निव भुजङ्गमः ।
स्मयन्निव नृपोहन्ति मानयन्निव दुर्जनः ॥] ३६

औरसानपि पुत्रान्हि त्यजन्त्यहितकारिणः ।
समर्थान्संप्रगृह्णन्ति जनानपि जनाधिपाः ॥ ३७
सा त्वं वसेह कल्याणि! राज्ञ स्समनुवर्तिनी ।
भरतस्य रता धर्मे सत्यव्रतपरायणा ॥ ३८
अहं गमिष्यामि महावनं प्रिये! त्वया हि वस्तव्य मिहैव भामिनि! ।
यथा व्यळीकं कुरुषे न कस्यचित्तथा त्वयाकार्य मिदं वचो मम ॥"

इति श्रीमदयोध्याकाण्डे षड्विंशस्सर्ग. ॥

---

## ॥ सप्तविंशस्सर्गः ॥

एव मुक्ता तु वैदेही प्रियार्हा प्रियवादिनी ।
प्रणयादेव संक्रुद्धा भर्तार मिदमब्रवीत् ॥ १
"किमिदं भाषसे राम! वाक्यं लघुतया ध्रुवम् ।
त्वया यदपहास्यं मे श्रुत्वा नरवरात्मज! ॥ २
[वीराणां राजपुत्राणां शस्त्रास्त्रविदुषां नृप! ।
अनर्ह मयशस्यं च नश्रोतव्यं त्वयेरितम् ॥] ३
आर्यपुत्र! पिता माता भ्रातापुत्र स्तथास्नुषा ।
स्वानि पुण्यानि भुञ्जानाः स्वं स्वं भाग्यमुपासते ॥ ४
भर्तु र्भाग्यं हि भार्यैका प्राप्नोति पुरुषर्षभ! ।
अतश्चैवाह मादिष्टा वने वस्तव्यमित्यपि ॥ ५
न पिता नात्मजो नात्मा न माता न सखीजनः ।
इह प्रेत्य च नारीणां पति रेको गतिस्सदा ॥ ६

यदि त्वं प्रस्थितो दुर्गं वनमद्यैव राघव! ।
अग्रतस्ते गमिष्यामि मृद्नन्ती कुशकंटकान् ॥ ७
ईर्ष्यारोषौ बहिष्कृत्य भुक्तशेष मिवोदकम् ।
नय मां वीर! विस्रब्धः पापं मयि न विद्यते ॥ ८
प्रासादाग्रै र्विमानैर्वा वैहायसगतेन वा ।
सर्वावस्थागताभर्तुः पादच्छाया विशिष्यते ॥ ९
अनुशिष्टाऽस्मि मात्रा च पित्रा च विविधाश्रयम् ।
नाऽस्मि सम्प्रतिवक्तव्या वर्तितव्यं यथा मया ॥ १०
अहं दुर्गं गमिष्यामि वनं पुरुषवर्जितम् ।
नानामृगगणाकीर्णं शार्दूलवृकसेवितम् ॥ ११
सुखं वने निवत्स्यामि यथैव भवने पितुः ।
अचिन्तयन्ती त्रीन्लोकां श्चिन्तयन्ती पतिव्रतम् ॥ १२
शिश्रूषमाणा ते नित्यं नियता ब्रह्मचारिणी ।
सह रंस्ये त्वया वीर! वनेषु मधुगंधिषु ॥ १३
त्वं हि शक्तो वने कर्तु राम! संपरिपालनम् ।
अन्यस्यापि जनस्येह किं पुनर्मम मानद! ॥ १४
सह त्वया गमिष्यामि वनमद्य न संशयः ।
नाहं शक्या महाभाग! निवर्तयितु मुद्यता ॥ १५
फलमूलाशना नित्यं भविष्यामि न संशयः ।
न ते दुःखं करिष्यामि निवसन्ती सहत्वया ॥ १६
इच्छामि सरितश्शैलान्पल्वलानि वनानि च ।
द्रष्टुं सर्वत्र निर्भीका त्वया नाथेन धीमता ॥ १७

हंसकारंडवाकीर्णाः पद्मिनी स्साधुपुष्पिताः ।
इच्छेयं सुखिनी द्रष्टुं त्वया वीरेण सङ्गता ॥ १८
अभिषेकं करिष्यामि तासु नित्यं यतव्रता ।
सहत्वया विशालाक्ष! रंस्ये परमनन्दिनी ॥ १९
एवं वर्षसहस्राणां शतं वाऽहं त्वया सह ।
व्यतिक्रमं न वेत्स्यामि स्वर्गोऽपि न हि मे मतः ॥ २०
स्वर्गेऽपि च विना वासो भविता यदि राघव! ।
त्वया मम नरव्याघ्र! नाहं तमपि रोचये ॥ २१
अहं गमिष्यामि वनं सुदुर्गमं मृगायुतं वानरवारणै र्युतम् ।
वने निवत्स्यामि यथा पितुर्गृहे तवैवपादावुपगृह्य संयता ॥ २२
अनन्यभावा मनुरक्तचेतसं त्वया वियुक्तां मरणाय निश्चिताम् ।
नयस्व मां साधु कुरुष्व याचनां न ते मयाऽतो गुरुता भविष्यति ॥"
तथा ब्रुवाणामपि धर्मवत्सलो नचस्म सीतां नृवरो निनीषति ।
उवाच चैनां बहुसन्निवर्तने वने निवासस्य च दुःखितांप्रति ॥ २४

इति श्रीमदयोध्याकाण्डे सप्तविंशस्सर्गः ॥

---

## ॥ अष्टाविंशस्सर्गः ॥

स एवं ब्रुवतीं सीतां धर्मज्ञो धर्मवत्सलः ।
न नेतुं कुरुते बुद्धिं वने दुःखानि चिन्तयन् ॥ १
सान्त्वयित्वा पुनस्तांतु बाष्पदूषितलोचनाम् ।
निवर्तनार्थे धर्मात्मा वाक्य मेतदुवाच ह ॥ २

" सीते महाकुलीनाऽसि धर्मे च निरता सदा ।
इहाऽऽचरस्व धर्मं त्वं मा यथा मनस स्सुखम् ॥ ३
सीते! यथा त्वां वक्ष्यामि तथा कार्यं त्वयाऽबले! ।
वने दोषा हि बहवो वदतस्तान्निबोधमे ॥ ४
सीते! विमुच्यता मेषा वनवासकृता मतिः ।
बहुदोषं हि कान्तारं वनमित्याभिधीयते ॥ ५
हितबुद्ध्या खलु वचो मयैतदभिधीयते ।
सदा सुखं न जानामि दुःख मेव सदा वनम् ॥ ६
गिरिनिर्झरसम्भूता गिरिकन्दरवासिनाम् ।
सिंहानां निनदा दुःखा श्श्रोतुं दुःख मतो वनम् ॥ ७
क्रीडमानाश्च विस्रब्धा मत्ता श्शून्ये महामृगाः ।
दृष्ट्वा समभिवर्तन्ते सीते दुःख मतो वनम् ॥ ८
सग्राहास्सरितश्चैव पङ्कवत्य स्सुदुस्तराः ।
मत्तै रपि गजैर्नित्य मतो दुःखतरं वनम् ॥ ९
लताकंटकसङ्कीर्णाः कृकवाकूपनादिताः ।
निरपाश्च सुदुर्गाश्च मार्गा दुःख मतो वनम् ॥ १०
सुप्यने पर्णशय्यासु स्वयं भग्नासु भूतले ।
रात्रिषु श्रमखिन्नेव तस्मा द्दुःख मतो वनम् ॥ ११
अहोरात्रं च संतोषः कर्तव्यो नियतात्मना ।
फलैर्वृक्षावपतितै स्सीते! दुःखतरं वनम् ॥ १२
उपवासश्च कर्तव्यो यथाप्राणेन मैथिलि! ।
जटाभारश्च कर्तव्यो वल्कलाम्बरधारिणा ॥ १३

देवतानां पितॄणां च कर्तव्यं विधिपूर्वकम् ।
प्राप्ताना मतिथीनां च नित्यशः प्रतिपूजनम् ॥ १४
कार्यस्त्रि रभिषेकश्च काले काले च नित्यशः ।
चरता नियमेनैव तस्माद्दुःखतरं वनम् ॥ १५
उपहारश्च कर्तव्यः कुसुमै स्स्वयमाहृतैः ।
आर्षेण विधिना वेद्यां बाले! दुःख मतो वनम् ॥ १६
यथालब्धेन कर्तव्यः संतोषस्तेन मैथिलि! ।
यताहारै र्वनचरैर्नित्यं दुःख मतो वनम् ॥ १७
अतीव वाता स्तिमिरं बुभुक्षा चातिनित्यशः ।
भयानि च महान्त्यत्र ततो दुःखतर वनम् ॥ १८
सरीसृपाश्च बहवो बहुरूपाश्च भामिनि! ।
चरन्ति पृथिवीं दर्पात्ततो दुःखतरं वनम् ॥ १९
नदीनिलयना स्सर्पा नदीकुटिलगामिनः ।
तिष्ठन्त्यावृत्य पन्थानं ततो दुःखतरं वनम् ॥ २०
पतङ्गा वृश्चिकाः कीटा दंशाश्च मशकै स्सह ।
बाधन्ते नित्यमबले सर्वं दुःखमतो वनम् ॥ २१
द्रुमाः कंटकिनश्चैव कुशाः काशाश्च भामिनि! ।
वने व्याकुलशाखाग्रास्तेन दुःखतरं वनम् ॥ २२
कायक्लेशाश्च बहवो भयानि विविधानिच ।
अरण्यवासे वसतो दुःख मेव ततो वनम् ॥ २३
क्रोधलोभौ विमोक्तव्यौ कर्तव्या तपसे मतिः ।
नभेतव्यश्च भेतव्ये नित्यं दुःख मतो वनम् ॥ २४

तदलं ते वनं गत्वा क्षमं नहि वनं तव ।
विमृशन्निहपश्यामि बहुदोषकरं वनम् ॥" २५
वनन्तु नेतुं न कृता मतिस्तदा बभूव रामेण यदा महात्मना ।
न तस्य सीता वचनं चकार तत्ततोऽब्रवी द्राम मिदं सुदुःखिता ॥

इति श्रीमदयोध्याकाण्डे अष्टाविंशस्सर्गः ॥

## ॥ एकोनत्रिंशस्सर्गः ॥

एतत्तु वचनं श्रुत्वा सीता रामस्य दुःखिता ।
प्रसक्ताश्रुमुखी मन्दमिदं वचन मब्रवीत् ॥ १
" ये त्वया कीर्तिता दोषा वने वस्तव्यतां प्रति ।
गुणानित्येव तान्विद्धि तव स्नेहपुरस्कृतान् ॥ २
मृगा स्सिंहा गजाश्चैव शार्दूला श्शरभास्तथा ।
पक्षिण स्सृमराश्चैव [ये च कंटकिनो द्रुमाः ॥ ३
विचरन्ति तत स्सर्वे] येचान्ये वनचारिणः ।
अदृष्टपूर्वरूपत्वात्सर्वे ते तव राघव! ॥ ४
रूपं दृष्ट्वाऽपसर्पेयु र्भये सर्वे हि बिभ्यति ।
त्वया च सह गन्तव्यं मया गुरुजनाज्ञया ॥ ५
त्वाद्वियोगेन मे राम! त्यक्तव्य मिह जीवितम् ।
न हि मां त्वत्समीपस्थामपि शक्नोति राघव! ॥ ६
सुराणा मीश्वर श्शक्रः प्रधर्षयितु मोजसा ।
पतिहीना तु या नारी न सा शक्ष्यति जीवितुम् ॥ ७

काम मेवंविधं राम! त्वया मम विदर्शितम् ।
अथ चापि महाप्राज्ञ! ब्राह्मणानां मया श्रुतम् ॥ ८
पुरा पितृगृहे सत्यं वस्तव्यं किल मे वने ।
लक्षणिभ्यो द्विजातिभ्य श्श्रुत्वाऽहं वचनं पुरा ॥ ९
वनवासकृतोत्साहा नित्यमेव महाबल! ।
आदेशो वनवासस्य प्राप्तव्यस्समया किल ॥ १०
सा त्वया सह तत्राहं यास्यामि प्रिय! नान्यथा ।
कृतादेशा भविष्यामि गमिष्यामि सह त्वया ॥ ११
कालश्चायं समुत्पन्न स्सत्यवाग्भवतु द्विजः ।
वनवासेऽभिजानामि दुःखानि बहुधा किल ॥ १२
प्राप्यन्ते नियतं वीर! पुरुषै रकृतात्मभिः ।
कन्यया च पितु र्गेहे वनवासश्श्रुतो मया ॥ १३
भिक्षिण्या स्साधुवृत्ताया मम मातु रिहाग्रतः ।
प्रसादितश्च वै पूर्वं त्वं वै बहुविधं प्रभो! ॥ १४
गमनं वनवासस्य कांक्षितं हि सह त्वया ।
कृतक्षणाऽहं भद्रं ते गमनं प्रति राघव ॥ १५
वनवासस्य शूरस्य चर्या ते मम रोचते ।
शुद्धात्मन्प्रेम भावाद्धि भविष्यामि विकल्मषा ॥ १६
भर्तार मनुगच्छन्ती भर्ता हि मम दैवतम् ।
प्रेत्यभावे हि कल्याण स्सङ्गमो मे सह त्वया ॥ १७
श्रुतिर्हि श्रूयते पुण्या ब्राह्मणानां यशस्विनाम् ।
इहलोके च पितृभिर्या स्त्री यस्य महामते! ॥ १८

अद्भिर्दत्ता स्वधर्मेण प्रेत्यभावेऽपि तस्य सा ।
एव मस्मात्स्वकां नारीं सुवृत्तां हि पतिव्रताम् ॥ १९
नाभिरोचयसे नेतुं त्वं मां केनेह हेतुना ।
भक्तां पतिव्रतां दीनां मां समां सुखदुःखयोः ॥ २०
नेतु मर्हसि काकुत्स्थ! समानसुखदुःखिनीम् ।
यदि मां दुःखितामेवं वनं नेतुं न चेच्छसि ॥ २१
विष मग्निं जलं वाऽह मास्थास्ये मृत्युकारणात् ।"
एवं बहुविधं तं सा याचते गमनं प्रति ॥ २२
नानुमेने महाबाहुस्तां नेतुं विजनं वनम् ।
एव मुक्तातु सा चिन्तां मैथिली समुपागता ॥ १३
स्नापयन्ती कुचावुष्णै रश्रुभिर्नयनच्युतैः ।
चिन्तयन्तीं तथा तां तु निवर्तयितु मात्मवान् ॥ २४
ताम्रोष्ठीं स तदा सीतां काकुत्स्थो बह्वसान्त्वयत् ॥

॥ इति श्रीमदयोध्याकाण्डे एकोनत्रिंशस्सर्गः ॥

---

## ॥ त्रिंशस्सर्गः ॥

सान्त्व्यमानातु रामेण मैथिली जनकात्मजा ।
वनवासनिमित्ताय भर्तार मिद मब्रवीत् ॥ १
सा तमुत्तमसंविग्ना सीता विपुलवक्षसम् ।
प्रणयाच्चाभिमानाच्च परिचिक्षेप राघवम् ॥ २
"किं त्वाऽमन्यत वैदेहः पिता मे मिथिलाधिपः ।
राम जामातरं प्राप्य स्त्रियं पुरुषविग्रहम् ॥ ३

अनृतं बत लोकोऽय मज्ञानाद्यद्धि वक्ष्यति ।
तेजो नास्ति परं रामे तपतीव दिवाकरे ॥ ४
किं हि कृत्वा विषण्णस्त्वं कुतो वा भयमस्तिते ।
यत्परित्यक्तुकाम स्त्वं मामनन्यपरायणाम् ॥ ५
द्युमत्सेनसुतं वीर! सत्यवन्त मनुव्रताम् ।
सावित्री मिव मां विद्धि त्व मात्मवशवर्तिनीम् ॥ ६
नत्वहं मनसाऽप्यन्यं द्रष्टाऽस्मि त्वदृतेऽनघ! ।
त्वया राघव! गच्छेयं यथाऽन्या कुलपांसिनी ॥ ७
स्वयं तु भार्यां कौमारीं चिरमध्युषितां सतीम् ।
शैलूष इव मां राम! परेभ्यो दातु मिच्छसि ॥ ८
यस्य पथ्यं च रामाऽत्थ यस्य चार्थेऽवरुध्यसे ।
त्वं तस्य भव वश्यश्च विधेयश्च सदाऽनघ! ॥ ९
स मा मनादाय वनं न त्वं प्रस्थातु मर्हसि ।
तपो वा यदिवाऽरण्यं स्वर्गो वा स्यात्सह त्वया ॥ १०
नच मे भविता तत्र कश्चित्पथि परिश्रमः ।
पृष्ठत स्तव गच्छन्त्या विहारशयनेष्विव ॥ ११
कुशकाशशरेषीका ये च कंटकिनो द्रुमाः ।
तूलाजिनसमस्पर्शा मार्गे मम सह त्वया ॥ १२
महावात समुद्धूतं यन्मामपक्करिष्यति ।
रजो रमण! तन्मन्ये परार्ध्य मिवचन्दनम् ॥ १३
शाद्वलेषु यथा शिश्ये वनान्ते वनगोचर! ।
कुथास्तरणतल्पेषु किं स्या त्सुखतरं ततः ॥ १४

पत्रं मूलं फलं यत्त्व मल्पं वा यदि वा बहु ।
दास्यसि स्वय माहृत्य तन्मेऽमृतरसोपमम् ॥ १५
न मातुर्नपितु स्तत्र स्मरिष्यामि न वेश्मनः ।
आर्तवान्युपभुञ्जाना पुष्पाणि च फलानि च ॥ १६
न च तत्र गतः किंचिद्द्रष्टु मर्हसि विप्रियम् ।
मत्कृते न च ते शोको न भविष्यामि दुर्भरा ॥ १७
यस्त्वया सह स स्वर्गो निरयो य स्त्वया विना ।
इति जानन्परां प्रीतिं गच्छ राम! मया सह ॥ १८
अथ मामेव मव्यग्रां वनं नैव नयिष्यसि ।
विषमद्यैव पास्यामि माविशं द्विषतां वशम् ॥ १९
पश्चादपि हि दुःखेन मम नैवास्ति जीवितम् ।
उज्झिताया स्त्वया नाथ! तदैव मरणं वरम् ॥ २०
इमं हि सहितुं शोकं मुहूर्त मपि नोत्सहे ।
किं पुनर्दश वर्षाणि त्रीणि चैकं च दुःखिता ॥" २१
इति सा शोकसंतप्ता विलप्य करुणं बहु ।
चुक्रोश पति मायस्ता भृश मालिङ्ग्य सस्वरम् ॥ २२
सा विद्धा बहुभि र्वाक्यै र्दिग्धै रिव गजांगना ।
चिरसन्नियतं बाष्पं मुमोचाग्निमिवारणिः ॥ २३
तस्या स्स्फटिकसंकाशं वारि सन्तापसम्भवम् ।
नेत्राभ्यां परिसुस्राव पंकजाभ्यामिवोदकम् ॥ २४
तच्चैवामलचन्द्राभं मुख मायतलोचनम् ।
पर्यशुष्यत बाष्पेण जलोद्धृत मिवाम्बुजम् ॥ २५

तां परिष्वज्य बाहुभ्यां विसंज्ञा मिव दुःखिताम् ।
उवाच वचनं रामः परिविश्वासयं स्तदा ॥ २६
“न देवि! तव दुःखेन स्वर्गमप्यभिरोचये ।
नहि मेऽस्ति भयं किंचि त्स्वयम्भो रिव सर्वतः ॥ २७
तव सर्व मभिप्राय मविज्ञाय शुभानने! ।
वासं न रोचयेऽरण्ये शक्तिमानपि रक्षणे ॥ २८
यत्सृष्टाऽसि मया सार्धं वनवासाय मैथिलि ।
न विहातुं मयाशक्या कीर्ति रात्मवता यथा ॥ २९
धर्मस्तु गजनासोरु! सद्भि राचरितः पुरा ।
तं चाहं मनुवर्तेऽद्य यथा सूर्यं सुवर्चला ॥ ३०
न खल्वहं न गच्छेयं वनं जनकनन्दिनि! ।
वचनं तन्नयति मां पितु स्सत्योपबृंहितम् ॥ ३१
एष धर्मस्तु सुश्रोणि! पितु र्मातुश्च वश्यता ।
अतश्चतं व्यतिक्रम्य नाहं जीवितु मुत्सहे ॥ ३२
अस्वाधीनं कथं दैवं प्रकारै रभिराध्यते ।
स्वाधीनं समतिक्रम्य मातरं पितरं गुरुम् ॥ ३३
यत्त्रयं तत्त्रयो लोकाः पवित्रं तत्समं भुवि ।
नान्यदस्ति शुभापाङ्गे! तेनेद मभिराध्यते ॥ ३४
न सत्यं दानमानौ वा नयज्ञाश्चाप्तदक्षिणाः ।
तथा बलकरा स्सीते! यथा सेवा पितुर्हिता ॥ ३५
स्वर्गो धनं वा धान्यं वा विद्याः पुत्रा स्सुखानि च ।
गुरुवृत्त्यनुरोधेन न किंचि दपि दुर्लभम् ॥ ३६

देवगन्धर्वगोलोकान्ब्रह्मलोकां स्तथानराः ।
प्राप्नुवन्ति महात्मानो माता पितृपरायणाः ॥ ३७

स मां पिता यथा शास्ति सत्यधर्मपथे स्थितः ।
तथा वर्तितु मिच्छामि स हि धर्म स्सनातनः ॥ ३८

मम सन्ना मति स्सीते! त्वां नेतुं दण्डकावनम् ।
वसिष्यामीति सा त्वं मा मनुयातुं सुनिश्चिता ॥ ३९

साहि सृष्टाऽन वद्याङ्गि! वनाय मदिरेक्षणे! ।
अनुगच्छस्व मां भीरु! सहधर्मचरीभव ॥ ४०

सर्वथा सदृशं सीते! मम स्वस्य कुलस्य च ।
व्यवसाय मनुक्रान्ता कान्ते! त्व मति शोभनम् ॥ ४१

आरभस्व शुभश्रोणि! वनवासक्षमाः क्रियाः ।
नेदानीं त्वदृते सीते! स्वर्गोऽपि मम रोचते ॥ ४२

ब्राह्मणेभ्यश्च रत्नानि भिक्षुकेभ्यश्च भोजनम् ।
देहि चाशंसमानेभ्य स्संत्वरस्व च माचिरम् ॥ ४३

भूषणानि महार्हाणि वरवस्त्राणि यानि च ।
रमणीयाश्च ये केचि त्क्रीडार्थाश्चाप्युपस्कराः ॥ ४४

शयनीयानि यानानि मम चान्यानि यानि च ।
देहि स्वभृत्यवर्गस्य ब्राह्मणाना मनन्तरम् ॥" ४५

अनुकूलं तु सा भर्तुर्ज्ञात्वा गमनमात्मनः ।
क्षिप्रं प्रमुदिता देवी दातुमेवोपचक्रमे ॥ ४६

ततः प्रहृष्टा प्रतिपूर्णमानसा यशस्विनी भर्तुरवेक्ष्य भाषितम् ।
धनानि रत्नानि च दातु मङ्गना प्रचक्रमे धर्मभृतां मनस्विनी ॥ ४७

इति श्रीमदयोध्याकाण्डे त्रिंशस्सर्गः ॥

## ॥ एकत्रिंशस्सर्गः ॥

एवं श्रुत्वा तु संवादं लक्ष्मणः पूर्वमागतः ।
बाष्पपर्याकुलमुख श्शोकं सोढु मशक्नुवन् ॥ १
स भ्रातु श्चरणौ गाढं निपीड्य रघुनन्दनः ।
सीतामुवाचातियशा राघवं च महाव्रतम् ॥ २
"यदि गन्तुं कृताबुद्धिर्वनं मृगगजायुतम् ।
अहं त्वाऽनुगमिष्यामि वनमग्रे धनुर्धरः ॥ ३
मया समेतोऽरण्यानि बहूनि विचरिष्यसि ।
पक्षिभिर्मृगयूथैश्च संघुष्टानि समन्ततः ॥ ४
न देवलोकाक्रमणं नामरत्वमहं वृणे ।
ऐश्वर्यं वापि लोकानां कामये न त्वया विना ॥" ५
एवं ब्रुवाण स्सौमित्रि र्वनवासाय निश्चितः ।
रामेण बहुभि स्सान्त्वै र्निषिद्धः पुनरब्रवीत् ॥ ६
"अनुज्ञात श्च भवता पूर्वमेव यदस्म्यहम् ।
किमिदानीं पुनरिदं क्रियते मन्निवारणम् ॥ ७
यदर्थं प्रतिषेधो मे क्रियते गन्तु मिच्छतः ।
एत दिच्छामि विज्ञातुं संशयो हि ममानघ ! ॥" ८
ततोऽब्रवीन्महातेजा रामो लक्ष्मण मग्रतः ।
स्थितं प्राग्गामिनं वीरं याचमानं कृताञ्जलिम् ॥ ९
"स्निग्धो धर्मरतो वीर स्सततं सत्पथे स्थितः ।
प्रियः प्राणसमो वश्यो भ्राता चासि सखा च मे ॥ १०

मयाऽद्य सह सौमित्रे! त्वयि गच्छति तद्वनम् ।
को भरिष्यति कौसल्यां सुमित्रां वा यशस्विनीम् ॥ ११
अभिवर्षति कामैर्यः पर्जन्यः पृथिवीमिव ।
स कामपाशपर्यस्तो महातेजा महीपतिः ॥ १२
सा हि राज्यमिदं प्राप्य नृपस्याश्वपते स्सुता ।
दुःखितानां सपत्नीनां न करिष्यति शोभनम् ॥ १३
न स्मरिष्यति कौसल्यां सुमित्रां च सुदुःखिताम् ।
भरतो राज्यमासाद्य कैकेय्यां पर्यवस्थितः ॥ १४
तामार्यां स्वयमेवेह राजानुग्रहणेन वा ।
सौमित्रे! भर कौसल्या मुक्तमर्थमिमंचर ॥ १५
एवं मम च ते भक्तिर्भविष्यति सुदर्शिता ।
धर्मज्ञ! गुरुपूजायां धर्मश्चाप्यतुलो महान् ॥ १६
एवं कुरुष्व सौमित्रे! मत्कृते रघुनन्दन! ।
अस्माभिर्विप्रहीणाया मातुर्नो न भवेत्सुखम् ॥" १७
एव मुक्तस्तु रामेण लक्ष्मण श्श्लक्ष्णया गिरा ।
प्रत्युवाच तदा रामं वाक्यज्ञो वाक्यकोविदम् ॥ १८
"तवैव तेजसा वीर! भरतः पूजयिष्यति ।
कौसल्यां च सुमित्रां च प्रयतो नात्र संशयः ॥ १९
[यदि दुष्टो नरक्षेत भरतो राज्यमुत्तमम् ।
प्राप्य दुर्मनसा वीर! गर्वेण च विशेषतः ॥ २०
त महं दुर्मति क्रूरं वधिष्यामि न संशयः ।
तत्पक्ष्यानपितान्सर्वां स्त्रैलोक्य मपि किंनु तम् ॥] २१

कौसल्या बिभृयादार्या सहस्रमपि मद्विधान् ।
यस्या स्सहस्रं ग्रामाणां सम्प्राप्त मुपजीवनम् ॥ २२
तदात्म भरणे चैव मम मातु स्तथैव च ।
पर्याप्ता मद्विधानां च भरणाय यशस्विनी ॥ २३
कुरुष्व मामनुचरं वैधर्म्यं नेह विद्यते ।
कृतार्थोऽहं भविष्यामि तव चार्थः प्रकल्पते ॥ २४
धनुरादाय सशरं खनित्रपिटकाधरः ।
अग्रतस्ते गमिष्यामि पन्थान मनुदर्शयन् ॥ २५
आहरिष्यामि ते नित्यं मूलानि च फलानि च ।
वन्यानि यानि चान्यानि स्वाहाराणि तपस्विनाम् ॥ २६
भवां स्तु सह वैदेह्या गिरिसानुषु रंस्यते ।
अहं सर्वं करिष्यामि जाग्रतस्स्वपत श्च ते ॥ २७
रामस्त्वनेन वाक्येन सुप्रीतः प्रत्युवाचतम् ।
"व्रजाऽऽपृच्छस्व सौमित्रे! सर्वमेव सुहृज्जनम् ॥ २८
ये च राज्ञो ददौ दिव्ये महात्मा वरुणस्स्वयम् ।
जनकस्य महायज्ञे धनुषी रौद्रदर्शने ॥ २९
अभेद्यकवचे दिव्ये तूणी चाक्षयसायकौ ।
आदित्यविमलौ चोभौ खड्गौ हेमपरिष्कृतौ ॥ ३०
सत्कृत्य निहितं सर्वमेतदाचार्यसद्मनि ।
सत्वमायुधमादाय क्षिप्रमाव्रज लक्ष्मण! ॥" ३१
ससुहृज्जनमामन्त्र्य वनवासाय निश्चितः ।
इक्ष्वाकुगुरु मामन्त्र्य जग्राहाऽऽयुध मुत्तमम् ॥ ३२

तद्दिव्यं राजशार्दूल सत्कृतं माल्यभूषितम् ।
रामाय दर्शयामास सौमित्रि स्सर्वमायुधम् ॥ ३३
तमुवाचात्मवान् रामः प्रीत्या लक्ष्मण मागतम् ।
"काले त्व मागतस्सौम्य! कांक्षिते मम लक्ष्मण! ॥ ३४
अहं प्रदातु मिच्छामि यदिदं मामकं धनम् ।
ब्राह्मणेभ्य स्तपस्विभ्य स्त्वया सह परन्तप! ॥ ३५
वसन्तीह दृढं भक्त्या गुरुषु द्विजसत्तमाः ।
तेषा मपि च मे भूय स्सर्वेषां चोपजीविनाम् ॥ ३६
वसिष्ठपुत्रं तु सुयज्ञ मार्यं त्व मानयाशु प्रवरं द्विजानाम् ।
अभिप्रयास्यामि वनं समस्तानभ्यर्च्य शिष्टानपरान् द्विजातीन् ॥"

इति श्रीमदयोध्याकाण्डे एकत्रिंशस्सर्ग ॥

## ॥ द्वात्रिंशस्सर्गः ॥

ततः शासनमाज्ञाय भ्रातु श्शुभतरं प्रियम् ।
गत्वा स प्रविवेशाशु सुयज्ञस्य निवेशनम् ॥ १
तं विप्रमग्न्यगारस्थं वन्दित्वा लक्ष्मणोऽब्रवीत् ।
सखेऽभ्यागच्छ पश्य त्वं वेश्म दुष्करकारिणः ॥ २
ततस्सन्ध्यामुपास्याशु गत्वा सौमित्रिणा सह ।
जुष्टं तत्प्राविशल्लक्ष्म्या रम्यं रामनिवेशनम् ॥ ३
तमागतं वेदविदं प्राञ्जलि स्सीतया सह ।
सुयज्ञ मभिचक्राम राघवोऽग्नि मिवार्चितम् ॥ ४

जातरूपमयै र्मुख्यै रङ्गदैः कुण्डलै श्शुभैः ।
सहेमसूत्रै र्मणिभिः केयूरै र्वलयैरपि ॥ ५
अन्यै श्च रत्नै र्बहुभिः काकुत्स्थः प्रत्यपूजयत् ।
सुयज्ञं सतदोवाच रामस्सीताप्रचोदितः ॥ ६
"हारं च हेमसूत्रं च भार्यायै सौम्य! हारय ।
रशनां चाधुना सीता दातु मिच्छति ते सखे! ॥ ७
अङ्गदानि विचित्राणि केयूराणि शुभानि च ।
प्रयच्छति सखे! तुभ्यं भार्यायै गच्छती वनम् ॥ ८
पर्यङ्कमग्र्यास्तरणं नानारत्नविभूषितम् ।
तमपीच्छति वैदेही प्रतिष्ठापयितुं त्वयि ॥ ९
नागश्शत्रुंजयो नाम मातुलोऽयं ददौ मम ।
तं ते गजसहस्रेण ददामि द्विजसत्तम! ॥" १०
इत्युक्त स्सहि रामेण सुयज्ञः प्रतिगृह्यतत् ।
रामलक्ष्मणसीतानां प्रयुयोजाऽऽशिष श्शुभाः ॥ ११
अथ भ्रातरमव्यग्रं प्रियं रामः प्रियंवदः ।
सौमित्रिं तमुवाचेदं ब्रह्मेव त्रिदशेश्वरम् ॥ १२
"अगस्त्यं कौशिकं चैव तावुभौ ब्राह्मणोत्तमौ ।
अर्चयाऽऽहूय सौमित्रे! रत्नै स्सस्यमिवाम्बुभिः ॥ १३
तर्पयस्व महाबाहो! गोसहस्रै श्च मानदः ।
सुवर्णै रजतै श्चैव मणिभिश्च महाधनैः ॥ १४
कौसल्यां च य आशीर्भिर्भक्तः पर्युपतिष्ठति ।
आचार्य स्तैत्तिरीयाणा मभिरूपश्च वेदवित् ॥ १५

तस्ययानं च दासीश्च सौमित्रे! सम्प्रदापय ।
कौशेयानि च वस्त्राणि यावत्तुष्यति सद्विजः ॥ १६
सूत श्चित्ररथ श्चार्य स्सचिवस्सुचिरोषितः ।
तोषयैनं महार्है श्च रत्नैर्वस्त्रै धनैस्तथा ॥ १७
पशुकाभि श्च सर्वाभिर्गवां दशशतेन च ।
ये चेमे कठकालापा बहवो दण्डमाणवाः ॥ १८
नित्यस्वाध्यायशीलत्वा न्नान्यत्कुर्वन्ति किंचन ।
अलसास्स्वादुकामा श्च महतां चापि सम्मताः ॥ १९
तेषा मशीतियानानि रत्नपूर्णानि दापय ।
शालिवाहसहस्रं च द्वेशते भद्रकां स्तथा ॥ २०
व्यञ्जनार्थं च सौमित्रे! गोसहस्र मुपाकुरु ।
मेखलीनां महासङ्घः कौसल्यां समुपस्थितः ॥ २१
तेषां सहस्रं सौमित्रे! प्रत्येकं सम्प्रदापय ।
अम्बायथा च सानन्देत्कौसल्या मम दक्षिणाम् ॥ २२
तथा द्विजातीन्सर्वास्तान्लक्ष्मणार्चय सर्वशः ।"
तत स्स पुरुषव्याघ्र स्तद्धनं लक्ष्मण स्स्वयम् ॥ २३
यथोक्तं ब्राह्मणेन्द्राणा मददाद्धनदो यथा ।
अथाऽब्रवीद्बाष्पगळां स्तिष्ठतश्चोपजीविनः ॥ २४
"सम्प्रदाय बहुद्रव्य मेकैकस्योपजीवनम् ।
लक्ष्मणस्य च यद्वेश्म गृहं च यदिदं मम ॥ २५
अशून्यं कार्य मेकैकं यावदागमनं मम ।"
इत्युक्त्वा दुःखितं सर्वं जनं तमुपजीविनम् ॥ २६

उवाचेदं धनाध्यक्षं 'धनमानीयता' मिति ।
ततोऽस्य धनमाजह्रु स्सर्वमेवोपजीविनः ॥ २७
स राशि स्सुमहांस्तत्र दर्शनीयोह्यदृश्यत ।
तत स्स पुरुषव्याघ्र स्तद्धनं सहलक्ष्मणः ॥ २८
द्विजेभ्यो बालवृद्धेभ्यः कृपणेभ्यो ह्यदापयत् ।
तत्राऽसीत्पिङ्गलोगार्ग्य स्त्रिजटो नाम वै द्विजः ॥ २९
उञ्छवृत्ति र्वनेनित्यं फालकुद्दाललाङ्गली ।
तं वृद्धं तरुणी भार्या बालानादाय दारकान् ॥ ३०
अब्रवीद्ब्राह्मणं वाक्यं दारिद्र्येणाभिपीडिता ।
"अपास्य फालं कुद्दालं कुरुष्व वचनं मम ॥ ३१
रामं दर्शय धर्मज्ञं यदि किंचिदवाप्स्यसि ।"
स भार्या वचनं श्रुत्वा शाटी माच्छाद्य दुश्छदाम् ॥ ३२
स प्रातिष्ठत पन्थानं यत्र रामनिवेशनम् ।
भृग्वंगिरस्समं दीप्त्या त्रिजटं जनसंसदि ॥ ३३
आपञ्चमायाः कक्ष्याया नैनं कश्चि दवारयत् ।
स राजपुत्र मासाद्य त्रिजटो वाक्यमब्रवीत् ॥ ३४
"निर्धनो बहुपुत्रोऽस्मि राजपुत्र! महायशः! ।
उञ्छवृत्ति र्वने नित्यं प्रत्यवेक्षस्व मा" मिति ॥ ३५
त मुवाच ततो रामः परिहाससमन्वितम् ।
'गवां सहस्र मप्येकं नतु विश्राणितं मया ॥ ३६
परिक्षिपसि दण्डेन यावत्तावदवाप्स्यसि ।'
सशाटीं त्वरितः कट्यां सम्भ्रान्तः परिवेष्ट्यताम् ॥ ३७

आविद्ध्य दण्डं चिक्षेप सर्वप्राणेन वेगितः ।
सतीर्त्वा सरयूपारं दण्डस्तस्य कराच्च्युतः ॥ ३८
गोव्रजे बहुसाहस्रे पपातोक्षणसन्निधौ ।
तं परिष्वज्य धर्मात्मा आतस्मात्सरयूतटात् ॥ ३९
आनयामास ता गोपै स्त्रिजटस्याश्रमं प्रति ।
उवाच स ततो रामस्तं गार्ग्य मभिसान्त्वयन् ॥ ४०
"मन्युर्नखलु कर्तव्यः परिहासोह्ययं मम ।
इदं हि तेजस्तव यद्दुरत्ययं तदेव जिज्ञासितुमिच्छता मया।
इदं भवानर्थमभिप्रचोदितो वृणीष्व किंचेदपरं व्यवस्यति ॥ ४१
ब्रवीमि सत्येन न तेऽस्ति यन्त्रणा धनं हि यद्यन्मम विप्रकारणात् ।
भवत्सु सम्यक्प्रतिपादनेन तन्मयाऽऽर्जितं प्रीतियशस्करं भवेत् ॥"
तत स्सभार्य स्त्रिजटो महामुनि र्गवा मनीकं प्रतिगृह्य मोदितः ।
यशोबलप्रीतिसुखोपबृंहिणी स्तदाशिषः प्रत्यवदन्महात्मनः ॥ ४३
स चापि रामः प्रतिपूर्णमानसो महद्धनं धर्मबलै रुपार्जितम् ।
नियोजयामास सुहृज्जनेऽचिरा द्यथार्हसम्मानवचः प्रचोदितः ॥ ४४
द्विजस्सुहृद्भृत्यजनोऽथवा तदा दरिद्रभिक्षाचरण श्च योऽभवत् ।
न तत्र कश्चिन्नबभूव तर्पितो यथार्ह सम्माननदानसम्भ्रमैः ॥ ४५

इति श्रीमदयोध्याकाण्डे द्वात्रिंशस्सर्गः ॥

---

## ॥ त्रयस्त्रिंशस्सर्गः ॥

दत्त्वा तु सह वैदेह्या ब्राह्मणेभ्यो धनं बहु ।
जग्मतुः पितरं द्रष्टुं सीतया सह राघवौ ॥ १

ततो गृहीते दुष्प्रेक्षे त्वशोभेतां तदायुधे ।
मालादामभि राबद्धे सीतया समलङ्कृते ॥ २
ततः प्रासाद हर्म्याणि विमान शिखराणि च ।
अधिरुह्य जनश्श्रीमा नुदासीनो व्यलोकयत् ॥ ३
नहि रथ्यास्स्म शक्यन्ते गन्तुं बहुजनाकुलाः ।
आरुह्य तस्मात्प्रासादान्दीनाः पश्यन्ति राघवम् ॥ ४
पदाति वर्जितच्छत्रं रामं दृष्ट्वा जनास्तदा ।
ऊचुर्बहुविधा वाचश्शोकोपहतचेतसः ॥ ५
यं यान्तमनुयातिस्म चतुरङ्गबलं महत् ।
तमेकं सीतया सार्धं मनुयातिस्म लक्ष्मणः ॥ ६
ऐश्वर्यस्य रसज्ञस्सन्कामिनां चैव कामदः ।
नेच्छत्येवानृतं कर्तु पितरं धर्मगौरवात् ॥ ७
या न शक्या पुरा द्रष्टुं भूतै राकाशगै रपि ।
ता मद्य सीतां पश्यन्ति राजमार्गगता जनाः । ८
अङ्गरागोचितां सीतां रक्तचन्दनसेविनीम् ।
वर्ष मुष्णं च शीतं च नेष्यन्त्याशु विवर्णताम् ॥ ९
अद्यनूनं दशरथ स्सत्त्व माविश्य भाषते ।
न हि राजा प्रियं पुत्रं विवासयितु मिच्छति ॥ १०
निर्गुणस्यापि पुत्रस्य कथं स्याद्विप्रवासनम् ।
किंपुनर्यस्य लोकोऽयं जितो वृत्तेन केवलम् ॥ ११
आनृशंस्यमनुक्रोश श्श्रुतं शीलं दम श्शमः ।
राघवं शोभयन्त्येते षड्गुणाः पुरुषोत्तमम् ॥ १२

तस्मात्तस्योपघातेन प्रजाः परमपीडिताः ।
औदकानीव सत्त्वानि ग्रीष्मे सलिलसंक्षयात् ॥ १३
'पीडया पीडितं सर्वं जगदस्य जगत्पतेः ।
मूलस्येवोपघातेन वृक्षः पुष्पफलोपगः ॥ १४
मूलं ह्येष मनुष्याणां धर्मसारो महाद्युतिः ।
पुष्पं फलं च पत्रं च शाखाश्चास्येतरे जनाः ॥ १५
ते लक्ष्मण इव क्षिप्रं सपत्न्यस्सहबान्धवाः ।
गच्छन्त मनुगच्छामो येन गच्छति राघवः ॥ १६
उद्यानानि परित्यज्य क्षेत्राणि च गृहाणि च ।
एक दुःखसुखा राम मनुगच्छाम धार्मिकम् ॥ १७
समुद्धृतनिधानानि परिध्वस्ताजिराणि च ।
उपात्तधनधान्यानि हृतसाराणि सर्वशः ॥ १८
रजसाऽभ्यवकीर्णानि परित्यक्तानि दैवतैः ।
मूषकैः परिधावद्भिरुद्बिलै रावृतानि च ॥ १९
अपेतोदकधूमानि हीनसम्मार्जनानि च ।
प्रणष्टबलिकर्मेज्यामन्त्रहोमजपानि च ॥ २०
दुष्कालेनेव भग्नानि भिन्नभाजनवन्ति च ।
अस्मत्त्यक्तानि वेश्मानि कैकेयी प्रतिपद्यताम् ॥ २१
वनं नगर मेवास्तु येन गच्छति राघवः ।
अस्माभिश्च परित्यक्तं पुरं सम्पद्यतां वनम् ॥ २२
बिलानि दंष्ट्रिण स्सर्वे सानूनि मृगपक्षिणः ।
त्यजन्त्वस्मद्भया द्भीता गजा स्सिंहा वनान्यपि ॥ २३

अस्मत्त्यक्तं प्रपद्यन्तां सेव्यमानं त्यजन्तु च ।
तृणमांसफलादानां देशं व्यालमृगद्विजम् ॥ २४
प्रपद्यतां हि कैकेयी सपुत्रा सह बान्धवैः ।
राघवेण वने सर्वे वयं वत्स्याम निर्वृताः ॥' २५
इत्येवं विविधा वाचो नानाजनसमीरिताः ॥
शुश्राव रामश्श्रुत्वा च न विचक्रेऽस्य मानसम् ॥ २६
स तु वेश्मपितुर्दूरात्कैलासशिखरप्रभम् ।
अभिचक्राम धर्मात्मा मत्तमातङ्गविक्रमः ॥ २७
विनीतवीरपुरुषं प्रविश्य तु नृपालयम् ।
ददर्शावस्थितं दीनं सुमन्त्रमविदूरतः ॥ २८
प्रतीक्षमाणोऽपि जनं तदाऽऽर्त मनार्तरूपः प्रहसन्निवाथ ।
जगाम रामः पितरं दिदृक्षुः पितुर्निदेशं विधिवच्चिकीर्षुः ॥ २९
तत्पूर्व मैक्ष्वाकसुतो महात्मा रामो गमिष्यन्वनमार्तरूपम् ।
व्यतिष्ठत प्रेक्ष्य तदा सुमन्त्रं पितुर्महात्मा प्रतिहारणार्थम् ॥ ३०
पितुर्निदेशेन तु धर्मवत्सलो वनप्रवेशे कृतबुद्धिनिश्चयः ।
स राघवः प्रेक्ष्य सुमन्त्र मब्रवी "न्निवेदयस्वागमनं नृपाय मे ॥"

इति श्रीमदयोध्याकाण्डे त्रयस्त्रिंशस्सर्गः ॥

## ॥ चतुस्त्रिंशस्सर्गः ॥

ततः कमलपत्राक्ष श्श्यामो निरुदरो महान् ।
उवाच रामस्तं सूतं 'पितु राख्याहि मा' मिति ॥ १

स रामप्रेषितः क्षिप्रं सन्तापकलुषेन्द्रियः ।
प्रविश्य नृपतिं सूतो निश्वसन्तं ददर्श ह ॥ २
उपरक्त मिवादित्यं भस्मच्छन्नमिवानलम् ।
तटाक मिव निस्तोय मपश्य ज्जगतीपतिम् ॥ ३
आलोक्य तु महाप्राज्ञः परमाकुलचेतसम् ।
राम मेवानुशोचन्तं सूतः प्राञ्जलिरासदत् ॥ ४
तं वर्धयित्वा राजानं पूर्वं सूतो जयाशिषा ।
भयविक्लबया वाचा मन्दया श्लक्ष्णमब्रवीत् ॥ ५
"अयं स पुरुषव्याघ्रो द्वारितिष्ठति ते सुतः ।
ब्राह्मणेभ्यो धनं दत्वा सर्वं चैवोपजीविनाम् ॥ ६
स त्वा पश्यतु भद्रं ते राम स्सत्यपराक्रमः ।
सर्वा न्सुहृद आपृच्छ्य त्वा मिदानीं दिदृक्षते ॥ ७
गमिष्यति महारण्यं तं पश्य जगतीपते! ।
वृतं राजगुणै स्सर्वै रादित्य मिव रश्मिभिः ॥" ८
स सत्यवादी धर्मात्मा गाम्भीर्यात्सागरोपमः ।
आकाश इव निष्पङ्को नरेन्द्रः प्रत्युवाच तम् ॥ ९
"सुमन्त्राऽनय मे दारान्ये केचि दिह मामकाः ।
दारैः परिवृत सर्वैर्द्रष्टु मिच्छामि धार्मिकम् ॥" १०
सोऽन्तः पुर मतीत्यैव स्त्रियस्तावाक्यमब्रवीत् ।
"आर्या! ह्वयति वो राजा गम्यतां तत्र माचिरम् ॥" ११
एव मुक्ता स्त्रिय स्सर्वा स्सुमन्त्रेण नृपाज्ञया ।
प्रचक्रमु स्तद्भवनं भर्तु राज्ञाय शासनम् ॥ १२

अर्धसप्तशता स्तास्तु प्रमदा स्ताम्रलोचनाः ।
कौसल्यां परिवार्याथ शनै र्जग्मुर्धृतव्रताः ॥ १३
आगतेषु च दारेषु समवेक्ष्य महीपतिः ।
उवाच राजा तं सूतं "सुमन्त्राऽऽनय मे सुतम् ॥" १४
स सूतो राम मादाय लक्ष्मणं मैथिलीं तदा ।
जगामाभिमुखस्तूर्णं सकाशं जगतीपतेः ॥ १५
स राजा पुत्र मायान्तं दृष्ट्वा दूरात्कृताञ्जलिम् ।
उत्पपातासनात्तूर्ण मार्तस्त्रीजनसंवृतः ॥ १६
सोऽभिदुद्राव वेगेन रामं दृष्ट्वा विशांपतिः ।
तमसंप्राप्य दुःखार्तः पपात भुवि मूर्छितः ॥ १७
तं रामोऽभ्यपतत्क्षिप्रं लक्ष्मणश्च महारथः ।
विसंज्ञ मिव दुःखेन सशोकं नृपति तदा ॥ १८
स्त्रीसहस्रनिनादश्च संजज्ञे राजवेश्मनि ।
'हाहारा' मेति सहसा भूषणध्वनिमूर्छितः ॥ १९
तं परिष्वज्य बाहुभ्यां तावुभौ रामलक्ष्मणौ ।
पर्यङ्के सीतया सार्धं रुदन्त स्समवेशयन् ॥ २०
अथ रामो मुहूर्तेन लब्धसंज्ञं महीपतिम् ।
उवाच प्राञ्जलि र्भूत्वा शोकार्णवपरिप्लुतम् ॥ २१
"आपृच्छे त्वां महाराज! सर्वेषामीश्वरोऽसि नः ।
प्रस्थितं दण्डकारण्यं पश्य त्वं कुशलेन माम् ॥ २२
लक्ष्मणं चानुजानीहि सीता चान्वेतु मां वनम् ।
कारणै र्बहुभि स्तथ्यै र्वार्यमाणौ न चेच्छतः ॥ २३

अनुजानीहि सर्वान्नश्शोकमुत्सृज्य मानद ! ।
लक्ष्मणं मांच सीतांच प्रजापतिरिव प्रजाः ॥" २४
प्रतीक्षमाण मव्यग्र मनुज्ञां जगतीपतेः ।
उवाच राजा सम्प्रेक्ष्य वनवासाय राघवम् ॥ २५
"अहं राघव ! कैकेय्या वरदानेन मोहितः ।
अयोध्याया स्त्वमेवाद्य भव राजा निगृह्यमाम् ॥" २६
एव मुक्तो नृपतिना रामो धर्मभृतां वरः ।
प्रत्युवाचाञ्जलिं कृत्वा पितरं वाक्यकोविदः ॥ २७
"भवान्वर्षसहस्राय पृथिव्या नृपते ! पतिः ।
अहं त्वरण्ये वत्स्यामि न मे कार्यं त्वयाऽनृतम् ॥ २८
नवपञ्च च वर्षाणि वनवासे विहृत्यते ।
पुनःपादौ ग्रहीष्यामि प्रतिज्ञान्ते नराधिप ! ॥" २९
रुदन्नार्तः प्रियं पुत्रं सत्यपाशेन संयतः ।
कैकेय्या चोद्यमान स्तु मिथो राजा तमब्रवीत् ॥ ३०
"श्रेयसे वृद्धये तात ! पुनरागमनाय च ।
गच्छस्वारिष्ट मव्यग्रः पन्थान मकुतो भयम् ॥ ३१
न हि सत्यात्मन स्तात ! धर्माभिमनसस्तव ।
विनिवर्तयितुं बुद्धिश्शक्यते रघुनन्दन ! ॥ ३२
अद्य त्विदानीं रजनीं पुत्र ! मागच्छ सर्वथा ।
एकाहदर्शनेनापि साधुतावच्चराम्यहम् ॥ ३३
मातरं मां च सम्पश्यन्वसेमामद्यशर्वरीम् ।
तर्पित स्सर्वकामै स्त्वं श्वः काले साधयिष्यसि ॥ ३४

दुष्करं क्रियते पुत्र! सर्वथा राघव त्वया ।
मत्प्रियार्थं प्रियां स्त्यक्त्वा यद्यासि विजनं वनम् ॥ ३५
नचैतन्मे प्रियं पुत्र! शपे सत्येन राघव! ।
छन्नया चलित स्त्वस्मि स्त्रिया छन्नाग्निकल्पया ॥ ३६
वञ्चना यातु लब्धा मे तां त्वं निस्तर्तु मिच्छसि ।
अनया वृत्तसादिन्या कैकेय्याऽभिप्रचोदितः ॥ ३७
नचैतदाश्चर्यतमं यस्त्वं ज्येष्ठस्सुतो मम ।
अपानृतकथं पुत्र! पितरं कर्तु मिच्छसि ॥" ३८
अथ राम स्तथा श्रुत्वा पितुरार्तस्य भाषितम् ।
लक्ष्मणेन सहभ्रात्रा दीनो वचनमब्रवीत् ॥ ३९
"प्राप्स्यामि यानद्य गुणान्कोमे श्वस्तान्प्रदास्यति ।
अप्रक्रमणमे वात स्सर्वकामै रहं वृणे ॥ ४०
इयं सराष्ट्रा सजना धनधान्यसमाकुला ।
मया विसृष्टा वसुधा भरताय प्रदीयताम् ॥ ४१
वनवासकृता बुद्धिर्नच मेऽद्य चलिष्यति ।
यस्तुष्टेन वरोदत्तः कैकेय्यै वरद! त्वया ॥ ४२
दीयतां निखिलेनैव सत्यस्त्वंभवपार्थिव! ।
अहं निदेशं भवतो यथोक्त मनुपालयन् ॥ ४३
चतुर्दश समावत्स्ये वने वनचरै स्सह ।
मा विमर्शो पशुपती भरताय प्रदीयताम् ॥ ४४
न हि मे कांक्षितं राज्यं सुखमात्मनि वा प्रियम् ।
यथानिदेशं कर्तुं वै तवैव रघुनन्दन! ॥ ४५

अपगच्छतु ते दुःखं माभूर्बाष्पपरिप्लुतः ।
न हि क्षुभ्यति दुर्धर्ष स्समुद्र स्सरितांपतिः ॥ ४६
नैवाहं राज्यमिच्छामि न सुखं नच मैथिलीम् ।
नैव सर्वानिमान्कामान्न स्वर्गं नैव जीवितम् ॥ ४७
त्वा महं सत्यमिच्छामि नानृतं पुरुषर्षभ! ।
प्रत्यक्षं तव सत्येन सुकृतेन च ते शपे ॥ ४८
नच शक्यं मया तात! स्थातुं क्षणमपि प्रभो! ।
नशोकं धारयस्वेमं नहि मेऽस्ति विपर्ययः ॥ ४९
अर्थितो ह्यस्मि कैकेय्या वनं गच्छेति राघव! ।
मया चोक्तं व्रजामीति तत्सत्य मनुपालये ॥ ५०
माचोत्कंठां कृथा देव! वने रंस्यामहे वयम् ।
प्रशान्तहरिणाकीर्णे नानाशकुनिनादिते ॥ ५१
पिता हि दैवतं तात! देवताना मपि स्मृतम् ।
तस्माद्दैवतमित्येव करिष्यामि पितुर्वचः ॥ ५२
चतुर्दशसु वर्षेषु गतेषु नरसत्तम! ।
पुनर्द्रक्ष्यासि मां प्राप्तं सन्तापोऽयं विमुच्यताम् ॥ ५३
येन संस्तम्भनीयोऽयं सर्वोबाष्पगळो जनः ।
सत्वं पुरुषशार्दूल! किमर्थं विक्रियां गतः ॥ ५४
पुरंच राष्ट्रंच महीच केवला मया निसृष्टा भरताय दीयताम् ।
अहं निदेशं भवतोऽनुपालयन्वनं गमिष्यामि चिराय सेवितुम् ॥
मया निसृष्टां भरतो मही मिमां सशैलषण्डां सपुरां सकाननाम् ।
शिवां सुसीमा मनुशास्तु केवलं त्वयायदुक्तं नृपते! तथाऽस्तु तत् ॥

नमे तथा पार्थिव! धीयते मनो महत्सु कामेषु नचात्मनः प्रिये ।
यथा निदेशे तव शिष्टसम्मते व्यपैतु दुःखं तवमत्कृतेऽनघ ॥ ५७
तदद्यनैवानघ! राज्य मव्ययं नसर्वकामा न्नसुखं न मैथिलीम् ।
नजीवितं त्वा मनृतेन योजयन्वृणीय सत्यं व्रतमस्तु ते तथा ॥
फलानि मूलानि च भक्षयन्वने गिरींश्च पश्यन्सरितस्सरांसि च ।
वनं प्रविश्यैव विचित्रपादपं सुखी भविष्यामि तवास्तु निर्वृतिः ॥"
एवं सराजा व्यसनाभिपन्न श्शोकेन दुःखेन च ताम्यमानः ।
आलिङ्ग्य पुत्रं सुविनष्टसंज्ञो मोहं गतो नैव चिचेष्ट किंचित् ॥
देव्यस्तत स्संरुरुदु स्समेता स्तां वर्जयित्वा नरदेवपत्नीम् ।
रुदन्सुमन्त्रोऽपि जगाम मूर्छां हाहाकृतं तत्र बभूव सर्वम् ॥ ६१

इति श्रीमदयो याकाण्डे चतुस्त्रिंशस्सर्ग. ॥

॥ पञ्चत्रिंशस्सर्गः ॥

ततो निर्धूय सहसा शिरो निश्श्वस्य चासकृत् ।
पाणौ पाणिं विनिष्पिष्य दन्तान्कटकटाप्य च ॥ १
लोचने कोपसंरक्ते वर्णं पूर्वोचितं जहत् ।
कोपाभिभूत स्सहसा सन्तापमशुभं गतः ॥ २
मनस्समीक्षमाणश्च सूतो दशरथस्य सः ।
कम्पयन्निव कैकेय्या हृदयं वाक्छरैश्शितैः ॥ ३
वाक्यवज्रै रनुपमै र्निर्भिन्दन्निव चाशुगैः ।
कैकेय्या स्सर्वमर्माणि सुमन्त्रः प्रत्यभाषत ॥ ४

"यस्या स्तव पतिस्त्यक्तो राजा दशरथ स्स्वयम् ।
भर्ता सर्वस्य जगतस्स्थावरस्य चरस्य च ॥ ५
नह्यकार्यतमं किञ्चित्तव देवीह विद्यते ।
पतिघ्नीं त्वा महं मन्ये कुलघ्नी मपि चान्ततः ॥ ६
यन्महेन्द्र मिवाजय्यं दुष्प्रकम्प्य मिवाचलम् ।
महोदधिमिवाक्षोभ्यं सन्तापयासि कर्मभिः ॥ ७
मावमंस्था दशरथं भर्तारं वरदं पतिम् ।
भर्तुरिच्छाहि नारीणां पुत्रकोट्या विशिष्यते ॥ ८
यथा वयोहि राज्यानि प्राप्नुवन्ति नृपक्षये ।
इक्ष्वाकुकुलनाथेऽस्मिंस्तल्लोपयितु मिच्छसि ॥ ९
राजा भवतु ते पुत्रो भरत श्शास्तु मेदिनीम् ।
वयं तत्र गमिष्यामो यत्र रामो गमिष्यति ॥ १०
नहि ते विषये कश्चि द्ब्राह्मणो वस्तु मर्हति ।
तादृशं त्व ममर्याद मद्य कर्म चिकीर्षसि ॥ ११
आश्चर्य मिव पश्यामि यस्यास्ते वृत्त मीदृशम् ।
आचरन्त्या न विवृता सद्यो भवति मेदिनी ॥ १२
महाब्रह्मर्षि जुष्टा वा ज्वलन्तो भीमदर्शनाः ।
धिग्वाग्दण्डा न हिंसन्ति राम प्रव्राजने स्थिताम् ॥ १३
आम्रं छित्वा कुठारेण निम्बं परिचरेत्तु यः ।
यश्चैनं पयसा सिञ्चेन्नैवास्य मधुरो भवेत् ॥ १४
अभिजातं हि ते मन्ये यथा मातु स्तथैवच ।
नहि निम्बात्स्रवेत्क्षौद्रं लोके निगदितं वचः ॥ १५

तव मातु रसद्ग्राह ।वद्मः पूर्व यथाश्रुतम् ।
पितुस्ते वरदः कश्चिद्ददौ वर मनुत्तमम् ॥ १६
सर्वभूतरुतं तस्मात्संजज्ञे वसुधाधिपः ।
तेन तिर्यग्गतानां च भूतानां विदितं वचः ॥ १७
ततो जृम्भस्य शयने विरुता द्भूरिवर्चसः ।
पितुस्ते विदितो भाव स्स तत्र बहुधाऽहसत् ॥ १८
तव ते जननी क्रुद्धा मृत्युपाश मभीप्सती ।
हासं ते नृपते! सौम्य! जिज्ञासामीति चाब्रवीत् ॥ १९
नृपश्चोवाच तां देवीं देवि! शंसामि ते यदि ।
ततो मे मरणं सद्यो भविष्यति न संशयः ॥ २०
माता ते पितरं देवि! ततः केकय मब्रवीत् ।
शंस मे जीव वा! मावा? न मा मपहसिष्यसि ॥ २१
प्रियया च तथोक्तस्सन् केकयः पृथिवीपतिः ।
तस्मै तं वरदायार्थं कथयामास तत्त्वतः ॥ २२
तत स्स वरद स्साधू राजानं प्रत्यभाषत ।
म्रियतां ध्वंसतां चेयं माकृथास्त्वं महीपते! ॥ २३
स तच्छ्रुत्वा वच स्तस्य प्रसन्नमनसो नृपः ।
मातरं ते निरस्याशु विजहार कुबेरवत् ॥ २४
तथा त्वमपि राजानं दुर्जनाचरिते पथि ।
असद्ग्राह मिमं मोहा त्कुरुषे पापदर्शिनि! ॥ २५
सत्यश्चाद्य प्रवादोऽयं लौकिकः प्रतिभातिमा !
पितॄन्समनुजायन्ते नरा मातर मङ्गनाः ॥ २६

नैवं भव गृहाणेदं यदाह वसुधाधिपः ।
भर्तु रिच्छा मुपास्वेह जनस्यास्य गति र्भव ॥ २७
मा त्वं प्रोत्साहिता पापै र्देवराजसमप्रभम् ।
भर्तारं लोकभर्तार मसद्धर्म मुपादधाः ॥ २८
नहि मिथ्या प्रतिज्ञातं करिष्यति तवानघः ।
श्रीमान्दशरथो राजा देवि! राजीवलोचनः ॥ २९
ज्येष्ठो वदान्यः कर्मण्य स्स्वधर्मपरिरक्षिता ।
रक्षिता जीवलोकस्य बली रामोऽभिषिच्यताम् ॥ ३०
परिवादोहि ते देवि! महान्लोके चरिष्यति ।
यदि रामो वनं याति विहाय पितरं नृपम् ॥ ३१
स राज्यं राघवः पातु भव त्वं विगतज्वरा ।
नहि ते राघवा दन्यः क्षमः पुरवरे वसेत् ॥ ३२
रामे हि यौवराज्यस्थे राजा दशरथो वनम् ।
प्रवेक्ष्यति महेष्वासः पूर्ववृत्त मनुस्मरन् ॥" ३३
इति सान्त्वै श्च तीक्ष्णैश्च कैकेयीं राजसंसदि ।
सुमन्त्रः क्षोभयामास भूय एव कृताञ्जलिः ॥ ३४
नैव सा क्षुभ्यते देवी न च स्म परिदूयते ।
नचास्य मुखवर्णस्य लक्ष्यते विक्रिया तदा ॥ ३५

इति श्रीमदयोध्याकाण्डे पञ्चत्रिंशस्सर्गः ॥

## ॥ षट्त्रिंशस्सर्गः ॥

तत स्सुमन्त्र मैक्ष्वाकः पीडितोऽत्र प्रतिज्ञया ।
स बाष्प मतिनिश्वस्य जगादेदं पुनः पुनः ॥ १

"सूत! रत्नसुसम्पूर्णा चतुर्विधबला चमूः ।
राघवस्यानुयात्रार्थं क्षिप्रं प्रतिविधीयताम् ॥ २
रूपाजीवाश्च वादिन्यो वणिजश्च महाधनाः ।
शोभयन्तु कुमारस्य वाहिनीं सुप्रसारिताः ॥ ३
ये चैन मुपजीवन्ति रमते यैश्च वीर्यतः ।
तेषां बहुविधं दत्वा तानप्यत्र नियोजय ॥ ४
आयुधानि च मुख्यानि नागरा श्शकटानि च ।
अनुगच्छन्तु काकुत्स्थं व्याधा श्चारण्यगोचराः ॥ ५
निघ्नन्मृगान कुञ्जरांश्च पिबंश्चारण्यकं मधु ।
नदीश्च विविधाः पश्यन्नराज्यं संस्मरिष्यति ॥ ६
धान्यकोशश्च यः कश्चिद्धनकोशश्च मामकः ।
तौ राममनुगच्छेतां वसन्तं निर्जने वने ॥ ७
यजन्पुण्येषु देशेषु विसृजं श्चाप्तदक्षिणाः ।
ऋषिभिश्च समागम्य प्रवत्स्यति सुखं वने ॥ ८
भरतश्च महाबाहु रयोध्यां पालयिष्यति ।
सर्वकामै स्सह श्रीमा न्राम स्संसाध्यता"मिति ॥ ९
एवं ब्रुवति काकुत्स्थे! कैकेय्या भय मागतम् ।
मुखं चाप्यगमच्छोषं स्वरश्चापि न्यरुध्यत ॥ १०
सा विषण्णा च सन्त्रस्ता मुखेन परिशुष्यता ।
राजानमेवाभिमुखी कैकेयी वाक्य मब्रवीत् ॥ ११
"राज्यं गतजनं साधो! पीतमण्डां सुरामिव ।
निरास्वाद्यतमं शून्यं भरतो नाभिपत्स्यते ॥" १२

कैकेय्यां मुक्तलज्जायां वदन्त्या मतिदारुणम् ।
राजा दशरथो वाक्यमुवाचाऽयतलोचनाम् ॥ १३
" वहन्तं किं तुदसि मां नियुज्यधुरि माऽहिते ।
अनार्ये ! कृत्य मारब्धं किं न पूर्व मुपारुधः ॥" १४
तस्यैत त्क्रोधसंयुक्त मुक्तं श्रुत्वा वराङ्गना ।
कैकेयी द्विगुणं क्रुद्धा राजान मिद मब्रवीत् ॥ १५
" तवैव वंशे सगरो ज्येष्ठं पुत्र मुपारुधत् ।
असमञ्ज इति ख्यातं तथाऽय गन्तु मर्हति ॥" १६
एव मुक्तो धिगित्येव राजा दशरथोऽब्रवीत् ।
व्रीलितश्च जन स्सर्व स्सा च तं नावबुध्यत ॥ १७
तत्र वृद्धो महामात्रस्सिद्धार्थो नाम नामतः ।
शुचि र्बहुमतो राज्ञः कैकेयी मिद मब्रवीत् ॥ १८
" असमञ्जो गृहीत्वा तु क्रीडतः पथि दारकान् ।
सरय्वाः प्राक्षिपन्नप्सु रमते तेन दुर्मतिः ॥ १९
तं दृष्ट्वा नागरा स्सर्वे क्रुद्धा राजान मब्रुवन् ।
' असमञ्जं वृणीष्वैक मस्मान्वाराष्ट्रवर्धन ! ॥' २०
तानुवाच ततो राजा ' किन्निमित्तमिदं भयम् ।'
ताश्चापि राज्ञा सम्पृष्टा वाक्यं प्रकृतयोऽब्रुवन् ॥ २१
' क्रीडतस्त्वेष नः पुत्रान्बालानुद्भ्रान्तचेतनः ।
सरय्वां प्रक्षिपन्मौर्ख्या दतुलां प्रीति मश्नुते ॥' २२
सतासां वचनं श्रुत्वा प्रकृतीनां नराधिपः ।
तं तत्याजाहितं पुत्रं तेषां प्रियचिकीर्षया ॥ २३

तं यानं शीघ्र मारोप्य सभार्यं सपरिच्छदम् ।
'यावज्जीवं विवास्योऽय' मिति स्वानन्वशात्पिता ॥ २४
सफालफिटकं गृह्य गिरिदुर्गाण्यमोचयन् ।
दिशस्सर्वास्त्वनुचरन्स यथा पापकर्मकृत् ॥ २५
इत्येवमत्यजद्राजा सगरो वै सुधार्मिकः ।
रामः किमकरोत्पापं येनैव मुपरुध्यते ॥ २६
नहि कंचन पश्यामो राघवस्यागुणं वयम् ।
दुर्लभो ह्यस्य निरय श्शशाङ्कस्येव कल्मषम् ॥ २७
अथवा देवि! दोषं त्वं कञ्चित्पश्यसि राघवे ।
तमद्य ब्रूहि तत्त्वेन ततो रामो विवास्यताम् ॥ २८
अदुष्टस्य हि सन्त्यागः सत्पथे निरतस्य च ।
निर्दहेदपि शक्रस्य द्युतिं धर्मनिरोधनात् ॥ २९
तदलं देवि! रामस्य श्रिया विहतया त्वया ।
लोकतोऽपि हि ते रक्ष्यः परिवादश्शुभानने! ॥" ३०
श्रुत्वातु सिद्धार्थवचो राजा श्रान्ततरस्वनः ।
शोकोपहतया वाचा कैकेयीमिदमब्रवीत् ॥ ३१
"एतद्वचो नेच्छसि पापवृत्ते! हितं न जानासि ममाऽत्मनोवा ।
आस्थाय मार्गं कृपणं कुचेष्टा चेष्टा हि ते साधुपथा दपेता ॥ ३२
अनुव्रजिष्याम्यहमद्य रामं राज्यं परित्यज्य सुखं धनं च ।
सहैव राज्ञा भरतेन च त्वं यथासुखं भुङ्क्ष्व चिराय राज्यम् ॥"

इति श्रीमदयोध्याकाण्डे षट्त्रिंशस्सर्गः ॥

## ॥ सप्तत्रिंशस्सर्गः ॥

महामात्र वचश्श्रुत्वा रामो दशरथं तदा ।
अभ्यभाषत वाक्यन्तु विनयज्ञो विनीतवत् ॥ १
" त्यक्तभोगस्य मे राज! न्वने वन्येन जीवतः ।
किङ्कार्य मनुयात्रेण त्यक्तसङ्गस्य सर्वतः ॥ २
योहि दत्त्वा द्विपश्रेष्ठं कक्ष्यायां कुरुते मनः ।
रज्जुस्नेहेन किं तस्य त्यजतः कुञ्जरोत्तमम् ॥ ३
तथा मम सतां श्रेष्ठ! किं ध्वजिन्या जगत्पते! ।
सर्वाण्येवानुजानामि चीराण्येवाऽनयन्तु मे ॥ ४
खनित्रपिटके चोभे समानयत गच्छतः ।
चतुर्दश वने वासं वर्षाणि वसतो मम ॥" ५
अथ चीराणि कैकेयी स्वयमाहृत्य राघवम् ।
उवाच 'परिध' त्स्वेति जनौघे निरपत्रपा ॥ ६
सचीरे पुरुषव्याघ्रः कैकेय्याः प्रतिगृह्यते ।
सूक्ष्मवस्त्रमवक्षिप्य मुनिवस्त्राण्यवस्तह ॥ ७
लक्ष्मणश्चापि तत्रैव विहाय वसने शुभे ।
तापसाच्छादने चैव जग्राह पितुरग्रतः ॥ ८
अथाऽऽत्मपरिधानार्थं सीता कौशेयवासिनी ।
समीक्ष्य चीरं संत्रस्ता पृषती वागुरा मिव ॥ ९
साप्यपत्र ाणेव प्रतिगृह्य च दुर्मनाः ।
कैकेयी कुशचीरे ते जानकी शुभलक्षणा ॥ १०

अश्रुसम्पूर्णनेत्रा च धर्मज्ञा धर्मदर्शिनी ।
गन्धर्वराजप्रतिमं भर्तार मिदमब्रवीत् ॥ ११
"कथंनु चीरं बध्नन्ति मुनयो वनवासिनः ।"
इति ह्यकुशला सीता सा मुमोह मुहुर्मुहुः ॥ १२
कृत्वा कण्ठे च सा चीर मेक मादाय पाणिना ।
तस्थौ ह्यकुशला तत्र व्रीळिता जनकात्मजा ॥ १३
तस्या स्तत्क्षिप्रमागम्य रामो धर्मभृतां वरः ।
चीरं बबन्ध सीतायाः कौशेयस्योपरि स्वयम् ॥ १४
रामं प्रेक्ष्य तु सीताया बध्नन्तं चीरमुत्तमम् ।
अन्तःपुरगता नार्यो मुमुचुर्वारिनेत्रजम् ॥ १५
ऊचु श्च परमायस्ता रामं ज्वलिततेजसम् ।
"वत्स! नैवं नियुक्तेयं वनवासे मनस्विनी ॥ १६
पितु र्वाक्यानुरोधेन गतस्य विजनं वनम् ।
तावद्दर्शनमस्या नस्सफलं भवतु प्रभो! ॥ १७
लक्ष्मणेन सहायेन वनं गच्छस्व पुत्रक! ।
नेय मर्हति कल्याणि वस्तुं तापसवद्वने ॥ १८
कुरु नो याचनां पुत्र! सीता तिष्ठतु भामिनी ।
धर्मनित्यस्स्वयं स्थातुं नहीदानीं त्व मिच्छसि ॥" १९
तासामेवं विधा वाच श्शृण्वन्दशरथात्मजः ।
बबंधैव तदाचीरं सीतया तुल्यशीलया ॥ २०
चीरे गृहीते तु तया समीक्ष्य नृपते र्गुरुः ।
निवार्य सीतां कैकेयीं वसिष्ठो वाक्यमब्रवीत् ॥ २१

"अतिप्रवृत्ते! दुर्मेधे! कैकेयि! कुलपांसनि!।
वञ्चयित्वा च राजानं नप्रमाणेऽवतिष्ठसे ॥ २२
नगन्तव्यं वनं देव्या सीतया शीलवर्जिते!।
अनुष्ठास्यति रामस्य सीताप्रकृतमासनम् ॥ २३
आत्मा हि दारा स्सर्वेषां दारसंग्रहवर्तिनाम्।
आत्मेय मिति रामस्य पालयिष्यति मेदिनीम् ॥ २४
अथयास्यति वैदेही वनं रामेण संगता।
वयमप्यनुयास्यामः पुरं चेदं गमिष्यति ॥ २५
अन्तपाला श्च यास्यन्ति सदारो यत्रराघवः।
सहोपजीव्यं राष्ट्रं च पुरंच सपरिच्छदम् ॥ २६
भरतश्च स शत्रुघ्न श्चीरवासा वनेचरः।
वने वसन्तं काकुत्स्थ मनुवत्स्यति पूर्वजम् ॥ २७
ततश्शून्यां गतजनां वसुधां पादपै स्सह।
त्वमेकाशाधि दुर्वृत्ता प्रजाना महिते स्थिता ॥ २८
नहि तद्भविता राष्ट्रं यत्र रामो नभूपतिः।
तद्वनं भविताराष्ट्रं यत्र रामो निवत्स्यति ॥ २९
नह्यदत्तां महीं पित्रा भरत श्शास्तु मर्हति।
त्वयि वा पुत्रवद्वस्तुं यदि जातो महीपतेः ॥ ३०
यद्यपि त्वं क्षितितलाद्गगनं चोत्पतिष्यसि।
पितृवंश चरित्रज्ञ स्सोऽन्यथा न करिष्यसि ॥ ३१
तत्त्वया पुत्रगर्धिन्या पुत्रस्य कृत मप्रियम्।
लोके हि सनविद्येत यो नराममनुव्रतः ॥ ३२

द्रक्ष्यस्यद्यैव कैकेयि! पशुव्याळमृगद्विजान् ।
गच्छत स्सह रामेण पादपांश्च तदुन्मुखान् ॥ ३३

अथोत्तमान्याभरणानि देवि; देहि स्नुषायै व्यपनीयचीरम् ।
नचीरमस्याः प्रविधीय" तेति न्यवारयत्तद्वसनं वसिष्ठः ॥ ३४

"एकस्य रामस्य वने निवासस्त्वया वृतः केकयराजपुत्रि ।
विभूषितेयं प्रतिकर्मनित्या वसत्वरण्ये सह राघवेण ॥ ३५

यानैश्च मुख्यैः परिचारकैश्च सुसंवृता गच्छतु राजपुत्रि ।
वस्त्रैश्च सर्वै स्सहितैर्विधानै र्नेयं वृता ते वरसम्प्रदाने ॥" ३६

तस्मिं स्तदा जल्पति विप्रमुख्ये गुरौ नृपस्याप्रतिमप्रभावे ।
नैवस्म सीता विनिवृत्तभावा प्रियस्य भर्तुः प्रतिकारकामा ॥ ३७

इति श्रीमदयोध्याकाण्डे सप्तत्रिंशस्सर्गः ॥

---

## ॥ अष्टत्रिंशस्सर्गः ॥

तस्यां चीरं वसानायां नाथवत्या मनाथवत् ।
प्रचुक्रोश जन स्सर्वो 'धित्त्वां दशरथं' त्विति ॥ १

तेन तत्र प्रणादेन दुःखित स्स महीपतिः ।
चिच्छेद जीविते श्रद्धां धर्मे यशसि चाऽत्मनः ॥ २

स निश्वस्योष्णमैक्ष्वाक स्तां भार्या मिद मब्रवीत् ।
"कैकेयि! कुशचीरेण न सीता गन्तु मर्हति ॥ ३

सुकुमारी च बाला च सततं च सुखोचिता ।
नेयं वनस्य योग्येति सत्य माह गुरुर्मम ॥ ४

इयं हि कस्याऽपकरोति किञ्चित्तपस्विनी राजवरस्य कन्या ।
या चीर मासाद्य जनस्य मध्ये स्थिता विसंज्ञा श्रमणीव काचित् ॥
चीराण्यपास्याज्जनकस्य कन्या नेयं प्रतिज्ञा मम दत्तपूर्वा ।
तथासुखं गच्छतु राजपुत्री वनं समग्रा सह सर्वरत्नैः ॥ ६
अजीवनार्हेण मया नृशंसा कृता प्रतिज्ञा नियमेनतावत् ।
त्वया हि बाल्यात्प्रतिपन्नमेतत्तन्मां दहे द्वेणु मिवाऽत्मपुष्पम् ॥
रामेण यदि ते पापे! किञ्चित्कृत मशोभनम् ।
अपकारः क इह ते वैदेह्या दर्शितोऽधमे! ॥ ८
मृगीवोत्फुल्लनयना मृदुशीला तपस्विनी ।
अपकारं कमिव ते करोति जनकात्मजा ॥ ९
ननु पर्याप्त मेकं ते पापे! रामविवासनम् ।
किं मेभिः कृपणै र्भूयः पातकै रपि ते कृतैः ॥ १०
प्रतिज्ञां मया तावत्त्वयोक्तं देवि! शृण्वता ।
रामं यदभिषेकाय तमिहाऽगत मब्रवीः ॥ ११
तत्त्वेतत्समतिक्रम्य निरयं गन्तु मिच्छसि ।
मैथिली मपि याहि त्वमीक्षे चीरवासिनीम् ॥" १२
इतीव राजा विलपन्महात्मा शोकस्य नान्तं स ददर्श किञ्चित् ।
भृशातुरत्वाच्च पपात भूमौ तेनैव पुत्रव्यसनेन मग्नः ॥ १३
एवं ब्रुवन्तं पितरं राम स्सम्प्रस्थितो वनम् ।
अवाक्छिरस मासीन मिदं वचन मब्रवीत् ॥ १४
"इयं धार्मिक! कौसल्या मम माता यशस्विनी ।
वृद्धा चाक्षुद्रशीला च न च त्वां देव! गर्हते ॥ १५

मया विहीनां वरद! प्रपन्नां शोकसागरम् ।
अदृष्टपूर्वव्यसनां भूय स्सम्मन्तु मर्हसि ॥ १६
पुत्रशोकं यथा नर्छत्त्वया पूज्येन पूजिता ।
मां हि संचिन्तयन्ती सा त्वयि जीवेत्तपस्विनी ॥ १७
इमां महेन्द्रोपमजातगर्धिनीं तथा विधातुं जननीं ममार्हसि ।
यथा वनस्थे मयि शोककर्शिता न जीवितं न्यस्य यमक्षयं व्रजेत् ॥”

इति श्रीमदयोध्याकाण्डे अष्टत्रिंशस्सर्गः ॥



## ॥ एकोनचत्वारिंशस्सर्गः ॥

रामस्य तु वच श्श्रुत्वा मुनिवेषधरं च तम् ।
समीक्ष्य सह भार्याभी राजा विगतचेतनः ॥ १
नैनं दुःखेन संतप्तः प्रत्यवैक्षत राघवम् ।
नचैन मभिसम्प्रेक्ष्य प्रत्यभाषत दुर्मनाः ॥ २
स मुहूर्त मिवाऽसंज्ञो दुःखितश्च महीपतिः ।
विललाप महाबाहू राममेवानुचिन्तयन् ॥ ३
‘मन्ये खलु मया पूर्वं विवत्सा बहवः कृताः ।
प्राणिनो हिंसितावाऽपि तस्मा दिद मुपस्थितम् ॥ ४
न त्वेवानागते काले देहा च्च्यवति जीवितम् ।
कैकेय्या क्लिश्यमानस्य मृत्युर्मम नविद्यते ॥ ५
योऽहं पावकसङ्काशं पश्यामि पुरतस्स्थितम् ।
विहाय वसने सूक्ष्मे तापसाच्छाद मात्मजम् ॥ ६

एकस्याः खलु कैकेय्याः कृतेयं क्लिश्यते जनः ।
स्वार्थे प्रयतमानाया स्संश्रित्य निकृतिं त्विमाम् ॥' ७
एव मुक्त्वा तु वचनं बाष्पेण विहितेक्षणः ।
"रामे"ति सकृदेवोक्त्वा व्याहर्तुं न शशाक ह ॥ ८
संज्ञांतु प्रतिलभ्यैव मुहूर्तात्स महीपतिः ।
नेत्राभ्या मश्रुपूर्णाभ्यां सुमन्त्र मिद मब्रवीत् ॥ ९
"औपवाह्यं रथं युक्त्वा त्व मायाहि हयोत्तमैः ।
प्रापयैनं महाभागमितो जनपदात्परम् ॥ १०
एवं मन्ये गुणवतां गुणानां फल मुच्यते ।
पित्रामात्रा चयत्साधु वीरो निर्वास्यते वनम् ॥" ११
राज्ञो वचन माज्ञाय सुमन्त्र श्शीघ्रविक्रमः ।
योजयित्वाऽऽययौ तत्र रथ मश्वैरलङ्कृतम् ॥ १२
तं रथं राजपुत्राय सूतः कनकभूषितम् ।
आचचक्षेऽञ्जलिं कृत्वा युक्तं परमवाजिभिः ॥ १३
राजा सत्वर माहूय व्यापृतं वित्तसंचये ।
उवाच देशकालज्ञं निश्चितं सर्वत श्शुचिम् ॥ १४
"वासांसि च महार्हाणि भूषणानि वराणि च ।
वर्षाण्येतानि संख्याय वैदेह्याः क्षिप्र मानय ॥" १५
नरेन्द्रेणैव मुक्तस्तु गत्वा शोकगृहं ततः ।
प्रायच्छत्सर्व माहृत्य सीतायै सम मेव तत् ॥ १६
सा सुजाता सुजातानि वैदेही प्रस्थितावनम् ।
भूषयामास गात्राणि तै र्विचित्रै विभूषणैः ॥ १७

व्यराजयत वैदेही वेश्म तत्सुविभूषिता ।
उद्यतोंऽशुमतः काले खं प्रभेव विवस्वतः ॥ १८
तां भुजाभ्यां परिष्वज्य श्वश्रूर्वचन मब्रवीत् ।
अनाचरन्ती कृपणं मूर्ध्न्युपाघ्राय मैथिलीम् ॥ १९
"असत्यस्सर्वलोकेऽस्मि न्सततं सत्कृताः प्रियैः ।
भर्तारं नानुमन्यन्ते विनिपातगतं स्त्रियः ॥ २०
एष स्वभावो नारीणा मनुभूय पुरा सुखम् ।
अल्पामप्यापदं प्राप्य दुष्यन्ति प्रजहत्यपि ॥ २१
असत्यशीला विकृता दुर्ग्राह्यहृदया स्सदा ।
युवत्यः पापसङ्कल्पाः क्षणमात्रा द्विरागिणः ॥ २२
न कुलं न कृतं विद्यां न दत्तं नापि संग्रहम् ।
स्त्रीणां गृह्णाति हृदय मनित्यहृदया हि ताः ॥ २३
साध्वीनां हि स्थितानां तु शीले सत्ये श्रुते शमे ।
स्त्रीणां पवित्रं परमं पति रेको विशिष्यते ॥ २४
स त्वया नावमन्तव्यः पुत्त्रः प्रव्राजितो मम ।
तव दैवत मस्त्वेष निर्धन स्सधनोऽपि वा ॥" २५
विज्ञाय वचनं सीता तस्या धर्मार्थसंहितम् ।
कृताञ्जलिरुवाचेदं श्वश्रूमभिमुखेस्थिताम् ॥ २६
"करिष्ये सर्व मेवाहमार्या यदनुशास्तिमाम् ।
अभिज्ञाऽस्मि यथा भर्तु र्वर्तितव्यं श्रुतं च मे ॥ २७
नमामसज्जने नार्या समानयितु मर्हति ।
धर्मा द्विचलितुं नाहमलं चन्द्रादिव प्रभा ॥ २८

नातन्त्री वाद्यते वीणा नाचक्रो वर्तते रथः ।
नापतिस्सुखमेधेत या स्यादपि शतात्मजा ॥ २९
मितं ददाति हि पिता मितं माता मितं सुतः ।
अमितस्य हि दातारं भर्तारं कानपूजयेत् ॥ ३०
साऽह मेवंगता श्रेष्ठा श्रुतधर्मपरावरा ।
आर्ये! किमवमन्येऽहं स्त्रीणां भर्ता हि दैवतम् ॥" ३१
सीताया वचनं श्रुत्वा कौसल्या हृदयंगमम् ।
शुद्धसत्त्वा मुमोचाश्रु सहसा दुःखहर्षजम् ॥ ३२
तां प्राञ्जलि रभिक्रम्य मातृमध्येऽति सत्कृताम् ।
रामः परमधर्मज्ञो मातरं वाक्यमब्रवीत् ॥ ३३
"अम्ब! मा दुःखिता भूस्त्वं पश्य त्वं पितरं मम ।
क्षयो हि वनवासस्य क्षिप्रमेव भविष्यति ॥ ३४
सुप्तायास्ते गमिष्यन्ति नववर्षाणि पञ्च च ।
सा समग्र मिह प्राप्तं मां द्रक्ष्यसि सुहृद्वृतम् ॥" ३५
एतावदभिनीतार्थ मुक्त्वा सजननीं वचः ।
त्रयश्शतशतार्धाश्च ददर्शावेक्ष्य मातरः ॥ ३६
ताश्चापि सतथैवार्ता मातॄ र्दशरथात्मजः ।
धर्मयुक्तमिदं वाक्यं निजगाद कृताञ्जलिः ॥ ३७
"संवासात्परुषं किंचिदज्ञानाद्वाऽपि यत्कृतम् ।
तन्मे समनुजानीत सर्वाश्चामन्त्रयामि वः ॥" ३८
वचनं राघवस्यैतत् धर्मयुक्तं समाहितम् ।
शुश्रुवु स्ताः स्त्रिय स्सर्वा श्शोकोपहृतचेतसः ॥ ३९

जज्ञेऽथ तासां सन्नादः क्रौञ्चीना मिव निस्वनः ।
मानवेन्द्रस्य भार्याणा मेवं वदति राघवे ॥ ४०
मुरजपणवमेघघोषवद्दशरथवेश्म बभूव यत्पुरा ।
विलपितपरिदेवनाकुलं व्यसनगतं तदभूत्सुदुःखितम् ॥ ४१

॥ इति श्रीमदयोध्याकाण्डे एकोनचत्वारिंशस्सर्गः ॥

## ॥ चत्वारिंशस्सर्गः ॥

अथ रामश्च सीताच लक्ष्मणश्च कृताञ्जलिः ।
उपसंगृह्य राजानं चक्रुर्दीनाः प्रदक्षिणम् ॥ १
[ततस्सुमित्रां कैकेयी मभिवाद्य महायशाः ।
प्रयाणे कृतसङ्कल्पः पितुराज्ञा मनुस्मरन् ॥ २
अथ रामो महातेजा लक्ष्मणेन समं ययौ ।
वैदेहीं च पुरस्कृत्य पितुः पादावुपस्पृशन् ॥] ३
तं चापि समनुज्ञाप्य धर्मज्ञ स्सीतया सह ।
राघवश्शोकसम्मूढो जननीमभ्यवादयत् ॥ ४
अन्वक्षं लक्ष्मणो भ्रातुः कौसल्यामभ्यवादयत् ।
अथ मातु स्सुमित्राया जग्राह चरणौ पुनः ॥ ५
तं वन्दमानं रुदती माता सौमित्रि मब्रवीत् ।
" हितकामा महाबाहुं मूर्ध्न्युपाघ्राय लक्ष्मणम् ॥ ६
सृष्टस्त्वं वनवासाय स्वनुरक्तस्सुहृज्जने ।
रामे प्रमादं माकार्षीः पुत्र! भ्रातरि गच्छति ॥ ७

व्यसनी वा समृद्धोवा गतिरेषतवानघ! ।
एषलोके सतां धर्मो यज्ज्येष्ठवशगो भवेत् ॥ ८
इदं हि वृत्त मुचितं कुलस्यास्य सनातनम् ।
दानं दीक्षाच यज्ञेषु तनुत्यागो मृधेषु च ॥" ९
लक्ष्मणं त्वेव मुक्त्वा सा संसिद्धं प्रियराघवम् ।
सुमित्रा 'गच्छग'च्छेति पुनःपुनरुवाचतम् ॥ १०
"रामं दशरथं विद्धि मां विद्धि जनकात्मजाम् ।
अयोध्या मटवीं विद्धि गच्छ तात! यथासुखम् ॥"✓ ११
ततस्सुमन्त्रः काकुत्स्थं प्राञ्जलि र्वाक्यमब्रवीत् ।
विनीतो विनयज्ञ श्च मातलि र्वासवं यथा ॥ ✓ १२
"रथमारोह भद्रं ते राजपुत्र! महायशः! ।
क्षिप्रं त्वां प्रापयिष्यामि यत्र मां राम! वक्ष्यसि ॥ १३
चतुर्दश हि वर्षाणि वस्तव्यानि वने त्वया ।
तानुपक्रमितव्यानि यानि देव्या सुचोदितः ॥" १४
तं रथं सूर्यसङ्काशं सीता हृष्टेन चेतसा ।
आरुरोह वरारोहा कृत्वाऽलङ्कार मात्मनः ॥ १५
अथो ज्वलनसङ्काशं चामीकरविभूषितम् ।
तमारुरुहतु स्तूर्णं भ्रातरौ रामलक्ष्मणौ ॥ १६
वनवासं हि संख्याय वासांस्याभरणानि च ।
भर्तार मनुगच्छन्त्यै सीतायै श्वशुरो ददौ ॥ १७
तथैवाऽयुधजालानि भ्रातृभ्यां कवचानि च ।
रथोपस्थे प्रतिन्यस्य स चर्मकठिनं च तत् ॥ १८

सीतातृतीयानारूढान्दृष्ट्वा धृष्ट मचोदयत् ।
सुमन्त्रस्सम्मतानश्वान्वायुवेगसमान् जवे ॥ १९
प्रतियाते महारण्यं चिररात्राय राघवे ।
बभूव नगरे मूर्छा बलमूर्छा जनस्यच ॥ २०
तत्समाकुलसम्भ्रान्तं मत्तसंकुपितद्विपम् ।
हयशिञ्जितनिर्घोषं पुरमासीन्महास्वनम् ॥ २१
तत स्सबाल वृद्धा सा पुरी परमपीडिता ।
राममेवाभिदुद्राव घर्मार्ता सलिलं यथा ॥ २२
पार्श्वतः पृष्ठतश्चापि लम्बमाना स्तदुन्मुखाः ।
बाष्पपूर्णमुखास्सर्वे तमूचुर्भृशनिस्वनाः ॥ २३
"संयच्छ वाजिनां रश्मीन्सूत! याहि शनैश्शनैः ।
मुखं द्रक्ष्याम रामस्य दुर्दर्शं नो भविष्यति ॥ २४
आयसं हृदयं नूनं राममातुरसंशयम् ।
यद्देवगर्भप्रतिमे वनं याति नभिद्यते ॥ २५
कृतकृत्या हि वैदेही छायेवानुगता पतिम् ।"
न जहाति रता धर्मे मेरु मर्कप्रभा यथा ॥ २६
"अहो! लक्ष्मण! सिद्धार्थ स्सततं प्रियवादिनम् ।
भ्रातरं देवसङ्काशं यस्त्वं परिचरिष्यसि ॥ २७
महत्येषा हि ते सिद्धिरेष चाभ्युदयो महान् ।
एष स्वर्गस्य मार्गश्च यदेनमनुगच्छसि ॥" २८
एवं वदन्तस्ते सोढुं नशेकु र्बाष्पमागतम् ।
नरास्तमनुगच्छन्तः प्रियमिक्ष्वाकुनन्दनम् ॥ २९

अथ राजा वृतः स्त्रीभि र्दीनाभि र्दीनचेतनः ।
निर्जगाम 'प्रियं पुत्रं द्रक्ष्या' मीति ब्रुवन्गृहात् ॥ ३०
शुश्रुवे चाग्रतः स्त्रीणां रुदन्तीनां महास्वनः ।
यथा नादः करेणूनां बद्धे महति कुञ्जरे ॥ ३१
पिता हि राजा काकुत्स्थः श्रीमान् सन्नस्तदाऽभवत् ।
परिपूर्णश्शशी काले ग्रहेणोपप्लुतो यथा ॥ ३२
स च श्रीमानचिन्त्यात्मा रामो दशरथात्मजः ।
सूतं संचोदयामास 'त्वरितं वाह्यता' मिति ॥ ३३
रामो 'या' हीति तं सूतं 'तिष्ठे' ति स जनस्तदा ।
उभयं नाशकत्सूतः कर्तु मध्वनि चोदितः ॥ ३४
निर्गच्छति महाबाहौ रामे पौरजनाश्रुभिः ।
पतितै रभ्यवहितं प्रशशाम महीरजः ॥ ३५
रुदिताश्रुपरिद्यूनं हाहाकृतमचेतनम् ।
प्रयाणे राघवस्यासीत्पुरं परमपीडितम् ॥ ३६
सुस्राव नयनैः स्त्रीणामास्रमायाससम्भवम् ।
मीनसंक्षोभचलितै स्सलिलं पङ्कजै रिव ॥ ३७
दृष्ट्वातु नृपतिश्श्रीमानेकचित्तगतं पुरम् ।
निपपातैव दुःखेन हतमूल इव द्रुमः ॥ ३८
ततो हलहलाशब्दो जज्ञे रामस्य पृष्ठतः ।
नराणां प्रेक्ष्य राजानं सीदन्तं भृशदुःखितम् ॥ ३९
हा 'रा' मेति जनाः केचि 'द्राममा' तेति चापरे ।
अन्तः पुरं समृद्धं च क्रोशन्तः पर्यदेवयन् ॥ ४०

अन्वीक्षमाणो रामस्तु विषण्णं भ्रान्तचेतसम् ।
राजानं मातरं चैव ददर्शानुगतौ पथि ॥ ४१

स बद्ध इवपाशेन किशोरो मातरं यथा ।
धर्मपाशेन संक्षिप्तः प्रकाशं नाभ्युदैक्षत ॥ ४२

पदातिनौ च यानार्हावदुःखार्हौ सुखोचितौ ।
दृष्ट्वा संचोदयामास 'शीघ्रं या' हीति सारथिम् ॥ ४३

नहि तत्पुरुषव्याघ्रो दुःखदं दर्शनं पितुः ।
मातुश्च सहितुं शक्तस्तोत्रार्दित इव द्विपः ॥ ४४

प्रत्यगारामिवायान्ती वत्सला वत्सकारणात् ।
बद्धवत्सा यथा धेनू राममाताऽभ्यधावत ॥ ४५

तथा रुदन्तीं कौसल्यां रथं तमनुधावतीम् ।
क्रोशन्तीं 'राम रा' मेति 'हा सीते! लक्ष्मणे!' ति च ॥ ४६

रामलक्ष्मणसीतार्थं स्रवन्तीं वारि नेत्रजम् ।
असकृत्प्रैक्षत तदा नृत्यन्तीमिव मातरम् ॥ ४७

'तिष्ठे'ति राजा चुक्रोश 'याहि या' हीति राघवः ।
सुमन्त्रस्य बभूवात्मा चक्रयो रिव चान्तरा ॥ ४८

'नाश्रौष मिति राजान मुपालब्धोऽपि वक्ष्यसि ।
चिरं दुःखस्य पापिष्ठ' मिति रामस्तमब्रवीत् ॥ ४९

रामस्य स वचः कुर्वन्ननुज्ञाप्य च तं जनम् ।
व्रजतोऽपि हयान् शीघ्रं चोदयामास सारथिः ॥ ५०

न्यवर्तत जनो राज्ञो रामं कृत्वा प्रदक्षिणम् ।
मनसाप्यश्रुवेगैश्च न न्यवर्तत मानुषम् ॥ ५१

'यमिच्छेत्पुन रायान्तं नैनं दूर मनुव्रजेत् ।'
इत्यमात्या महाराज मूचुर्दशरथं वचः ॥ ५२
तेषां वच स्सर्वगुणोपपन्नं प्रस्विन्नगात्रः प्रविषण्णरूपः ।
निशम्य राजा कृपण स्सभार्यो व्यवस्थित स्तं सुत मीक्षमाणः ॥

इति श्रीमदयोध्याकाण्डे चत्वारिंशस्सर्गः ॥

## ॥ एकचत्वारिंशस्सर्गः ॥

तस्मिंस्तु पुरुषव्याघ्रे विनिर्याति कृताञ्जलौ ।
आर्तशब्दो हि संजज्ञे स्त्रीणा मन्तःपुरे महान् ॥ १
'अनाथस्य जनस्यास्य दुर्बलस्य तपस्विनः ।
यो गति श्शरणं चासी त्स नाथः क नु गच्छति ॥ २
न क्रुध्यत्यभिशस्तोऽपि क्रोधनीयानि वर्जयन् ।
क्रुद्धान्प्रसादयन्सर्वान्समदुःखः क गच्छति ॥ ३
कौसल्यां महातेजा यथा मातरि वर्तते ।
तथा यो वर्ततेऽस्मासु महात्मा क नु गच्छति ॥ ४
कैकेय्या क्लिश्यमानेन राज्ञा संचोदितो वनम् ।
परित्राता जनस्यास्य जगतः क नु गच्छति ॥ ५
अहो! निश्चेतनो राजा जीवलोकस्य संप्रियम् ।
धर्म्यं सत्यव्रतं रामं वनवासे प्रवत्स्यति ॥' ६
इति सर्वा महिष्यस्ता विवत्सा इव धेनवः ।
रुरुदुश्चैव दुःखार्ता स्सस्वरं च विचुक्रुशुः ॥ ७

स तमन्तःपुरे घोर मार्तशब्दं महीपतिः ।
पुत्रशोकाभिसंतप्तश्श्रुत्वा चासीत्सुदुःखितः ॥ ८
नाग्निहोत्राण्यहूयन्त नापचन्गृहमेधिनः ।
अकुर्वन्नप्रजाः कार्यं सूर्यश्चान्तरधीयत ॥ ९
व्यसृजन्कबळान्नागा गावो वत्सान्न पाययन् ।
पुत्रं प्रथमजं लब्ध्वा जननी नाभ्यनंदत ॥ १०
त्रिशंकु र्लोहितांग श्च बृहस्पतिबुधावपि ।
दारुणा स्सोम मभ्येत्य ग्रहा स्सर्व व्यवस्थिताः ॥ ११
नक्षत्राणि गतार्चींषि ग्रहाश्च गततेजसः
विशाखास्तु सधूमाश्च नभसि प्रचकाशिरे ॥ १२
काळिकानिलवेगेन महोदधिरिवोत्थितः ।
रामे वनं प्रव्रजिते नगरं प्रचचाल तत् ॥ १३
दिशः पर्याकुला स्सर्वास्तिमिरेणेव संवृताः ।
नग्रहो नापि नक्षत्रं प्रचकाशे न किंचन ॥ १४
अकस्मान्नागर स्सर्वो जनो दैन्यमुपागमत् ।
आहारे वा विहारे वा नकश्चिदकरोन्मनः ॥ १५
शोकपर्यायसन्तप्त स्सततं दीर्घ मुच्छ्वसन् ।
अयोध्यायां जन स्सर्व श्शुशोच जगतीपतिम् ॥ १६
बाष्पपर्याकुलमुखो राजमार्गगतो जनः ।
न हृष्टो लक्ष्यते कश्चि त्सर्वश्शोकपरायणः ॥ १७
नवाति पवनश्शीतो न शशी सौम्यदर्शनः ।
न सूर्यस्तपते लोकं सर्वं पर्याकुलं जगत् ॥ १८

अनर्थिन स्सुताः स्त्रीणां भर्तारो भ्रातर स्तथा ।
सर्वे सर्वं परित्यज्य राममेवान्वचिन्तयन् ॥ १९
ये तु रामस्य सुहृद स्सर्वे ते मूढचेतसः ।
शोकभारेण चाक्रान्ता श्शयनं न जहु स्तदा ॥ २०
ततस्त्वयोध्यारहिता महात्मना पुरन्दरेणेव मही सपर्वता ।
चचाल घोरं भयशोकपीडिता सनागयोधाश्वगणा ननाद च ॥ २१

इति श्रीमदयोध्याकाण्डे एकचत्वारिंशस्सर्गः ॥

## ॥ द्विचत्वारिंशस्सर्गः ॥

यावत्तु निर्यत स्तस्य रजोरूप मदृश्यत ।
नैवेक्ष्वाकुवरस्तावत्संजहाराऽऽत्मचक्षुषी ॥ १
यावद्राजा प्रियं पुत्रं पश्यत्यत्यन्तधार्मिकम् ।
तावद्व्यवर्धते वास्य धरण्यां पुत्रदर्शने ॥ २
नपश्यति रजोऽप्यस्य यदा रामस्य भूमिपः ।
तदाऽऽर्तश्च विषण्णश्च पपात धरणीतले ॥ ३
तस्य दक्षिण मन्वागा त्कौसल्या बाहु मङ्गना ।
वामं चास्यान्वगात्पार्श्वं कैकेयी भरतप्रिया ॥ ४
तां नयेन च सम्पन्नो धर्मेण विनयेन च ।
उवाच राजा कैकेयीं समीक्ष्य व्यथितेन्द्रियः ॥ ५
"कैकेयि! मामकाङ्गानि स्प्राक्षिस्त्वं दुष्टचारिणि! ।
न हि त्वां द्रष्टुमिच्छामि न भार्या न च बान्धवी ॥ ६

येचत्वामनुजीवन्ति नाहं तेषां न ते मम ।
केवलार्थपरांहित्वां त्यक्तधर्मां त्यजाम्यहम् ॥ ७
अगृह्णां यच्च ते पाणि मग्निं पर्यणयं च यत् ।
अनुजानामि तत्सर्वं मस्मिन्लोके परत्रच ॥ ८
भरतश्चेत्प्रतीतस्स्याद्राज्यं प्राप्येदमव्ययम् ।
यन्मे सदद्यात्पित्रर्थं मां मा तद्दत्तमागमत् ॥ ९
अथ रेणुसमुद्ध्वस्तं तमुत्थाप्य नराधिपम् ।
न्यवर्तत तदा देवी कौसल्या शोककर्शिता ॥ १०
हत्वेव ब्राह्मणं कामात्स्पृष्ट्वाऽग्निमिवपाणिना ।
अन्वतप्यत धर्मात्मा पुत्रं संचिन्त्य तापसम् ॥ ११
निवृत्यैव निवृत्यैव सीदतो रथवर्त्मसु ।
राज्ञो नातिबभौ रूपं ग्रस्तस्यांशुमतो यथा ॥ १२
विललाप च दुःखार्तः प्रियं पुत्र मनुस्मरन् ।
नगरान्तमनुप्राप्तं बुद्ध्वा पुत्र मथाब्रवीत् ॥ १३
"वाहनानां च मुख्यानां वहतां तं ममात्मजम् ।
पदानि पथि दृश्यन्ते समहात्मा नदृश्यते ॥ १४
यस्सुखेषूपधानेषु शेते चन्दनरूषितः ।
वीज्यमानो महार्हाभिः स्त्रीभिर्मम सुतोत्तमः ॥ १५
स नूनं क्वचिदेवाद्य वृक्षमूल मुपाश्रितः ।
काष्ठं वा यदिवाऽश्मान मुपधाय शयिष्यते ॥ १६
उत्थास्यति च मेदिन्याः कृपणः पांसुकुण्ठितः ।
विनिश्श्वसन्प्रस्रवणात्करेणूनामिवर्षभः ॥ १७

द्रक्ष्यन्ति नूनं पुरुषा दीर्घबाहुं वनेचराः ।
राममुत्थाय गच्छन्तं लोकनाथ मनाथवत् ॥ १८
सा नूनं जनकस्येष्टा सुता सुखसदोचिता ।
कण्टकाक्रमणाक्रान्ता [क्षुत्पिपासाऽश्रमोहिता ॥ १९
सीता च नियताहारा] वनमद्य गमिष्यति ।
अनभिज्ञा वनानां सानूनं भयमुपैष्यति ॥ २०
श्वापदानर्दितं श्रुत्वा गम्भीरं रोमहर्षणम् ।"
"सकामा भव कैकेयि! विधवा राज्यमावस ॥ २१
नहितं पुरुषव्याघ्रं [सिंहोरस्कं महाभुजम् ।
पुण्डरीकविशालाक्षं] विना जीवितु मुत्सहे ॥" २२
इत्येवं विलपन् राजा जनौघेनाभिसंवृतः ।
अपस्नात इवारिष्टं प्रविवेश पुरोत्तमम् ॥ २३
शून्यचत्वरवेश्मान्तां संवृतापणदेवताम् ।
क्लान्तदुर्बलदुःखार्तां नात्याकीर्णमहापथाम् ॥ २४
तामवेक्ष्य पुरीं सर्वां राममेवानु चिन्तयन् ।
विलपन् प्राविशद्राजा गृहं सूर्यइवाम्बुदम् ॥ २५
महाह्रदमिवाक्षोभ्यं सुपर्णेन हृतोरगम् ।
रामेण रहितं वेश्म वैदेह्या लक्ष्मणेन च ॥ २६
अथगद्गदशब्दस्तु विलपन्मनुजाधिपः ।
उवाच मृदुमन्दार्थं वचनं दीनमस्वरम् ॥ २७
"कौसल्याया गृहं शीघ्रं राममातु र्नयन्तु माम् ।
नह्यन्यत्र ममाश्वासो हृदयस्य भविष्यति ॥" २८

इति ब्रुवन्तं राजान मनयन् द्वारदर्शिनः ।
कौसल्याया गृहं तत्र न्यवेश्यत विनीतवत् ॥ २९

ततस्तस्यप्रविष्टस्य कौसल्याया निवेशनम् ।
अधिरुह्यापि शयनं बभूव लुलितं मनः ॥ ३०

पुत्रद्वयविहीनं च स्नुषयापि विवर्जितम् ।
अपश्य द्भवनं राजा नष्टचन्द्रमिवाम्बरम् ॥ ३१

तच्च दृष्ट्वा महाराजो भुजमुद्यम्य वीर्यवान् ।
उच्चैस्स्वरेण चुक्रोश 'हा! राघव! जहासि माम् ॥' ३२

सुखिता बत तं कालं जीविष्यन्ति नरोत्तमाः ।
परिष्वजन्तो ये रामं द्रक्ष्यन्ति पुनरागतम् ॥ ३३

अथ रात्र्यां प्रपन्नायां काळरात्र्यामिवाऽत्मनः ।
अर्धरात्रे दशरथः कौसल्या मिदमब्रवीत् ॥ ३४

"रामं मेऽनुगता दृष्टिरद्यापि ननिवर्तते ।
न त्वा पश्यामि कौसल्ये! साधु मां पाणिना स्पृश ॥" ३५

तं राममेवानुविचिन्तयन्तं समीक्ष्य देवी शयने नरेन्द्रम् ।
उपोपविश्याधिक मार्तरूपा विनिश्श्वसन्ती विललापकृच्छ्रम् ॥ ३६

॥ इति श्रीमदयोध्याकाण्डे द्विचत्वारिंशस्सर्गः ॥

## ॥ त्रिचत्वारिंशस्सर्गः ॥

तत स्समीक्ष्य शयने सन्नं शोकेन पार्थिवम् ।
कौसल्या पुत्रशोकार्ता तमुवाच महीपतिम् ॥ १

"राघवे नरशार्दूले विषमुत्वा विजिह्मताम् ।
विचरिष्यति कैकेयी निर्मुक्तेव हि पन्नगी ॥ २
विवास्य रामं सुभगा लब्धकामा समाहिता ।
त्रासयिष्यति मां भूयो दुष्टाहिरिव वेश्मनि ॥ ३
अथ स्म नगरे रामश्चरन्भैक्षं गृहे वसेत् ।
कामकारो वरं दातु मपि दासं ममात्मजम् ॥ ४
पातयित्वा तु कैकेय्या रामं स्थानाद्यथेष्टतः ।
प्रदिष्टो रक्षसां भागः पर्वणीवाऽऽहिताग्निना ॥ ५
गजराजगति र्वीरो महाबाहुर्धनुर्धरः ।
वनमाविशते नूनं सभार्य स्सहलक्ष्मणः ॥ ६
वने त्वदृष्टदुःखानां कैकेय्याऽनुमते त्वया ।
त्यक्तानां वनवासाय कान्ववस्था भविष्यति ॥ ७
ते रत्नहीना स्तरुणाः फलकाले विवासिताः ।
कथं वत्स्यन्ति कृपणाः फलमूलैः कृताशनाः ॥ ८
अपीदानीं सकालस्स्यान्मम शोकक्षय श्शिवः ।
सभार्यं यत्सहभ्रात्रा पश्येय मिह राघवम् ॥ ९
सुप्त्वेवोपस्थितौ वीरौ कदाऽयोध्यां गमिष्यतः ।
यशस्विनी हृष्टजना सूच्छ्रितध्वजमालिनी ॥ १०
कदा प्रेक्ष्य नरव्याघ्रावरण्यात्पुनरागतौ ।
नन्दिष्यति पुरी हृष्टा समुद्र इव पर्वणि ॥ ११
कदाऽयोध्यां महाबाहुः पुरीं वीरः प्रवेक्ष्यति ।
पुरस्कृत्यरथेसीतां वृषभो गोवधूमिव ॥ १२

कदा प्राणिसहस्राणि राजमार्गे ममाऽऽत्मजौ ।
लाजैरवकिरिष्यन्ति प्रविशन्तावरिन्दमौ ॥ १३
प्रविशन्तौ कदाऽयोध्यां द्रक्ष्यामि शुभकुण्डलौ ।
उदग्रायुधनिस्त्रिंशौ सशृङ्गाविव पर्वतौ ॥ १४
कदासुमनसः कन्या द्विजातीनां फलानि च ।
प्रदिशन्त्यः पुरीं हृष्टाः करिष्यन्ति प्रदक्षिणम् ॥ १५
कदा परिणतो बुद्ध्या वयसा चामरप्रभः ।
अभ्युपैष्यति धर्मज्ञ स्त्रिवर्ष इव लालयन् ॥ १६
निस्संशयं मया मन्ये पुरा वीर! कदर्यया ।
पातुकामेषु वत्सेषु मातॄणां शातिताः स्तनाः ॥ १७
साऽहं गौरिव सिंहेन विवत्सा वत्सलाकृता ।
कैकेय्या पुरुषव्याघ्र! बालवत्सेव गौर्बलात् ॥ १८
सहितावद्गुणै र्जुष्टं सर्वशास्त्रविशारदम् ।
एकपुत्रा विना पुत्र महं जीवितु मुत्सहे ॥ १९
नहि मे जीविते किञ्चित्सामर्थ्य मिह कल्प्यते ।
अपश्यन्त्याः प्रियं पुत्रं महाबाहुं महाबलम् ॥ २०
अयं हि मां दीपयते समुत्थित स्तनूजशोकप्रभवो हुताशनः ।
मही मिमां रश्मिभि रुद्धतप्रभो यथा निदाघे भगवान्दिवाकरः ॥

इति श्रीमदयोध्याकाण्डे त्रिचत्वारिंशस्सर्गः ॥

---

## ॥ चतुश्चत्वारिंशस्सर्गः ॥

विलपन्तीं तथा तां तु कौसल्यां प्रमदोत्तमाम् ।
इदं धर्मे स्थिता धर्म्यं सुमित्रा वाक्य मब्रवीत् ॥ १

"तवार्ये सद्गुणैर्युक्तः पुत्रस्सपुरुषोत्तमः ।
किं ते विलपितेनैवं कृपणं रुदितेन वा ॥ २
यस्तवार्ये गतः पुत्रस्त्यक्त्वा राज्यं महाबलः ।
साधु कुर्वन्महात्मानं पितरं सत्यवादिनम् ॥ ३
शिष्टै राचरिते सम्य क्छश्वत्प्रेत्य फलोदये ।
रामो धर्मे स्थित श्श्रेष्ठो न स शोच्यः कदाचन ॥ ४
वर्तते चोत्तमां वृत्तिं लक्ष्मणोऽस्मिन्सदाऽनघः ।
दयावान्सर्वभूतेषु लाभस्तस्य महात्मनः ॥ ५
अरण्यवासे यद्दुःखं जानती वै सुखोचिता ।
अनुगच्छति वैदेही धर्मात्मानं तवात्मजम् ॥ ६
कीर्तिभूतां पताकां यो लोके भ्रमयति प्रभुः ।
धर्मसत्यव्रतधनः किं न प्राप्तस्तवात्मजः ॥ ७
व्यक्तं रामस्य विज्ञाय शौचं माहात्म्यमुत्तमम् ।
न गात्र मंशुभि स्सूर्य स्सन्तापयितु मर्हति ॥ ८
शिव स्सर्वेषु कालेषु काननेभ्यो विनिस्सृतः ।
राघवं युक्तशीतोष्ण स्सेविष्यति सुखोऽनिलः ॥ ९
शयान मनघं रात्रौ पितेवाभिपरिष्वजन् ।
रश्मिभि स्संस्पृशञ्छीतै श्चन्द्रमाह्लादयिष्यति ॥ १०
ददौ चास्त्राणि दिव्यानि यस्मै ब्रह्मा महौजसम् ।
दानवेन्द्रं हतं दृष्ट्वा तिमिध्वजसुतं रणे ॥ ११
स शूरः पुरुषव्याघ्रः स्वबाहुबल माश्रितः ।
असन्त्रस्तोऽप्यरण्यस्थो वेश्मनीव निवत्स्यति ॥ १२

यस्येषुपथ मासाद्य विनाशं यान्ति शत्रवः ।
कथं न पृथिवी तस्य शासने स्थातु मर्हति ? ॥ १३

या श्री श्शौर्य च रामस्य या च कल्याणसत्त्वता ।
निवृत्तारण्यवास स्स क्षिप्रं राज्यमवाप्स्यति ॥ १४

सूर्यस्यापि भवेत्सूर्यो ह्यग्ने रग्निः प्रभोः प्रभुः ।
श्रियः श्रीश्च भवेदग्र्या कीर्तिः कीर्त्याः क्षमा क्षमा ॥ १५

दैवतं दैवतानां च भूतानां भूतसत्तमः ।
तस्य केह्यगुणा ? देवि ! राष्ट्रे वाप्यथवा पुरे ॥ १६

पृथिव्या सह वैदेह्या श्रिया च पुरुषर्षभः ।
क्षिप्रं तिसृभि रेताभिस्सह रामोऽभिषेक्ष्यति ॥ १७

दुःखजं विसृजन्त्यास्रं निष्क्रामन्त मुदीक्ष्य यम् ।
अयोध्यायां जना स्सर्वे शोकवेगसमाहताः ॥ १८

कुशचीरधरं देवं गच्छन्तमपराजितम् ।
सीते वानुगता लक्ष्मी स्तस्य किं नाम दुर्लभम् ॥ १९

धनुर्ग्रहवरो यस्य बाणखड्गास्त्रभृत्स्वयम् ।
लक्ष्मणो व्रजति ह्यग्रे तस्य किं नाम दुर्लभम् ? ॥ २०

निवृत्तवनवासं तं द्रष्टाऽसि पुनरागतम् ।
जहि शोकं च मोहं च देवि ! सत्यं ब्रवीमि ते ॥ २१

शिरसा चरणावेतौ वन्दमान मनिन्दिते ।
पुनर्द्रक्ष्यसि कल्याणि ! पुत्रं चन्द्रमिवोदितम् ॥ २२

पुनः प्रविष्टं दृष्ट्वा तमभिषिक्तं महाश्रियम् ।
समुत्स्रक्ष्यसि नेत्राभ्यां क्षिप्र मानन्दजं पयः ॥ २३

मा शोको देवि! दुःखं वा न रामे दृश्यतेऽशिवम् ।
क्षिप्रं द्रक्ष्यसि पुत्रं त्वं ससीतं सहलक्ष्मणम् ॥ २४
त्वया शेषो जनश्चैव समाश्वास्यो यदाऽनघे ।
किमिदानीमिदं देवि! करोषि हृदि विक्लबम् ॥ २५
नार्हा त्वं शोचितुं देवि! यस्यास्ते राघवस्सुतः ।
नहि रामात्परो लोके विद्यते सत्पथे स्थितः ॥ २६
अभिवादयमानं तं दृष्ट्वा ससुहृदं सुतम् ।
मुदाऽश्रु मोक्ष्यसे क्षिप्रं मेघलेखेव वार्षिकी ॥ २७
पुत्रस्ते वरदः क्षिप्र मयोध्यां पुन रागतः ।
पाणिभ्यां मृदुपीनाभ्यां चरणौ पीडयिष्यति ॥ २८
अभिवाद्य नमस्यन्तं शूरं ससुहृदं सुतम् ।
मुदाऽस्रैः प्रोक्ष्यसि पुनर्मेघराजिरिवाचलम् ॥" २९
आश्वासयन्ती विविधैश्च वाक्यै र्वाक्योपचारे कुशलाऽनवद्या ।
रामस्य तां मातर मेव मुक्त्वा देवी सुमित्रा विरराम रामा ॥ ३०
निशम्य तल्लक्ष्मणमातृवाक्यं रामस्य मातुर्नरदेवपत्न्याः ।
सद्य श्शरीरे विननाश शोक श्शरद्गतो मेघइवाल्पतोयः ॥ ३१

इति श्रीमदयोध्याकाण्डे चतुश्चत्वारिंशस्सर्गः ॥

---

## ॥ पञ्चचत्वारिंशस्सर्गः ॥

अनुरक्ता महात्मानं रामं सत्यपराक्रमम् ।
अनुजग्मुः प्रयान्तं तं वनवासाय मानवाः ॥ १

निवर्तितेऽपि च बलात्सुहृद्वर्गे च राजनि ।
नैवते संन्यवर्तन्तरामस्यानुगतारथम् ॥ २
अयोध्यानिलयानां हि पुरुषाणां महायशाः ।
बभूव गुणसम्पन्नः पूर्णचन्द्र इव प्रियः ॥ ३
स याच्यमानः काकुत्स्थ स्स्वाभिः प्रकृतिभिस्तदा ।
कुर्वाणः पितरं सत्यं वन मेवान्वपद्यत ॥ ४
अवेक्षमाण स्सस्नेहं चक्षुषा प्रपिबन्निव ।
उवाच राम स्स्नेहेन ताः प्रजा स्वाः प्रजा इव ॥ ५
"या प्रीति र्बहुमानश्च मय्ययोध्यानिवासिनाम् ।
मत्प्रियार्थं विशेषेण भरते सा निवेश्यताम् ॥ ६
सहि कल्याणचारित्रः कैकेय्यानन्दवर्धनः ।
करिष्यति यथावद्वः प्रियाणि च हितानि च ॥ ७
ज्ञानवृद्धो वयोबालो मृदु र्वीर्यगुणान्वितः ।
अनुरूप स्सवो भर्ता भविष्यति भयापहः ॥ ८
स हि राजगुणै र्युक्तो युवराज स्समीक्षितः ।
अपि चापि मया शिष्टैः कार्यं वो भर्तृशासनम् ॥ ९
न च तप्येद्यथा चासौ वनवासं गते मयि ।
महाराज स्तथा कार्यो मम प्रियचिकीर्षया ॥" १०
यथा यथा दाशरथि र्धर्म एवाऽस्थितोऽभवत् ।
तथा तथा प्रकृतयो रामं पति मकामयन् ॥ ११
बाष्पेण पिहितं दीनं राम स्सौमित्रिणा सह ।
चकर्षेव गुणैर्बद्धा जनं पुरनिवासिनम् ॥ १२

ते द्विजास्त्रिविधं वृद्धा ज्ञानेन वयसौजसा ।
वयः प्रकम्पशिरसो दूरादूचु रिदंवचः ॥ १३
"वहन्तो जवना! रामं भोभो जात्यास्तुरङ्गमाः ।
निवर्तध्वं न गन्तव्यं हिताभवत भर्तरि ॥ १४
कर्णवन्ति हि भूतानि विशेषेण तुरङ्गमाः ।
यूयं तस्मा न्निवर्तध्वं याचनां प्रतिवेदिताः ॥ १५
धर्मतस्स विशुद्धात्मा वीरश्शुभ दृढव्रतः ।
उपवाह्यस्तु वोभर्ता नापवाह्यः पुराद्वनम् ॥" १६
एव मार्त प्रलापांस्तान्वृद्धान्प्रलपतोद्विजान् ।
अवेक्ष्य सहसा रामो रथा दवततारह ॥ १७
पद्भ्या मेव जगामाथ ससीत स्सहलक्ष्मणः ।
सन्निकृष्टपदन्यासो रामो वनपरायणः ॥ १८
द्विजातीं स्तु पदातीं स्ता न्रामश्चारित्रवत्सलः ।
न शशाक घृणाचक्षुः परिमोक्तुं रथेन सः ॥ १९
गच्छन्त मेव तं दृष्ट्वा रामं सम्भ्रान्तचेतसः ।
ऊचुः परमसंतप्ता रामं वाक्यमिदं द्विजाः ॥ २०
"ब्राह्मण्यं सर्वमेतत्त्वां ब्रह्मण्य मनुगच्छति ।
द्विजस्कन्धाधिरूढास्त्वा मग्नयोऽप्यनुयान्त्यमी ॥ २१
वाजपेयसमुत्थानि च्छत्राण्येतानि पश्यनः ।
पृष्ठतोऽनुप्रयातानि मेघानिव जलात्यये ॥ २२
अनवाप्तातपत्रस्य रश्मिसन्तापितस्य ते ।
एभि श्छायां करिष्याम स्स्वैश्छत्रै र्वाजपेयिकैः ॥ २३

याहि न स्सततं बुद्धिर्वेदमन्त्रानुसारिणी ।
त्वत्कृते सा कृता वत्स! वनवासानुसारिणी ॥
हृदयेष्वेव तिष्ठन्ति वेदा ये नः परं धनम् ।
वत्स्यन्त्यपि गृहेष्वेव दाराश्चारित्ररक्षिताः ॥ ३
न पुनर्निश्चयः कार्यस्त्वद्गतौ सुकृतामतिः ।
त्वयि धर्मव्यपेक्षेतु किंस्याद्धर्ममपेक्षितुम् ॥ ४
याचितो नो निवर्तस्व हंसशुक्लशिरोरुहैः ।
शिरोभिर्निभृताचार महीपतनपांसुलैः ॥
बहूनां वितता यज्ञा द्विजानां य इहागताः ।
तेषां समाप्ति रायत्ता तव वत्स! निवर्तने ॥
भक्तिमन्ति हि भूतानि जङ्गमाजङ्गमानि च ।
याचमानेषु राम! त्वं भक्तिं भक्तेषु दर्शय ॥
अनुगन्तु मशक्ता स्त्वां मूलै रुद्धतवेगिनः ।
उन्नता वायुवेगेन विक्रोशन्तीव पादपाः ॥

निश्चेष्टाहारसंचारा वृक्षैकस्थानविष्ठिताः ।
पक्षिणोऽपि प्रयाचन्ते सर्वभूतानुकम्पिनम् ॥"
एवं विक्रोशतां तेषां द्विजातीनां निवर्तने ।
ददृशे तमसा तत्र वारयन्तीव राघवम् ॥

तत स्सुमन्त्रोऽपि रथा द्विमुच्य श्रान्तान्हयान्त्संपरिवर्त्य शीघ्रम्
पीतोदकां स्तोयपरिप्लुताङ्गानचारय द्वैतमसा विदूरे ॥

इति श्रीमदयोध्याकाण्डे पञ्चचत्वारिंशस्सर्गः ॥

ते द्विजाश्च ...त्राम! त्रासयामि ततस्ततः ।
वयः प्रव ...शिरा नाम महर्षिःकोपितोमया ॥ ३
"वहन्त... विविधं वन्यं रूपेणानेन धर्षितः ।
निवर्तध्वं ...क्तः प्रेक्ष्यैवं घोरशापाभिधायिना ॥ ४
कर्णवन्ति ...नृशंसं ते रूप मस्तु विगर्हितम्' ।
यूयं तस्मा...चितः क्रुद्ध 'श्शापस्यान्तो भवे'दिति ॥ ५
धर्मतस्स ...कृतस्येति तेनेदं भाषितं वचः ।
उपवाह्य...त्त्वा भुजौ राम स्त्वां दहे द्विजने वने ॥ ६
...व मार्त ...प्राप्स्यसे रूपं स्वमेव विपुलं शुभम् ।
...वेक्ष्य ...राजितं पुत्रं दनोस्त्वं विद्धि लक्ष्मण! ॥ ७
द्रूष्या ...पादिदं रूपं प्राप्त मेवं रणाजिरे ।
...हि तपसोग्रेण पितामहमतोषयम् ॥ ८
दीर्घमायु स्स मे प्रादा त्ततो मां विभ्रमोऽस्पृशत् ।
दीर्घमायुर्मया प्राप्तं किं मे शक्रः करिष्यति ॥' ९
...त्येवं बुद्धि मास्थाय रणे शक्रमधर्षयम् ।
तस्यबाहुप्रमुक्तेनवज्रेण शतपर्वणा ॥ १०
...क्थिनी चैव मूर्धा च शरीरे सम्प्रवेशितम् ।
...र मया याच्यमान स्स नानयद्यमसादनम् ॥ ११
वा...
...मह वचस्सत्यं तद'स्त्विति ममाब्रवीत् ।
पू...
अनाहारः कथं शक्तो भग्नसक्थिशिरोमुखः ॥ १२
वज्रेणाभिहतः कालं सुदीर्घ मपि जीवितुम् ।'
एव मुक्तस्तु मे शक्रो बाहू योजनमायतौ ॥ १३

प्रादादास्यं च मे कुक्षौ तीक्ष्णदंष्ट्र मकल्पयत् ।
सोऽहं भुजाभ्यां दीर्घाभ्यां संकृष्यास्मिन्वनेचरान् ॥ १४
सिंहद्विपमृगव्याघ्रान्भक्षयामि समन्ततः ।
स तु मा मब्रवी दिन्द्रो 'यदा रामस्सलक्ष्मणः ॥ १५
छेत्स्येत समरे बाहू तदा स्वर्गं गमिष्यासि ।'
अनेन वपुषा राम! वनेऽस्मिन्राजसत्तम ॥ १६
यद्य त्पश्यामि सर्वस्य ग्रहणं साधु रोचये ।
अवश्यं ग्रहणं रामो मन्येऽहं समुपैष्यति ॥ १७
इमांबुद्धिं पुरस्कृत्य देहन्यासकृतश्रमः ।
स त्वं रामोऽसि भद्रं ते नाहमन्येन राघव! ॥ १८
शक्यो हन्तुं यथातत्त्व मेव मुक्तं महर्षिणा ;
अहं हि मतिसाचिव्यं करिष्यामि नरर्षभ! ॥ १९
मित्रं चैवोपदेक्ष्यामि युवाभ्यां संस्कृतोऽग्निना ।
एव मुक्तस्तु धर्मात्मा दनुना तेन राघवः ॥ २०
इदं जगाद वचनं लक्ष्मणस्योपशृण्वतः ।
"रावणेन हृता भार्या मम सीता यशस्विनी ॥ २१
निष्क्रान्तस्य जनस्थानात्सह भ्रात्रा यथासुखम् ।
नाममात्रं तु जानामि न रूपं तस्य रक्षसः ॥ २२
निवासं वा प्रभावं वा वयं तस्य न विद्महे ।
शोकार्ताना मनाथाना मेवं विपरिधावताम् ॥ २३
कारुण्यं सदृशं कर्तु मुपकारे च वर्तताम् ।
काष्ठान्यादाय शुष्काणि काले भग्नानि कुञ्जरैः ॥ २४

धक्ष्याम स्त्वां वयं वीर! श्वभ्रे महति कल्पिते ।
स त्वं सीतां समाचक्ष्व येन वा यत्र वा हृता ॥ २५
कुरु कल्याण मत्यर्थं यदि जानासि तत्त्वतः ।"
एव मुक्त स्तु रामेण वाक्यं दनु रनुत्तमम् ॥ २६
प्रोवाच कुशलो वक्तुं वक्तार मपि राघवम् ।
"दिव्य मास्ति न मे ज्ञानं नाभिजानामि मैथिलीम् ॥ २७
य स्तां ज्ञास्यति तं वक्ष्ये दग्धस्स्वं रूप मास्थितः ।
अदग्धस्य तु विज्ञातुं शक्ति रस्ति न मे प्रभो! ॥ २८
राक्षसं तं महावीर्यं सीता येन हृता तव ।
विज्ञानं हि मम भ्रष्टं शापदोषेण राघव ॥ २९
स्वकृतेन मया प्राप्तं रूपं लोकविगर्हितम् ।
किंतु यावन्नयात्यस्तं सविता श्रान्तवाहनः ॥ ३०
तावन्मामवटे क्षिप्त्वा दह राम! यथाविधि ।
दग्ध स्त्वयाऽह मवटे न्यायेन रघुनन्दन! ॥ ३१
वक्ष्यामि त महं वीर! य स्तं ज्ञास्यति राक्षसम् ।
तेन सख्यं च कर्तव्यं न्यायवृत्तेन राघव! ॥ ३२
कल्पयिष्यति ते प्रीत स्साहाय्यं लघुविक्रमः ।
नहि तस्यास्त्यविज्ञातं त्रिषु लोकेषु राघव! ॥ ३३
सर्वान्परिसृतो लोकान्पुराऽसौ कारणान्तरे ॥"

इति श्रीमदारण्यकाण्डे एकसप्ततितमस्सर्गः ॥

## ॥ द्विसप्ततितमस्सर्गः ॥

एव मुक्तौ तु तौ वीरौ कबन्धेन नरेश्वरौ ।
गिरिप्रदरमासाद्य पावकं विससर्जतुः ॥ १
लक्ष्मण स्तु महोल्काभि र्ज्वलिताभि स्समन्ततः ।
चिता मादीपयामास सा प्रजज्वाल सर्वतः ॥ २
तच्छरीरं कबन्धस्य घृतपिण्डोपमं महत् ।
मेदसा पच्यमानस्य मन्दं दहति पावकः ॥ ३
स विधूय चिता माशु विधूमोऽग्नि रिवोत्थितः ।
अरजे वाससी बिभ्र न्मालां दिव्यां महाबलः ॥ ४
तत श्चिताया वेगेन भास्वरो विमलाम्बरः ।
उत्पपाताऽशु संहृष्टस्सर्वप्रत्यङ्गभूषणः ॥ ५
विमाने भास्वरे तिष्ठन्हंसयुक्ते यशस्करे ।
प्रभया च महातेजा दिशो दश विराजयन् ॥ ६
सोऽन्तरिक्षगतो रामं कबन्धो वाक्य मब्रवीत् ।
"शृणु राघव! तत्त्वेन यथा सीता मवाप्स्यसि ॥ ७
राम! षड्युक्तयो लोके याभि स्सर्वं विमृश्यते ।
परिमृष्टो दशान्तेन दशाभागेन सेव्यते ॥ ८
दशाभागगतो हीनस्त्वं हि राम! सलक्ष्मणः ।
यत्कृते व्यसनं प्राप्तं त्वया दारप्रधर्षणम् ॥ ९
तदवश्यं त्वया कार्य स्ससुहृत्सुहृदां वर! ।
अकृत्वा हि न ते सिद्धि महं पश्यामि चिन्तयन् ॥ १०

श्रूयतां राम! वक्ष्यामि सुग्रीवो नाम वानरः ।
भ्रात्रा निरस्तः क्रुद्धेन वालिना शक्रसूनुना ॥ ११
ऋश्यमूके गिरिवरे पम्पापर्यन्तशोभिते ।
निवसत्यात्मवान्वीर श्चतुर्भि स्सह वानरैः ॥ १२
वानरेन्द्रो महावीर्यस्तेजोवानमितप्रभः ।
सत्यसन्धो विनीतश्च धृतिमान्मतिमान्महान् ॥ १३
दक्षः प्रगल्भो द्युतिमान्महाबलपराक्रमः ।
भ्रात्रा विवासितो राम! राज्यहेतो र्महाबलः ॥ १४
स ते सहायो मित्रं च सीतायाः परिमार्गणे ।
भविष्यति हिते राम! मा च शोके मनः कृथाः ॥ १५
भवितव्यं हि यच्चापि न तच्छक्यमिहान्यथा ।
कर्तु मिक्ष्वाकुशार्दूल! कालो हि दुरतिक्रमः ॥ १६
गच्छ शीघ्र मितो राम! सुग्रीवं तं बहावलम् ।
वयस्यं तं कुरु क्षिप्र मितो गत्वाऽद्य राघव! ॥ १७
अद्रोहाय समागम्य दीप्यमाने विभावसौ ।
सचते नावमन्तव्य स्सुग्रीवो वानराधिपः ॥ १८
कृतज्ञः कामरूपी च सहायार्थी च वीर्यवान् ॥
शक्तौ ह्यद्य युवां कर्तु कार्यं तस्य चिकीर्षितम् ॥ १९
कृतार्थो वाऽकृतार्थो वा कृत्यं तव करिष्यति ।
स ऋक्षरजसः पुत्रः पम्पामटति शङ्कितः ॥ २०
भास्करस्यौरसः पुत्रो वालिना कृतकिल्बिषः ।
सन्निधायाऽयुधं क्षिप्र मृश्यमूकालयं कपिम् ॥ २१

कुरु राघव! सत्येन वयस्यं वनचारिणम् ।
स हि स्थानानि सर्वाणि कार्त्स्न्येन कपिकुञ्जरः ॥ २२
नरमांसाशिनां लोके नैपुण्यादधिगच्छति ।
न तस्याविदितं लोके किंचि दस्ति हि राघव! ॥ २३
यावत्सूर्यः प्रतपति सहस्रांशु ररिन्दम! ।
स नदी र्विपुलान् शैलान्गिरिदुर्गाणि कन्दरान् ॥ २४
अन्वीक्ष्य वानरैस्सार्धं पत्नींतेऽधिगमिष्यति ।
वानरांश्च महाकायान्प्रेषयिष्यति राघव! ॥ २५
दिशोविचेतुं तां सीतां त्वद्वियोगेन शोचतीम् ।
स ज्ञास्यति वरारोहां निर्मलां रावणालये ॥ २६
[महीं विजानाति हरिप्रवीरः स्थानानि दिव्यानिच राक्षसानाम् ।
भ्रात्रा निरस्तः पृथिवीं विचिन्वन्निस्संशयं ज्ञास्यतियत्र सीता] ॥
स मेरुशृङ्गाग्रगतामनिन्दितां प्रविश्य पाताळतलेऽपिवाश्रिताम् ।
प्लवङ्गमानां प्रवर स्तवप्रियां निहत्य रक्षांसि पुनः प्रदास्यति ॥ २८

इति श्रीमदारण्यकाण्डे द्विसप्ततितमस्सर्गः ॥

---

## ॥ त्रिसप्ततितमस्सर्गः ॥

निदर्शयित्वा रामाय सीतायाः प्रतिपादने ।
वाक्य मन्वर्थमर्थज्ञः कबन्धः पुन रब्रवीत् ॥ १
"एष राम! शिवः पन्था यत्रैते पुष्पितार्द्रुमाः ।
प्रतीचीं दिश माश्रित्य प्रकाशन्ते मनोरमाः ॥ २

जम्बू प्रियाळ पनसप्लक्षन्यग्रोध तिन्दुकाः ।
अश्वत्थाः कर्णिकाराश्च चूता श्चान्ये च पादपाः ॥ ३
धन्वना नागवृक्षाश्च तिलका नक्तमालकाः ।
नीलाशोकाः कदम्बाश्च करवीराश्च पुष्पिताः ॥ ४
अग्निमुख्या अंशोकाश्च सुरक्ताः पारिभद्रकाः ।
तानारुह्याथवा भूमौ पातयित्वा च तान्बलात् ॥ ५
फलान्यमृतकल्पानि भक्षयन्तौ गमिष्यथः ।
तदतिक्रम्य काकुत्स्थ ! वनं पुष्पितपादपम् ॥ ६
नन्दनप्रतिमं चान्यत्कुरवो ह्युत्तराविव ।
सर्वकामफलावृक्षाः पादपास्तु मधुस्रवाः ॥ ७
सर्वेच ऋतवस्तत्रवनेचैत्ररथे यथा ।
फलभारानतास्तत्र महाविटपधारिणः ॥ ८
शोभन्ते सर्वत स्तत्र मेघपर्वतसन्निभाः ।
तानारुह्याथवा भूमौ पातयित्वा यथासुखम् ॥ ९
फलान्यमृतकल्पानि लक्ष्मणस्ते प्रदास्यति ।
चङ्क्रमन्तौ परान्देशान् शैलाच्छैलं वनाद्वनम् ॥ १०
ततः पुष्करिणीं वीरौ पम्पां नाम गमिष्यथः ।
अशर्करा मविभ्रंशां समतीर्थामशैवलाम् ॥ ११
राम ! संजातवालूकां कमलोत्पलशालिनीम् ।
तत्र हंसाः प्लवाः क्रौञ्चाः कुरराश्चैव राघव ! ॥ १२
वल्गुस्वनानि कूजन्ति पम्पासलिलगोचराः ।
नोद्विजन्ते नरान्दृष्ट्वा वधस्याकोविदा श्शुभाः ॥ १३

घृतपिण्डोपमान् स्थूलां स्तान्द्विजान्भक्षयिष्यथः ।
रोहितान्वक्रतुण्डांश्च नडमीनांश्च राघव! ॥ १४
पम्पाया मिषुभिर्मत्स्यां स्तत्र राम! वरान्हतान् ।
निस्त्वक्पक्षानयस्तप्तानकृशा नेककण्टकान् ॥ १५
तव भक्त्या समायुक्तो लक्ष्मणस्सम्प्रदास्यति ।
भृशं ते खादतो मत्स्या न्पम्पायाः पुष्पसंचये ॥ १६
पद्मगन्धि शिवं वारि सुखशीत मनामयम् ।
उद्धृत्य सततासक्लिष्टं रौप्यस्फाटिकसन्निभम् ॥ १७
असौ पुष्करपर्णेन लक्ष्मणः पाययिष्यति ।
स्थूलान्गिरिगुहाशय्यान्वराहा न्वनचारिणः ॥ १८
अपां लोभा दुपावृत्ता न्वृषभा निव नर्दतः ।
रूपान्वितांश्च पम्पायां द्रक्ष्यसि त्वं नरोत्तम! ॥ १९
सायाह्ने विचर न्राम! विटपीन्माल्यधारिणः ।
शीतोदकं च पम्पाया दृष्ट्वा शोकं विहास्यसि ॥ २०
सुमनोभिश्चितां स्तत्र तिलकान्नक्तमालकान् ।
उत्पलानिच फुल्लानि पङ्कजानिच राघव! ॥ २१
न तानि कश्चिन्माल्यानि तत्रारोपयिता नरः ।
नचवैम्लानतां यान्ति नच शीर्यन्ति राघव! ॥ २२
मतङ्गशिष्यास्तत्राऽसनृषयस्सुसमाहिताः ।
तेषां भाराभितप्तानां वन्यमाहरतां गुरोः ॥ २३
ये प्रपेतुर्महीं तूर्णं शरीरात्स्वेदबिन्दवः ।
तानि जातानि माल्यानि मुनीनां तपसातदा ॥ २४

स्वेदबिन्दुसमुत्थानि न विनश्यन्ति राघव ! ।
तेषां गतानामद्यापि दृश्यते परिचारिणी ॥ २५
श्रमणी शबरी नाम काकुत्स्थ ! चिरजीविनी ।
त्वां तु धर्मे स्थिता नित्यं सर्वभूतनमस्कृतम् ॥ २६
दृष्ट्वा देवोपमं राम स्वर्गलोकं गमिष्यति ।
ततस्तद्राम ! पम्पाया स्तीर माश्रित्य पश्चिमम् ॥ २७
आश्रमस्थान मतुलं गुह्यं काकुत्स्थ ! पश्यसि ।
न तत्राक्रमितुं नागाश्शक्नुवन्ति तमाश्रमम् ॥ २८
विविधा स्तत्र वै नागा वने तस्मि श्च पर्वते ।
ऋषे स्तत्र मतङ्गस्य विधानात्तच्च काननम् ॥ २९
[मतङ्गवनमित्येव विश्रुतं रघुनन्दन ! ।]
तस्मिन्नन्दनसङ्काशे देवारण्योपमे वने ॥ ३०
नानाविहगसंकीर्णे रंस्यसे राम ! निर्वृतः ।
ऋश्यमूक श्च पम्पायाः पुरस्तात्पुष्पितद्रुमः ॥ ३१
सुदुःखारोहणो नाम शिशुनागाभिरक्षितः ।
उदारो ब्रह्मणा चैव पूर्वकाले विनिर्मितः ॥ ३२
शयानः पुरुषो राम ! तस्य शैलस्य मूर्धनि ।
यत्स्वप्ने लभते वित्तं तत्प्रबुद्धोऽधिगच्छति ॥ ३३
न त्वेनं विषमाचारः पापकर्माऽधिरोहति ।
य स्तु तं विषमाचारः पापकर्माऽधिरोहति ॥ ३४
तत्रैव प्रहरन्त्येनं सुप्त मादाय राक्षसाः ।
तत्रापि शिशुनागाना माक्रन्द श्श्रूयते महान् ॥ ३५

क्रीडतां राम! पम्पायां मतङ्गारण्यवासिनाम् ।
सिक्तारुधिरधाराभिस्संहृत्य परमाद्विपाः ॥ ३६
प्रचरन्ति पृथक्कीर्णा मेघवर्णास्तरस्विनः ।
ते तत्र पीत्वा पानीयं विमलं शीतमव्ययम् ॥ ३७
निर्वृता स्संविगाहन्ते वनानि वनगोचराः ।
ऋक्षां श्च द्वीपिन श्चैव नीलकोमलकप्रभान् ॥ ३८
रुरूनपेतापजयान् दृष्ट्वा शोकं जहिष्यसि ।
राम! तस्य तु शैलस्य महती शोभते गुहा ॥ ६९
शिलापिधाना काकुत्स्थ! दुःखं चास्याः प्रवेशनम् ।
तस्या गुहायाः प्राग्द्वारे महान् शीतोदको ह्रदः ॥ ४०
फलमूलान्वितो रम्यो नानामृगसमावृतः ।
तस्यां वसति सुग्रीव श्चतुर्भि स्सह वानरैः ॥ ४१
कदाचि च्छिखरे तस्य पर्वतस्यावतिष्ठते ।
कबन्धस्त्वनुशास्यैवं ता वुभौ रामलक्ष्मणौ ॥ ४२
स्रग्वी भास्करवर्णाभः खे व्यरोचत वीर्यवान् ।
तं तु खस्थं महाभागं कबन्धं रामलक्ष्मणौ ॥ ४३
प्रस्थितौ 'त्वं व्रजस्वेति' वाक्य मूचतु रन्तिके ।
'गम्यतां कार्यसिद्ध्यर्थ' मिति तावब्रवीत्सच ॥ ४४
सुप्रीतौ तावनुज्ञाप्य कबन्धः प्रस्थित स्तदा ।
स तत्कबन्धः प्रतिपद्य रूपं वृत श्श्रिया भास्करतुल्यदेहः ।
निदर्शय न्राम मवेक्ष्य खस्थ 'स्सख्यं कुरुष्वे 'ति तदाऽभ्युवाच ॥

इति श्रीमदारण्यकाण्डे त्रिसप्ततितमस्सर्गः ॥

## ॥ चतुस्सप्ततितमस्सर्गः ॥

तौ कबन्धेन तं मार्गं पम्पाया दर्शितं वने ।
प्रतस्थतु र्दिशं गृह्य प्रतीचीं नृवरात्मजौ ॥ १
तौ शैलेष्वाचितानेकान् क्षौद्रकल्पफलान्द्रुमान् ।
वीक्षन्तौ जग्मतु र्द्रष्टुं सुग्रीवं रामलक्ष्मणौ ॥ २
कृत्वा च शैलपृष्ठे तु तौ वासं रघुनन्दनौ ।
पम्पायाः पश्चिमं तीरं राघवावुपतस्थतुः ॥ ३
तौ पुष्करिण्याः पम्पायास्तीर मासाद्य पश्चिमम् ।
अपश्यतां तत स्तत्र शबर्या रम्य माश्रमम् ॥ ४
तौ तमाश्रम मासाद्य द्रुमै र्बहुभि रावृतम् ।
सुरम्य मभिवीक्षन्तौ शबरी मभ्युपेयतुः ॥ ५
तौ च दृष्ट्वा तदा सिद्धा समुत्थाय कृताञ्जलिः ।
रामस्य पादौ जग्राह लक्ष्मणस्य च धीमतः ॥ ६
पाद्य माचमनीयं च सर्वं प्रादा द्यथाविधि ।
ता मुवाच ततो राम श्श्रमणीं संशितव्रताम् ॥ ७
"कच्चित्ते निर्जिता विघ्नाः! कच्चित्ते वर्धते तपः? ।
कच्चित्ते नियतः क्रोध! आहार श्च तपोधने? ॥ ८
कच्चि त्ते नियमाः प्राप्ताः कच्चित्ते मनस स्सुखम्! ।
कच्चि त्ते गुरुशुश्रूषा सफला चारुभाषिणि! ॥ ९
रामेण, तापसी पृष्टा सा सिद्धा सिद्धसम्मता ।
शशंस शबरी वृद्धा रामाय प्रत्युपस्थिता ॥ १०

अद्यप्राप्ता तपस्सिद्धि स्तव संदर्शना न्मया ।
अद्यमे सफलं तप्तं गुरव श्च सुपूजिताः ॥
अद्य मे सफलं जन्म स्वर्ग श्चैव भविष्यति ।
त्वयि देववरे राम! पूजिते पुरुषर्षभ! ॥
चक्षुषा तव सौम्येन पूताऽस्मि रघुनन्दन! ।
गमिष्याम्यक्षयान्लोकां स्त्वत्प्रसादादरिन्दम! ॥
चित्रकूटं त्वयि प्राप्ते विमानै रतुलप्रभैः ।
इत स्ते दिव मारूढा यानहं पर्यचारिषम् ॥
तै श्चाहं मुक्ता धर्मज्ञै र्महाभागै र्महर्षिभिः ।
'आगमिष्यति ते राम स्सुपुण्य मिममाश्रमम् ॥
स ते प्रतिगृहीतव्य स्सौमित्रि सहितोऽतिथिः ।
तं च दृष्ट्वा वरान्लोका नक्षय्यां स्त्वं गमिष्यसि ॥
[एव मुक्ता महाभागैस्तदाऽहं पुरुषर्षभ! ।
मया तु विविधं वन्यं सञ्चितं पुरुषर्षभ! । १
तवार्थेपुरुषव्याघ्र! पम्पाया स्तीरसम्भवम् ।
एवमुक्तस्स धर्मात्मा शबर्या शबरी मिदम् ॥ १
राघवः प्राह विज्ञानेतां मित्य मबहिष्कृताम् ।
"दनो स्सकाशा त्तत्त्वेन प्रभावं ते महात्मनः ॥ १
श्रुतं प्रत्यक्ष मिच्छामि संप्रष्टुं यदि मन्यसे ।"
एतत्तु वचनं श्रुत्वा रामवक्त्राद्विनिस्सृतम् ॥ २
शबरी दर्शयामास तावुभौ तद्वनं महत् ।
"पश्य मेघ घनप्रख्यं मृगपक्षिसमाकुलम् ॥ २

॥ षट्चत्वारिंशस्सर्गः ॥

तीरस्तुतमसातीरं रम्यमाश्रित्य राघवः ।
प्रीता मुद्वीक्ष्य सौमित्रि मिदं वचनमब्रवीत् ॥ १
तइयमद्य निशा पूर्वा सौमित्रे! प्रहिता वनम् ।
वनवासस्य भद्रं ते सनोत्काण्ठितु मर्हसि ॥ २
पश्य शून्यान्यरण्यानि रुदन्तीव समंततः ।
यथा निलयमायद्भि र्निलीनानि मृगद्विजैः ॥ ३
तद्यायोध्या तु नगरी राजधानी पितुर्मम ।
अ ीपुंसा गतानस्मां श्शोचिष्यति नसंशयः ॥ ४
तीनुरक्ता हि मनुजा राजानं बहुभिर्गुणैः ।
त्वां च मां च नरव्याघ्र! शत्रुघ्नभरतौ तथा ॥ ५
पितरं चानुशोचामि मातरं च यशस्विनीम् ।
अपि वाऽन्धौ भवेतांतु रुदन्तौ तावभीक्ष्णशः ॥ ६
भरतःखलु धर्मात्मा पितरं मातरञ्च मे ।
धर्मार्थकामसहितै र्वाक्यै राश्वासयिष्यति ॥ ७
भरतस्यानृशंसत्वं विचिन्त्याहं पुनःपुनः ।
नानुशोचामि पितरं मातरं चापि लक्ष्मण! ॥ ८
त्वया कार्यं नरव्याघ्र! मामनुव्रजता कृतम् ।
कात्वेष्टव्या हि वैदेह्या रक्षणार्थे सहायता ॥ ९
अद्भिरेव तु सौमित्रे! वत्स्याम्यद्य निशामिमाम् ।
शद्भिरोचते मह्यं वन्येऽपि विविधे.सति ॥" १०

एव मुक्त्वातु सौमित्रिं सुमन्त्रमपि राघवः ।
'अप्रमत्त स्त्व मश्वेषु भवसौम्ये' त्युवाच ह ॥ ११
सोऽश्वान्सुमन्त्र स्संयम्य सूर्येऽस्तं समुपागते ।
प्रभूतयवसान्कृत्वा बभूव प्रत्यनन्तरः ॥ १२
उपास्यतु शिवां सन्ध्यां दृष्ट्वा रात्रि मुपस्थिताम् ।
रामस्य शयनं चक्रे सूतस्सौमित्रिणा सह ॥ १३
तां शय्यां तमसातीरे वीक्ष्य वृक्षदळैः कृताम् ।
रामस्सौमित्रिणा सार्धं सभार्यस्संविवेशह ॥ १४
सभार्यं संप्रसुप्तं तं भ्रातरं वीक्ष्य लक्ष्मणः ।
कथयामास सूताय रामस्य विविधान्गुणान् ॥ १५
जाग्रतो ह्येव तां रात्रिं सौमित्रे रुदितो रविः ।
सूतस्य तमसातीरे रामस्य ब्रुवतो गुणान् ॥ १६
गोकुलाकुलतीराया स्तमसाया विदूरतः ।
अवसत्तत्र तां रात्रि रामः प्रकृतिभिस्सह ॥ १७
उत्थाय च महातेजाः प्रकृती स्ता निशाम्यच ।
अब्रवी द्भ्रातरं रामो लक्ष्मणं पुण्यलक्षणम् ॥ १८
"अस्मद्व्यपेक्षान्सौमित्रे! निरपेक्षान्गृहेष्वपि ।
वृक्षमूलेषु संसुप्तान्पश्य लक्ष्मण! साम्प्रतम् ॥ १९
यथैते नियमं पौराः कुर्वन्त्यस्मन्निवर्तने ।
अपि प्राणानासिष्यन्ति न तु त्यक्ष्यन्ति निश्चयम् ॥ २
यावदेव तु संसुप्ता स्तावदेव वयं लघु ।
रथमारुह्य गच्छामः पन्थान मकुतोभयम् ॥

अतो भूयोऽपि नेदानी मिक्ष्वाकुपुरवासिनः ।
स्वपेयु रनुरक्ता मां वृक्षमूलानि संश्रिताः ॥ २२
पौरा ह्यात्मकृता दुःखा द्विप्रमोच्या नृपात्मजैः ।
न तु खल्वात्मना योज्या दुःखेन पुरवासिनः ॥" २३
अब्रवी ल्लक्ष्मणो रामं साक्षाद्धर्म मिवस्थितम् ।
रोचते मे तथा प्राज्ञ! क्षिप्र मारुह्यता" मिति ॥ २४
अथ रामोऽब्रवी च्छ्रीमा न्सुमन्त्रं "युज्यतां रथः ।
गमिष्यामि ततोऽरण्यं गच्छ शीघ्र मितः प्रभो! ॥" २५
सूतस्तत स्संत्वरित स्स्यन्दनं तैर्हयोत्तमैः ।
योजयित्वाऽथ रामाय प्राञ्जलिः प्रत्यवेदयत् ॥ २६
"अयं युक्तो महाबाहो! रथस्ते रथिनां वर! ।
त्व मारोहस्व भद्रंते ससीत स्सहलक्ष्मणः ॥ २७
तं स्यन्दन मधिष्ठाय राघव स्सपरिच्छदः ।
शीघ्रगामाकुलावर्तां तमसा मतरन्नदीम् ॥ २८
स संतीर्य महाबाहु श्श्रीमाञ्छिवमकण्टकम् ।
प्रापद्यत महामार्ग मभयं भयदर्शिनाम् ॥ २९
मोहनार्थं तु पौराणां सूतं रामोऽब्रवीद्वचः ।
"उदङ्मुखः प्रयाहि त्वं रथमास्थाय सारथे ॥ ३०
मुहूर्तं त्वरितं गत्वा निवर्तय रथं पुनः ।
कथं न विद्युः पौरा मां तथा कुरु समाहितः ॥" ३१
रामस्य वचनं श्रुत्वा तथा चक्रे स सारथिः ।
प्रत्यागम्य च रामस्य स्यन्दनं प्रत्यवेदयत् ॥ ३२

तौ सम्प्रयुक्तन्तु रथं समास्थितौ तथा ससीतौ रघुवंशवर्धनौ ।
प्रचोदयामास ततस्तुरंगमान्ससारथि र्येनपथा तपोवनम् ॥ ३३
ततस्समास्थाय रथं महारथ स्ससारथि र्दाशरथिर्वनं ययौ ।
उदङ्मुखं तं तु रथं चकार स प्रयाणमाङ्गल्य निमित्तदर्शनात् ॥३४

इति श्रीमदयोध्याकाण्डे षट्चत्वारिंशस्सर्गः ॥

## ॥ सप्तचत्वारिंशस्सर्गः ॥

प्रभातायां तु शर्वर्यां पौरास्ते राघवं विना ।
शोकोपहतनिश्चेष्टा बभूवु र्हतचेतसः ॥ १
शोकजाश्रुपरिद्यूना वीक्षमाणा स्ततस्ततः ।
आलोक मपि रामस्य नपश्यन्ति स्म दुःखिताः ॥ २
ते विषादार्तवदना रहिता स्तेन धीमता ।
कृपणाः करुणा वाचो वदन्ति स्म मनस्विनः ॥ ३
'धिगस्तु खलु निद्रां तां ययाऽपहृतचेतसः ।
नाद्य पश्यामहे रामं पृथूरस्कं महाभुजम् ॥ ४
कथं नाम महाबाहु स्सतथा वितथक्रियः ।
भक्तं जनं परित्यज्य प्रवासं राघवोगतः ॥ ५
यो न स्सदा पालयति पिता पुत्रानिवौरसान् ।
कथं रघूणां सश्रेष्ठ स्त्यक्त्वा नो विपिनं गतः ॥ ६
इहैव निधनं यामो महाप्रस्थान मेव वा ।
रामेण रहितानां हि किमर्थं जीवितं हि नः ॥ ७

सन्ति शुष्काणि काष्ठानि प्रभूतानि महान्ति च ।
तैः प्रज्वाल्य चितां सर्वे प्रविशामोऽथ पावकम् ॥ ८
किं वक्ष्यामो महाबाहु रनसूयः प्रियंवदः ।
नीतस्स राघवोऽस्माभि रिति वक्तुं कथं क्षमम् ॥ ९
सा नूनं नगरी दीना दृष्ट्वाऽस्मान् राघवं विना ।
भविष्यति निरानन्दा स स्त्री बालवयोऽधिका ॥ १०
निर्यातास्तेन वीरेण सह नित्यं जितात्मना ।
विहीनास्तेन च पुनः कथं पश्याम तां पुरीम् ॥' ११
इतीव बहुधा वाचो बाहुमुद्यम्य ते जनाः ।
विलपन्ति स्म दुःखार्ता विवत्सा इव धेनवः ॥ १२
ततो मार्गानुसारेण गत्वा किञ्चित्क्षण पुनः ।
मार्गनाशा द्विषादेन महता समभिप्लुताः ॥ १३
रथस्य मार्गनाशेन न्यवर्तन्त मनस्विनः ।
'किमिदं किङ्करिष्यामो दैवेनोपहता' इति ॥ १४
ततो यथागतेनैव मार्गेण क्लान्तचेतसः ।
अयोध्यामगमन्सर्वे पुरीं व्यथितसज्जनाम् ॥ १५
आलोक्य नगरीं तांच क्षयव्याकुलमानसाः ।
अवर्तयन्त तेऽश्रूणि नयनै श्शोकपीडितैः ॥ १६
'एषा रामेण नगरी रहिता नातिशोभते ।
आपगा गरुडेनेव ह्रदादुद्धृतपन्नगा ॥' १७
चन्द्रहीन मिवाकाशं तोयहीन मिवार्णवम् ।
अपश्यन्निहतानन्दं नगरं ते विचेतसः ॥ १८

ते तानि वेश्मानि महाधनानि दुःखेन दुःखोपहता विशन्तः ।
नैव प्रजज्ञु स्स्वजनं जनं वा निरीक्षमाणाः प्रविनष्टहर्षाः ॥ १९

इति श्रीमदयोध्याकाण्डे सप्तचत्वारिंशस्सर्गः ॥

## ॥ अष्टचत्वारिंशस्सर्गः ॥

तेषा मेवं विषण्णानां पीडिताना मतीव च ।
बाष्पविप्लुतनेत्राणां स शोकानां मुमूर्षया ॥ १
अनुगम्य निवृत्तानां रामं नगरवासिनाम् ।
उद्गतानीव सत्त्वानि बभूवु रमनस्विनाम् ॥ २
स्वं स्वं निलयमागम्य पुत्रदारै स्समावृताः ।
अश्रूणि मुमुचु स्सर्वे बाष्पेण पिहिताननाः ॥ ३
न चाहृष्यन्न चामोदन्वणिजोन प्रसारयन् ।
नचाशोभन्त पुण्यानि नापचन् गृहमेधिनः ॥ ४
नष्टं दृष्ट्वा नाभ्यनन्द न्विपुलं वा धनागमम् ।
पुत्रं प्रथमजं लब्ध्वा जननी नाभ्यनन्दत ॥ ५
गृहे गृहे रुदन्त्यश्च भर्तारं गृहमागतम् ।
व्यगर्हयन्त दुःखार्ता वाग्भिस्तोत्रै रिवद्विपान् ॥ ६
"किंनु तेषां गृहैः कार्यं किं दारैः किं धनेन वा ।
पुत्रै र्वा किं सुखै र्वापि ये नपश्यन्ति राघवम् ॥ ७
एक स्सत्पुरुषो लोके लक्ष्मण स्सहसीतया ।
योऽनुगच्छति काकुत्स्थं रामं परिचरन्वने ॥ ८

आपगाः कृतपुण्यास्ताः पद्मिन्यश्च सरांसिच ।
येषु स्नास्यति काकुत्स्थो विगाह्य सलिलं शुचि ॥ ९
शोभयिष्यन्ति काकुत्स्थ मटव्यो रम्यकाननाः ।
आपगा श्च महानूपा स्सानुमन्त श्च पर्वताः । १०
काननं वापि शैलं वायं रामोऽभिगमिष्यति ।
प्रियातिथि मिवप्राप्तं नैनं शक्ष्यन्त्यनर्चितुम् ॥ ११
विचित्रकुसुमापीडा बहुमञ्जरिधारिणः ।
राघवं दर्शयिष्यन्ति नगा भ्रमरशालिनः ॥ १२
अकाले चापि मुख्यानि पुष्पाणि च फलानि च ।
दर्शयिष्यन्त्यनुक्रोशा द्गिरयो राम मागतम् ॥ १३
प्रस्रविष्यन्ति तोयानि विमलानि महीधराः ।
विदर्शयन्तो विविधान्भूय श्चित्रां श्च निर्झरान् ॥ १४
पादपाः पर्वताग्रेषु रमयिष्यन्ति राघवम् ।
यत्ररामो भयं नात्र नास्ति तत्र पराभवः ॥ १५
सहि शूरो महाबाहुः पुत्रो दशरथस्य च ।
पुरा भवति नोदूरा दनुगच्छाम राघवम् ॥ १६
पादच्छाया सुखाभर्तु स्तादृशस्य महात्मनः ।
सहि नाथो जनस्यास्य सगति स्स परायणम् ॥ १७
वयं परिचरिष्याम स्सीतां यूयं तु राघवम् ।"
इति पौरस्त्रियो भर्तॄन् दुःखार्ता स्तत्तदब्रुवन् ॥ १८
युष्माकं राघवोऽरण्ये योगक्षेमं विधास्यति ।
सीता नारीजनस्यास्ययोगक्षेमं करिष्यति ॥ १९

कोन्वनेनाप्रतीतेन सोत्कण्ठितजनेन च ।
संप्रीयेतामनोज्ञेन वासे न हृतचेतसा ॥ २०
कैकेय्या यदिचे द्राज्यं स्या दधर्म्य मनाथवत् ।
नहि नो जीवितेनार्थः कुतः पुत्रैः कुतो धनैः ॥ २१
यया पुत्रश्च भर्ता च त्यक्तावैश्वर्यकारणात् ।
कं सा परिहरेदन्यं कैकेयी कुलपांसनी ॥ २२
कैकेय्या न वयं राज्ये भृतका निवसेम हि ।
जीवन्त्या जातु जीवन्त्यः पुत्र रपि शपामहे ॥ २३
या पुत्रं पार्थिवेन्द्रस्य प्रवासयति निर्घृणा ।
कस्तां प्राप्य सुखं जीवे दधर्म्यां दुष्टचारिणीम् ॥ २४
उपद्रुत मिदं सर्व मनालम्बमनायकम् ।
कैकेय्या हि कृते सर्वं विनाशमुपयास्यति ॥ २५
न हि प्रव्रजिते रामे जीविष्यति महीपतिः ।
मृते दशरथे व्यक्तं विलापस्तदनन्तरम् ॥ २६
ते विषं पिबताऽलोड्य क्षीणपुण्या स्सुदुर्गताः ।
राघवं वाऽनुगच्छध्व मश्रुतिं वाऽपि गच्छत ॥ २७
मिथ्याप्रव्राजितो राम स्ससीत स्सहलक्ष्मणः ।
भरते सन्निसृष्टा स्स्मस्सौनिके पशवो यथा ॥ २८
पूर्णचन्द्रानन श्श्यामो गूढजत्रु ररिन्दमः ।
आजानुबाहुः पद्माक्षो रामो लक्ष्मण पूर्वजः ॥ २९
पूर्वाभिभाषी मधुर स्सत्यवादी महाबलः ।
सौम्यश्च सर्वलोकस्य चन्द्रवत्प्रियदर्शनः ॥ ३०

नून पुरुषशार्दूलो मत्तमातङ्गविक्रमः ।
शोभयिष्यत्यरण्यानि विचरन् स महारथः ॥" ३१

ता स्तथा विलपन्त्यस्तु नगरे नागरास्त्रियः ।
चुक्रुशु र्दुःख सन्तप्ता मृत्योरिव भयागमे ॥ ३२

इत्येवं विलपन्तीनां स्त्रीणां वेश्मसु राघवम् ।
जगामास्तं दिनकरो रजनी चाभ्यवर्तत ॥ ३३

नष्टज्वलनसंपाता प्रशान्ताध्यायसत्कथा ।
तिमिरेणाभिलिप्तेव सा तदा नगरी बभौ ॥ ३४

उपशान्तवणिक्पण्या नष्टहर्षा निराश्रया ।
अयोध्या नगरी चासीन्नष्टतारमिवाम्बरम् ॥ ३५

तथा स्त्रियो रामनिमित्तमातुरा यथा सुते भ्रातरि वा विवासिते ।
विलप्य दीना रुरुदु र्विचेतस स्सुतैर्हि तासामधिको हि सोऽभवत् ॥

प्रशान्तगीतोत्सवनृत्तवादना व्यपास्तहर्षा पिहितापणोदया ।
तदा ह्ययोध्या नगरी बभूव सा महार्णवस्संक्षिपितोदको यथा ॥

इति श्रीमदयोध्याकाण्डे अष्टचत्वारिंशस्सर्गः ॥

## ॥ एकोनपञ्चाशस्सर्गः ॥

रामोऽपि रात्रिशेषेण तेनैव महदन्तरम् ।
जगाम पुरुषव्याघ्रः पितुराज्ञा मनुस्मरन् ॥ १

तथैव गच्छत स्तस्य व्यपाया द्रजनी शिवा ।
उपास्य स शिवां सन्ध्यां विषयान्तं व्यगाहत ॥ २

ग्रामान्विकृष्टसीमान्तान्पुष्पितानि वनानि च ।
पश्य न्नतिययौ शीघ्रं शनै रिव हयोत्तमैः ॥ ३
शृण्वन्वाचो मनुष्याणां ग्रामसंवासवासिनाम् ।
[विगर्हतां चकैकेयीं क्रूरां क्रूरेण कर्मणा ॥] ४
"राजानं धिग्दशरथं कामस्य वश मास्थितम् ।
हा नृशंसाद्य कैकेयी पापा पापानुबन्धिनी ॥ ५
तीक्ष्णासम्भिन्नमर्यादा तीक्ष्णकर्मणि वर्तते ।
या पुत्र मीदृशं राज्ञः प्रवासयति धार्मिकम् ॥ ६
वनवासे महाप्राज्ञं सानुक्रोशं जितेन्द्रियम् ।
कथं नाम महाभागा सीता जनकनन्दिनी ॥ ७
सदा सुखेष्वभिरता दुःखान्यनुभविष्यति ।
अहो! दशरथो राजा निस्स्नेह स्स्वसुतं प्रियम् ॥ ८
प्रजाना मनघं रामं परित्यक्तु मिहेच्छति ।"
एता वाचो मनुष्याणां ग्रामसंवासवासिनाम् ॥ ९
शृण्वन्नतिययौ वीरः कोसलान्कोसलेश्वरः ।
ततो वेदश्रुतिं नाम शिववारिवहां नदीम् ॥ १०
उत्तीर्याभिमुखः प्राया दगस्त्याध्युषितां दिशम् ।
गत्वातु सुचिरं कालं तत श्शीतजलां नदीम् ॥ ११
गोमतीं गोयुतानूपामतरत्सागरङ्गमाम् ।
गोमतीं चाप्यतिक्रम्य राघव श्शीघ्रगैर्हयैः ॥ १२
मयूरहंसाभिरुतां ततार स्यन्दिकां नदीम् ।
स महीं मनुना राज्ञा दत्ता मिक्ष्वाकवे पुरा ॥ १३

स्फीतां राष्ट्रावृतां रामो वैदेही मन्वदर्शयत ।
"सूत" इत्येव चाभाष्य सारथिं तमभीक्ष्णशः ॥ १४
हंसमत्तस्वर श्श्रीमा नुवाच पुरुषर्षभः ।
"कदाऽहं पुन रागम्य सरय्वाः पुष्पिते वने ॥ १५
मृगयां पर्यटिष्यामि मात्रा पित्रा च सङ्गतः ।
राजर्षीणां हि लोकेऽस्मिन् रत्यर्थं मृगयावने ॥ १६
काले वृतां तां मनुजैर्धन्विनामभिकाङ्क्षिताम् ।
नात्यर्थमभिकाङ्क्षामि मृगयां सरयूवने ॥ १७
रति र्ह्येषाऽतुला लोके राजर्षिगणसम्मता ।"
स त मध्वान मैक्ष्वाक स्सूतं मधुरया गिरा ॥ १८
तं तमर्थ मभिप्रेत्य ययौ वाक्यमुदीरयन् ॥

इति श्रीमदयोध्याकाण्डे एकोनपञ्चाशस्सर्गः ॥

## ॥ पञ्चाशस्सर्गः ॥

विशालान्कोसलान्रम्यान्यात्वा लक्ष्मणपूर्वजः ।
अयोध्याभिमुखो धीमा न्प्राञ्जलि र्वाक्य मब्रवीत् ॥ १
"आपृच्छे त्वां पुरि! श्रेष्ठे! काकुत्स्थ परिपालिते! ।
दैवतानि च यानि त्वां पालयन्त्यावसन्ति च ॥ २
निवृत्तवनवासस्त्वा मनृणो जगतीपतेः ।
पुनर्द्रक्ष्यामि मात्रा च पित्रा च सहसङ्गतः ॥ ३
ततो रुधिरताम्राक्षो भुज मुद्यम्य दक्षिणम् ।
अश्रुपूर्णमुखो दीनोऽब्रवी ज्जानपदं जनम् ॥ ४

" अनुक्रोशो दया चैव यथार्हं मयि वः कृतः ।
चिरं दुःखस्य पापीयो गम्यतामर्थसिद्धये ॥" ५
तेऽभिवाद्य महात्मानं कृत्वा चापि प्रदक्षिणम् ।
विलपन्तो नरा घोरं व्यतिष्ठन्त क्वचित्क्वचित् ॥ ६
तथा विलपतां तेषां मतृप्तानां च राघवः ।
अचक्षुर्विषयं प्रायाद्यथाऽर्कः क्षणदामुखे ॥ ७
ततो धान्यधनोपेतान्दानशीलजनाञ्छिवान् ।
अकुतश्चिद्भयान्रम्यां श्चैत्ययूपसमावृतान् ॥ ८
उद्यानाम्रवणोपेतान्सम्पन्नसलिलाशयान् ।
तुष्टपुष्टजनाकीर्णान् गोकुलाकुलसेवितान् ॥ ९
लक्षणीयान्नरेन्द्राणां ब्रह्मघोषाभिनादितान् ।
रथेन पुरुषव्याघ्रः कोसलानत्यवर्तत ॥ १०
मध्येन मुदितं स्फीतं रम्योद्यानसमाकुलम् ।
राज्यं भोग्यं नरेन्द्राणां ययौ धृतिमतां वरः ॥ ११
तत स्त्रिपथगां दिव्यां शिवतोयामशैवलाम् ।
ददर्श राघवो गङ्गां पुण्यामृषिनिषेविताम् ॥ १२
आश्रमै रविदूरस्थै श्श्रीमद्भि स्समलङ्कृताम् ।
कालेऽप्सरोभि र्हृष्टाभि स्सेविताम्भोह्रदां शिवाम् ॥ १३
देवदानवगन्धर्वैः किन्नरै रुपशोभिताम् ।
नानागन्धर्वपत्नीभि स्सेवितां सततं शिवाम् ॥ १४
देवाऽऽक्रीडशताकीर्णां देवोद्यानशतायुताम् ।
देवार्थ माकाशगमां विख्यातां देवपद्मिनीम् ॥ १५

जलाघाताट्टहासोग्रां फेननिर्मलहासिनीम् ।
क्वचि द्वेणीकृतजलां क्वचिदावर्तशोभिताम् ॥ १६
क्वचित् स्तिमितगम्भीरां क्वचिद्वेगजलाकुलाम् ।
क्वचिद्गम्भीरनिर्घोषां क्वचिद्भैरवनिस्वनाम् ॥ १७
देवसङ्घाप्लुतजलां निर्मलोत्पलशोभिताम् ।
क्वचिदाभोगपुलिनां क्वचिन्निर्मलवालुकाम् ॥ १८
हंससारससंघुष्टां चक्रवाकोपकूजिताम् ।
सदामदै श्च विहगै रभिसन्नादितान्तराम् ॥ १९
क्वचित्तीररुहै र्वृक्षैर्मालाभि रिव शोभिताम् ।
क्वचित्फुल्लोत्पलच्छन्नां क्वचित्पद्मवनाकुलाम् ॥ २०
क्वचित्कुमुदषण्डै श्च कुट्मलै रुपशोभिताम् ।
नानापुष्परजोध्वस्तां समदामिव च क्वचित् ॥ २१
व्यपेतमलसङ्घातां मणिनिर्मलदर्शनाम् ।
दिशागजै र्वनगजै र्मत्तै श्च वरवारणैः ॥ २२
देवोपवाह्यै श्च मुहुस्सन्नादितवनान्तराम् ।
प्रमदामिव यत्नेन भूषितां भूषणोत्तमैः ॥ २३
फलैः पुष्पैः किसलयै र्वृतां गुल्मै र्द्विजै स्तथा ।
शिंशुमारै श्च नक्रै श्च भुजङ्गै श्च निषेविताम् ॥ २४
विष्णुपादच्युतां दिव्या मपापां पापनाशिनीम् ।
तां शङ्करजटाजूटा द्भ्रष्टां सागरतेजसा ॥ २५
समुद्रमहिषीं गङ्गां सारसक्रौञ्चनादिताम् ।
आससाद महाबाहु श्शृङ्गिबेरपुरं प्रति ॥ २६

ता मूर्मिकलिलावर्ता मन्ववेक्ष्य महारथः ।
सुमन्त्रमब्रवीत्सूत "मिहैवाद्य वसामहे ॥ २७
अविदूरादयं नद्या बहुपुष्पप्रवाळवान् ।
सुमहानिङ्गुदीवृक्षो वसामोऽत्रैव सारथे! ॥ २८
द्रक्ष्याम स्सरितां श्रेष्ठां सम्मान्यसलिलां शिवाम् ।
देवदानवगन्धर्व मृगमानुषपक्षिणाम् ॥" २९
लक्ष्मण श्च सुमन्त्र श्च "बाढ"मित्येव राघवम् ।
उक्त्वातमिङ्गुदीवृक्षं तदोपययतुर्हयैः ॥ ३०
रामोऽभियाय तं रम्यं वृक्ष मिक्ष्वाकुनन्दनः ।
रथा दवातरत्तस्मात्सभार्य स्सहलक्ष्मणः ॥ ३१
सुमन्त्रोऽप्यवतीर्यास्मान्मोचयित्वा हयोत्तमान् ।
वृक्षमूलगतं राम मुपतस्थे कृताञ्जलिः ॥ ३२
तत्र राजा गुहो नाम रामस्याऽऽत्मसमस्सखा ।
निषादजात्यो बलवान् स्थपति श्चेति विश्रुतः ॥ ३३
स श्रुत्वा पुरुषव्याघ्रं रामं विषय मागतम् ।
वृद्धैः परिवृतोऽमात्यैः ज्ञातिभि श्चाभ्युपागतः ॥ ३४
ततो निषादाधिपतिं दृष्ट्वा दूरादुपस्थितम् ।
सह सौमित्रिणा रामस्समागच्छद्गुहेन सः ॥ ३५
तमार्त स्सम्परिष्वज्य गुहो राघव मब्रवीत् ।
"यथाऽयोध्या तथेयं ते राम! किंकरवाणिते ॥ ३६
ईदृशं हि महाबाहो! कः प्राप्स्यत्यतिथिंप्रियम ।"
ततो गुणवदन्नाद्य मुपादाय पृथग्विधम् ॥ ३७

अर्घ्यं चोपानयत्क्षिप्रं वाक्यं चेद मुवाच ह ।
" स्वागतं ते महाबाहो! तवेय मखिला मही ॥ ३८
वयं प्रेष्या भवान्भर्ता साधु राज्यं प्रशाधि नः ।
भक्ष्यं भोज्यं च पेयं च लेह्यं चेद मुपस्थितम् ॥ ३९
शयनानि च मुख्यानि वाजिनां खादनं च ते ।"
गुह मेवं ब्रुवाणं तु राघवः प्रत्युवाच ह ॥ ४०
अर्चिता श्चैव हृष्टा श्च भवता सर्वथा वयम् ।
पद्भ्यामभिगमा च्चैव स्नेहसंदर्शनेन च ॥" ४१
भुजाभ्यां साधु पीनाभ्यां पीडयन्वाक्य मब्रवीत् ।
" दिष्ट्या त्वां गुह! पश्यामि अरोगं सह बान्धवैः ॥ ४२
अपि ते कुशलं राष्ट्रे मित्रेषु च धनेषु च ।
यत्त्विदं भवता किंचित्प्रीत्या समुपकल्पितम् ॥ ४३
सर्वं तदनुजानामि नहि वर्ते प्रतिग्रहे ।
कुशचीराजिनधरं फलमूलाशिनं च माम् ॥ ४४
विद्धि प्रणिहितं धर्मे तापसं वनगोचरम् ।
अश्वानां खादने नाहमर्थी नान्येन केनचित् ॥ ४५
एतावताऽत्र भवता भविष्यामि सुपूजितः ।
एते हि दयिता राज्ञः पितुर्दशरथस्य मे ॥ ४६
एतै स्सुविहितै रश्वै र्भविष्याम्यह मर्चितः ।"
अश्वानां प्रतिपानं च खादनं चैव सोऽन्वशात् ॥ ४७
गुहस्तत्रैव पुरुषां " स्त्वरितं दीयता " मिति ।
तत श्चीरोत्तरासङ्ग स्सन्ध्या मन्वास्य पश्चिमाम् ॥ ४८

जलमेवाऽददे भोज्यं लक्ष्मणेनाऽहृतं स्वयम् ।
तस्य भूमौ शयानस्य पादौ प्रक्षाळ्य लक्ष्मणः ॥ ४९
सभार्यस्य ततोऽभ्येत्य तस्थौ वृक्ष मुपाश्रितः ।
गुहोऽपि सह सूतेन सौमित्रि मनुभाषयन् ॥ ५०
अन्वजाग्रत्ततो राम मप्रमत्तो धनुर्धरः ।
तथा शयानस्य ततोऽस्य धीमतो यशस्विनो दाशरथे र्महात्मनः ।
अदृष्टदुःखस्य सुखोचितस्य सा तदा व्यतीयाय चिरेण शर्वरी ॥

इति श्रीमदयोध्याकाण्डे पञ्चाशस्सर्गः ॥

## ॥ एकपञ्चाशस्सर्गः ॥

तं जाग्रत मदम्भेन भ्रातु रर्थाय लक्ष्मणम् ।
गुह स्सन्तापसंतप्तो राघवं वाक्य मब्रवीत् ॥ १
"इयं तात ! सुखा शय्या त्वदर्थ मुपकल्पिता ।
प्रत्याश्वसिहि साध्वस्यां राजपुत्र ! यथासुखम् ॥ २
उचितोऽयं जनस्सर्वः क्लेशानां त्वं सुखोचितः ।
गुप्त्यर्थं जागरिष्यामः काकुत्स्थस्य वयं निशाम् ॥ ३
नहि रामात्प्रियतमो ममास्ति भुवि कश्चन ।
ब्रवीम्येतदहं सत्यं सत्येनैव च ते शपे ॥ ४
अस्य प्रसादा दाशंसे लोकेऽस्मिन्सुमहद्यशः ।
धर्मावाप्तिं च विपुला मर्थावाप्तिंच केवलाम् ॥ ५
सोऽहं प्रियसखं रामं शयानं सह सीतया ।
रक्षिष्यामि धनुष्पाणि स्सर्वतो ज्ञातिभि स्सह ॥ ६

न हि मेऽविदितं किंचिद्वनेऽस्मि श्चरत स्सदा ।
चतुरङ्गं ह्यपि वलं सुमहत्प्रसहेमहि ॥" ७
लक्ष्मण स्तं तदोवाच "रक्ष्यमाणा स्त्वयाऽनघ ! ।
नात्रभीता वयं सर्वे धर्म मेवानुपश्यता ॥ ८
कथं दाशरथौ भूमौ शयाने सह सीतया ।
शक्या निद्रा मया लब्धुं जीवितं वा सुखानि वा ॥ ९
यो न देवासुरै स्सर्वै श्शक्यः प्रसहितुं युधि ।
तं पश्य सुखसंविष्टं तृणेषु सह सीतया ॥ १०
यो मन्त्रतपसा लब्धो विविधैश्च परिश्रमैः ।
एको दशरथस्येष्टः पुत्र स्सदृशलक्षणः ॥ ११
अस्मिन्प्रव्राजिते राजा न चिरं वर्तयिष्यति ।
विधवा मेदिनी नूनं क्षिप्रमेव भविष्यति ॥ १२
विनद्य सुमहानादं श्रमेणोपरताः स्त्रियः ।
निर्घोषोपरतं घातो मन्ये राजनिवेशनम् ॥ १३
कौसल्या चैव राजा च तथैव जननी मम ।
नाशंसे यदि जीवन्ति सर्वे ते शर्वरी मिमाम् ॥ १४
जीवे दपि हि मे माता शत्रुघ्नस्यान्ववेक्षया ।
तद्दुःखं यत्तु कौसल्या वीरसूर्विनशिष्यति ॥ १५
अनुरक्तजनाकीर्णा सुखा लोकप्रियावहा ।
राजव्यसनसंसृष्टा सा पुरी विनशिष्यति ॥ १६
कथं पुत्रं महात्मानं ज्येष्ठं प्रिय मपश्यतः ।
शरीरं धारयिष्यन्ति प्राणा राज्ञो महात्मनः ॥ १७

विनष्टे नृपतौ पश्चात्कौसल्या विनशिष्यति ।
अनन्तरं च माताऽपि मम नाश मुपैष्यति ॥ १८
अतिक्रान्त मतिक्रान्त मनवाप्य मनोरथम् ।
राज्ये राम मनिक्षिप्य पिता मे विनशिष्यति ॥ १९
सिद्धार्थाः पितरं वृत्तं तस्मिन्काले्ऽप्युपस्थिते ।
प्रेतकार्येषु सर्वेषु संस्करिष्यन्ति भूमिपम् ॥ २०
रम्यचत्वरसंस्थानां सुविभक्तमहापथाम् ।
हर्म्यप्रासादसम्पन्नां गणिकावरशोभिताम् ॥ २१
रथाश्वगजसम्बाधां तूर्यनादविनादिताम् ।
सर्वकल्याणसंपूर्णां हृष्टपुष्टजनाकुलाम् ॥ २२
आरामोद्यानसम्पन्नां समाजोत्सवशालिनीम् ।
सुखिता विचरिष्यन्ति राजधानीं पितुर्मम ॥ २३
अपि जीवेद्दशरथो वनवासात्पुनर्वयम् ।
प्रत्यागम्य महात्मान मपि पश्येम सुव्रतम् ॥ २४
अपि सत्यप्रतिज्ञेन सार्धं कुशलिना वयम् ।
निवृत्ते वनवासेऽस्मिन्नयोध्यां प्रविशेमहि ॥" २५
परिदेवयमानस्य दुःखार्तस्य महात्मनः ।
तिष्ठतो राजपुत्रस्य शर्वरी साऽत्यवर्तत ॥ २६

तथा हि सत्यं ब्रुवति प्रजाहिते नरेन्द्रपुत्रे गुरुसौहृदा द्गुहः ।
मुमोच बाष्पं व्यसनाभिपीडितो ज्वरातुरो नाग इव व्यथातुरः ॥

इति श्रीमदयोध्याकाण्डे एकपञ्चाशस्सर्गः ॥

## ॥ द्विपञ्चाशस्सर्गः ॥

प्रभातायान्तु शर्वर्यां पृथुवक्षा महायशाः ।
उवाच रामस्सौमित्रिं लक्ष्मणं शुभलक्षणम् ॥ १
"भास्करोदयकालोऽयं गता भगवती निशा ।
असौ सुकृष्णो विहगः कोकिल स्तात! कूजति ॥ २
बर्हिणानां च निर्घोष श्श्रूयते नदतां वने ।
तराम जाह्नवीं सौम्य! शीघ्रगां सागरङ्गमाम् ॥" ३
विज्ञाय रामस्य वच स्सौमित्रि र्मित्रनन्दनः ।
गुह मामन्त्र्य सूतं च सोऽतिष्ठद्भ्रातु रग्रतः ॥ ४
स तु रामस्य वचनं निशम्य प्रतिगृह्य च ।
स्थपति स्तूर्ण माहूय सचिवानिद मब्रवीत् ॥ ५
"अस्य वाहनसंयुक्तां कर्णग्राहवतीं शुभाम् ।
सुप्रतारां दृढां तीर्थे शीघ्रं नाव मुपाहर ॥" ६
तं निशम्य समादेशं गुहामात्यगणो महान् ।
उपोह्यरुचिरां नावं गुहाय प्रत्यवेदयत् ॥ ७
तत स्स प्राञ्जलि र्भूत्वा गुहो राघव मब्रवीत् ।
"उपस्थितेयं नौर्देव! भूयः किं करवाणि ते ॥ ८
तवामरसुतप्रख्य! तर्तुं सागरगां नदीम् ।
नौ रियं पुरुषव्याघ्र! तां त्व मारोह सुव्रत! ॥" ९
अथोवाच महातेजा रामो गुहमिदं वचः ।
"कृतकामोऽस्मि भवता शीघ्र मारोप्यता" मिति ॥ १०

ततः कलापान्सन्नह्य खड्गौ बद्ध्वा च धन्विनौ ।
जग्मतुर्येन तौ गङ्गां सीतया सह राघवौ ॥ ११
राम मेव तु धर्मज्ञ मुपगम्य विनीतवत् ।
"कि महं करवाणी"ति सूतः प्राञ्जलि रब्रवीत् ॥ १२
ततोऽब्रवीद्दाशरथि स्सुमन्त्रं स्पृशन्करेणोत्तमदक्षिणेन ।
"सुमन्त्र! शीघ्रं पुनरेव याहि राज्ञस्सकाशे भव चा प्रमत्तः ॥ १३
निवर्तस्वे"त्युवाचैन "मेतावद्धि कृतं मम ।
रथं विहाय पद्भ्यां तु गमिष्यामि महावनम् ॥" १४
आत्मानं त्वभ्यनुज्ञात मवेक्ष्याऽऽर्त स्स सारथिः ।
सुमन्त्रः पुरुषव्याघ्र मैक्ष्वाक मिदमब्रवीत् ॥ १५
"नातिक्रान्त मिदं लोके पुरुषेणेह केनचित् ।
तव सभ्रातृभार्यस्य वासः प्राकृतवद्वने ॥ १६
नमन्ये ब्रह्मचर्येऽस्ति स्वधीते वा फलोदयः ।
मार्दवार्जवयो र्वापि त्वां चेद्व्यसन मागतम् ॥ १७
सह राघव! वैदेह्या भ्रात्रा चैव वने वसन् ।
त्वं गतिं प्राप्स्यसे वीर! त्रींल्लोकां स्तु जयन्निव ॥ १८
वयं खलु हता राम! ये त्वयाप्युपवञ्चिताः ।
कैकेय्या वशमेष्यामः पापाया दुःखभागिनः ॥" १९
इति ब्रुवन्नात्मसमं सुमन्त्र स्सारथिस्तदा ।
दृष्ट्वा दूरगतं रामं दुःखार्तो रुरुदे चिरम् ॥ २०
ततस्तु विगते बाष्पे सूतं स्पृष्टोदकं शुचिम् ।
रामस्तु मधुरं वाक्यं पुनःपुन रुवाचतम् ॥ २१

"इक्ष्वाकूणां त्वया तुल्यं सुहृदं नोपलक्षये
तथा दशरथो राजा मां न शोचेत्तथा कुरु ॥ २२
शोकोपहतचेताश्च वृद्धश्च जगतीपतिः ।
कामभारावसन्नश्च तस्मा देत द्ब्रवीमिते ॥ २३
यद्यदाज्ञापयेत्किंचि त्स महात्मा महीपतिः ।
कैकेय्याः प्रियकामार्थं कार्यं तदविकांक्षया ॥ २४
एतदर्थं हि राज्यानि प्रशासति नरेश्वराः ।
यदेषां सर्वकृत्येषु मनोन प्रतिहन्यते ॥ २५
यद्यथा स महाराजो नाळीक मधिगच्छति ।
नच ताम्यति दुःखेन सुमन्त्र! कुरु तत्तथा ॥ २६
अदृष्टदुःखं राजानं वृद्ध मार्यं जितेन्द्रियम् ।
ब्रूयास्त्व मभिवाद्यैव मम हेतो रिदं वचः ॥ २७
नैवाह मनुशोचामि लक्ष्मणो नच मैथिली ।
अयोध्यायाश्च्युताश्चेति वने वत्स्यामहेति च ॥ २८
चतुर्दशसुवर्षेषु निवृत्तेषु पुनः पुनः ।
लक्ष्मणं मांच सीतां च द्रक्ष्यसि क्षिप्र मागतान् ॥ २९
एव मुक्त्वातु राजानं मातरं च सुमन्त्र! मे ।
अन्याश्च देवी स्सहिताः कैकेयीं च पुनः पुनः ॥ ३०
आरोग्यं ब्रूहि कौसल्या मथ पादाभिवन्दनम् ।
सीताया मम चाऽर्यस्य वचना ल्लक्ष्मणस्यच ॥ ३१
ब्रूयाश्च हि महाराजं भरतं क्षिप्र मानय ।
आगतश्चापि भरतः स्थाप्यो नृपमते पदे ॥ ३२

भरतं च परिष्वज्य यौवराज्येऽभिषिच्य च ।
अस्मत्सन्तापजं दुःखं न त्वा मभिभविष्यति ॥ ३३
भरत श्चापि वक्तव्यो यथा राजनिवर्तसे ।
तथा मातृषु वर्तेथा स्सर्वास्वेवाविशेषतः ॥ ३४
यथा च तव कैकेयी सुमित्रा च विशेषतः ।
तथैव देवी कौसल्या मम माताविशेषतः ॥ ३५
तातस्य प्रियकामेन यौवराज्य मवेक्षता ।
लोकयो रुभयो श्शक्यं नित्यदा सुखमेधितुम् ॥" ३६
निवर्त्यमानो रामेण सुमन्त्र श्शोककर्शितः ।
तत्सर्वं वचनं श्रुत्वा स्नेहा त्काकुत्स्थ मब्रवीत् ॥ ३७
"यदहं नोपचारेण ब्रूयां स्नेहा दविक्लबः ।
भक्तिमानिति तत्ताव द्वाक्यं त्वं क्षन्तु मर्हसि ॥ ३८
कथं हि त्वद्विहीनोऽहं प्रतियास्यामि तां पुरीम् ।
तव तावद्वियोगेन पुत्रशोकाकुला मिव ॥ ३९
स राम मपि तावन्मे रथं दृष्ट्वा तदा जनः ।
विना रामं रथं दृष्ट्वा विदीर्येतापि सा पुरी ॥ ४०
दैन्यं हि नगरी गच्छे दृष्ट्वा शून्यमिमं रथम् ।
सूतावशेषं स्वं सैन्यं हतवीर मिवाऽहवे ॥ ४१
दूरेऽपि निवसन्तं त्वां मानसनाग्रतः स्थितम् ।
चिन्तयन्त्योऽद्य नूनं त्वां निराहाराः कृताः प्रजाः ॥ ४२
दृष्टं तद्धि त्वया राम! यादृशं त्वत्प्रवासने ।
प्रजानां संकुलं वृत्तं त्वच्छोकक्लांतचेतसाम् ॥ ४३

आर्तनादो हि यः पौरैर्मुक्त स्त्वद्विप्रवासने ।
स रथं मां निशाम्यैव कुर्यु श्शतगुणं ततः ॥ ४४
अहं किं चापि वक्ष्यामि देवीं तव सुतो मया ।
नीतोऽसौ मातुलकुलं सन्तापं माकृथा इति ॥ ४५
असत्य मपि नैवाहं ब्रूयां वचन मीदृशम् ।
कथमप्रियमेवाहं ब्रूयां सत्य मिदं वचः ॥ ४६
मम तावन्नियोगस्थास्त्वद्बन्धुजनवाहिनः ।
कथं रथं त्वया हीनं प्रवक्ष्यन्ति हयोत्तमाः ॥ ४७
तन्न शक्ष्याम्यहं गन्तु मयोध्यां त्वदृतेऽनघ ।
वनवासानुयानाय मा मनुज्ञातु मर्हसि ॥ ४८
यदि मे याचमानस्य त्याग मेव करिष्यसि ।
सरथोऽग्निं प्रवेक्ष्यामि त्यक्तमात्र इह त्वया ॥ ४९
भविष्यन्ति वने यानि तपोविघ्नकराणिते ।
रथेन प्रतिबाधिष्ये तानि सत्त्वानि राघव! ॥ ५०
त्वत्कृते न मयाऽवाप्तं रथचर्याकृतं सुखम् ।
आशंसे त्वत्कृतेनाहं वनवासकृतं सुखम् ॥ ५१
प्रसीदेच्छामि तेऽरण्ये भवितुं प्रत्यनन्तरः ।
प्रीत्याऽभिहित मिच्छामि भव मे प्रत्यनन्तरः ॥ ५२
इमे चापि हया वीर! यदि ते वनवासिनः ।
परिचर्यां करिष्यन्ति प्राप्स्यन्ति परमां गतिम् ॥ ५३
तव शिश्रूषणं मूर्ध्ना करिष्यामि वने वसन् ।
अयोध्यां देवलोकं वा सर्वथा प्रजहाम्यहम् ॥ ५४

नहि शक्या प्रवेष्टुं सा मयाऽयोध्या त्वया विना ।
राजधानी महेन्द्रस्य यथा दुष्कृतकर्मणः ॥ ५५
वनवासे क्षयं प्राप्ते ममैष हि मनोरथः ।
यदनेन रथेनैव त्वां वहेयं पुरीं पुनः ॥ ५६
चतुर्दश हि वर्षाणि सहितस्य त्वया वने ।
क्षणभूतानि यास्यन्ति शतसंख्यान्यतोऽन्यथा ॥ ५७
भृत्यवत्सल! तिष्ठन्तं भर्तृपुत्रगते पथि ।
भक्तं भृत्यं स्थितं स्थित्यां त्वं न मां हातु मर्हसि ॥" ५८
एवं बहुविधं दीनं याचमानं पुनः पुनः ।
रामो भृत्यानुकम्पीतु सुमन्त्र मिद मब्रवीत् ॥ ५९
"जानामि परमां भक्तिं मयिते भर्तृवत्सल! ।
शृणु चापि यदर्थं त्वां प्रेषयामि पुरी मितः ॥ ६०
नगरीं त्वां गतं दृष्ट्वा जननी मे यवीयसी ।
कैकेयी प्रत्ययं गच्छे दिति 'रामो वनं गतः' ६१
परितुष्टा हि सा देवी वनवासं गते मयि ।
राजानं नातिशङ्केत 'मिथ्यावादी'ति धार्मिकम् ॥ ६२
एष मे प्रथमः कल्पोयदम्बा मे यवीयसी ।
भरतारक्षितं स्फीतं पुत्रराज्यमवाप्नुयात् ॥ ६३
मम प्रियार्थं राज्ञश्च स रथ स्त्वं पुरीं व्रज ।
संदिष्ट श्चापि यानर्थां स्तां स्ता न्ब्रूयास्तथा तथा ॥" ६४
इत्युक्त्वा वचनं सूतं सान्त्वयित्वा पुनः पुनः ।
गुहं वचन मक्लीबो रामो हेतुमदब्रवीत् ॥ ६५

"नेदानीं गुह! योग्योऽयं वासो मे सजने वने ।
अवश्यं ह्याश्रमे वासः कर्तव्य स्तद्गतो विधिः ॥ ६६
सोऽहं गृहीत्वा नियमं तपस्विजनभूषणम् ।
हितकामः पितु र्भूय स्सीताया लक्ष्मणस्य च ॥ ६७
जटाः कृत्वा गमिष्यामि न्यग्रोधक्षीर मानय ।"
तत्क्षीरं राजपुत्राय गुहः क्षिप्र मुपाहरत् ॥ ६८
लक्ष्मणस्याऽऽत्मनश्चैव रामस्तेनाकरो ज्जटाः ।
दीर्घबाहुर्नरव्याघ्रो जटिलत्व मधारयत् ॥ ६९
तौ तदा चीरवसनौ जटामण्डलधारिणौ ।
अशोभेता मृषिसमौ भ्रातरौ रामलक्ष्मणौ ॥ ७०
ततो वैखानसं मार्ग मास्थित स्सहलक्ष्मणः ।
व्रत मादिश्य सहायं गुह मब्रवीत् ॥ ७१
"अप्रमत्तो बले कोशे दुर्गे जनपदे तथा ।
भवेथा गुह! राज्यं हि दुरारक्ष्यतमं मतम् ॥" ७२
तत स्तं समनुज्ञाय गुह मिक्ष्वाकुनन्दनः ।
जगाम तूर्ण मव्यग्र स्सभार्य स्सहलक्ष्मणः ॥ ७३
स तु दृष्ट्वा नदीतीरे नाव मिक्ष्वाकुनन्दनः ।
तितीर्षु श्शीघ्रगां गङ्गा मिदं लक्ष्मण मब्रवीत् ॥ ७४
"आरोह त्वं नरव्याघ्र! स्थितां नाव मिमां शनैः ।
सीतां चाऽऽरोपयान्वक्षं परिगृह्य मनस्विनीम् ॥" ७५
स भ्रातु श्शासनं श्रुत्वा सर्व मप्रतिकूलयन् ।
आरोप्य मैथिलीं पूर्व मारुरोहाऽऽत्मवां स्ततः ॥ ७६

अथाऽरुरोह तेजस्वी स्वयं लक्ष्मणपूर्वजः ।
ततो निषादाधिपति र्गुहो ज्ञाती नचोदयत् ॥ ७७
राघवोऽपि महातेजा नाव मारुह्य तां ततः ।
ब्रह्मवत्क्षत्रवच्चैव जजाप हित मात्मनः ॥ ७८
आचम्य च यथाशास्त्रं नदीं तां सह सीतया ।
प्राणमत्प्रीतिसंहृष्टो लक्ष्मण श्चामितप्रभः ॥ ७९
अनुज्ञाय सुमन्त्रं च सबलं चैव तं गुहम् ।
आस्थाय नावं रामस्तु चोदयामास नाविकान् ॥ ८०
ततस्तै श्चोदिता सा नौः कर्णधारसमाहिता ।
गुहस्य वेगाभिहता शीघ्रं सलिल मत्यगात् ॥ ८१
मध्यंतु समनुप्राप्य भागीरथ्या स्त्वनिन्दिता ।
वैदेही प्राञ्जलि र्भूत्वा तां नदी मिद मब्रवीत् ॥ ८२
"पुत्रो दशरथस्यायं महाराजस्य धीमतः ।
निदेशं पारयित्वेमं गङ्गे! त्वदभिरक्षितः ॥ ८३
चतुर्दश हि वर्षाणि समग्राण्युष्य कानने ।
भ्रात्रा सह मयाचैव पुनः प्रत्यागमिष्यति ॥ ८४
तत स्त्वां देवि! सुभगे क्षेमेण पुनरागता ।
यक्ष्ये प्रमुदिता गङ्गे! सर्वकामसमृद्धिनि! ॥ ८५
त्वं हि त्रिपथगा देवि! ब्रह्मलोकं समीक्षसे ।
भार्या चोदधिराजस्य लोकेऽस्मिन् संप्रदृश्यसे ॥ ८६
सात्वां देवि! नमस्यामि प्रशंसामि च शोभने! ।
प्राप्तराज्ये नरव्याघ्रे शिवेन पुन रागते ॥ ८७

गवां शतसहस्राणि वस्त्राण्यन्नं च पेशलम् ।
ब्राह्मणेभ्यः प्रयच्छामि तव प्रियचिकीर्षया ॥ ८८
सुराघटसहस्रेण मांसभूतौदनेन च ।
यक्ष्ये त्वां प्रयतादेवि ! पुरीं पुन रुपागता ॥ ८९
यानि त्वत्तीरवासीनि दैवतानि वसन्तिच ।
तानि सर्वाणि यक्ष्यामि तीर्थान्यायतनानि च ॥ ९०
पुन रेव महाबाहुर्मया भ्रात्राच संगतः ।
अयोध्यां वनवासात्तु प्रविशत्वनघोऽनघे ! ॥" ९१
तथा सम्भाषमाणा सा सीतागङ्गामनिन्दिता ।
दक्षिणा दक्षिणं तीरं क्षिप्रमेवाभ्युपागमत् ॥ ९२
तीरं तु समनुप्राप्य नावं हित्वा नरर्षभः ।
प्रातिष्ठत सह भ्रात्रा वैदेह्या च परन्तपः ॥ ९३
अथाब्रवीन्महाबाहु स्सुमित्रानन्दवर्धनम् ।
"भव संरक्षणार्थाय सजने विजनेऽपि वा ॥ ९४
अवश्यं रक्षणं कार्यं मद्दृष्टे विजनेवने ।
अग्रतो गच्छसौमित्रे ! सीता त्वा मनुगच्छतु ॥ ९५
पृष्ठतोऽहं गमिष्यामि त्वांच सीतां च पालयन् ।
अन्योन्यस्येह नो रक्षा कर्तव्या पुरुषर्षभ ! ॥ ९६
नहि तावदतिक्रान्ता सुकरा काचन क्रिया ।
अद्य दुःखं तु वैदेही वनवासस्य वेत्स्यति ॥ ९७
प्रणष्टजनसम्बाधं क्षेत्रारामविवर्जितम् ।
विषमं च प्रपातं च वन मद्य प्रवेक्ष्यति ॥" ९८

श्रुत्वा रामस्य वचनं प्रतस्थे लक्ष्मणोऽग्रतः ।
अनन्तरं च सीताया राघवो रघुनन्दनः ॥ ९९

गतं तु गङ्गापरपार माशु रामं सुमन्त्रः प्रयतं निरीक्ष्य ।
अध्वप्रकर्षा द्विनिवृत्तदृष्टिर्मुमोच बाष्पं व्यथित स्तपस्वी ॥ १००

स लोकपालप्रतिमप्रभाववां स्तीर्त्वा महात्मा वरदो महानदीम् ।
तत स्समृद्धाञ्छुभसस्यमालिनः क्रमेण वत्सान्मुदितानुपागमत् ॥

तौ तत्र हत्वा चतुरो महामृगान्वराहमृश्यं पृषतं महारुरुम् ।
आदाय मेध्यं त्वरितं बुभुक्षितौ वासाय काले ययतु र्वनस्पतिम् ॥

इति श्रीमदयोध्याकाण्डे द्विपञ्चाशस्सर्गः ॥

---

## ॥ त्रिपञ्चाशस्सर्गः ॥

स तं वृक्षं समासाद्य सन्ध्या मन्वास्य पश्चिमाम् ।
रामो रमयतां श्रेष्ठ इति होवाच लक्ष्मणम् ॥ १

"अद्येयं प्रथमा रात्रिर्याता जनपदा द्बहिः ।
या सुमन्त्रेण रहिता तां नोत्कण्ठितु मर्हसि ॥ २

जागर्तव्य मतन्द्रिभ्या मद्यप्रभृति रात्रिषु ।
योगक्षेमौ हि सीताया वर्तते लक्ष्मण ! ऽऽवयोः ॥ ३

रात्रिं कथंचिदेवेमां सौमित्रे ! वर्तयामहे ।
उपावर्तामहे भूमा वास्तीर्य स्वय मार्जितैः ॥" ४

स तु संविश्य मेदिन्यां महार्हशयनोचितः ।
इमा स्सौमित्रये रामो व्याजहार कथा श्शुभाः ॥ ५

"ध्रुव मद्य महाराजो दुःखं स्वपिति लक्ष्मण ! ।
कृतकामातु कैकेयी तुष्टा भवितु मर्हति ॥ ६
सा हि देवी महाराजं कैकेयी राज्यकारणात् ।
अपि न च्यावयेत्प्राणान् दृष्ट्वा भरत मागतम् ॥ ७
अनाथश्च हि वृद्धश्च मयाचैव विनाकृतः ।
किं करिष्यति कामात्मा कैकेयीवश मागतः ॥ ८
इदं व्यसनमालोक्य राज्ञश्च मतिविभ्रमम् ।
'काम एवार्थधर्माभ्यां गरीया' निति मे मतिः ॥ ९
कोह्यविद्वानपि पुमान् प्रमदायाः कृते त्यजेत् ।
छन्दानुवर्तिनं पुत्रं तातो मामिव लक्ष्मण ! ॥ १०
सुखी बत ! सभार्यश्च भरतः कैकयीसुतः ।
मुदितान्कोसलानेको यो भोक्ष्यत्यधिराजवत् ॥ ११
स हि सर्वस्य राज्यस्य मुख मेकं भविष्यति ।
ताते च वयसाऽतीते मयि चारण्यमास्थिते ॥ १२
अर्थधर्मौ परित्यज्य यः काम मनुवर्तते ।
एव मापद्यते क्षिप्रं राजा दशरथो यथा ॥ १३
मन्ये दशरथान्ताय मम प्रव्राजनायच ।
कैकेयी सौम्य ! सम्प्राप्ता राज्याय भरतस्यच ॥ १४
अपीदानीं न कैकेयी सौभाग्यमदमोहिता ।
कौसल्यां च सुमित्रां च सम्प्रबाधेत मत्कृते ॥ १५
मास्म मत्कारणाद्देवी सुमित्रा दुःख मावसेत् ।
अयोध्या मित एव त्वं काल्ये प्रविश लक्ष्मण ! ॥ १६

अह मेको गमिष्यामि सीतया सह दण्डकान् ।
अनाथाया हि नाथस्त्वं कौसल्याया भविष्यसि ॥ १७
क्षुद्रकर्मा हि कैकेयी द्वेष्य मन्याय्य माचरेत् ।
परिदद्या हि धर्मज्ञे भरते मम मातरम् ॥ १८
नूनं जात्यन्तरे कस्मि स्त्रियः पुत्रै र्वियोजिताः ।
जनन्या मम सौमित्रे! तस्मा देत दुपस्थितम् ॥ १९
मया हि चिरपुष्टेन दुःखसंवर्धितेन च ।
विप्रायुज्यत कौसल्या फलकाले धिगस्तु माम् ॥ २०
मास्म सीमन्तिनी काचिज्जनयेत्पुत्र मीदृशम् ।
सौमित्रे! योऽह मम्बाया दद्मि शोक मनन्तकम् ॥ २१
मन्ये प्रीतिविशिष्टा सा मत्तो लक्ष्मणशारिका ।
यस्या स्त च्छ्रूयते वाक्यं शुकपाद मरेर्दश ॥ २२
शोचन्त्या श्चाल्पभाग्याया न किंचि दुपकुर्वता ।
पुत्रेण किमपुत्राया मया कार्य मरिन्दम! ॥ २३
अल्पभाग्या हि मे माता कौसल्या रहिता मया ।
शेते परमदुःखार्ता पतिता शोकसागरे ॥ २४
एकोह्यह मयोध्यां च पृथिवीं चापि लक्ष्मण ।
तरेय मिषुभिः क्रुद्धो ननुवीर्य मकारणम् ॥ २५
अधर्मभयभीतश्च परलोकस्य चानघ! ।
तेन लक्ष्मण! नाद्याह मात्मान मभिषेचये ॥" २६
एत दन्य च्च करुणं विलप्य विजने बहु ।
अश्रुपूर्णमुखो रामो निशितूर्णी मुपाविशत् ॥ २७

ि थक्नीलप्योपरतं रामं गतार्चिषमिवानलम् ।
स्‍मुद्र तमिव निर्वेग माश्वासयत लक्ष्मणः ॥ २८
"ध्रु ुवमद्य पुरी राज! न्नयोध्याऽऽयुधिनां वर! ।
नि् ष्प्रभा त्वयि निष्क्रान्ते गतचन्द्रेव शर्वरी ॥ २९
नै तैतदौपयिकं राम! यदिदं परितप्यसे ।
वि षेपादयसि सीतां च मां चैव पुरुषर्षभ! ॥ ३०
न च सीता त्वया हीना न चाह मपि राघव! ।
मुहूर्त मपि जीवावो जलान्मत्स्याविवोद्धृतौ ॥ ३१
न स्य हि तातं न शत्रुघ्नं न सुमित्रां परन्तप! ।
द्रष्टु मिच्छेय मद्याहं स्वर्गं वाऽपि त्वया विना ॥" ३२
तत स्त्र स्तत्र सुखासीनौ नातिदूरे निरीक्ष्यताम् ।
न्यग्रोधे सुकृतां शय्यां भेजाते धर्मवत्सलौ ॥ ३३
स लक्ष्मणस्योत्तमपुष्कलं वचो निशम्य चैवं वनवास मादरात् ।
सम ास्समस्ता विदधे परन्तपः प्रपद्य धर्म सुचिराय राघवः ॥ ३४
तत स्तु तस्मिन्विजने वने तदा महाबलौ राघववंशवर्धनौ ।
न तौ भयं सम्भ्रम मभ्युपेयतु र्यथैव सिंहौ गिरिसानुगोचरौ ॥

इति श्रीमदयोध्याकाण्डे त्रिपञ्चाशस्सर्गः ॥

---

## ॥ चतुःपञ्चाशस्सर्गः ॥

तास्मिन्महावृक्षे उषित्वा रजनीं शिवाम् ।
ऽेऽभ्युदिते सूर्ये तस्माद्देशात्प्रतस्थिरे ॥ १

यत्र भागीरथीं गङ्गां यमुनाऽभि प्रवर्तते ।
जग्मु स्तंदेश मुद्दिश्य विगाह्य सुमहद्वनम् ॥ १७ ३
ते भूमिभागान्विविधान्देशां श्चापि मनोरमान् ।
अदृष्टपूर्वा न्पश्यन्त स्तत्रतत्र यशस्विनः ॥ १५
यथाक्षेमेण गच्छन् स पश्यं श्च विविधान्द्रुमान् ।
निवृत्तमात्रे दिवसे राम स्सौमित्रि मब्रवीत् ॥ १६
"प्रयाग मभितः पश्य सौमित्रे! धूम मुन्नतम् ।
अग्ने र्भगवतः केतुं मन्ये सन्निहितो मुनिः ॥ १७
नूनं प्राप्ताः स्म सम्भेदं गङ्गायमुनयोर्वयम् ।
तथा हि श्रूयते शब्दो वारिणो वारिघट्टितः ॥ २८
दारूणि परिभिन्नानि वनजै रुपजीविभिः ।
भरद्वाजाश्रमे चैते दृश्यन्ते विविधाद्रुमाः ॥" २९
धन्विनौ तौ सुखं गत्वा लम्बमाने दिवाकरे ।
गङ्गायमुनयो स्सन्धौ प्रापतु र्निलयं मुनेः ॥ ३०
राम स्त्वाश्रम मासाद्य त्रासयन्मृगपक्षिणः ।
गत्वा मुहूर्त मध्वानं भरद्वाज मुपागमत् ॥ ३१
तत स्त्वाश्रम मासाद्य मुने र्दर्शनकांक्षिणौ ।
सीतयाऽनुगतौ वीरौ दूरा देवावतस्थतुः ॥ ३२
स प्रविश्य महात्मान मृषिं शिष्यगणै र्वृतम् ।
संशितव्रत मेकाग्रं तपसा लब्धचक्षुषम् ॥ ३३
हुताग्निहोत्रं दृष्ट्वैव महाभागं कृताञ्जलिः ।
राम स्सौमित्रिणा सार्धं सीतया चाभ्यवादयत् ॥ ३४

थवेदयत चात्मानं तस्मै लक्ष्मणपूर्वजः ।
सुतौ दशरथस्यावां भगव! न्रामलक्ष्मणौ ॥ १३
भार्या ममेयं वैदेही कल्याणी जनकात्मजा ।
मां चानुयाता विजनं तपोवन मनिन्दिता ॥ १४
पित्रा प्रव्राज्यमानं मां सौमित्रि रनुजः प्रियः ।
अयमन्वगमद्भ्राता वनमेव दृढव्रतः ॥ १५
पित्रा नियुक्ता भगवन् प्रवेक्ष्याम स्तपोवनम् ।
धर्ममेव चरिष्याम स्तत्र मूलफलाशनाः ॥" १६
तस्य तद्वचनं श्रुत्वा राजपुत्रस्य धीमतः ।
उपानयत धर्मात्मा गामर्घ्य मुदकं ततः ॥ १७
नानाविधानन्नरसान्वन्यमूलफलाश्रयान ।
तेभ्यो ददौ तप्ततपा वासं चैवान्वकल्पयत् ॥ १८
मृगपक्षिभि रासीनो मुनिभिश्च समन्ततः ।
राममागत मभ्यर्च्य स्वागतेनाऽऽह तं मुनिः ॥ १९
प्रतिगृह्य च तामर्चा मुपविष्टं स राघवम् ।
भरद्वाजोऽब्रवी द्वाक्यं धर्मयुक्त मिदं तदा ॥ २०
चिरस्य खलु काकुत्स्थ! पश्यामि त्वा मिहाऽऽगतम् ।
श्रुतं तव मयाचेदं विवासन मकारणम् ॥ २१
अवकाशो विविक्तोऽयं महानद्योस्समागमे ।
पुण्यश्च रमणीयश्च वसत्विह भवान्सुखम् ॥" २२
एवमुक्तस्तु वचनं भरद्वाजेन राघवः ।
प्रत्युवाच शुभं वाक्यं राम स्सर्वहिते रतः ॥ २३

"भगव! न्नित आसन्नः पौरजानपदो जनः ।
सुदर्श मिह मां प्रेक्ष्य मन्येऽह मिममाश्रमम् ॥ २४
आगमिष्याति वैदेहीं मां चापि प्रेक्षको जनः ।
अनेन कारणेनाह मिह वासं न रोचये ॥ २५
एकान्ते पश्य भगव! न्नाश्रमस्थान मुत्तमम् ।
रमेत यत्र वैदेही सुखार्हा जनकात्मजा ॥" २६
एतच्छ्रुत्वा शुभं वाक्यं भरद्वाजो महामुनिः ।
राघवस्य ततो वाक्य मर्थग्राहक मब्रवीत् ॥ २७
"दशक्रोश इतस्तात! गिरिर्यत्र निवत्स्यसि ।
महर्षिसेवितः पुण्य स्सर्वत स्सुखदर्शनः ॥ २८
गोलाङ्गूलानुचरितो वानरर्क्षनिषेवितः ।
चित्रकूट इतिख्यातो गन्धमादनसन्निभः ॥ २९
यावता चित्रकूटस्य नरश्शृङ्गाण्यवेक्षते ।
कल्याणानि समाधत्ते न पापे कुरुते मनः ॥ ३०
ऋषय स्तत्र बहवो विहृत्य शरदां शतम् ।
तपसा दिव मारूढाः कपालशिरसा सह ॥ ३१
प्रविविक्त महं मन्ये तं वासं भवतस्सुखम् ।
इह वा वनवासाय वस राम! मया सह ॥" ३२
स रामं सर्वकामै स्तं भरद्वाजः प्रियातिथिम् ।
स भार्यं सह च भ्रात्रा प्रतिजग्राह धर्मवित् ॥ ३३
तस्य प्रयागे रामस्य तं महर्षिमुपेयुषः ।
प्रपन्ना रजनी पुण्या चित्राः कथयतः कथाः ॥ ३४

सीतातृतीयः काकुत्स्थः परिश्रान्तस्सुखोचितः ।
भरद्वाजाश्रमे रम्ये तां रात्रि मवसत्सुखम् ॥ ३५
प्रभातायां रजन्यान्तु भरद्वाज मुपागमत् ।
उवाच नरशार्दूलो मुनिं ज्वलिततेजसम् ॥ ३६
"शर्वरीं भगव! न्नद्य सत्यशील! तवाश्रमे ।
उषिताः स्मेह वसति मनुजानातु नो भवान् ॥" ३७
रात्र्यां तु तस्यां व्युष्टायां भरद्वाजोऽब्रवीदिदम् ।
"मधुमूलफलोपेतं चित्रकूटं व्रजेति ह ॥ ३८
वासमौपयिकं मन्ये तव राम! महाबल! ।
नानानगगणोपेतः किन्नरोरगसेवितः ॥ ३९
मयूरनादाभिरुतो गजराजनिषेवितः ।
गम्यतां भवता शैल श्चित्रकूट स्स विश्रुतः ॥ ४०
पुण्य श्च रमणीय श्च बहुमूलफलायुतः ।
तत्र कुञ्जरयूथानि मृगयूथानि चाभितः ॥ ४१
विचरन्ति वनान्तेऽस्मिं स्तानि द्रक्ष्यसि राघव! ।
सरित्प्रस्रवणप्रस्थान्दरीकन्दरनिर्झरान् ॥ ४२
चरतस्सीतया सार्धं नन्दिष्यति मनस्तव ।
प्रहृष्टकोयष्टिककोकिलस्वनैर्विनादितं तं वसुधाधरं शिवम् ।
मृगै श्च मत्तै र्बहुभि श्च कुञ्जरै स्सुरम्य मासाद्य समावसाऽऽश्रमम् ॥"

इति श्रीमदयोध्याकाण्डे चतुःपञ्चाशस्सर्गः ॥



## ॥ पञ्चपञ्चाशस्सर्गः ॥

उषित्वा रजनीं तत्र राजपुत्रा वरिन्दमौ ।
महर्षि मभिवाद्याथ जग्मतु स्तं गिरि प्रति ॥ १
तेषां चैव स्वस्त्ययनं महर्षि स्स चकार ह ।
प्रस्थितां श्चैव तान्प्रेक्ष्य पिता पुत्रानिवान्वगात् ॥ २
ततः प्रचक्रमे वक्तुं वचनं स महामुनिः ।
भरद्वाजो महातेजा रामं सत्यपराक्रमम् ॥ ३
"गङ्गायमुनयोस्सन्धि मासाद्य मनुजर्षभौ ।
कालिन्दी मनुगच्छेतां नदीं पश्चान्मुखाश्रिताम् ॥ ४
अथाऽऽसाद्य तु कालिन्दीं शीघ्रस्रोतसमापगाम् ।
तस्यास्तीर्थंप्रचरितं पुराणं प्रेक्ष्य राघवौ ॥ ५
तत्र यूयं प्लवं कृत्वा तरतांशुमतीं नदीम् ।
ततो न्यग्रोध मासाद्य महान्तं हरितच्छदम् ॥ ६
विवृद्धं बहुभिर्वृक्षै श्श्यामं सिद्धोपसेवितम् ।
तस्मै सीताऽञ्जलिं कृत्वा प्रयुञ्जीताशिषश्शिवाः ॥ ७
समासाद्य तु तं वृक्षं वसेद्वातिक्रमेत वा ।
क्रोशमात्रं ततो गत्वा नीलं द्रक्ष्यथ काननम् ॥ ८
पलाशबदरीमिश्रं रम्यं वंशै श्च यामुनैः ।
स पन्था श्चित्रकूटस्य गत स्सु बहुशो मया ॥ ९
रम्यो मार्दवयुक्त श्च वनदावैर्विवर्जितः ।"
इति पन्थान मावेद्य महर्षि स्सन्न्यवर्तत ॥ १०

अभिवाद्य 'तथे'त्युक्त्वा रामेण विनिवर्तितः ।
उपावृत्ते मुनौ तस्मिन्रामो लक्ष्मण मब्रवीत् ॥ ११
"कृतपुण्यास्स्म सौमित्रे! मुनिर्यन्नोऽनुकम्पते ।"
इति तौ पुरुषव्याघ्रौ मन्त्रयित्वा मनस्विनौ ॥ १२
सीतामेवाग्रतः कृत्वा कालिन्दीं जग्मतुर्नदीम् ।
अथाऽऽसाद्य तु कालिन्दीं शीघ्रस्रोतोवहां नदीम् ॥ १३
चिन्तामापेदिरे सर्वे नदीजलतितीर्षवः ।
तौ काष्ठसङ्घाटमथो चक्रतु स्सुमहाप्लवम् ॥ १४
शुष्कैर्वंशै स्समास्तीर्णं मुशीरैश्च समावृतम् ।
ततो वेतसशाखाश्च जम्बूशाखा श्च वीर्यवान् ॥ १५
चकार लक्ष्मण श्छित्त्वा सीताया स्सुखमासनम् ।
तत्र श्रियमिवाचिन्त्यां रामो दाशरथिः प्रियाम् ॥ १६
ईषत्संलज्जमानां तामध्यारोपयत प्लवम् ।
पार्श्वे च तत्र वैदेह्या वसने भूषणानि च ॥ १७
प्लवे कठिनकाजं च रामश्चक्रे सहायुधैः ।
आरोप्य सीतां प्रथमं सङ्घाटं परिगृह्य तौ ॥ १८
ततः प्रतेरतु र्यत्तौ वीरौ दशरथात्मजौ ।
कालिन्दी मध्यमायाता सीतात्वेनामवन्दत ॥ १९
"स्वस्ति देवि! तरामि त्वां पारयेन्मे पतिर्व्रतम् ।
यक्ष्ये त्वां गोसहस्रेण सुराघटशतेन च ॥ २०
स्वस्ति प्रत्यागते रामे पुरी मिक्ष्वाकुपालिताम् ।"
कालिन्दी मथ सीता तु याचमाना कृताञ्जलिः ॥ २१

तीरमेवाभिसम्प्राप्ता दक्षिणं वरवर्णिनी ।
ततः प्लवेनांशुमतीं शीघ्रगा मूर्मिमालिनीम् ॥ २२
तीरजै र्बहुभिर्वृक्षै स्सन्तेरुर्यमुनां नदीम् ।
ते तीर्णाः प्लवमुत्सृज्य प्रस्थाय यमुनावनात् ॥ २३
श्यामं न्यग्रोध मासेदु श्शीतलं हरितच्छदम् ।
न्यग्रोधं तमुपागम्य वैदेही वाक्यमब्रवीत् ॥ २४
"नमस्तेऽस्तु महावृक्ष! पारयेन्मेपतिर्व्रतम् ।
कौसल्यां चैव पश्येयं सुमित्रां च यशस्विनीम् ॥" २५
इति सीताऽञ्जलिं कृत्वा पर्यगच्छद्वनस्पतिम् ।
अवलोक्य ततस्सीता मायाचन्ती मनिन्दिताम् ॥ २६
दयितां च विधेयां च रामो लक्ष्मण मब्रवीत् ।
"सीता मादाय गच्छत्व मग्रतो भरताग्रज! ॥ २७
पृष्ठतोऽहं गमिष्यामि सायुधो द्विपदां वर! ।
यद्यत्फलं प्रार्थयते पुष्पं वा जनकात्मजा ॥ २८
तत्तत्प्रदद्या वैदेह्या यत्राऽस्या रमते मनः ।"
गच्छतो स्तु तयोर्मध्ये बभूव जनकात्मजा ॥ २९
मातङ्गयो र्मध्यगता शुभा नागवधूरिव ।
एकैकं पादपं गुल्मं लतां वा पुष्पशालिनीम् ॥ ३०
अदृष्टपूर्वां पश्यन्ती रामं पप्रच्छ साऽबला ।
रमणीयान्बहुविधान्पादपान्कुसुमोत्कटान् ॥ ३१
सीतावचनसंरब्ध आनयामास लक्ष्मणः ।
विचित्रवालुकजलां हंससारसनादिताम् ॥ ३२

रेमे जनकराजस्य सुता प्रेक्ष्य तदा नदीम् ।
क्रोशमात्रं ततोगत्वा भ्रातरौ रामलक्ष्मणौ ॥ ३३
बहून्मेध्यान्मृगान्हत्वा चेरतु र्यमुनावने ।
विहृत्य ते बर्हिणपूगनादिते शुभे वनेवानरवारणायुते ।
समं नदीवप्रमुपेत्य सम्मतं निवास माजग्मु रदीनदर्शनाः ॥ ३४

इति श्रीमदयोध्याकाण्डे पञ्चपञ्चाशस्सर्गः ॥

## ॥ षट्पञ्चाशस्सर्गः ॥

अथ रात्र्यां व्यतीताया मवसुप्तमनन्तरम् ।
प्रबोधयामास शनैर्लक्ष्मणं रघुनन्दनः ॥ १
" सौमित्रे! शृणु वन्यानां वल्गु व्याहरतां स्वनम् ।
संप्रतिष्ठामहे कालः प्रस्थानस्य परन्तप! ॥" २
स सुप्त स्समये भ्रात्रा लक्ष्मणः प्रतिबोधितः ।
जहौ निद्रां च तन्द्रीं च प्रसक्तं च पथिश्रमम् ॥ ३
तत उत्थाय ते सर्वे स्पृष्ट्वा नद्याः शिवं जलम् ।
पन्थान मृषिणाऽऽदिष्टं चित्रकूटस्य तं ययुः ॥ ४
तत स्संप्रस्थितः काले राम स्सौमित्रिणा सह ।
सीतां कमलपत्राक्षी मिदं वचन मब्रवीत् ॥ ५
" आदीप्तानिव वैदेहि! सर्वतः पुष्पिता न्नगान् ।
स्वैः पुष्पैः किंशुकान् पश्य मालिन श्शिशिरात्यये ॥ ६
पश्य भल्लातकान् फुल्लान्नरै रनुपसेवितान् ।
फलपत्रै रवनता न्नूनं शक्ष्यामि जीवितुम् ॥ ७

पश्य द्रोणप्रमाणानि लंबमानानि लक्ष्मण! ।
मधूनि मधुकारीभि स्संभृतानि नगे नगे ॥ ८
एष क्रोशति नत्यूहस्तं शिखी प्रतिकूजति ।
रमणीये वनोद्देशे पुष्पसंस्तरसंकटे ॥ ९
मातङ्गयूथानुसृतं पक्षिसंघानुनादितम् ।
चित्रकूट मिमं पश्य प्रवृद्धशिखरं गिरिम् ॥ १०
समभूमितले रम्ये द्रुमै र्बहुभि रावृते ।
पुण्ये रंस्यामहे तात! चित्रकूटस्य कानने ॥" ११
तत स्तौ पादचारेण गच्छन्तौ सह सीतया ।
रम्य मासेदतु श्शैलं चित्रकूटं मनोरमम् ॥ १२
तन्तु पर्वत मासाद्य नानापक्षिगणायुतम् ।
बहुमूलफलं रम्यं संपन्नं सरसोदकम् ॥ १३
चित्रकूटं हि संपश्य न्रामो लक्ष्मण मब्रवीत् ।
"मनोज्ञोऽयं गिरि स्सौम्य! नानाद्रुमलतायुतः ॥ १४
बहुमूलफलो रम्य स्स्वाजीवः प्रतिभाति मे ।
मुनयश्च महात्मानो वसन्त्यस्मिन् शिलोच्चये ॥ १५
अयं वासो भवेत्ताव दत्र सौम्य! रमेमहि ।"
इति सीता च रामश्च लक्ष्मणश्च कृताञ्जलिः ॥ १६
अभिगम्याऽश्रमं सर्वे वाल्मीकि मभिवादयन् ।
तान्महर्षिः प्रमुदितः पूजयामास धर्मवित् ॥ १७
'आस्यता' मितिचोवाच स्वागतन्तु निवेद्य च ।
ततोऽब्रवीन्महाबाहु र्लक्ष्मणं लक्ष्मणाग्रजः ॥ १८

संनिवेद्य यथान्याय मात्मान मृषये प्रभुः ।
"लक्ष्मणा!ऽनय दारूणि दृढानि च वराणि च ॥ १९
कुरुष्वाऽवसथं सौम्य! वासे मेऽभिरतं मनः ।"
तस्य तद्वचनं श्रुत्वा सौमित्रि र्विविधान् द्रुमान् ॥ २०
आजहार ततश्चक्रे पर्णशाला मरिन्दमः ।
तां निष्ठितां बद्धकटां दृष्ट्वा राम स्सुदर्शनाम् ॥ २१
शुश्रूषमाण मेकाग्र मिदं वचन मब्रवीत् ।
"ऐणेयं मांस माहृत्य शालां यक्ष्यामहे वयम् ॥ २२
कर्तव्यं वास्तु शमनं सौमित्रे! चिरजीविभिः ।
मृगं हत्वाऽऽनय क्षिप्रं लक्ष्मणेह शुभेक्षण! ॥ २३
कर्तव्य श्शास्त्रदृष्टो हि विधिर्धर्म मनुस्मर ।"
भ्रातु र्वचनमाज्ञाय लक्ष्मणः परवीरहा ॥ २४
चकार स यथोक्तं च तं रामः पुनरब्रवीत् ।
"ऐणेयं श्रपयस्वैतच्छालां यक्ष्यामहे वयम् ॥ २५
त्वर सौम्य! मुहूर्तोऽयं ध्रुवश्च दिवसोऽप्ययम् ।"
स लक्ष्मणः कृष्णमृगं हत्वा मेध्यं प्रतापवान् ॥ २६
अथ चिक्षेप सौमित्रि स्समिद्धे जातवेदसि ।
तं तु पक्वं समाज्ञाय निष्टप्तं छिन्नशोणितम् ॥ २७
लक्ष्मणः पुरुषव्याघ्र मथ राघव मब्रवीत् ।
"अयं कृष्ण स्समाप्ताङ्ग श्शृतः कृष्णमृगो यथा ॥ २८
देवतां देवसङ्काश! यजस्व कुशलो ह्यसि ।"
राम स्स्नात्वा तु नियतो गुणवान् जप्यकोविदः ॥ २९

संग्रहेणाकरोत्सर्वान् मन्त्रान्सत्रावसानिकान् ।
इष्ट्वा देवगणान्सर्वान्विवेशाऽवसथं शुचिः ॥ ३०
बभूव च मनोह्लादो रामस्यामिततेजसः ।
वैश्वदेवबलिं कृत्वा रौद्रं वैष्णव मेव च ॥ ३१
वास्तु संशमनीयानि मङ्गलानि प्रवर्तयन् ।
जपं च न्यायतः कृत्वा स्नात्वा नद्यां यथाविधि ॥ ३२
पापसंशमनं राम श्चकार बलिमुत्तमम् ।
वेदिस्थलविधानानि चैत्यान्यायतनानि च ॥ ३३
आश्रमस्यानुरूपाणि स्थापयामास राघवः ।
वन्यै र्माल्यैः फलै र्मूलैः पक्वैर्मांसैर्यथाविधि ॥ ३४
अद्भिर्जपै श्च वेदोक्तै र्दर्भै श्च ससमित्कुशैः ।
तौ तर्पयित्वा भूतानि राघवौ सह सीतया ॥ ३५
तदा विविशतु श्शालां सुशुभां शुभलक्षणौ ।
तां वृक्षपर्णच्छदनां मनोज्ञां यथाप्रदेशं सुकृतां निवाताम् ।
वासाय सर्वे विविशु स्समेता स्सभां यथा देवगणा स्सुधर्माम् ॥ ३६
अनेकनानामृगपक्षिसंकुले विचित्रपुष्पस्तबकै र्द्रुमैर्युते ।
वनोत्तमे व्यालमृगानुनादिते तदा विजह्रु स्सुसुखं जितेन्द्रियाः ॥
सुरम्य मासाद्य तु चित्रकूटं नदीं च तां माल्यवतीं सुतीर्थाम् ।
ननन्द हृष्टो मृगपक्षिजुष्टां जहौ च दुःखं पुरविप्रवासात् ॥ ३८

इति श्रीमदयोध्याकाण्डे षट्पञ्चाशस्सर्गः ॥

## ॥ सप्तपञ्चाशस्सर्गः ॥

कथयित्वा सुदुःखार्त स्सुमन्त्रेण चिरं सह ।
रामे दक्षिणकूलस्थे जगाम स्वगृहं गुहः ॥ १
भरद्वाजाभिगमनं प्रयागे च सहासनम् ।
आगिरे र्गमनं तेषां तत्रस्थैरुपलक्षितम् ॥ २
अनुज्ञात स्सुमन्त्रोऽथ योजयित्वा हयोत्तमान् ।
अयोध्यामेव नगरीं प्रययौ गाढदुर्मनाः ॥ ३
सवनानि सुगन्धीनि सरित श्च सरांसि च ।
पश्यन्नतिययौ शीघ्रं ग्रामाणि नगराणि च ॥ ४
तत स्सायाह्नसमये तृतीयेऽहनि सारथिः ।
अयोध्यां समनुप्राप्य निरानन्दां ददर्श ह ॥ ५
स शून्या मिव निश्शब्दां दृष्ट्वा परमदुर्मनाः ।
सुमन्त्र श्चिन्तयामास शोकवेगसमाहतः ॥ ६
"कच्चिन्न सगजा साश्वा सजना सजनाधिपा ।
रामसन्तापदुःखेन दग्धा शोकाग्निना पुरी ? ॥" ७
इति चिन्तापर स्सूतो वाजिभिश्शीघ्रपातिभिः ।
नगरद्वार मासाद्य त्वरितः प्रविवेश ह ॥ ८
सुमन्त्र मभियान्तं तं शतशोऽथ सहस्रशः ।
'क्वराम' इति पृच्छन्तस्सूतमभ्यद्रवन्नराः ॥ ९
तेषां शशंस "गङ्गायामह मापृच्छ्य राघवम् ।
अनुज्ञातो निवृत्तोऽस्मि धार्मिकेण महात्मना ॥ १०

ते तीर्णा" इति विज्ञाय बाष्पपूर्णमुखा जनाः ।
'अहोधि' गिति निश्श्वस्य 'हा! रामे'ति च चुक्रुशुः ॥ ११
शुश्राव च वच स्तेषां बृन्दं बृन्दं च तिष्ठताम् ।
"हतास्स्म खलु येनेह पश्याम इति राघवम् ॥ १२
दानयज्ञविवाहेषु समाजेषु महत्सुच ।
न द्रक्ष्यामः पुनर्जातु धार्मिकं राममन्तरा ॥ १३
किं समर्थं जनस्यास्य किं प्रियं किं सुखावहम् ।"
इति रामेण नगरं पितृवत्परिपालितम् ॥ १४
वातायनगतानां च स्त्रीणा मन्वन्तरापणम् ।
रामशोकाभितप्तानां शुश्राव परिदेवनम ॥ १५
स राजमार्गमध्येन सुमन्त्रः पिहिताननः ।
यत्र राजा दशरथस्तदेवोपययौ गृहम् ॥ १६
सोऽवतीर्य रथाच्छीघ्रं राजवेश्म प्रविश्य च ।
कक्ष्या स्सप्ताभिचक्राम महाजनसमाकुलाः ॥ १७
हर्म्यै र्विमानैः प्रासादै रवेक्ष्याथ समागतम् ।
हाहाकारकृता नार्यो रामादर्शनकर्शिताः ॥ १८
आयतैर्विमलै र्नेत्रै रश्रुवेगपरिप्लुतैः ।
अन्योन्य मभिवीक्षन्ते ऽव्यक्तमार्ततराः स्त्रियः ॥ १९
ततो दशरथ स्त्रीणां प्रासादेभ्यस्ततस्ततः ।
रामशोकाभितप्तानां मन्दं शुश्राव जल्पितम् ॥ २०
"सह रामेण निर्यातो विना राम मिहाऽगतः ।
सूतः किन्नामकौसल्यां शोचन्तीं प्रति वक्ष्यति ॥ २१

यथा च मन्ये दुर्जीव मेवं न सुकरं ध्रुवम् ।
आच्छिद्य पुत्रे निर्याते कौसल्या यत्र जीवति ॥" २२
सत्यरूपं तु तद्वाक्यं राज्ञः स्त्रीणां निशामयन् ।
प्रदीप्त मिव शोकेन विवेश सहसा गृहम् ॥ २३
स प्रविश्याष्टमीं कक्ष्यां राजानं दीन मातुरम् ।
पुत्रशोक परिद्यून मपश्यत्पाण्डुरे गृहे ॥ २४
अभिगम्य त मासीनं नरेन्द्र मभिवाद्यच ।
सुमन्त्रो राम वचनं यथोक्तं प्रत्यवेदयत् ॥ २५
स तूष्णी मेव तच्छ्रुत्वा राजा विभ्रान्तचेतनः ।
मूर्छितो न्यपत द्भूमौ रामशोकाभिपीडितः ॥ २६
ततोऽन्तः पुर माविद्धं मूर्छिते पृथिवीपतौ ।
उद्धृत्यबाहू चुक्रोश नृपतौ पतिते क्षितौ ॥ २७
सुमित्रयातु सहिता कौसल्या पतितं पतिम् ।
उत्थापयामास तदा वचनं चेद मब्रवीत् ॥ २८
"इमं तस्य महाभाग! दूतं दुष्करकारिणः ।
वनवासादनुप्राप्तं कस्मान्न प्रति भाषसे ॥ २९
अद्येम मनयं कृत्वा व्यपत्रपासि राघव! ।
उत्तिष्ठ सुकृतं तेऽस्तु शोकेन स्या त्सहायता ॥ ३०
देव! यस्या भया द्रामं नानुपृच्छसि सारथिम् ।
नेह तिष्ठति कैकेयी विस्रब्धं प्रतिभाष्यताम् ॥" ३१
सा तथोक्त्वा महाराजं कौसल्या शोकलालसा ।
धरण्यां निपपाताशु बाष्पविप्लुतभाषिणी ॥ ३२

एवं विलपतीं दृष्ट्वा कौसल्यां पतितां भुवि ।
पतिं चावेक्ष्य तास्सर्वा स्सुस्वरं रुरुदुः स्त्रियः ॥ ३३

ततस्त मन्तःपुरनाद मुत्थितं समीक्ष्य वृद्धास्तरुणाश्च मानवाः ।
स्त्रियश्च सर्वा रुरुदु स्समन्ततः पुरं तदासीत्पुन रेव संकुलम् ॥

इति श्रीमदयोध्याकाण्डे सप्तपञ्चाशस्सर्गः ॥

## ॥ अष्टपञ्चाशस्सर्गः ॥

प्रत्याश्वस्तो यदा राजा मोहात्प्रत्यागतं पुनः ।
अथाऽजुहाव तं सूतं रामवृत्तान्तकारणात् ॥ १

अथ सूतो महाराजं कृताञ्जलि रुपस्थितः ।
राम मेवानुशोचन्तं दुःखशोकसमन्वितम् ॥ २

वृद्धं परमसन्तप्तं नवग्रह मिव द्विपम् ।
विनिश्श्वसन्तं ध्यायन्त मस्वस्थ मिव कुञ्जरम ॥ ३

राजातु रजसा सूतं ध्वस्ताङ्गं समुपस्थितम् ।
अश्रुपूर्ण मुखं दीन मुवाच परमार्तवत् ॥ ४

"क्वनु वत्स्यति धर्मात्मा वृक्षमूल मुपाश्रितः ।
सोऽत्यन्त सुखित स्सूत! किं मशिष्यति राघवः ॥ ५

दुःखस्यानुचितो दुःखं सुमन्त्र! शयनोचितः ।
भूमिपालात्मजो भूमौ शेते कथ मनाथवत् ॥ ६

यं यान्त मनुयान्तिस्म पदातिरथकुञ्जराः ।
स वत्स्यति कथं रामो विजनं वन माश्रितः ॥ ७

छै मृगै राचरितं कृष्णसर्पनिषेवितम् ।
कुमारौ वैदेह्या सार्धं वन मुपस्थितौ ॥ ८
कुमार्या तपस्विन्या सुमन्त्र! सह सीतया ।
पुत्रौ कथं पादै रवरुह्य रथा द्गतौ ॥ ९
द्धार्थः खलु सूत! त्वं येन दृष्टौ ममाऽत्मजौ ।
वनान्तं प्रविशन्तौ तावश्विना विव मन्दरम् ॥ १०
कि मुवाच वचो रामः कि मुवाच च लक्ष्मणः ।
सुमन्त्र! वन मासाद्य कि मुवाच च मैथिली ॥ ११
आसितं शयितं भुक्तं सूत! रामस्य कीर्तय ।
जीविष्याम्यह मेतेन ययाति रिव साधुषु ॥" १२
इति सूतो नरेन्द्रेण चोदित स्सज्जमानया ।
उवाच वाचा राजानं स बाष्पपरिरब्धया ॥ १३
" अब्रवीन्मां महाराज! धर्म मेवानुपालयन् ।
अञ्जलिं राघवः कृत्वा शिरसाभिप्रणम्यच ॥ १४
'सूत! मद्वचना त्तस्य तातस्य विदितात्मनः ।
शिरसा वन्दनीयस्य वन्द्यौ पादौ पुनः पुनः ॥ १५
सर्व मन्तः पुरं वाच्यं सूत! मद्वचना त्त्वया ।
आरोग्य मविशेषेण यथार्हं चाभिवादनम् । १६
माताच मम कौसल्या कुशलं चाभिवादनम् ।
अप्रमादं च वक्तव्या ब्रूयाश्चैनामिदं वचः ॥ १७
'धर्मनित्या यथाकाल मग्न्यगारपरा भव ।
देवि! देवस्य पादौ च देववत्परिपालय ॥' १८

अभिमानं च मानं च त्यक्त्वा वर्तस्व मातृषु ।
अनु राजान मार्यां च कैकेयी मम्ब! कारय ॥ १९
कुमारे भरते वृत्ति र्वर्तितव्या च राजवत् ।
अर्थज्येष्ठा हि राजानो राजधर्म मनुस्मर ॥ २०
भरतः कुशलं वाच्यो वाच्यो मद्वचनेन च ।
'सर्वास्वेव यथान्यायं वृत्तिं वर्तस्व मातृषु ॥' २१
वक्तव्य श्च महाबाहु रिक्ष्वाकुकुलनन्दनः ।
पितरं यौवराज्यस्थो राज्यस्थ मनुपालय ॥ २२
अतिक्रान्तवया राजा मास्मैनं व्यवरोरुधः ।
कुमारराज्ये जीवत्वं तस्यैवाज्ञा प्रवर्तनात् ॥ २३
'अब्रवीच्चापि मां भूयो भृशमश्रूणि वर्तयन् ।
मातेव मम माता ते द्रष्टव्या पुत्रगर्धिनी ॥' २४
इत्येवं मां महाराज! ब्रुवन्नेव महायशाः ।
रामो राजीवताम्राक्षो भृश मश्रूण्यवर्तयत् ॥ २५
लक्ष्मणस्तु सुसंक्रुद्धो निश्श्वसन्वाक्यमब्रवीत् ।
'केनायमपराधेन राजपुत्रो विवासितः ॥ २६
राज्ञा तु खलु कैकेय्या लघुत्वाश्रित्य शासनम् ।
कृतं कार्य मकार्यं वा वयं येनाभिपीडिताः ॥ २७
यदि प्रव्राजितो रामो लोभकारणकारितम् ।
वरदाननिमित्तं वा सर्वथा दुष्कृतं कृतम् ॥ २८
इदं ताव द्यथाकाम मीश्वरस्य कृते कृतम् ।
रामस्य तु परित्यागे न हेतु मुपलक्षये ॥ २९

ीक्ष्य समारब्धं विरुद्धं बुद्धिलाघवात् ।
येष्यति संक्रोशं राघवस्य विवासनम् ॥ ३०
तावन्महाराजे पितृत्वं नोपलक्षये
ता भर्ता च बन्धुश्च पिता च मम राघवः ॥ ३१
र्वलोक प्रियं त्यक्त्वा सर्वलोकहिते रतम् ।
सर्वलोकोऽनुरज्येत कथं त्वाऽनेन कर्मणा ॥ ३२
सर्वप्रजाभिरामं हि रामं प्रव्राज्य धार्मिकम् ।
सर्वलोकं विरुध्येमं कथं राजा भविष्यसि ॥' ३३
जानकीतु महाराज! निश्श्वसन्ती तपस्विनी ।
भूतोपहतचित्तेव विष्ठिता विस्मृता स्थिता ॥ ३४
अदृष्टपूर्वव्यसना राजपुत्री यशस्विनी ।
तेन दुःखेन रुदती नैव मां किंचिदब्रवीत् ॥ ३५
उद्वीक्षमाणा भर्तारं मुखेन परिशुष्यता ।
मुमोच सहसा बाष्पं मां प्रयान्त मुदीक्ष्य सा ॥ ३६
तथैव रामोऽश्रुमुखः कृताञ्जलिः स्थितोऽभवल्लक्ष्मणबाहुपालितः ।
तथैव सीता रुदती तपस्विनी निरीक्षते राजरथं तथैव माम् ॥" ३७

इति श्रीमदयोध्याकाण्डे अष्टपञ्चाशस्सर्गः ॥

## ॥ एकोनषष्टितमस्सर्गः ॥

[इति ब्रुवन्तं तं सूतं सुमन्त्रं मन्त्रिसत्तमम् ।
ब्रूहि शेषं पुनरिति राजा वचन मब्रवीत् ॥ १

तस्य तद्वचनं श्रुत्वा सुमन्त्रो बाष्पविक्लबः ।
कथयामास भूयोऽपि रामसंदेशविस्तरम् ॥
'जटाः कृत्वा महाराज! चीरवल्कलधारिणौ ।
गङ्गा मुत्तीर्य तौ वीरौ प्रयागाभिमुखौ गतौ ॥
अग्रतो लक्ष्मणो यातः पालयन्रघुनन्दनम् ।
अनन्तरं च सीताऽथ राघवो रघुनन्दनः ॥
तां स्तथा गच्छतो दृष्ट्वा निवृत्तोऽस्म्यवश स्तदा ।]
'मम त्वश्वा निवृत्तस्य न प्रावर्तन्त वर्त्मनि ॥ ५
उष्णमश्रु प्रमुञ्चन्तो रामे सम्प्रस्थिते वनम् ।
उभाभ्यां राजपुत्राभ्या मथ कृत्वाऽहमञ्जलिम् ॥ ६
प्रस्थितो रथ मास्थाय तद्दुःख मुपधारयन् ।
गुहेन सार्धं तत्रैव स्थितोऽस्मि दिवसान्बहून् ॥ ७
आशया यदिमां रामः पुन श्शब्दापये' दिति ।
विषये ते महाराज! राम व्यसनकर्शिताः ॥ ८
अपिवृक्षाः परिम्लाना स्स पुष्पाङ्कुरकोरकाः ।
उपतप्तोदका नद्यः पल्वलानि सरांसि च ॥ ९
परिशुष्कपलाशानि वनान्युपवनानि च ।
न च सर्पन्ति सत्त्वानि व्याळा न प्रचरन्ति च ॥ १०
रामशोकाभिभूतं तन्निष्कूजमभव द्वनम् ।
लीनपुष्करपत्राश्च नरेन्द्र! कलुषोदकाः ॥ ११
सन्तप्तपद्माः पद्मिन्यो लीनमीनविहङ्गमाः ।
जलजानि च पुष्पाणि माल्यानि स्थलजानि च ॥ १२

नाद्यभान्त्यल्पगन्धीनि फलानि च यथा पुरम् ।
अत्रोद्यानानि शून्यानि प्रलीनविहगानि च ॥ १३
न चाभिरामानारामान्पश्यामि मनुजर्षभ ! ।
प्रविशन्तमयोध्यां मां न कश्चिदभिनन्दति ॥ १४
नरा राम मपश्यन्तो निश्श्वसन्ति मुहुर्मुहुः ।
देव ! राजरथं दृष्ट्वा विना राम मिहागतम् ॥ १५
दुःखा दश्रुमुख स्सर्वो राजमार्गगतो जनः ।
हर्म्यै र्विमानैः प्रासादै रवेक्ष्य रथ मागतम् ॥ १६
हाहाकारकृता नार्यो रामादर्शनकर्शिताः ।
आयतै र्विमलै र्नेत्रै रश्रुवेगपरिप्लुतैः ॥ १७
अन्योन्य मभिवीक्षन्तेऽव्यक्त मार्ततराः स्त्रियः ।
नामित्राणां न मित्राणा मुदासीनजनस्य च ॥ १८
अहमार्ततया किञ्चिद्विशेष मुपलक्षये ।
अप्रहृष्टमनुष्या च दीननागतुरङ्गमा ॥ १९
आर्तस्वरपरिम्लाना विनिश्श्वासितनिस्वना ।
निरानन्दा महाराज ! रामप्रव्राजनातुरा ॥ २०
कौसल्या पुत्रहीनेव अयोध्या प्रतिभाति मा ।
"सूतस्य वचनं श्रुत्वा वाचा परमदीनया ॥ २१
बाष्पोहतया राजा तं सूत मिद मब्रवीत् ।"
कैकेय्या विनियुक्तेन पापाभिजनभावया ॥ २२
मया न मन्त्रकुशलै र्वृद्धै स्सह समर्थितम् ।
न सुहृद्भि र्न चामात्यै र्मन्त्रयित्वा न नैगमैः ॥ २३

मयाऽय मर्थस्सम्मोहात् स्त्रीहेतो स्सहसा कृतः ।
भवितव्यतया नून मिदं वा व्यसनं महत् ॥ २४
कुलस्यास्य विनाशाय प्राप्तं सूत! यदृच्छया ।
सूत! यद्यस्ति ते किञ्चिन्मयातु सुकृतं कृतम् ॥ २५
त्वं प्रापयाऽऽशु मां रामं प्राणा स्सन्त्वरयन्ति माम् ।
यद्यद्यापि ममैवाऽऽज्ञा निवर्तयतु राघवम् ॥ २६
न शक्ष्यामि विना रामं मुहूर्त मपि जीवितुम् ।
अथवाऽपि महाबाहु र्गतो दूरं भविष्यति ॥ २७
मा मेव रथ मारोप्य शीघ्रं रामाय दर्शय ।
वृत्तदंष्ट्रो महेष्वासः क्वासौ लक्ष्मणपूर्वजः ॥ २८
यदि जीवामि साध्वेनं पश्येयं सीतया सह ।
लोहिताक्षं महाबाहु मामुक्तमणिकुण्डलम् ॥ २९
रामं यदि नपश्येयं गमिष्यामि यमक्षयम् ।
अतोनु किं दुःखतरं सोऽह मिक्ष्वाकुनन्दनम् ॥ ३०
इमामवस्था मापन्नो नेह पश्यामि राघवम् ।
"हा राम रामानुज! हा! हा वैदेहि! तपस्विनि! ॥ ३१
न मां जानीथ दुःखेन म्रियमाण मनाथवत् ।"
स तेन राजा दुःखेन भृश मर्पितचेतनः ॥ ३२
अवगाढ स्सुदुष्पारं शोकसागर मब्रवीत् ।
"रामशोकमहाभोग स्सीताविरहपारगः ॥ ३३
श्वसितोर्मिमहावर्तो बाष्पफेनजलाविलः ।
बाहुविक्षेपमीनौघो विक्रन्दितमहास्वनः ॥ ३४

प्रकीर्णकेशशैवालः कैकेयीबडबामुखः ।
ममाश्रुवेगप्रभवः कुब्जावाक्यमहाग्रहः ॥ ३५
वरवेलो नृशंसाया राम प्रव्राजनायतः ।
यस्मिन्बत निमग्नोऽहं कौसल्ये! राघवं विना ॥ ३६
दुस्तरो जीवता देवि! मयाऽयं शोकसागरः ।
अशोभनं योऽह मिहाद्य राघवं दिदृक्षमाणो न लभे सलक्ष्मणम् ।"
इतीव राजा विलपन्महायशाः पपात तूर्णं शयने सुमूर्छितः ॥ ३७
इति विलपति पार्थिवे प्रणष्टे करुणतरं द्विगुणंच रामहेतोः ।
वचन मनु निशम्य तस्य देवी भय मगमत्पुन रेव राममाता ॥

॥ इति श्रीमदयोध्याकाण्डे एकोनषष्टितमस्सर्गः ॥

---

## ॥ षष्टितमस्सर्गः ॥

ततो भूतोपसृष्टेव वेपमाना पुनःपुनः ।
धरण्यां गतसत्त्वेव कौसल्या सूत मब्रवीत् ॥ १
"नय मां यत्र काकुत्स्थस्सीता यत्र च लक्ष्मणः ।
तान्विना क्षण मप्यत्र जीवितुं नोत्सहे ह्यहम् ॥ २
निवर्तय रथं शीघ्रं दण्डकां नय मामपि ।
अथ तान्नानुगच्छामि गमिष्यामि यमक्षयम् ॥" ३
बाष्पवेगोपहतया स वाचा सज्जमानया ।
इद माश्वासयन्देवीं सूतः प्राञ्जलि रब्रवीत् ॥ ४
"त्यज शोकं च मोहंच सम्भ्रमं दुःखजं तथा ।
व्यवधूय च सन्तापं वने वत्स्यति राघवः ॥ ५

लक्ष्मणश्चापि रामस्य पादौ परिचरन्वने ।
आराधयति धर्मज्ञः परलोकं जितेन्द्रियः ॥ ६
विजनेऽपि वने सीता वासं प्राप्य गृहेष्विव ।
विस्रम्भं लभतेऽभीता रामे सन्यस्तमानसा ॥ ७
नास्या दैन्यं कृतं किंचित्सुसूक्ष्म मपि लक्ष्यते ।
उचितेव प्रवासानां वैदेही प्रतिभातिमा ॥ ८
नगरोपवनं गत्वा यथा स्म रमते पुरा ।
तथैव रमते सीता निर्जनेषु वनेष्वपि ॥ ९
बालेव रमते सीताऽबालचन्द्रनिभानना ।
रामा रामे ह्यधीनात्मा विजनेऽपि वने सती ॥ १०
तद्गतं हृदयं ह्यस्या स्तदधीनं च जीवितम् ।
अयोध्याऽपि भवे त्तस्या रामहीना तथा वनम् ॥ ११
पथि पृच्छति वैदेही ग्रामांश्च नगराणि च ।
गतिं दृष्ट्वा नदीनां च पादपान्विविधानपि ॥ १२
रामं वा लक्ष्मणं वापि पृष्ट्वा जानाति जानकी ।
अयोध्या क्रोशमात्रे तु विहार मिव संश्रिता ॥ १३
इद मेव स्मराम्यस्या स्सहसैवोपजल्पितम् ।
कैकेयी संश्रितं वाक्यं नेदानीं प्रतिभाति मा ॥ १४
ध्वंसयित्वा तु तद्वाक्यं प्रमादात्पर्युपस्थितम् ।
ह्लादनं वचनं सूतो देव्या मधुर मब्रवीत् ॥ १५
अध्वना वातवेगेन सम्भ्रमेणाऽतपेन च ।
नविगच्छति वैदेह्या श्चन्द्रांशुसदृशी प्रभा ॥ १६

सदृशं शतपत्रस्य पूर्णचन्द्रोपमप्रभम् ।
वदनं तद्वदान्याया वैदेह्या न विकम्पते ॥ १७
अलक्तरसरक्ताभावलक्तरसवर्जितौ ।
अद्यापि चरणौ तस्याः पद्मकोशसमप्रभौ ॥ १८
नूपुरोद्घुष्टहेलेव खेलं गच्छति भामिनी ।
इदानी मपि वैदेही तद्रागान्न्यस्तभूषणा ॥ १९
गजं वा वीक्ष्य सिंहं वा व्याघ्रं वा वन माश्रिता ।
नाऽऽहारयति सन्त्रासं बाहू रामस्य संश्रिता ॥ २०
न शोच्यास्ते न चात्मान श्शोच्यो नापि जनाधिपः ।
इदं हि चरितं लोके प्रतिष्ठास्यति शाश्वतम् ॥ २१
विधूय शोकं परिहृष्टमानसा महर्षि याते पथि सुव्यवस्थिताः ।
वने रता वन्यफलाशनाः पितु श्शुभां प्रतिज्ञां परिपालयन्ति ते ॥"
तथापि सूतेन सुयुक्तवादिना निवार्यमाणा सुतशोककर्शिता ।
न चैव देवी विरराम कूजिता 'प्रि' येति 'पु'त्रेति च 'राघ'वेति च॥

इति श्रीमदयोध्याकाण्डे षष्टितमस्सर्गः ॥

---

## ॥ एकषष्टितमस्सर्गः ॥

वनं गते धर्मपरे रामे रमयतां वरे ।
कौसल्या रुदती स्वार्ता भर्तार मिद मब्रवीत् ॥ १
"यद्यपि त्रिषु लोकेषु प्रथितं ते महद्यशः ।
सानुक्रोशो वदान्यश्च प्रियवादी च राघवः ॥ २

कथं नरवरश्रेष्ठ! पुत्रौ तौ सह सीतया ।
दुःखितौ सुखसंवृद्धौ वने दुःखं सहिष्यतः ॥ ३
सा नूनं तरुणी श्यामा सुकुमारी सुखोचिता ।
कथमुष्णं चशीतं च मैथिली प्रसहिष्यते ॥ ४
भुक्त्वाऽशनं विशालाक्षी सूपदंशान्वितं शुभम् ।
वन्यं नैवार माहारं कथं सीतोपभोक्ष्यते ॥ ५
गीतवादित्रनिर्घोषं श्रुत्वा शुभ मनिन्दिता ।
कथं क्रव्यादसिंहानां शब्दं श्रोष्यत्यशोभनम् ॥ ६
महेन्द्रध्वजसंकाशः कनु शेते महाभुजः ।
भुजं परिघसङ्काश मुपधाय महाबलः ॥ ७
पद्मवर्णं सुकेशान्तं पद्मनिश्श्वास मुत्तमम् ।
कदा द्रक्ष्यामि रामस्य वदनं पुष्करेक्षणम् ॥ ८
वज्रसारमयं नूनं हृदयं मे न संशयः ।
अपश्यन्त्या नतं यद्व फलतीदं सहस्रधा ॥ ९
यत्त्वयाऽकरुणं कर्म व्यपोह्य मम बान्धवाः ।
निरस्ताः परिधावन्ति सुखार्हाः कृपणा वने ॥ १०
यदि पञ्चदशे वर्षे राघवः पुनरेष्यति ।
जह्याद्राज्यं च कोशं च भरतेनोपभुज्यते ॥ ११
भोजयन्ति किल श्राद्धे केचि त्स्वानेव बान्धवान् ।
ततः पश्चात्समीक्षन्ते कृतकार्या द्विजर्षभान् ॥ १२
तत्र ये गुणवन्तश्च विद्वांसश्च द्विजातयः ।
न पश्चात्तेऽभिमन्यन्ते सुधामपि सुरोपमाः ॥ १३

ब्राह्मणेष्वपि तृप्तेषु पश्चाद्भोक्तुं द्विजर्षभाः ।
नाभ्युपैतु मलं प्राज्ञा श्शृङ्गच्छेद मिवर्षभाः ॥ १४
एवं कनीयसा भ्रात्रा भुक्तं राज्यं विशांपते! ।
भ्राता ज्येष्ठो वरिष्ठ श्च किमर्थं नावमंस्यते ॥ १५
न परेणाऽऽहृतं भक्ष्यं व्याघ्रः खादितु मिच्छति ।
एव मेत न्नरव्याघ्रः परलीढं न मन्यते ॥ १६
हवि राज्यं पुरोडाशः कुशा यूपाश्च खादिराः ।
नैतानि यातयामानि कुर्वन्ति पुन रध्वरे ॥ १७
तथा ह्यात्तमिदं राज्यं हृतसारां सुरा मिव ।
नाभिमन्तु मलं रामो नष्टसोममिवाध्वरम् ॥ १८
[न चेमां धर्षणां राम स्सङ्गच्छेदत्यमर्षणः ।
दारये न्मन्दर मपि स हि क्रुद्धश्शितै श्शरैः ॥ १९
त्वां तु नोत्सहते हन्तुं महात्मा पितृगौरवात् ।
स सोमार्कग्रहगणं नभस्ताराविचित्रितम् ॥ २०
पातये द्योदिवं क्रुद्धस्स त्वां न व्यतिवर्तते ।
प्रक्षोभये द्दारये द्वा महीं शैलशताचितम् ॥] २१
नैवंविधमसत्कारं राघवो मर्षयिष्यति ।
बलवा निव शार्दूलो वालधे रवमर्शनम् ॥ २२
नैतस्य सहिता लोका भयं कुर्युर्महामृथे ।
अधर्मं त्विह धर्मात्मा लोकं धर्मेण योजयेत् ॥ २३
नन्वसौ काञ्चनै र्बाणै र्महावीर्यो महाभुजः ।
युगान्त इव भूतानि सागरा नपि निर्दहेत् ॥ २४

स तादृश स्सिंहबलो वृषभाक्षो नरर्षभः ।
स्वयमेव हतः पित्रा जलजेनाऽऽत्मजो यथा ॥ २५
द्विजातिचरितो धर्मश्शास्त्र दृष्ट स्सनातनः ।
यदि ते धर्मनिरते त्वया पुत्रे विवासिते ॥ २६
गतिरेका पतिर्नार्या द्वितीया गति रात्मजः ।
तृतीया ज्ञातयो राजं श्चतुर्थी नेहविद्यते ॥ २७
तत्र त्वं चैव मेनास्ति रामश्च वन माश्रितः ।
न वनं गन्तु मिच्छामि सर्वथा निहता त्वया ॥ २८
हतं त्वया राज्यमिदं सराष्ट्रं हतस्तथाऽऽत्मा सह मन्त्रिभिश्च ।
हता सपुत्राऽस्मि हताश्च पौरास्सुतश्च भार्या च तव प्रहृष्टौ ॥" २९
इमां गिरं दारुण शब्दसंश्रितां निशम्य राजाऽपि मुमोह दुःखितः ।
तत स्स शोकं प्रविवेश पार्थिव स्स्वदुष्कृतं चापि पुनस्तदा स्मरन् ॥

इति श्रीमदयोध्याकाण्डे एकषष्टितमस्सर्गः ॥

---

## ॥ द्विषष्टितमस्सर्गः ॥

एवं तु क्रुद्धया राजा राममात्रा सशोकया ।
श्रावितः परुषं वाक्यं चिन्तयामास दुःखितः ॥ १
चिन्तयित्वा स च नृपो मुमोह व्याकुलेन्द्रियः ।
अथ दीर्घेण कालेन संज्ञा माप परन्तपः ॥ २
स संज्ञामुपलभ्यैव दीर्घमुष्णं च निश्श्वसन् ।
कौसल्यां पार्श्वतो दृष्ट्वा पुनश्चिन्ता मुपागमत् ॥ ३

तस्य चिन्तयमानस्य प्रत्यभात्कर्म दुष्कृतम् ।
यदनेन कृतंपूर्वं मज्ञाना च्छब्दवेधिना ॥ ४
अमनास्तेन शोकेन रामशोकेन च प्रभुः ।
द्वाभ्यामपि महाराज श्शोकाभ्या मन्वतप्यत ॥ ५
दह्यमानस्स शोकाभ्यां कौसल्या माह भूपतिः ।
वेपमानोऽञ्जलिं कृत्वा प्रसादार्थ मवाङ्मुखः ॥ ६
"प्रसादये त्वां कौसल्ये! रचितोऽयं मयाऽञ्जलिः ।
वत्सला चानृशंसा च त्वं हि नित्यं परेष्वपि ॥ ७
भर्तातु खलु नारीणां गुणवा न्निर्गुणोऽपिवा ।
धर्मं विमृशमानानां प्रत्यक्षं देवि! दैवतम् ॥ ८
सात्वं धर्मपरा नित्यं दृष्टलोकपरावरा ।
नार्हसेविप्रियं वक्तुं दुःखिताऽपि सुदुःखितम् ॥" ९
तद्वाक्यं करुणं राज्ञः श्रुत्वा दीनस्य भाषितम् ।
कौसल्या व्यसृज द्बाष्पं प्रणाळीव नवोदकम् ॥ १०
सा मूर्ध्नि बद्ध्वा रुदती राज्ञः पद्म मिवाञ्जलिम् ।
सम्भ्रमा दब्रवीत्त्रस्ता त्वरमाणाक्षरं वचः ॥ ११
"प्रसीद शिरसा याचे भूमौ निपतिताऽस्मिते ।
याचितास्मि हता देव! हन्तव्याऽहं नहि त्वया ॥ १२
नैषाहिसा स्त्रीभवति श्लाघनीयेन धीमता ।
उभयो र्लोकयो र्वीर! पत्याया संप्रसाद्यते ॥ १३
जानामि धर्मं धर्मज्ञ! त्वां जाने सत्यवादिनम् ।
पुत्रशोकार्तयातत्तुमयाकिमपि भाषितम् ॥ १४

शोकोनाशयते धैर्यं शोको नाशयते श्रुतम्
शोको नाशयते सर्वं नास्ति शोकसमो रिपुः ॥ १५
शक्य आपतित स्सोढुं प्रहारो रिपुहस्ततः ।
सोढु मापतितश्शोक स्सुसूक्ष्मोऽपि न शक्यते ॥ १६
[धर्मज्ञा श्श्रुतिमन्तोऽपि छिन्नधर्मार्थसंशयाः ।
यतयो वीर! मुह्यन्ति शोकसम्मूढचेतसः ॥] १७
वनवासाय रामस्य पञ्चरात्रोऽद्य गण्यते ।
यश्शोकहतहर्षायाः पञ्चवर्षोपमो मम ॥ १८
तं हि चिन्तयमानायाः शोकोऽयं हृदि वर्धते ।
नदीना मिव वेगेन समुद्र सलिलं महत् ॥" १९
एवं हि कथयन्त्यास्तु कौसल्याया श्शुभं वचः ।
मन्दरश्मिरभूत्सूर्यो रजनी चाभ्यवर्तत ॥ २०
तथा प्रसादितो वाक्यै र्देव्या कौसल्यया नृपः ।
शोकेन च समाक्रान्तो निद्राया वश मेयिवान् ॥ २१

॥ इति श्रीमदयोध्याकाण्डे द्विषष्टितमस्सर्गः ॥

## ॥ त्रिषष्टितमस्सर्गः ॥

प्रतिबुद्धो मुहूर्तेन शोकोपहतचेतनः ।
अथ राजा दशरथ स्स चिन्तामभ्यपद्यत ॥ १
रामलक्ष्मणयोश्चैव विवासा द्वासवोपमम् ।
आविवेशोपसर्गस्तं तम स्सूर्य मिवाऽसुरम् ॥ २

सभार्ये निर्गते रामे कौसल्यां कोसलेश्वरः ।
विवक्षु रसितापाङ्गां स्मृत्वा दुष्कृत मात्मनः ॥ ३
स राजा रजनीं षष्टीं रामे प्रव्राजिते वनम् ।
अर्धरात्रे दशरथ स्संस्मरन् दुष्कृतं कृतम् ॥ ४
स राजा पुत्रशोकार्तः स्मृत्वा दुष्कृत मात्मनः ।
कौसल्यां पुत्रशोकार्ता मिदं वचन मब्रवीत् ॥ ५
"यदाचरति कल्याणि! शुभं वा यदिवाऽशुभम् ।
तदेव लभते भद्रे! कर्ता कर्मज मात्मनः ॥ ६
गुरुलाघव मर्थाना मारम्भे कर्मणां फलम् ।
दोषं वा यो न जानाति स बाल इति होच्यते ॥ ७
कश्चि दाम्रवणं छित्वा पलाशांश्च निषिञ्चति ।
पुष्पंदृष्ट्वा फले गृध्नु स्स शोचति फलागमे ॥ ८
अविज्ञाय फलं योहि कर्मत्वे वानु धावति ।
स शोचेत्फलवेळायां यथा किंशुकसेचकः ॥ ९
सोऽहं माम्रवणं छित्वा पलाशांश्च न्यषेचयम् ।
रामं फलागमे त्यक्त्वा पश्चा च्छोचामि दुर्मतिः ॥ १०
लब्धशब्देन कौसल्ये! कुमारेण धनुष्मता ।
कुमारः शब्दवेधीति मया पाप मिदं कृतम् ॥ ११
तदिदं मेऽनुसम्प्राप्तं देवि! दुःखं स्वयं कृतम् ।
सम्मोहादिह बालेन यथा स्या द्भक्षितं विषम् ॥ १२
यथाऽन्यः पुरुषः कश्चि त्पलाशैर्मोहितो भवेत् ।
एवं ममाप्यविज्ञातं शब्दवेध्यमयं फलम् ॥ १३

देव्यनूढा त्व मभवो युवराजो भवाम्यहम् ।
ततः प्रावृडनुप्राप्ता मदकामविवर्धनी ॥ १४
उपास्य हि रसान्भौमां स्तप्त्वा च जगदंशुभिः ।
परेताचरितां भीमां रवि राविशते दिशम् ॥ १५
उष्ण मन्तर्दधे सद्यस्स्निग्धा ददृशिरे घनाः ।
ततो जहृषिरे सर्वे भेकसारङ्गबर्हिणः ॥ १६
क्लिन्नपक्षोत्तरा स्स्नाताः कृच्छ्रा दिव पतत्रिणः ।
वृष्टिवातावधूताग्रान्पादपानभिपेदिरे ॥ १७
पतितेनाम्भसा च्छन्नः पतमानेन चासकृत् ।
आबभौ मत्तसारङ्ग स्तोयराशि रिवाचलः ॥ १८
पाण्डुरारुणवर्णानि स्रोतांसि विमलान्यपि ।
सुस्रुवुर्गिरिधातुभ्य स्सभस्मानि भुजङ्गवत् ॥ १९
[आकुलारुणतोयानि स्रोतांसि विमलान्यपि ।
उन्मार्गजलवाहीनि बभूवु र्जलदागमे ॥] २०
तस्मिन्नति सुखे काले धनुष्मा निपुमा न्रथी ।
व्यायामकृतसङ्कल्प स्सरयू मन्वगां नदीम् ॥ २१
निपाने महिषं रात्रौ गजं वाऽभ्यागतं नदीम् ।
अन्यं वा श्वापदं कंचि ज्जिघांसु रजितेन्द्रियः ॥ २२
[तस्मिंस्तत्राह मेकान्ते रात्रौ विवृतकार्मुकः ।
तत्राहं संवृतं वन्यं हतवां स्तीर मागतम् ॥ २३
अन्यं चापि मृगं हिंस्रं शब्दं श्रुत्वाऽभ्युपागतम् ।]
अथान्धकारे त्वश्रौषं जले कुम्भस्य पूर्यतः ॥ २४

अचक्षुर्विषये घोषं वारणस्येव नर्दतः ।
ततोऽहं शर मुद्धृत्य दीप्तमाशीविषोपमम् ॥ २५
शब्दं प्रति गजप्रेप्सु रभिलक्ष्यत्वपातयम् ।
अमुञ्चं निशितं बाण मह माशीविषोपमम् ॥ २६
तत्र वागुषसि व्यक्ता प्रादुरासी द्वनौकसः ।
'हा हे'ति पतत स्तोये बाणाभिहतमर्मणः ॥ २७
तस्मिन्निपतिते बाणे वागभूत्तत्र मानुषी ।
"कथमस्मद्विधे शस्त्रं निपतेत्तु तपस्विनि ॥ २८
प्रविविक्तां नदीं रात्रा वुदाहारोऽह मागतः ।
इषुणाऽभिहतः केन कस्य वा किं कृतं मया? ॥ २९
ऋषेर्हि न्यस्तदण्डस्य वने वन्येन जीवतः ।
कथंनु शस्त्रेण वधो मद्विधस्य विधीयते? ॥ ३०
जटाभारधरस्यैव वल्कलाजिनवाससः ।
को वधेन ममार्थी स्या! त्किंवाऽस्यापकृतं मया? ॥ ३१
एवं निष्फल मारब्धं केवलानर्थसंहितम् ।
न कश्चि त्साधु मन्येत यथैव गुरुतल्पगम् ॥ ३२
नाहं तथाऽनुशोचामि जीवितक्षय मात्मनः ।
मातरं पितरं चोभा वनुशोचामि मद्वधे ॥ ३३
तदेतन्मिथुनं वृद्धं चिरकालभृतं मया ।
मयि पञ्चत्व मापन्ने कां वृत्तिं वर्तयिष्यति ॥ ३४
वृद्धौ च मातापितरा वहं चैकेषुणा हतः ।
केनस्म निहता स्सर्वे सुबालेनाकृतात्मना ॥" ३५

तां गिरं करुणां श्रुत्वा मम धर्मानुकाङ्क्षिणः ।
कराभ्यां सशरं चापं व्यथितस्यापतद्भुवि ॥ ३६
तस्याहं करुणं श्रुत्वा निशि लालपतो बहु ।
सम्भ्रान्त श्शोकवेगेन भृशमासं विचेतनः ॥ ३७
तं देश महमागम्य दीनसत्त्व स्सुदुर्मनाः ।
अपश्य मिषुणातीरे सरय्वास्तापसं हतम् ॥ ३८
अवकीर्णजटाभारं प्रविद्धकलशोदकम् ।
पांसुशोणितदिग्धाङ्गं शयानं शल्यपीडितम् ॥ ३९
समामुद्वीक्ष्य नेत्राभ्यां त्रस्तमस्वस्थचेतसम् ।
इत्युवाच ततः क्रूरं दिधक्षन्निव तेजसा ॥ ४०
" किं तवापकृतं राज! न्वने निवसता मया ।
जिहीर्षु रम्भो गुर्वर्थं यदहं ताडितस्त्वया ॥ ४१
एकेन खलु बाणेन मर्मण्यभिहते मयि ।
द्वा वन्धौ निहतौ वृद्धौ माता जनयिता च मे ॥ ४२
तौ कथं दुर्बला वन्धौ मत्प्रतीक्षौ पिपासितौ ।
चिर माशाकृतां तृष्णां कष्टां सन्धारयिष्यतः ॥ ४३
न नूनं तपसो वाऽस्ति फलयोग श्श्रुतस्य वा ।
पिता यन्मां न जानाति शयानं पतितं भुवि ॥ ४४
जानन्नपि च किं कुर्यादशक्ति रपरिक्रमः ।
भिद्यमान मिवाशक्तस्त्रातु मन्यो नगो नगम् ॥ ४५
पितुस्त्वमेव मे गत्वा शीघ्रमाचक्ष्व राघव! ।
न त्वा मनुदहेत्क्रुद्धो वनं वह्निरिवैधितः ॥ ४६

इय मेकपदी राज! न्यतो मे पितु राश्रमः ।
तं प्रसादय गत्वा त्वं न त्वां स कुपितश्शपेत् ॥ ४७
विशल्यं कुरु मां राज! न्मर्म मे निशित श्शरः ।
रुणद्धि मृदु सोत्सेधं तीर मम्बुरयो यथा ॥" ४८
"सशल्यः क्लिश्यते प्राणै र्विशल्यो विनशिष्यति ।"
इति मामविशच्चिन्ता तस्य शल्यापकर्षणे ॥ ४९
दुःखितस्य च दीनस्य मम शोकातुरस्य च ।
लक्षयामास हृदये चिन्तां मुनिसुत स्तदा ॥ ५०
ताम्यमान स्समां कृच्छ्रादुवाच परमार्तवत् ।
सीदमानो विवृत्ताङ्गो वेष्टमानो गतः क्षयम् ॥ ५१
"सं स्तभ्य शोकं धैर्येण स्थिरचित्तो भवानघ! ।
ब्रह्महत्या कृतं पापं हृदयादपनीयताम् ॥ ५२
न द्विजाति रहं राज! न्माभूत्ते मनसो व्यथा ।
शूद्रायामस्मि वैश्येन जातो जनपदाधिप! ॥" ५३
इतीव वदतः कृच्छ्राद्बाणाभिहतमर्मणः ।
विघूर्णतो विचेष्टस्य वेपमानस्य भूतले ॥ ५४
तस्य त्वानम्यमानस्य तं बाणमह मुद्धरम् ।
स मा मुद्वीक्ष्य संत्रस्तो जहौ प्राणांस्तपोधनः ॥ ५५
जलार्द्रगात्रन्तु विलप्य कृच्छ्रान्मर्मव्रणं सन्ततमुच्छ्वसन्तम् ।
तत स्सरय्वां तमहं शयानं समीक्ष्य भद्रेऽस्मि भृशं विषण्णः ॥"

इति श्रीमदयोध्याकाण्डे त्रिषष्टितमस्सर्गः ॥

## ॥ चतुष्षष्टितमस्सर्गः ॥

वधमप्रतिरूपं तु महर्षेस्तस्य राघवः ।
विलपन्नेव धर्मात्मा कौसल्यां पुन रब्रवीत् ॥ १
"तदज्ञानान्महत्पापं कृत्वाऽहं संकुलेन्द्रियः ।
एक स्त्वचिन्तयं बुद्ध्या कथं नु सुकृतं भवेत् ॥ २
ततस्तं घटमादाय पूर्णं परमवारिणा ।
आश्रमं तमहं प्राप्य यथाऽऽख्यातपथं गतः ॥ ३
तत्राहं दुर्बलावन्धौ वृद्धावपरिणायकौ ।
अपश्यं तस्य पितरौ लूनपक्षाविव द्विजौ ॥ ४
तन्निमित्ताभि रासीनौ कथाभि रपरिक्रमौ ।
तामाशां मत्कृते हीना वुदासीना वनाथवत् ॥ ५
शोकोपहतचित्तश्च भयसंत्रस्तचेतनः ।
तच्चाऽश्रमपदं गत्वा भूयश्शोक महं गतः ॥ ६
पदशब्दं तु मे श्रुत्वा मुनि र्वाक्य मभाषत ।
"किं चिरायसि मे पुत्र! पानीयं क्षिप्र मानय ॥ ७
यन्निमित्त मिदं तात! सलिले क्रीडितं त्वया ।
उत्कण्ठिता ते मातेयं प्रविश क्षिप्र माश्रमम् ॥ ८
यद्व्यळीकं कृतं पुत्र! मात्रा ते यदि वा मया ।
न तन्मनसि कर्तव्यं त्वया तात! तपस्विना ॥ ९
त्वं गति स्त्वगतीनां च चक्षुस्त्वं हीनचक्षुषाम् ।
समासक्तास्त्वयि प्राणाः किं त्वं नो नाभिभाषसे ॥" १०

मुनि मव्यक्तया वाचा तमहं सज्जमानया ।
हीनव्यञ्जनया प्रेक्ष्य भीतोऽभीत इवाब्रुवम् ॥ ११
मनसः कर्मचेष्टाभिरभिसंस्तभ्य वाग्बलम् ।
आचचक्षे त्वहं तस्मै पुत्रव्यसनजं भयम् ॥ १२
“क्षत्रियोऽहं दशरथो नाहं पुत्रो महात्मनः ।
सज्जनावमतं दुःख मिदं प्राप्तं स्वकर्मजम् ॥ १३
भगवं! श्चापहस्तोऽहं सरयूतीरमागतः ।
जिघांसु श्श्वापदं कंचिन्निपानेचाऽगतं गजम् ॥ १४
तत्र श्रुतो मया शब्दो जले कुम्भस्य पूर्यतः ।
‘द्विपोऽय’ मिति मत्वाऽयं बाणेनाभिहतो मया ॥ १५
गत्वा नद्या स्तत स्तीर मपश्य मिषुणा हृदि ।
विनिर्भिन्नं गतप्राणं शयानं भुवि तापसम् ॥ १६
भगव! च्छब्दमालक्ष्य मया गजजिघांसुना ।
विसृष्टोऽम्भसि नाराचस्तेन ते निहत स्सुतः ॥ १७
ततस्तस्यैव वचना दुपेत्य परितप्यतः ।
स मया सहसा बाण उद्धृतो मर्मतस्तदा ॥ १८
स चोद्धृतेन बाणेन तत्रैव स्वर्ग मास्थितः ।
भवन्तौ पितरौ शोचन्नन्धाविति विलप्य च ॥ १९
अज्ञाना द्भवतः पुत्र स्सहसाऽभिहतो मया ।
शेष मेवं गते यत्स्यात्तत्प्रसीदतु मे मुनिः ॥” २०
स तच्छ्रुत्वा वचः क्रूरं मयोक्त मघशंसिना ।
नाशकत्तीव्र मायास मकर्तुं भगवा नृषिः ॥ २१

स बाष्पपूर्णवदनो निश्श्वसन्शोककर्शितः ।
मामुवाच महातेजाः कृताञ्जलि मुपस्थितम् ॥ २२
"यद्येतदशुभं कर्म न त्वं मे कथये स्स्वयम् ।
फलेन्मूर्धास्मते राज! न्सद्य श्शतसहस्रधा ॥ २३
क्षत्रियेण वधो राजन्! वानप्रस्थे विशेषतः ।
ज्ञानपूर्वं कृतस्थानाच्च्यावयेदपि वज्रिणम् ॥ २४
सप्तधा तु फले न्मूर्धा मुनौ तपसि तिष्ठति ।
ज्ञानाद्विसृजतश्शस्त्रं तादृशे ब्रह्मवादिनि ॥ २५
अज्ञानाद्धि कृतं यस्मादिदं तेनैव जीवसि ।
अपि ह्यद्य कुलं नस्या दिक्ष्वाकूणां कुतो भवान् ॥ २६
नय नौ नृप! तं देश"मिति मां चाभ्यभाषत ।
अद्य तं द्रष्टुमिच्छावः पुत्रं पश्चिमदर्शनम् ॥ २७
रुधिरेणावसिक्ताङ्गं प्रकीर्णाजिनवाससम् ।
शयानं भुवि निस्संज्ञं धर्मराजवशं गतम् ॥ २८
अथाहमेकस्तं देशं नीत्वा तौ भृशदुःखितौ ।
अस्पर्शय महं पुत्रं तं मुनिं सह भार्यया ॥ २९
तौ पुत्र मात्मन स्स्पृष्ट्वा तमासाद्य तपस्विनौ ।
निपेततु श्शरीरेऽस्य पिता चास्येदमब्रवीत् ॥ ३०
"नाभिवादयसे माऽद्य न चमामभिभाषसे ।
किंनु शेषे तु भूमौ त्वं वत्स! किं कुपितो ह्यसि ॥ ३१
नु त्वहं ते प्रियः पुत्र! मातरं पश्य धार्मिक! ।
किंत नालिङ्गसे पुत्र! सुकुमार! वचो वद ॥ ३२

कस्य वाऽपररात्रेऽहं श्रोष्यामि हृदयंगमम् ।
अधीयानस्य मधुरं शास्त्रं वाऽन्यद्विशेषतः ॥ ३३
कोमां सन्ध्यामुपास्यैव स्नात्वा हुतहुताशनः ।
श्लाघयिष्यत्युपासीनः पुत्रशोकभयार्दितम् ॥ ३४
कन्दमूलफलं हृत्वा कोमां प्रियमिवातिथिम् ।
भोजयिष्यत्यकर्मण्यमप्रग्रहमनायकम् ॥ ३५
इमा मन्धां च वृद्धां च मातरं ते तपस्विनीम् ।
कथं वत्स! भरिष्यामि कृपणां पुत्रगर्धिनीम् ॥ ३६
तिष्ठ मां मागमः पुत्र! यमस्य सदनं प्रति ।
श्वो मया सह गन्तासि जनन्याच समेधितः ॥ ३७
उभावपि च शोकार्ता वनाथौ कृपणौ वने ।
क्षिप्रमेव गमिष्यावस्त्वया हीनौ यमक्षयम् ॥ ३८
ततो वैवस्वतं दृष्ट्वा तं प्रवक्ष्यामि भारतीम् ।
क्षमतां धर्मराजो मे बिभृयात्पितरावयम् ॥ ३९
दातु मर्हति धर्मात्मा लोकपालो महायशाः ।
ईदृशस्य ममाक्षय्या मेका मभयदक्षिणाम् ॥ ४०
अपापोऽसि यदा पुत्र! निहतः पापकर्मणा ।
तेन सत्येन गच्छाऽशु येलोकाश्शस्त्रयोधिनाम् ॥ ४१
यान्ति शूरागतिं यां च संग्रामेष्वनिवर्तिनः ।
हतास्त्वभिमुखाः पुत्र! गतिं तां परमां व्रज ॥ ४२
यां गतिं सगर श्शैब्यो दिलीपो जनमेजयः ।
नहुषो दुन्दुमार श्च प्राप्तास्तां गच्छ पुत्रक! ॥ ४३

यागति स्सर्वसाधूनां स्वाध्यायात्तपसाचया ।
याभूमिदस्याऽहिताग्ने रेकपत्नीव्रतस्यच ॥ ४४
गोसहस्रप्रदातॄणां याया गुरुभृतामपि ।
देहन्यासकृतां याच तां गतिं गच्छ पुत्रक! ॥ ४५
नहि त्वस्मिन्कुले जातो गच्छत्यकुशलां गतिम् ।
सतु यास्यति येन त्वं निहतो मम बान्धवः ॥" ४६
एवं सकृपणं तत्र पर्यदेवयतासकृत् ।
ततोऽस्मै कर्तु मुदकं प्रवृत्त स्सह भार्यया ॥ ४७
सतु दिव्येन रूपेन मुनिपुत्र स्स्वकर्मभिः ।
स्वर्गमध्यारुहत्क्षिप्रं शक्रेण सह धर्मवित् ॥ ४८
आबभापेच सतौ वृद्धौ सहशक्रेण तापसः ।
आश्वास्य च मुहूर्तंतु पितरौ वाक्यमब्रवीत् ॥ ४९
"स्थानमस्मि महत्प्राप्तो भवतोः परिचारणात् ।
भवन्ता वांपे च क्षिप्र मम मूलमुपैष्यतः ॥" ५०
एवमुक्त्वातु दिव्येन विमानेन वपुष्मता ।
आरुरोह दिवं क्षिप्रं मुनिपुत्रो जितेन्द्रियः ॥ ५१
सकृत्वा तूदकं तूर्णं तापस स्सह भार्यया ।
मा मुवाच महातेजाः कृताञ्जलि मुपस्थितम् ॥ ५२
"अद्यैव जहि मां राज! न्मरणे नास्ति मे व्यथा ।
यच्छरेणैकपुत्रं मां त्वमकार्षी रपुत्रकम् ॥ ५३
त्वयातु यदविज्ञाना न्निहतो मे सुतश्शुचिः ।
तेनत्वा मभिशप्स्यामि सुदुःखमति दारुणम् ॥ ५४

पुत्रव्यसनजं दुःखं यदेतन्मम साम्प्रतम् ।
एवं त्वं पुत्रशोकेन राजन्! कालं करिष्यसि ॥ ५५
अज्ञानात्तु हतो यस्मात्क्षत्रियेण त्वया मुनिः ।
तस्मात्त्वां नाविशत्याशु ब्रह्महत्या नराधिप! ॥ ५६
त्वामप्येतादृशो भावः क्षिप्रमेव गमिष्यति ।
जीवितान्तकरो घोरो दातारमिव दक्षिणा ॥" ५७
एवं शापं मयि न्यस्य विलप्य करुणं बहु ।
चितामारोप्य देहं तन्मिथुनं स्वर्ग मभ्ययात् ॥ ५८
तदेतच्चिन्तयानेन स्मृतं पापं मयास्वयम् ।
तदा बाल्यात्कृतं देवि! शब्दवेध्यानुशिक्षिणा ॥ ५९
तस्यायं कर्मणो देवि! विपाक स्समुपस्थितः ।
अपथ्यै स्सह सम्भुक्ते व्याधिरन्नरसे यथा ॥ ६०
तस्मान्मामागतं भद्रे! तस्योदारस्य तद्वचः ।
यदहं पुत्रशोकेन सन्त्यक्ष्याम्यद्यजीवितम् ॥ ६१
चक्षुर्भ्यां त्वां न पश्यामि कौसल्ये! साधु मा स्पृश ।"
इत्युक्त्वा सरुदं स्त्रस्तो भार्या माह च भूमिपः ॥ ६२
"एतन्मे सदृशं देवि! यन्मया राघवे कृतम् ।
सदृशं तत्तु तस्यैव यदनेन कृतं मयि ॥ ६३
दुर्वृत्तमपि कःपुत्रं त्यजेद्भुवि विचक्षणः ।
कश्च प्रव्राज्यमानो वा नासूयेत्पितरं सुतः ॥ ६४
यदि मां संस्पृशेद्रामस्सकृदद्य लभेत वा ।
(धनं वा यौवराज्यं वा जीवेय मिति मे मतिः ॥) ६५

यमक्षयमनुप्राप्ताः द्रक्ष्यन्ते नहि मानवाः ।
चक्षुषा त्वां नपश्यामि स्मृतिर्मम विलुप्यते ॥ ६६
दूता वैवस्वतस्यैते कौसल्ये! त्वरयन्ति माम् ।
अतस्तु किं दुःखतरं यदहं जीवितक्षये ॥ ६७
नहि पश्यामि धर्मज्ञं रामं सत्यपराक्रमम् ।
तस्यादर्शनजश्शोकस्सुतस्याप्रतिकर्मणः ॥ ६८
उच्छोपयति मे प्राणान्वारिस्तोकमिवातपः ।
न ते मनुष्या देवास्ते ये चारुशुभकुण्डलम् ॥ ६९
मुखं द्रक्ष्यन्ति रामस्य वर्षे पञ्चदशे पुनः ।
पद्मपत्रेक्षणं सुभ्रु! सुदंष्ट्रं चारुनासिकम् ॥ ७०
धन्या द्रक्ष्यन्ति रामस्य ताराधिपनिभं मुखम् ।
सदृशं शारदस्येन्दोः फुल्लस्य कमलस्य च ॥ ७१
सुगन्धि मम नाथस्य धन्या द्रक्ष्यन्ति तन्मुखम् ।
निवृत्तवनवासं तमयोध्यां पुनरागतम् ॥ ७२
द्रक्ष्यन्ति सुखिनो रामं शुक्रं मार्गगतं यथा ।
कौसल्ये! चित्तमोहेन हृदयं सीदतीव मे ॥ ७३
वेदये नच संयुक्ताञ्छब्दस्पर्शरसानहम् ।
चित्तनाशाद्विपद्यन्ते सर्वाण्येवेन्द्रियाणि मे ॥ ७४
क्षीणस्नेहस्य दीपस्य संसक्तारश्मयो यथा ।
अय मात्मभवश्शोको मामनाथ मचेतनम् ॥ ७५
संसादयति वेगेन यथा कूलं नदीरयः ।”
‘हा राघव! महाबाहो! हा ममाऽयासनाशन! ॥ ७६

हा पितृप्रिय! मे नाथ! हाऽद्य क्वासि गतस्सुत! ।
हा कौसल्ये! नशिष्यामि हा सुमित्रे! तपस्विनि! ॥ ७७
हा नृशंसे! ममामित्रे! कैकेयि! कुलपांसनि! ।'
इति रामस्य मातु श्च सुमित्रायाश्च सन्निधौ ॥ ७८
राजा दशरथश्शोचञ्जीवितान्तमुपागमत् ।
यदा तु दीनं कथयन्नराधिपः प्रियस्य पुत्रस्य विवासनातुरः ।
गतेऽर्धरात्रे भृशदुःखपीडितस्तदा जहौ प्राणमुदारदर्शनः ॥ ७९

इति श्रीमदयोध्याकाण्डे चतुष्षष्टितमस्सर्गः ॥

---

## ॥ पञ्चषष्टितमस्सर्गः ॥

अथ रात्र्यां व्यतीतायां प्रातरेवापरेऽहनि ।
वन्दिनः पर्युपातिष्ठन्तत्पार्थिवनिवेशनम् ॥ १
सूताः परमसंस्कारा मङ्गला श्चोत्तमश्रुताः ।
गायकाः स्तुतिशीलाश्च निगदन्तः पृथक्पृथक् ॥ २
राजानं स्तुवतां तेषा मुदात्ताभिहिताशिषाम् ।
प्रासादाऽभोगविस्तीर्णः स्तुतिशब्दो ह्यवर्तत ॥ ३
ततस्तु स्तुवतां तेषां सूतानां पाणिवादकाः ।
अपदानान्युदाहृत्य पाणिवादानवादयन् ॥ ४
तेन शब्देन विहगाः प्रतिबुद्धा विसस्वनुः ।
शाखास्थाः पञ्जरस्था श्च ये राजकुलगोचराः ॥ ५
व्याहृताः पुण्यशब्दा श्च वीणानां चापि निस्वनाः ।
आशीर्गेयं च गाथानां पूरयामास वेश्मतत् ॥ ६

ततश्शुचिसमाचाराः पर्युपस्थानकोविदाः ।
स्त्रीवर्षधरभूयिष्ठा उपतस्थु र्यथापुरम् ॥ ७
हरिचन्दनसंपृक्त मुदकं काञ्चनै र्घटैः ।
आनिन्यु स्स्नानशिक्षाज्ञा यथाकालं यथाविधि ॥ ८
मङ्गलालम्भनीयानि प्राशनीयान्युपस्करान् ।
उपानिन्युस्तथाप्यन्याः कुमारीबहुळाः स्त्रियाः ॥ ९
सर्वलक्षणसम्पन्नं सर्वं विधिवदर्चितम् ।
सर्वं सुगुणलक्ष्मीवत्तद्बभूवाभिहारिकम् ॥ १०
तत्तु सूर्योदयं यावत्सर्वं परिसमुत्सुकम् ।
तस्थावनुपसंप्राप्तं किंस्विदित्युपशङ्कितम् ॥ ११
अथ याः कोसलेन्द्रस्य शयनं प्रत्यनन्तराः ।
ताः स्त्रियस्तु समागम्य भर्तारं प्रत्यबोधयन् ॥ १२
तथाप्युचितवृत्तास्ता विनयेन नयेन च ।
नह्यस्य शयनं स्पृष्ट्वा किंचिदप्युपलेभिरे ॥ १३
ताः स्त्रिय स्स्वप्नशीलज्ञा श्चेष्टासंचलनादिषु ।
ता वेपथुपरीताश्च राज्ञः प्राणेषु शङ्किताः ॥ १४
प्रतिस्रोतस्तृणाग्राणां सदृशं संचकाशिरे ।
अथसंवेपमानानां स्त्रीणां दृष्ट्वा च पार्थिवम् ॥ १५
यत्तदा शङ्कितं पापं तस्य जज्ञे विनिश्चयः ।
कौसल्या च सुमित्रा च पुत्रशोकपराजिते ॥ १६
प्रसुप्ते न प्रबुद्ध्येते यथाकाल समन्विते ।
निष्प्रभा च विवर्णा च सन्ना शोकेन सन्नता ॥ १७

नव्यराजत कौसल्या तारेव तिमिरावृता ।
कौसल्याऽनन्तरं राज्ञ स्सुमित्रा तदनन्तरम् ॥ १८
नस्माविभ्राजते देवी शोकाश्रुलुलितानना ।
ते च दृष्ट्वा तदा सुप्ते उभे देव्यौ च तं नृपम् ॥ १९
सुप्तमेवोद्गतप्राण मन्तःपुर मदृश्यत ।
ततः प्रचुक्रुशुर्दीनास्सस्वर तावराङ्गनाः ॥ २०
करेणव इवारण्ये स्थानप्रच्युतयूथपाः ।
तासा माक्रन्दशब्देन सहसोद्गतचेतने ॥ २१
कौसल्या च सुमित्रा च त्यक्तनिद्रे बभूवतुः ।
कौसल्या च सुमित्रा च दृष्ट्वा स्पृष्ट्वाच पार्थिवम् ॥ २२
'हानाथे'ति परिक्रुश्य पेततु धरणीतले ।
सा कोसलेन्द्रदुहिता वेष्टमाना महीतले ॥ २३
न बभ्राज रजोध्वस्ता तारेव गगनाच्च्युता ।
नृपे शान्तगुणे जाते कौसल्यां पतितां भुवि ॥ २४
अपश्यं स्ताः स्त्रिय स्सर्वा हतां नागवधूमिव ।
तत स्सर्वा नरेन्द्रस्य कैकेयीप्रमुखाः स्त्रियः ॥ २५
रुदन्त्य श्शोकसन्तप्ता निपेतु र्गतचेतनाः ।
ताभि स्स बलया न्नादः क्रोशन्तीभि रनुद्रुतः ॥ २६
येन स्थिरीकृतं भूय स्तद्गृहं समनादयत् ।
तच्च सन्त्रस्त संभ्रान्तं पर्युत्सुकजनाकुलम् ॥ २७
सर्वतस्तुमुलाक्रन्दं परितापार्तबान्धवम् ।
सद्यो निपतितानन्दं दीनविक्लबदर्शनम् ॥ २८

बभूव नरदेवस्य सद्म दिष्टान्त मीयुषः ।
अतीतमाज्ञाय तु पार्थिवर्षभं यशस्विनं सम्परिवार्य पत्नयः ।
भृशं रुदन्त्यः करुणं सुदुःखिताः प्रगृह्य बाहू व्यलपन्ननाथवत् ॥

इति श्रीमदयोध्याकाण्डे पञ्चषष्टितमस्सर्गः ॥

## ॥ षट्षष्टितमस्सर्गः ॥

तमग्निमिव संशान्त मम्बुहीनमिवार्णवम् ।
हतप्रभमिवाऽदित्यं स्वर्गस्थं प्रेक्ष्य पार्थिवम् ॥ १
कौसल्या बाष्पपूर्णाक्षी विविधं शोककर्शिता ।
उपगृह्य शिरो राज्ञः कैकेयीं प्रत्यभाषत ॥ २
"सकामा भव कैकेयि! भुङ्क्ष्व राज्यमकण्टकम् ।
त्यक्त्वा राजान मेकाग्रा नृशंसे! दुष्टचारिणि! ॥ ३
विहाय मां गतो रामो भर्ता च स्वर्गतो मम ।
विपथे सार्थहीनेव नाहं जीवितु मुत्सहे । ४
भर्तारं तं परित्यज्य का स्त्री दैवत मात्मनः ।
इच्छेज्जीवितु मन्यत्र कैकेय्यास्त्यक्तधर्मणः ॥ ५
न लुब्धो बुध्यते दोषान्किम्पाक मिव भक्षयन् ।
कुब्जानिमित्तं कैकेय्या राघवाणां कुलं हतम् ॥ ६
अनियोगे नियुक्तेन राज्ञा रामं विवासितम् ।
सभार्यं जनक श्श्रुत्वा परितप्स्यत्यहं यथा ॥ ७
स मा मनाथां विधवां नाद्य जानाति धार्मिकः ।
रामः कमलपत्राक्षो जीवन्नाश मितो गतः ॥ ८

विदेहराजस्य सुता तथा सीता तपस्विनी ।
दुःखस्यानुचिता दुःखं वने पर्युद्विजिष्यति ॥ ९
नदतां भीमघोषाणां निशासु मृगपक्षिणाम् ।
निशम्य नूनं संत्रस्ता राघवं संश्रयिष्यति ॥ १०
वृद्धश्चैवाल्पपुत्रश्च वैदेही मनुचिन्तयन् ।
सोऽपि शोकसमाविष्टो ननु त्यक्ष्यति जीवितम् ॥ ११
साऽहं मद्यैव दिष्टान्तं गमिष्यामि पतिव्रता ।
इदं शरीर मालिङ्ग्य प्रवेक्ष्यामि हुताशनम् ॥" १२
तां तत स्संपरिष्वज्य विलपन्तीं तपस्विनीम् ।
व्यपनीय सुदुःखार्तां कौसल्यां व्यावहारिकाः ॥ १३
तैलद्रोण्यामथामात्या स्संवेश्य जगतीपतिम् ।
राज्ञ स्सर्वाण्यथाऽदिष्टा श्चक्रुः कर्माण्यनन्तरम् ॥ १४
नतु सङ्कालनं राज्ञो विना पुत्रेण मन्त्रिणः ।
सर्वज्ञा कर्तुमीपुस्ते ततो रक्षन्ति भूमिपम् ॥ १५
तैलद्रोण्यांतु सचिवैश्शायितं तं नराधिपम् ।
'हा मृतोऽय'मिति ज्ञात्वा स्त्रियस्ताः पर्यवारयन् ॥ १६
बाहूनुद्यम्य कृपणा नेत्रप्रस्रवणै मुखैः ।
रुदन्त्य श्शोकसन्तप्ताः कृपणं पर्यदेवयन् ॥ १७
'हा महाराज! रामेण सततं प्रियवादिना ।
विहीना स्सत्यसन्धेन किमर्थं विजहासिनः ॥ १८
कैकेय्या दुष्टभावाया रामेण वियोजिताः ।
कथं पतिघ्न्या वत्स्याम स्समीपे विधवा वयम्? ॥ १९

स हि नाथ स्सदाऽस्माकं तव च प्रभु रात्मवान् ।
वनं रामो गत श्श्रीमान्विहाय नृपतिश्रियम् ॥ २०
त्वया तेन च वीरेण विना व्यसनमोहिताः ।
कथं वयं निवत्स्यामः कैकेय्या च विदूषिताः ? ॥ २१
ययातु राजा राम श्च लक्ष्मण श्च महाबलः ।
सीतया सह सन्त्यक्ता स्सा क मन्यं न हास्यति ? ॥" २२
ता बाष्पेण च संवीता श्शोकेन विपुलेन च ।
व्यवेष्टन्त निरानन्दा राघवस्य वरस्त्रियः ॥ २३
निशा चन्द्रविहीनेव स्त्रीव भर्तृविवर्जिता ।
पुरीनाराजतायोध्या हीना राज्ञा महात्मना ॥ २४
बाष्पपर्याकुलजना हाहाभूतकुलाङ्गना ।
शून्यचत्वरवेश्मान्ता न बभ्राज यथापुरम् ॥ २५
गते तु शोकात्त्रिदिवं नराधिपे महीतलस्थासु नृपाङ्गनासु च ।
निवृत्तचार स्सहसा गतो रविः प्रवृत्तचारा रजनी ह्युपस्थिता ॥
'ऋते तु पुत्रा दहनं महीपते र्नारोचयन्ते सुहृद स्समागताः ।'
इतीव तस्मिन्शयने न्यवेशय न्विचिन्त्य राजान मचिन्त्यदर्शनम् ॥
गतप्रभाद्यौ रिव भास्करं विना व्यपेतनक्षत्रगणेव शर्वरी ।
पुरी बभासे रहिता महात्मना न चास्रकण्ठाऽकुलमार्गचत्वरा ॥
नराश्च नार्यश्च समेत्य सङ्घशो विगर्हमाणा भरतस्य मातरम् ।
तदा नगर्यां नरदेवसंक्षये बभूवु रार्ता न च शर्मलेभिरे ॥ २९

इति श्रीमदयोध्याकाण्डे षट्षष्टितमस्सर्गः ॥

## ॥ सप्तषष्टितमस्सर्गः ॥

आक्रन्दितनिरानन्दा सास्रकण्ठजनाकुला ।
अयोध्यायां मतितता साऽत्यतीयाय शर्वरी ॥ १

व्यतीतायान्तु शर्वर्या मादित्यस्योदये ततः ।
समेत्य राजकर्तार स्सभा मीयुर्द्विजातयः ॥ २

मार्कण्डेयोऽथ मौद्गल्यो वामदेवश्च काश्यपः ।
कात्यायनो गौतमश्च जाबालिश्च महायशाः ॥ ३

एते द्विजा स्सहामात्यैः पृथग्वाच मुदीरयन् ।
वसिष्ठ मेवाभिमुखा श्श्रेष्ठं राजपुरोहितम् ॥ ४

" अतीता शर्वरी दुःखं या नो वर्षशतोपमा ।
अस्मिन्पञ्चत्वमापन्ने पुत्रशोकेन पार्थिवे ॥ ५

स्वर्गतश्च महाराजो रामश्चारण्यमाश्रितः ।
लक्ष्मणश्चापि तेजस्वी रामेणैव गत स्सह ॥ ६

उभौ भरतशत्रुघ्नौ केकयेषु परन्तपौ ।
पुरे राजगृहे रम्ये मातामहनिवेशने ॥ ७

इक्ष्वाकूणा मिहाद्यैव कश्चिद्राजा विधीयताम् ।
अराजकं हि नोराष्ट्रं नविनाश मवाप्नुयात् ॥ ८

नाराजके जनपदे विद्युन्माली महास्वनः ।
अभिवर्षति पर्जन्यो महीं दिव्येन वारिणा ॥ ९

नाराजके जनपदे बीजमुष्टिः प्रकीर्यते ।
नाराजके पितुः पुत्रो भार्या वा वर्तते वशे ॥ १०

नाराजके धनं चास्ति नास्ति भार्याप्यराजके ।
इदमत्याहितं चान्यत्कुतस्सत्यमराजके ॥ ११
नाराजके जनपदे कारयन्ति सभां नराः ।
उद्यानानि च रम्याणि हृष्टाः पुण्यगृहाणि च ॥ १२
नाराजके जनपदे यज्ञशीला द्विजातयः ।
सत्राण्यन्वासते दान्ता ब्राह्मणा स्संशितव्रताः ॥ १३
नाराजके जनपदे महायज्ञेषु यज्वनः ।
ब्राह्मणा वसुसंपूर्णा विसृजन्त्याप्तदक्षिणाः ॥ १४
नाराजके जनपदे प्रभूतनटनर्तकाः ।
उत्सवा श्च समाजा श्च वर्धन्ते राष्ट्रवर्धनाः ॥ १५
नाराजके जनपदे सिद्धार्था व्यवहारिणः ।
कथाभि रनुरज्यन्ते कथाशीलाः कथाप्रियैः ॥ १६
नाराजके जनपदे उद्यानानि समागताः ।
सायाह्ने क्रीडितुं यान्ति कुमार्यो हेमभूषणाः ॥ १७
नाराजके जनपदे वाहनै श्शीघ्रगामिभिः ।
नरा निर्यान्त्यरण्यानि नारीभि स्सह कामिनः ॥ १८
नाराजके जनपदे धनवन्त स्सुरक्षिताः ।
शेरते विवृतद्वाराः कृषिगोरक्षजीविनः ॥ १९
नाराजके जनपदे बद्धघण्टा विषाणिनः ।
अटन्ति राजमार्गेषु कुञ्जराष्षष्टिहायनाः ॥ २०
नाराजके जनपदे शरान्सततमस्यताम् ।
श्रूयते तलनिर्घोष इष्वस्त्राणा मुपासने ॥ २१

नाराजके जनपदे वणिजो दूरगामिनः ।
गच्छन्ति क्षेममध्वानं बहुपण्यसमाचिताः ॥ २२
नाराजके जनपदे चरत्येकचरो वशी ।
भावयन्नात्मनाऽऽत्मानं यत्र सायंगृहो मुनिः ॥ २३
नाराजके जनपदे योगक्षेमं प्रवर्तते ।
नचाप्यराजके सेना शत्रून्विषहते युधि ॥ २४
नाराजके जनपदे हृष्टैः परमवाजिभिः ।
नरास्संयान्ति सहसा रथैश्च परिमण्डिताः ॥ २५
नाराजके जनपदे नराश्शास्त्रविशारदाः ।
संवदन्तोऽवतिष्ठन्ते वनेषूपवनेषु च ॥ २६
नाराजके जनपदे माल्यमोदकदक्षिणाः ।
देवताभ्यर्चनार्थाय कल्प्यन्ते नियतैर्जनैः ॥ २७
नाराजके जनपदे चन्दनागरुरूषिताः ।
राजपुत्रा विराजन्ते वसन्त इव शाखिनः ॥ २८
यथाह्यनुदका नद्यो यथा वाऽप्यतृणं वनम् ।
अगोपाला यथागावस्तथा राष्ट्रमराजकम् ॥ २९
ध्वजो रथस्य प्रज्ञानं धूमो ज्ञानं विभावसोः ।
तेषां यो नो ध्वजो राजा स देवत्वमितो गतः ॥ ३०
नाराजके जनपदे स्वकं भवति कस्यचित् ।
मत्स्या इव नरा नित्यं भक्षयन्ति परस्परम् ॥ ३१
ये हि सम्भिन्नमर्यादा नास्तिकाश्छिन्नसंशयाः ।
तेऽपि भावाय कल्पन्ते राजदण्डनिपीडिताः ॥ ३२

यथा दृष्टि श्शरीरस्य नित्यमेव प्रवर्तते ।
तथा नरेन्द्रो राष्ट्रस्य प्रभवस्सत्यधर्मयोः ॥ ३३
राजा सत्यं च धर्म श्च राजा कुलवतां कुलम् ।
राजा माता पिताचैव राजा हितकरो नृणाम् ॥ ३४
यमो वैश्रवणश्शक्रो वरुणश्च महाबलः ।
विशेष्यन्ते नरेन्द्रेण वृत्तेन महता ततः ॥ ३५
अहो तम इवेदं स्यान्नप्रज्ञायेत किंचन ।
राजा चे न्नभवेल्लोके विभजन्त्साध्वसाधुनी ॥ ३६
जीवत्यपि महाराजे तवैव वचनं वयम् ।
नातिक्रमामहे सर्वे वेलां प्राप्येव सागरः ॥ ३७
सनस्समीक्ष्य द्विजवर्यवृत्तं नृपं विना राज्य मरण्यभूतम् ।
कुमार मिक्ष्वाकुसुतं वदान्यं त्व मेव राजान मिहाभिषिञ्च ॥" ३८

इति श्रीमदयोध्याकाण्डे सप्तषष्टितमस्सर्गः ॥

## ॥ अष्टषष्टितमस्सर्गः ॥

तेषां हि वचनं श्रुत्वा वसिष्ठः प्रत्युवाच ह ।
मित्रामात्यगणान्सर्वान्ब्राह्मणां स्तानिदं वचः ॥ १
यदसौ मातुलकुले पुरे राजगृहे सुखी ।
भरतो वसति भ्रात्रा शत्रुघ्नेन समन्वितः ॥ २
तच्छीघ्रं जवनादूता गच्छन्तु त्वरितैर्हयैः ।
आनेतुं भ्रातरौ वीरौ किं समीक्षामहे वयम् ॥" ३

"गच्छ"न्विति ततस्सर्वे वसिष्ठं वाक्यमब्रुवन् ।
तेषां तद्वचनं श्रुत्वा वसिष्ठो वाक्यमब्रवीत् ॥ ४
"एहि सिद्धार्थ! विजय! जयन्ताशोक! नन्दन! ।
श्रूयता मितिकर्तव्यं सर्वानेव ब्रवीमि वः ॥ ५
पुरं राजगृहं गत्वा शीघ्रं शीघ्रजवैर्हयैः ।
त्यक्तशोकैरिदं वाच्य श्शासना द्भरतो मम ॥ ६
पुरोहित स्त्वां कुशलं प्राह सर्वे च मन्त्रिणः ।
त्वरमाण श्च निर्याहि कृत्यमात्ययिकं त्वया ॥ ७
माचास्मै प्रोषितं रामं माचास्मै पितरं मृतम् ।
भवन्त श्शंसिषु र्गत्वा राघवाणा मिमं क्षयम् ॥ ८
कौशेयानि च वस्त्राणि भूषणानि वराणि च ।
क्षिप्रमादाय राज्ञश्च भरतस्य च गच्छत ॥" ९
दत्तपथ्यशना दूता जग्मु स्स्वं स्वं निवेशनम् ।
केकयां स्ते गमिष्यन्तो हयानारुह्य सम्मतान् ॥ १०
ततः प्रास्थानिकं कृत्वा कार्यशेष मनन्तरम् ।
वसिष्ठेनाभ्यनुज्ञाता दूतास्संत्वरिता ययुः ॥ ११
स्यन्तेनापरतालस्य प्रलम्बस्योत्तरं प्रति ।
निषेवमाणा स्ते जग्मुर्नदीं मध्येन मालिनीम् ॥ १२
ते हस्तिनपुरे गङ्गां तीर्त्वा प्रत्यङ्मुखाययुः ।
पाञ्चालदेश मासाद्य मध्येन कुरुजाङ्गलम् ॥ १३
सरांसि च सुपूर्णानि नदी श्च विमलोदकाः ।
निरीक्षमाणास्ते जग्मु र्दूताः कार्यवशाद्द्रुतम् ॥ १४

ते प्रसन्नोदकां दिव्यां नानाविहगसेविताम् ।
उपातिजग्मु र्वेगेन शरदण्डां जनाकुलाम् ॥ १५
निकूलवृक्षमासाद्य दिव्यं सत्योपयाचनम् ।
अभिवाद्याभिवाद्यं तं कुलिङ्गां प्राविशन्पुरीम् ॥ १६
अभिकाळं ततः प्राप्यते बोधिभवना च्च्युताम् ।
पितृपैतामहीं पुण्यां तेरु रिक्षुमतीं नदीम् ॥ १७
अवेक्ष्याञ्जलिपानां श्च ब्राह्मणान्वेदपारगान् ।
ययु र्मध्येन बाह्लीकान् सुदामानं च पर्वतम् ॥ १८
विष्णोः पदं प्रेक्षमाणा विपाशां चापि शाल्मलीम् ।
नदी र्वापी स्तटकानि पल्वलानि सरांसि च ॥ १९
पश्यन्तो विविधां श्चापि सिंहव्याघ्रमृगद्विपान् ।
ययुः पथाऽतिमहता शासनं भर्तु रीप्सवः ॥ २०
ते श्रान्तवाहना दूता विकृष्टेन पथा ततः ।
गिरिव्रजं पुरवरं शीघ्र मासेदु रञ्जसा ॥ २१
भर्तुः प्रियार्थं कुलरक्षणार्थं भर्तुश्च वंशस्य परिग्रहार्थम् ।
अहेडमाना स्त्वरयास्म दूता रात्र्यान्तुते तत्पुर मेव याताः ॥ २२

इति श्रीमदयोध्याकाण्डे अष्टषष्टितमस्सर्गः ॥

---

## ॥ एकोनसप्ततितमस्सर्गः ॥

यामेव रात्रिं ते दूताः प्रविशन्ति स्म तां पुरीम् ।
भरतेनापि तां रात्रिं स्वप्नो दृष्टोऽयमप्रियः ॥ १

व्युष्टामेव तु तां रात्रिं दृष्ट्वा तं स्वप्न मप्रियम् ।
पुत्रो राजाधिराजस्य सुभृशं पर्यतप्यत ॥ २
तप्यमानं समाज्ञाय वयस्याः प्रियवादिनः ।
आयासं हि विनेष्यन्तस्सभायां चक्रिरे कथाः ॥ ३
वादयन्ति तथा शान्तिं लासयन्त्यपिचापरे ।
नाटकान्यपरे प्राहु र्हास्यानि विविधानि च ॥ ४
स तैर्महात्मा भरत स्सखिभिः प्रियवादिभिः ।
गोष्ठीहास्यानि कुर्वद्भिर्न प्राहृष्यत राघवः ॥ ५
तमब्रवीत्प्रियसखो भरतं सखिभि र्वृतम् ।
"सुहृद्भिः पर्युपासीनः किं सखे! नानुमोदसे ॥" ६
एवं ब्रुवाणं सुहृदं भरतः प्रत्युवाचह ।
शृणु त्वं यन्निमित्तं मे दैन्य मेतदुपागतम् ॥ ७
स्वप्ने पितर मद्राक्षं मलिनं मुक्तमूर्धजम् ।
पतन्त मद्रिशिखरात्कलुषे गोमयह्रदे ॥ ८
प्लवमानश्च मे दृष्ट स्स तस्मिन्गोमयह्रदे ।
पिबन्नञ्जलिना तैलं हसन्नपि मुहुर्मुहुः ॥ ९
तत स्तिलोदनं भुक्त्वा पुनः पुन रधश्शिराः ।
तैलेनाभ्यक्तसर्वाङ्ग स्तैलमेवावगाहत ॥ १०
स्वप्ने च सागरं शुष्कं चन्द्रं च पतितं भुवि ।
उपरुद्धां च जगतीं तमसेव समावृताम् ॥ ११
औपवाह्यस्य नागस्य विषाणं शकलीकृतम् ।
सहसा चापि संशान्तं ज्वलितं जातवेदसम् ॥ १२

अवतीर्णां च पृथिवीं शुष्कांश्च विविधान् द्रुमान् ।
अहं पश्यामि विध्वस्तान् सधूमां श्चापि पर्वतान् ॥ १३
पीठे कार्ष्णायसे चैनं निषण्णं कृष्णवाससम् ।
प्रहसन्तिस्म राजानं प्रमदाः कृष्णपिङ्गळाः ॥ १४
त्वरमाण श्च धर्मात्मा रक्तमाल्यानुलेपनः ।
रथेन खरयुक्तेन प्रयातो दक्षिणामुखः ॥ १५
प्रहसन्तीव राजानं प्रमदा रक्तवासिनी ।
प्रकर्षन्ती मया दृष्टा राक्षसी विकृतानना ॥ १६
एव मेतन्मया दृष्ट मिमां रात्रिं भयावहाम् ।
अहं रामोऽथवा राजा लक्ष्मणो वा मरिष्यति ॥ १७
नरो यानेन यस्स्वप्ने खरयुक्तेन याति हि ।
अचिरा त्तस्य धूमाग्रं चितायां संप्रदृश्यते ॥ १८
एतन्निमित्तं दीनोऽहं तन्नवः प्रतिपूजये ।
शुष्यतीव च मे कण्ठो न स्वस्थमिव मे मनः ॥ १९
न पश्यामि भयस्थानं भयंचैवोपधारये ।
भ्रष्टश्च स्वरयोगो मे छाया चोपहता मम ॥ २०
जुगुप्सन्निव चाऽत्मानं न च पश्यामि कारणम् ।
इमां हि दुस्स्वप्नगतिं निशाम्य ता मनेकरूपा मवितर्कितां पुरा ।
भयं महत्तद्धृदयान्न याति मे विचिन्त्य राजान मचिन्त्यदर्शनम् ॥"

इति श्रीमदयोध्याकाण्डे एकोनसप्ततितमस्सर्गः ॥

## ॥ सप्ततितमस्सर्गः ॥

भरते ब्रुवति स्वप्नं दूतास्ते क्लान्तवाहनाः ।
प्रविश्यासह्यपरिखं रम्यं राजगृहं पुरम् ॥ १
समागम्य तु राज्ञा च राजपुत्रेण चार्चिताः ।
राज्ञः पादौ गृहीत्वा तु त मूचु भरतं वचः ॥ २
"पुरोहित स्त्वां कुशलं प्राह सर्वे च मन्त्रिणः ।
त्वरमाणश्च निर्याहि कृत्यमात्ययिकं त्वया ॥ ३
इमानि च महार्हाणि वस्त्राण्याभरणानि च ।
परिगृह्य विशालाक्ष! मातुलस्य च दापय ॥ ४
अत्र विंशतिकोट्यस्तु नृपते मातुलस्य ते ।
दशकोट्यस्तु संपूर्णा स्तथैव च नृपात्मज! ॥" ५
प्रति गृह्य तु तत्सर्वं स्वनुरक्तस्सुहृज्जने ।
दूतानुवाच भरतः कामै स्सम्प्रतिपूज्यतान् ॥ ६
"कच्चित्सु कुशली राजा पिता दशरथो मम ।
कच्चिच्चारोगता रामे लक्ष्मणे च महात्मनि! ॥ ७
आर्याच धर्मनिरता धर्मज्ञा धर्मदर्शिनी ।
अरोगा चापि कौसल्या माता रामस्य धीमतः! ॥ ८
कच्चित्सुमित्रा धर्मज्ञा जननी लक्ष्मणस्य या ।
शत्रुघ्नस्य च वीरस्य साऽरोगा चापि मध्यमा! ॥ ९
आत्मकामा सदा चण्डी क्रोधिना प्राज्ञमानिनी ।
अरोगा चापि मे माता कैकेयी किं मुवाच ह ॥" १०

एव मुक्तास्तु ते दूता भरतेन महात्मना ।
ऊचु स्सप्रश्रयं वाक्य मिदं तं भरतं तदा ॥ ११
"कुशलास्ते नरव्याघ्र! येषां कुशल मिच्छसि ।
श्रीश्च त्वां वृणुते पद्मा युज्यतां चापि ते रथः ॥" १२
भरतश्चापि तान् दूतानेव मुक्तोऽभ्यभाषत ।
"आपृच्छेऽहं महाराजं दूता स्सन्त्वरयन्तिमाम् ॥" १३
एवमुक्त्वातु तान् दूतान्भरतः पार्थिवात्मजः ।
दूतै स्संचोदितो वाक्यं मातामह मुवाच ह ॥ १४
"राज! न्पितुर्गमिष्यामि सकाशं दूतचोदितः ।
पुनरप्यह मेष्यामि यदा मे त्वं स्मरिष्यसि ॥" १५
भरतेनैव मुक्तस्तु नृपो मातामहस्तदा ।
तमुवाच शुभं वाक्यं शिरस्याघ्राय राघवम् ॥ १६
"गच्छ तातानुजाने त्वां कैकेयी सुप्रजा स्त्वया ।
मातरं कुशलं ब्रूयाः पितरं च परन्तप! ॥ १७
पुरोहितं च कुशलं ये चान्ये द्विजसत्तमाः ।
तौ च तात! महेष्वासौ भ्रातरौ रामलक्ष्मणौ ॥" १८
तस्मै हस्त्युत्तमांश्चित्रान्कम्बला नजिनानि च ।
अभिसत्कृत्य कैकेयो भरताय धनं ददौ ॥ १९
रुक्मनिष्कसहस्रे द्वेषोडशाश्वशतानि च ।
सत्कृत्य कैकयीपुत्रं कैकयो धन मादिशत् ॥ २०
तथाऽमात्या नभिप्रेतान्विश्वास्यां श्च गुणान्वितान् ।
ददावश्वपतिः क्षिप्रं भरतायानुयायिनः ॥ २१

ऐरावतानैन्द्रशिरान्नागान्वै प्रियदर्शनान् ।
खराञ्छीघ्रान्सुसंयुक्तान्मातुलोऽस्मै धनं ददौ ॥ २२
अन्तःपुरेऽतिसंवृद्धान् व्याघ्रवीर्यबलान्वितान् ।
दंष्ट्राऽऽयुधान्महाकायाञ्छुनश्चोपायनं ददौ ॥ २३
सदत्तं केकयेन्द्रेण धनं तन्नाभ्यनन्दत ।
भरतः कैकयीपुत्रो गमनत्वरया तदा ॥ २४
बभूवह्यस्य हृदये चिन्ता सुमहती तदा ।
त्वरया चापि दूतानां स्वप्नस्यापि च दर्शनात् ॥ २५
सस्ववेश्माभ्यतिक्रम्य नरनागाश्वसंवृतम् ।
प्रपेदे सुमहच्छ्रीमान्राजमार्ग मनुत्तमम् ॥ २६
अभ्यतीत्य ततोऽपश्यदन्तःपुर मुदारधीः ।
ततस्तद्भरत श्श्रीमा नाविवेशानिवारितः ॥ २७
समातामहमापृच्छ्य मातुलं च युधाजितम् ।
रथमारुह्य भरतश्शत्रुघ्नसहितो ययौ ॥ २८
रथान्मण्डलचक्रां श्च योजयित्वा परश्शतम् ।
उष्ट्रगोऽश्वखरै र्भृत्या भरतं यान्तमन्वयुः ॥ २९
बलेन गुप्तो भरतो महात्मा सहार्यकस्याऽत्मसमै रमात्यैः ।
आदाय शत्रुघ्न मपेतशत्रु गृहाद्ययौ सिद्ध इवेन्द्रलोकात् ॥ ३०

इति श्रीमदयोध्याकाण्डे सप्ततितमस्सर्गः ॥

## ॥ एकसप्ततितमस्सर्गः ॥

स प्राङ्मुखो राजगृहादभिनिर्याय राघवः ।
ततस्सुदामां द्युतिमान् सन्तीर्यावेक्ष्य तां नदीम् ॥ १

ह्लादिनीं दूरपारां च प्रत्यक्स्रोतस्तरङ्गिणीम् ।
शरदूमतरच्छ्रीमान्नदीमिक्ष्वाकुनन्दनः ॥ २
एलाधाने नदीं तीर्त्वा प्राप्य चापरपर्पटान् ।
शिला माकुर्वतीं तीर्त्वा आग्नेयं शल्यकर्तनम् ॥ ३
सत्यसन्धश्शुचिश्श्रीमान्प्रेक्षमाण श्शिलावहाम् ।
अत्ययात्स महाशैलान्वनं चैत्ररथं प्रति ॥ ४
सरस्वतीं च गङ्गां च युग्मेन प्रतिपद्य च ।
उत्तरान्वीरमत्स्यानां भारुण्डं प्राविशद्वनम् ॥ ५
वेगिनीं च कुलिङ्गाख्यां ह्लादिनीं पर्वताऽवृताम् ।
यमुनां प्राप्य सन्तीर्णो बलमाश्वासयत्तदा ॥ ६
शीतीकृत्य तु गात्राणि क्लान्तानाश्वास्य वाजिनः ।
तत्र स्नात्वा च पीत्वा च प्राया दादाय चोदकम् ॥ ७
राजपुत्रो महारण्य मनभीक्ष्णोपसेवितम् ।
भद्रो भद्रेण यानेन मारुतः खमिवात्ययात् ॥ ८
भागीरथीं दुष्प्रतरामंशुधाने महानदीम् ।
उपायाद्राघवस्तूर्णं प्राग्वटे विश्रुतेपुरे ॥ ९
स गङ्गां प्राग्वटे तीर्त्वा समायात्कुटिकोष्टिकाम् ।
सबल स्तां स तीर्त्वाऽथ समायाद्धर्मवर्धनम् ॥ १०
तोरणं दक्षिणार्धेन जम्बूप्रस्थमुपागमत् ।
वरूथं च ययौ रम्यं ग्रामं दशरथात्मजः ॥ ११
तत्र रम्ये वनेवासं कृत्वाऽसौ प्राङ्मुखो ययौ ।
उद्यान मुज्जिहीनायाः प्रियका यत्र पदपाः ॥ १२

सालां स्तु प्रियकान्प्राप्य शीघ्रानास्थाय वाजिनः ।
अनुज्ञाप्याथ भरतो वाहिनीं त्वरितो ययौ ॥ १३
वासं कृत्वा सर्वतीर्थे तीर्त्वा चोत्तानिकां नदीम् ।
अन्यानदी श्च विविधाः पार्वतीयै स्तुरङ्गमैः ॥ १४
हस्तिपृष्ठक मासाद्य कुटिका मत्यवर्तत ।
ततार च नरव्याघ्रो लौहित्ये स कपीवतीम् ॥ १५
एकसाले स्थाणुमतीं विनते गोमतीं नदीम् ।
कलिङ्गनगरे चापि प्राप्य सालवनं तदा ॥ १६
भरतः क्षिप्रमागच्छत्सुपरिश्रान्तवाहनः ।
वनं च समतीत्याऽशु शर्वर्या मरुणोदये ॥ १७
अयोध्यां मनुना राज्ञा निर्मितां संददर्शह ।
तां पुरीं पुरुषव्याघ्र स्सप्तरात्रोषितःपथि ॥ १८
अयोध्या मग्रतो दृष्ट्वा सारथिं वाक्यमब्रवीत् ।"
एषा नातिप्रतीता मे पुण्योद्याना यशस्विनी ॥ १९
अयोध्या दृश्यते दूरा त्सारथे! पाण्डुमृत्तिका ।
यज्वभि र्गुणसम्पन्नै र्ब्राह्मणै र्वेदपारगैः ॥ २०
भूयिष्ठ मृद्धै राकीर्णा राजर्षि परिपालिता ।
अयोध्यायां पुराशब्द श्श्रूयते तुमुलो महान् ॥ २१
समन्तान्नरनारीणां तमद्य न शृणोम्यहम् ।
उद्यानानि च सायाह्ने क्रीडित्वोपरतैर्नरैः ॥ २२
समन्ता द्विप्रधावद्भिः प्रकाशन्ते ममा[illegible]गा ।
तान्यद्यानुरुदन्तीव परित्यक्तानि कामि[illegible]ः ॥ २३

अरण्यभूतेव पुरी सारथे! प्रतिभाति मे ।
नह्यत्र यानैर्दृश्यन्ते न गजैर्नैच वाजिभिः ॥ २४
निर्यान्तो वाऽभियान्तो वा नरमुख्या यथापुरम् ।
उद्यानानि पुराभान्ति मत्तप्रमुदितानि च ॥ २५
जनानां रतिसंयोगेष्वत्यन्तगुणवन्ति च ।
आहतान्यद्य पश्यामि निरानन्दानि सर्वशः ॥ २६
स्रस्तपर्णैरनुपथं विक्रोशद्भि रिवद्रुमैः ।
नाद्यापि श्रूयते शब्दो मत्तानां मृगपक्षिणाम् ॥ २७
संरक्तां मधुरां वाणीं कलं व्याहरतां बहु ।
चन्दनागरुसंपृक्तो धूपसम्मूर्छितोऽतुलः ॥ २८
प्रवाति पवनश्श्रीमा न्किन्तु नाद्य यथापुरम् ।
भेरीमृदङ्गवीणानां कोणसङ्घट्टितः पुनः ॥ २९
किमद्य शब्दो विरतस्सदा दीनगतिः पुरा ।
अनिष्टानि च पापानि पश्यामि विविधानि च ॥ ३०
निमित्तान्यमनोज्ञानि तेन सीदति मे मनः ।
सर्वथा कुशलं सूत! दुर्लभं मम बन्धुषु ॥ ३१
तथा ह्यसति सम्मोहे हृदयं सीदतीव मे ।"
विषण्ण श्शान्तहृदय स्त्रस्तस्संलुलितेन्द्रियः ॥ ३२
भरतः प्रविवेशाऽशु पुरीमिक्ष्वाकुपालिताम् ।
द्वारेण वैजयन्तेन प्राविशच्छ्रान्तवाहनः ॥ ३३
द्वार्स्थै रुत्थाय 'विजयं' पृष्टस्तै स्सहितो ययौ ।
सत्वनेकाग्रहृदयो द्वार्स्थं पत्यर्च्य तं जनम् ॥ ३४

सूतमश्वपतेःक्लान्त मब्रवीत्तत्र राघवः ।
"किमहं त्वरयानीतः कारणेन विनाऽनघ ! ॥ ३५
अशुभाशङ्कि हृदयं शीलं च पततीव मे ।
श्रुतानो यादृशाः पूर्वं नृपतीनां विनाशने ॥ ३६
आकारां स्तानहं सर्वानिह पश्यामि सारथे ! ।
सम्मार्जनविहीनानि परुषाण्युपलक्षये ॥ ३७
असंयतकवाटानि श्रीविहीनानि सर्वशः ।
बलिकर्मविहीनानि धूपसम्मोदनेन च ॥ ३८
अनाशितकुटुम्बानि प्रभाहीनजनानिच ।
अलक्ष्मीकानि पश्यामि कुटुम्बिभवनान्यहम् ॥ ३९
अपेतमाल्यशोभानि ह्यसम्मृष्टाजिराणिच ।
देवागाराणि शून्यानि न चाभान्ति यथापुरम् ॥ ४०
देवतार्चाः प्रविद्धाश्च यज्ञगोष्ठ्य स्तथाविधाः ।
माल्यापणेषु राजन्ते नाद्य पण्यानि वा तथा ॥ ४१
दृश्यन्ते वणिजोऽप्यद्य न यथापूर्व मत्रवै ।
ध्यानसंविग्नहृदया नष्टव्यापारयन्त्रिताः ॥ ४२
देवायतनचैत्येषु दीनाः पक्षिगणास्तथा ।
मलिनं चाश्रुपूर्णाक्षं दीनं ध्यानपरं कृशम् ॥ ४३
सस्त्रीपुंसं च पश्यामि जन मुत्कण्ठितं पुरे ।"
इत्येव मुक्त्वा भरत स्सूतं तं दीनमानसः ॥ ४४
तान्यनिष्टान्ययोध्यायां प्रेक्ष्य राजगृहं ययौ ।

तां शून्यशृङ्गाटकवेश्मरथ्यां रजोऽरुणद्वारकवाटयन्त्राम् ।
दृष्ट्वापुरीमिन्द्रपुरप्रकाशां दुःखेन संपूर्णतरो बभूव ॥ ४५
बहूनि पश्यन्मनसोऽप्रियाणि यान्यन्यदा नास्य पुरे बभूवुः ।
अवाक्छिरा दीनमना न हृष्टः पितुर्महात्मा प्रविवेश वेश्म ॥ ४६

इति श्रीमदयोध्याकाण्डे एकसप्ततितमस्सर्गः ॥

## ॥ द्विसप्ततितमस्सर्गः ॥

अपश्यंस्तु तत स्तत्र पितरं पितु रालये ।
जगाम भरतो द्रष्टुं मातरं मातु रालये ॥ १
अनुप्राप्तं तु तं दृष्ट्वा कैकेयी प्रोषितं सुतम् ।
उत्पपात तदा हृष्टा त्यक्त्वा सौवर्ण मासनम् ॥ २
स प्रविश्यैव धर्मात्मा स्वगृहं श्रीविवर्जितम् ।
भरतः प्रतिजग्राह जनन्या श्चरणौ शुभौ ॥ ३
सा तं मूर्धन्युपाघ्राय परिष्वज्य यशस्विनम् ।
अङ्के भरत मारोप्य प्रष्टुं समुपचक्रमे ॥ ४
"अद्य ते कतिचि द्रात्र्यः च्युतस्याऽर्यकवेश्मनः ।
अपि नाध्वश्रम श्शीघ्रं रथेनाऽपतत स्तव ॥ ५
आर्यकस्ते सुकुशली युधाजिन्मातुल स्तव ।
प्रवासाच्च सुखं पुत्र! सर्वं मे वक्तु मर्हसि ॥" ६
एवं पृष्टस्तु कैकेय्या प्रियं पार्थिवनन्दनः ।
आचष्ट भरत स्सर्वं मात्रे राजीवलोचनः ॥ ७

"अद्य मे सप्तमी रात्रिश्च्युतस्याऽर्यकवेश्मनः ।
अम्बायाः कुशली तातो युधाजिन्मातुलश्च मे ॥ ८
यन्मे धनं च रत्नं च ददौ राजा परन्तपः ।
परिश्रान्तं पथ्यभवत्ततोऽहं पूर्व मागतः ॥ ९
राजवाक्य हरै दूतै स्त्वर्यमाणोऽह मागतः ।
यदहं प्रष्टु मिच्छामि तदम्बा वक्तु मर्हति ॥ १०
शून्योऽयं शयनीयस्ते पर्यङ्को हेमभूषितः ।
न चाय मिक्ष्वाकुजनः प्रहृष्टः प्रतिभाति मा ॥ ११
राजा भवतिभूयिष्ठ मिहाम्बया निवेशने ।
तमहं नाद्य पश्यामि द्रष्टु मिच्छन्निहाऽगतः ॥ १२
पितुर्ग्रहीष्ये चरणौ तं ममाऽख्याहि पृच्छतः ।
आहोस्विदम्ब! ज्येष्ठायाः कौसल्याया निवेशने ॥" १३
[अम्ब राजा स यत्राऽस्ते त महं द्रष्टु मुत्सहे ।
नहि शर्माधिगच्छामि तमदृष्ट्वा महीपतिम् ॥ १४
तस्य तद्वचनं श्रुत्वा भरतस्य महात्मनः ।]
तं प्रत्युवाच कैकेयी प्रियव द्घोरमप्रियम् ॥ १५
अजानन्तं प्रजानन्ती राज्यलोभेन मोहिता ।
"यागति स्सर्वभूतानां तां गतिं ते पिता गतः ॥ १६
राजा महात्मा तेजस्वी यायजूक स्सतां गतिः ।"
तच्छ्रुत्वा भरतो वाक्यं धर्माभिजनवाञ्छुचिः ॥ १७
पपात सहसा भूमौ पितृशोकबलार्दितः ।
"हाहतोऽ"स्मीति कृपणां दीनां वाच मुदीरयन् ॥ १८

निपपात महाबाहु र्बाहू विक्षिप्य वीर्यवान् ।
तत श्शोकेन संवीतः पितुर्मरणदुःखितः ॥ १९
विललाप महातेजा भ्रान्ताकुलितचेतनः ।
"एतत्सुरुचिरं भाति पितुर्मे शयनं पुरा ॥ २०
शशिनेवामलं रात्रौ गगनं तोयदात्यये ।
तदिदं न विभात्यद्य विहीनं तेन धीमता ॥ २१
व्योमेव शशिना हीन मप्शुष्क इव सागरः ।"
बाष्प मुत्सृज्य कण्ठेन स्वार्तः परमपीडितः॥ २२
प्रच्छाद्य वदनं श्रीमद्वस्त्रेण जयतां वरः ।
तमार्तं देवसङ्काशं समीक्ष्य पतितं भुवि ॥ २३
निकृत्त मिव सालस्य स्कन्धं परशुना वने ।
मत्तमातङ्गसङ्काशं चन्द्रार्कसदृशं भुवः ॥ २४
उत्थापयित्वा शोकार्तं वचनं चेद मब्रवीत् ।
"उत्तिष्ठोत्तिष्ठ किं शेषे राज! न्नत्र महायशः! ॥ २५
त्वद्विधा न हि शोचन्ति सन्तस्सदसि सम्मताः ।
दानयज्ञाधिकारा हि शीलश्रुतिवचोनुगा ॥ २६
बुद्धिस्ते बुद्धिसम्पन्न! प्रभेवार्कस्य मन्दिरे ।"
स रुदित्वा चिरं कालं भूमौ विपरिवृत्य च ॥ २७
जननीं प्रत्युवाचेदं शोकै र्बहुभि रावृतः ।
"अभिषेक्ष्यति रामं नु राजा यज्ञं नु यक्ष्यते ॥ २८
इत्यहं कृतसङ्कल्पो हृष्टो यात्रामयासिषम् ।
तदिदं ह्यन्यथा भूतं व्यवदीर्णं मनो मम ॥ २९

पितरं यो न पश्यामि नित्यं प्रियहिते रतम् ।
अम्ब! केनात्यगाद्राजा व्याधिना मय्यनागते ॥ ३०
धन्या रामादय स्सर्वे यैः पिता संस्कृतस्स्वयम् ।
न नूनं मां महाराजः प्राप्तं जानाति कीर्तिमान् ॥ ३१
उपजिघ्रेद्धि मां मूर्ध्नि तातस्सन्नम्य सत्वरम् ।
क्व स पाणि स्सुखस्पर्श स्तातस्याक्लिष्टकर्मणः ॥ ३२
येन मां रजसा ध्वस्तमभीक्ष्णं परिमार्जति ।
यो मे भ्राता पिता बन्धुर्यस्य दासोऽस्मि धीमतः ॥ ३३
तस्य मां शीघ्र माख्याहि रामस्याक्लिष्टकर्मणः ।
पिता हि भवति ज्येष्ठो धर्म मार्यस्य जानतः ॥ ३४
तस्य पादौ ग्रहीष्यामि स हीदानीं गतिर्मम ।
धर्मविद्धर्मनित्यश्च सत्यसन्धो दृढव्रतः ॥ ३५
आर्यः किं मब्रवीद्राजा पिता मे सत्यविक्रमः ।
पश्चिमं साधुसंदेश मिच्छामि श्रोतु मात्मनः ॥" ३६
इति पृष्टा यथातत्त्वं कैकेयी वाक्यमब्रवीत् ।
"रामेति राजा विलपन् हा सीते! लक्ष्मणेति च ॥" ३७
स महात्मा परं लोकं गतो गतिमतां वरः ।
इमां तु पश्चिमां वाचं व्याजहार पिता तव ॥ ३८
"कालधर्म परिक्षिप्तः पाशैरिव महागजः ।
सिद्धार्थास्ते नरा राम मागतं सीतया सह ॥ ३९
लक्ष्मणं च महाबाहुं द्रक्ष्यन्ति पुनरागतम् ।"
तच्छ्रुत्वा विषसादैव द्वितीयाप्रियशंसनात् ॥ ४०

विषण्णवदनो भूत्वा भूयः पप्रच्छ मातरम् ।
"क्व चेदानीं स धर्मात्मा कौसल्यानन्दवर्धनः ॥ ४१
लक्ष्मणेन सह भ्रात्रा सीतया च समं गतः ।"
तथा पृष्टा यथातत्त्व माख्यातु मुपचक्रमे ॥ ४२
माताऽस्य सुमहद्वाक्यं विप्रियं प्रियशङ्कया ।
"सहि राजसुतः पुत्र! चीरवासा महावनम् ॥ ४३
दण्डकान्सह वैदेह्या लक्ष्मणानुचरो गतः ।"
तच्छ्रुत्वा भरतस्त्रस्तो भ्रातु श्चारित्र शङ्कया ॥ ४४
स्वस्य वंशस्य माहात्म्यात्प्रष्टुं समुपचक्रमे ।
"कच्चिन्न ब्राह्मणधनं हृतं रामेण कस्यचित्? ॥ ४५
कच्चिन्नाढ्यो दरिद्रो वा तेनापापो विहिंसितः? ।
कच्चिन्न परदारान्वा राजपुत्रोऽभिमन्यते? ॥ ४६
कस्मात्स दण्डकारण्ये भ्रूणहेव विवासितः? ।"
अथास्य चपला माता तत्स्वकर्म यथा तथम् ॥ ४७
तेनैव स्त्रीस्वभावेन व्याहर्तु मुपचक्रमे ।
एव मुक्तातु कैकेयी भरतेन महात्मना ॥ ४८
उवाच वचनं हृष्टा मूढा पण्डितमानिनी ।
"न ब्राह्मणधनं किंचि द्धृतं रामेण कस्यचित् ॥ ४९
कश्चिन्नाढ्यो दरिद्रोवा तेनापापो विहिंसितः ।
न रामः परदारां श्च चक्षुर्भ्या मपि पश्यति ॥ ५०
मया तु पुत्र! श्रुत्वैव रामस्यैवाभिषेचनम् ।
याचितस्ते पिता राज्यं रामस्य च विवासनम् ॥ ५१

सत्त्ववृत्तिं समास्थाय पिता ते तत्तथाऽकरोत् ।
रामश्च सह सौमित्रिः प्रेषित स्सीतया सह ॥ ५२
तमपश्यन्प्रियं पुत्रं महीपालो महायशाः ।
पुत्रशोकपरिद्यूनः पञ्चत्व मुपपेदिवान् ॥ ५३
त्वया त्विदानीं धर्मज्ञ! राजत्वमवलम्ब्यताम् ।
त्वत्कृते हि मया सर्वमिद मेवं विधं कृतम् ॥ ५४
माशोकं माच सन्तापं धैर्यमाश्रय पुत्रक! ।
त्वदधीना हि नगरी राज्यं चैतदनामयम् ॥ ५५
तत्पुत्र! शीघ्रं विधिना विधिज्ञै र्वसिष्ठमुख्यै स्सहितो द्विजेन्द्रैः ।
सङ्काल्य राजान मदीनसत्त्व मात्मान मुर्व्यामभिषेचयस्व ॥ ५६

इति श्रीमदयोध्याकाण्डे द्विसप्ततितमस्सर्गः ॥

## ॥ त्रिसप्ततितमस्सर्गः ॥

[कैकेय्या त्वेव मुक्तस्तु भरतो राघवानुजः ।
कर्णौ कराभ्यां प्रच्छाद्य पपात धरणीतले ॥ १
हा तात! राम! नाथेति विलप्य करुणं बहु ।
मुहूर्त मिव निस्संज्ञ स्संज्ञावानिद मब्रवीत् ॥ २
हतोऽस्मि राजा निहतो हतो लोकश्च दुर्मते! ।
किमिदं संज्ञितं केन कस्य कार्यं त्वया कृतम् ॥ ३
राजानं प्रेतभावस्थं कृत्वा रामं च तापसम् ।
त्वं तु राज्यफलं भोक्तु मद्य तिष्ठसि दुर्मते! ॥ ४

रामप्रस्थापिकाया श्च पतिघ्न्या श्च तवोदरे ।
दशमासा मया नीता हा लोके निन्दितोह्यहम् ॥ ५
कण्ठेऽवसज्य पाशं वा विषं पीत्वाऽथवा शठे! ।
त्यज प्राणांश्च दुर्मेधे! जलमग्निं प्रविश्यवा ॥ ६
त्वा मद्य निहनिष्यामि नोचेद्रामस्य दुर्यशः ।
राघवस्यानुजो भ्राता भरतो मातृहा इति ॥ ७
एवं परुषमुक्त्वातु निर्दग्धु मिव चक्षुषा ।
निरीक्षमाणे भरते कैकेयी वाक्यमब्रवीत् ॥ ८
किं मयाऽपकृतं तेऽद्यगर्हसे मां मुहुर्मुहुः ।
प्रसूयवर्धयित्वा त्वां कामंचाकरवं नकिम् ॥ ९
ते पिता स्वर्गतो राजा भ्रातरौ च विवासितौ ।
बहुना किं प्रलापेन कुरु राज्यं यथा सुखम् ॥] १०
श्रुत्वा तु पितरं वृत्तं भ्रातरौ च विवासितौ ।
भरतो दुःखसन्तप्त इदं वचनमब्रवीत् ॥ ११
किंनु कार्यं हतस्येह मम राज्येन शोचतः ।
विहीनस्याथ पित्रा च भ्रात्रा पितृसमेन च ॥ १२
दुःखे मे दुःख मकरो व्रणे क्षारमिवादधाः ।
राजानं प्रेतभावस्थं कृत्वा रामं च तापसम् ॥ १३
कुलस्य त्व मभावाय कालरात्रिरिवाऽगता ।
अङ्गार मुपगूह्यस्व पिता मे नावबुद्धवान् ॥ १४
मृत्यु मापादितो राजा त्वया मे पापदर्शिनि! ।
सुखं परिहृतं मोहात्कुलेऽस्मिन्कुलपांसनि! ॥ १५

त्वां प्राप्य हि पिता मेऽद्य सत्यसन्धो महायशाः ।
तीव्रदुःखाभिसन्तप्तो वृत्तो दशरथो नृपः ॥ १६
विनाशितो महाराजः पिता मे धर्मवत्सलः ।
कस्मात्प्रव्राजितो रामः कस्मादेव वनं गतः ॥ १७
कौसल्या च सुमित्रा च पुत्रशोकाभिपीडिते ।
दुष्करं यदि जीवेतां प्राप्य त्वां जननीं मम ॥ १८
ननुत्वार्योऽपि धर्मात्मा त्वयि वृत्ति मनुत्तमाम् ।
वर्तते गुरुवृत्तिज्ञो यथा मातरि वर्तते ॥ १९
तथा ज्येष्ठा हि मे माता कौसल्या दीर्घदर्शिनी ।
त्वयि धर्मं समास्थाय भगिन्या मिव वर्तते ॥ २०
तस्याः पुत्रं कृतात्मानं चीरवल्कलवाससम् ।
प्रस्थाप्य वनवासाय कथं पापे! न शोचसि ॥ २१
अपापदर्शनं शूरं कृतात्मानं यशस्विनम् ।
प्रव्राज्य चीरवसनं किंनु पश्यसि कारणम् ॥ २२
लुब्धाया विदितो मन्ये नतेऽहं राघवं प्रति ।
तथाह्यनर्थो राज्यार्थं त्वया नीतो महानयम् ॥ २३
अहं हि पुरुषव्याघ्रावपश्यन्रामलक्ष्मणौ ।
केन शक्तिप्रभावेन राज्यं रक्षितु मुत्सहे ॥ २४
तं नित्यं महाराजो बलवन्तं महाबलः ।
अपाश्रितोऽभूद्धर्मात्मा मेरुर्मेरुवनं यथा ॥ २५
सोऽहं कथ मिमं भारं महाधुर्यसमुद्धृतम् ।
दम्यो धुरमिवाऽसाद्य वहेयं केन चौजसा ॥ २६

अथवा मे भवेच्छक्ति र्योगैर्बुद्धिबलेन वा ।
सकामां न करिष्यामि त्वा मह पुत्रगर्धिनीम् ॥ २७
नमे विकाङ्क्षा जायेत त्यक्तुं त्वां पापनिश्चयाम् ।
यदि रामस्य नावेक्षा त्वयि स्यान्मातृवत्सदा ॥ २८
उत्पन्ना तु कथं बुद्धि स्तवेयं पापदर्शिनि ।
साधुचारित्रविभ्रष्टे! पूर्वेषां नो विगर्हिता ॥ २९
अस्मिन्कुले हि पूर्वेषां ज्येष्ठो राज्येऽभिषिच्यते ।
अपरे भ्रातरस्तस्मिन्प्रवर्तन्ते समाहिताः ॥ ३०
न हि मन्ये नृशंसे! त्वं राजधर्म मवेक्षसे ।
गतिं वा नविजानासि राजवृत्तस्य शाश्वतीम् ॥ ३१
सततं राजवृत्ते हि ज्येष्ठो राज्येऽभिषिच्यते ।
राज्ञा मेतत्समं तत्स्यादिक्ष्वाकूणां विशेषतः ॥ ३२
तेषां धर्मैकरक्षाणां कुलचारित्रशोभिनाम् ।
अद्य चारित्रशौण्डिर्यं त्वां प्राप्य विनिवर्तितम् ॥ ३३
तवापि सुमहाभागा जनेन्द्राः कुलपूर्वगाः ।
बुद्धे मोहः कथमयं सम्भूतस्त्वयि गर्हितः ॥ ३४
नतु कामं करिष्यामि तवाहं पापनिश्चये! ।
त्वया व्यसनमारब्धं जीवितान्तकरं मम ॥ ३५
एष त्विदानी मेवाह मप्रियार्थं तवानघम् ।
निवर्तयिष्यामि वना द्भ्रातरं स्वजनप्रियम् ॥ ३६
निवर्तयित्वा रामं च तस्याहं दीप्ततेजसः ।
दासभूतो भविष्यामि सुस्थितेनान्तरात्मना ॥” ३७

इत्येव मुक्त्वा भरतो महात्मा प्रियेतरै र्वाक्यगणै स्तुदं स्ताम् ।
शोकातुरश्चापि ननाद भूय स्सिंहो यथा पर्वतगह्वरस्थः ॥ ३८

इति श्रीमदयोध्याकाण्डे त्रिसप्ततितमस्सर्गः ॥

---

## ॥ चतुस्सप्ततितमस्सर्गः ॥

तां तथा गर्हयित्वा तु मातरं भरत स्तदा ।
रोषेण महताऽऽविष्टः पुनरेवाब्रवीद्वचः ॥ १
"राज्या द्भ्रंशस्व कैकेयि! नृशंसे! दुष्टचारिणि! ।
परित्यक्ता च धर्मेण मामृतं रुदती भव ॥ २
किनु तेऽदूषयद्राजा रामो वा भृशधार्मिकः ।
ययोर्मृत्युर्विवास श्च त्वत्कृते तुल्यमागतौ ॥ ३
भ्रूणहत्यामसि प्राप्ता कुलस्यास्य विनाशनात् ।
कैकेयि! नरकं गच्छ माचभर्तु स्सलोकताम् ॥ ४
यत्त्वया हीदृशं पापं कृतं घोरेण कर्मणा ।
सर्वलोकप्रियं हित्वा ममाप्यापादितं भयम् ॥ ५
त्वत्कृते मे पिता वृत्तो रामश्चारण्यमाश्रितः ।
अयशो जीवलोके च त्वयाऽहं प्रतिपादितः ॥ ६
मातृरूपे! ममामित्रे! नृशंसे! राज्यकामुके! ।
न तेऽह मभिभाष्योऽस्मि दुर्वृत्ते! पतिघातिनि! ॥ ७
कौसल्या च सुमित्रा च याश्चान्या मम मातरः ।
दुःखेन महताऽऽविष्टा स्त्वां प्राप्य कुलदूषिणीम् ॥ ८

न त्व मश्वपतेः कन्या धर्मराजस्य धीमतः ।
राक्षसी तत्र जाताऽपि कुलप्रध्वंसिनी पितुः ॥ ९
यत्त्वया धार्मिको रामो नित्यं सत्यपरायणः ।
वनं प्रस्थापितो दुःखात्पिता च त्रिदिवं गतः ॥ १०
यत्प्रधानाऽपि तत्पापं मयि पित्रा विनाकृते ।
भ्रातृभ्यां च परित्यक्ते सर्वलोकस्य चाप्रिये ॥ ११
कौसल्यां धर्मसंयुक्तां वियुक्तां पापनिश्चये ! ।
कृत्वा कं प्राप्स्यसे त्वद्य लोकं निरयगामिनि ! ॥ १२
किं नावबुद्ध्यसे क्रूरे! नियतं वन्धुसंश्रयम् ।
ज्येष्ठं पितृसमं रामं कौसल्यायाऽऽत्मसम्भवम् ॥ १३
अङ्गप्रत्यङ्गजः पुत्रो हृदयाच्चापि जायते ।
तस्मात्प्रियतमो मातुः प्रियत्वा न्नतु बान्धवः ॥ १४
अन्यदा किल धर्मज्ञा सुरभि स्सुरसम्मता ।
वहमानौ ददर्शोर्व्यां पुत्रौ विगतचेतसौ ॥ १५
ता वर्धदिवसे श्रान्तौ दृष्ट्वा पुत्रौ महीतले ।
रुरोद पुत्रशोकेन बाष्पपर्याकुलेक्षणा ॥ १६
अधस्ताद्व्रजतस्तस्य सुरराज्ञो महात्मनः ।
बिन्दवः पतिता गात्रे सूक्ष्मास्सुरभिगन्धिनः ॥ १७
इन्द्रोऽप्यश्रुनिपातं तं स्वगात्रे पुण्यगन्धिनम् ।
सुरभिं मन्यते दृष्ट्वा भूयसीं तां सुरेश्वरः ॥ १८
निरीक्षमाण श्शक्रस्तां ददर्श सुरभिं स्थिताम् ।
आकाशे विष्ठितां दीनां रुदन्तीं भृशदुःखिताम् ॥ १९

तां दृष्ट्वा शोकसन्तप्तां वज्रपाणि र्यशस्विनीम् ।
इन्द्रः प्राञ्जलि रुद्विग्न स्सुरराजोऽब्रवीद्वचः ॥ २०
'भयं कच्चिन्न चास्मासु कुतश्चि द्विद्यते महत् ।
कुतोनिमित्तश्शोकस्ते ब्रूहि सर्वहितैषिणि! ॥' २१
एवमुक्ता तु सुरभिस्सुरराजेन धीमता ।
प्रत्युवाच ततो धीरा वाक्यं वाक्यविशारदा ॥ २२
'शान्तं पापं न वः किंचि त्कुतश्चिदमराधिप! ।
अहं तु मग्ना शोचामि स्वपुत्रौ विषमे स्थितौ ॥ २३
एतौ दृष्ट्वा कृशौ दीनौ सूर्यरश्मिप्रतापितौ ।
बाध्यमानौ बलीवर्दौ कर्षकेण सुराधिप! । २४
मम कायात्प्रसूतौ हि दुःखितौ भारपीडितौ ।
यौ दृष्ट्वा परितप्येऽहं नास्ति पुत्रसमः प्रियः ॥ २५
यस्याः पुत्रसहस्रैस्तु कृत्स्नं व्याप्त मिदं जगत् ।'
तां दृष्ट्वा रुदतीं शक्रो न सुतान्मन्यते वरम् ॥ २६
सदाऽप्रतिमवृत्ताया लोकधारणकाम्यया ।
श्रीमत्या गुणनित्याया स्स्वभावपरिवेषया ॥ २७
यस्याः पुत्रसहस्राणि साऽपि शोचति कामधुक् ।
किं पुन र्या विना रामं कौसल्या वर्तयिष्यति ॥ २८
एकपुत्रा च साध्वी च विवत्सेयं त्वया कृता ।
तस्मात्त्वं सततं दुःखं प्रेत्य चेह च लप्स्यसे ॥ २९
अहं ह्यपचितिं भ्रातुः पितुश्च सकला मिमाम् ।
वर्धनं यशस श्चापि करिष्यामि न संशयः ॥ ३०

आनाययित्वा तनयं कौसल्याया महाबलम् ।
स्वय मेव प्रवेक्ष्यामि वनं मुनिनिषेवितम् ॥ ३१
न ह्यहं पापसङ्कल्पे! पापे! पापं त्वया कृतम् ।
शक्तोधारयितुं पौरै रश्रुकण्ठैर्निरीक्षितः ॥ ३२
सा त्वमग्निं प्रविश वा स्वयं वादण्डकान्विश ।
रज्जुम्बधान वा कण्ठे नहितेऽन्यत्परायणम् ॥ ३३
अहमप्यवनीं प्राप्ते रामे सत्यपराक्रमे ।
कृतकृत्यो भविष्यामि विप्रवासितकल्मषः ॥" ३४
इति नाग इवारण्ये तोमराङ्कुशचोदितः ।
पपात भुवि संक्रुद्धो निश्श्वसन्निव पन्नगः ॥ ३५
संरक्तनेत्र श्शिथिलाम्बर स्तदा विधूतसर्वाभरणः परन्तपः ।
बभूव भूमौ पतितो नृपात्मज श्शचीपतेः केतुरिवोत्सवक्षये ॥

इति श्रीमदयोध्याकाण्डे चतुस्सप्ततितमस्सर्गः ॥

---

## ॥ पञ्चसप्ततितमस्सर्गः ॥

दीर्घकालात्समुत्थाय संज्ञां लब्ध्वा च वीर्यवान् ।
नेत्राभ्या मश्रु पूर्णाभ्यां दीना मुद्वीक्ष्य मातरम् ॥ १
सोऽमात्यमध्ये भरतो जननी मभ्यकुत्सयत् ।
"राज्यं न कामये जातु मन्त्रये नापि मातरम् ॥ २
अभिषेकं न जानामि योऽभू द्राज्ञा समीक्षितः ।
विप्रकृष्टे ह्यहं देशे शत्रुघ्नसहितोऽवसम् ॥ ३

वनवासं न जानामि रामस्याहं महात्मनः ।
विवासनं वा सौमित्रे स्सीताया श्च यथाऽभवत् ॥" ४
तथैव क्रोशतस्तस्य भरतस्य महात्मनः ।
कौसल्या शब्द माज्ञाय सुमित्रामिदमब्रवीत् ॥ ५
"आगतः क्रूरकार्यायाः कैकेय्या भरतस्सुतः ।
तमहं द्रष्टुमिच्छामि भरतं दीर्घदर्शिनम् ॥" ६
एवमुक्त्वा सुमित्रां सा विवर्णा मलिना कृशा ।
प्रतस्थे भरतो यत्र वेपमाना विचेतना ॥ ७
सतु रामानुज श्चापि शत्रुघ्न सहित स्तदा ।
प्रतस्थे भरतो यत्र कौसल्याया निवेशनम् ॥ ८
तत श्शत्रुघ्न भरतौ कौसल्यां प्रेक्ष्य दुःखितौ ।
पर्यष्वजेतां दुःखार्तां पतितां नष्टचेतनाम् ॥ ९
रुदन्तौ रुदतीं दुःखात्समेत्यार्यां मनस्विनीम् ।
भरतं प्रत्युवाचेदं कौसल्या भृशदुःखिता ॥ १०
"इदं ते राज्यकामस्य राज्यं प्राप्त मकण्टकम् ।
सम्प्राप्तं बत कैकेय्या शीघ्रं क्रूरेण कर्मणा ॥ ११
प्रस्थाप्य चीरवसनं पुत्रं मे वनवासिनम् ।
कैकेयी कं गुणं तत्र पश्यति क्रूरदर्शिनी ॥ १२
क्षिप्रं मामपि कैकेयी प्रस्थापयितु मर्हति ।
हिरण्यनाभो यत्रास्ते सुतो मे सुमहायशाः ॥ १३
अथवा स्वय मेवाहं सुमित्रानुचरा सुखम् ।
अग्निहोत्रं पुरस्कृत्य प्रस्थास्ये यत्र राघवः ॥ १४

कामं वा स्वय मेवाद्य तत्र मां नेतु मर्हसि ।
यत्रासौ पुरुषव्याघ्रः पुत्रो मे तप्यते तपः ॥ १५
इदं हि तव विस्तीर्णं धनधान्यसमाचितम् ।
हस्त्यश्वरथसम्पूर्णं राज्यं निर्यातितं तया ॥" १६
इत्यादि बहुभिर्वाक्यैः क्रूरै स्सम्भर्त्सितोऽनघः ।
विव्यथे भरत स्तीव्रं व्रणे तुद्येव सूचिना ॥ १७
पपात चरणे तस्या स्तदा सम्भ्रान्त चेतसः ।
विलप्य बहुधाऽसंज्ञो लब्धसंज्ञ स्ततःस्थितः ॥ १८
एवं विलपमानां तां भरतः प्राञ्जलि स्तदा ।
कौसल्यां प्रत्युवाचेदं शोकै र्बहुभि रावृताम् ॥ १९
"आर्ये! कस्मा दजानन्तं गर्हसे मामकिल्बिषम् ।
विपुलांच मम प्रीतिं स्थिरां जानासि राघवे ॥ २०
कृता शास्त्रानुगा बुद्धिर्माभूत्तस्य कदाचन ।
सत्यसन्ध स्सतां श्रेष्ठो यस्याऽर्योऽनुमते गतः ॥ २१
प्रेष्यं पापीयसां यातु सूर्यं च प्रतिमेहतु ।
हन्तु पादेन गां सुप्तां यस्याऽर्योऽनु मते गतः ॥ २२
कारयित्वा महत्कर्म भर्ता भृत्य मनर्थकम् ।
अधर्मो योऽस्य सोऽस्यास्तु यस्याऽर्योऽनुमते गतः ॥ २३
परिपालयमानस्य राज्ञो भूतानि पुत्रवत् ।
ततस्तं द्रुह्यतां पापं यस्याऽर्योऽनुमते गतः ॥ २४
बलिषड्भाग मुद्धृत्य नृपस्यारक्षतः प्रजाः ।
अधर्मो योऽस्यसोऽस्यास्तु यस्यार्योऽनुमते गतः ॥ २५

संश्रुत्य च तपस्विभ्य स्सत्रे वै यज्ञ दक्षिणाम् ।
तां विप्रलपतां पापं यस्याऽर्योऽनुमते गतः ॥ २६
हस्त्यश्वरथसम्बाधे युद्धे शस्त्रसमाकुले ।
मास्मकार्षीत्सतां धर्मं यस्याऽर्योऽनुमते गतः ॥ २७
उपदिष्टं सुसूक्ष्मार्थं शास्त्रं यत्नेन धीमता ।
स नाशयतु दुष्टात्मा यस्याऽर्योऽनुमते गतः ॥ २८
मा च तं व्यूढबाह्वंसं चन्द्रार्कसमतेजसम् ।
द्राक्षी द्राज्यस्थ मासीनं यस्याऽर्योऽनुमते गतः ॥ २९
पायसं कृसरं छागं वृथासोऽश्नातु निर्घृणः ।
गुरूं श्चाप्यवजानातु यस्याऽर्योऽनुमते गतः ॥ ३०
गा श्च स्पृशतु पादेन गुरून्परिवदेत्स्वयम् ।
मित्रे द्रुह्येत सोऽत्यन्तं यस्याऽर्योऽनुमते गतः ॥ ३१
विश्वासात्कथितं किंचित्परिवादं मिथः क्वचित् ।
विवृणोतु सदुष्टात्मा यस्याऽर्योऽनुमते गतः ॥ ३२
अकर्ता ह्यकृतज्ञ श्च त्यक्ताऽत्मा निरपत्रपः ।
लोके भवतु विद्वेष्यो यस्याऽर्योऽनुमते गतः ॥ ३३
पुत्रदारै श्च भृत्यै श्च स्वगृहे परिवारितः ।
स एको मृष्ट मश्नातु यस्याऽर्योऽनुमते गतः ॥ ३४
अप्राप्य सदृशान्दारानपत्यः प्रमीयताम् ।
अनवाप्य क्रियां धर्म्यां यस्याऽर्योऽनुमते गतः ॥ ३५
माऽऽत्मन स्संततिं द्राक्षीत्स्वेषु दारेषु दुःखितः ।
आयु स्समग्र मप्राप्य यस्याऽर्योऽनुमते गतः ॥ ३६

राजस्त्रीबालवृद्धानां वधे यत्पाप मुच्यते ।
भृत्यत्यागे च यत्पापं तत्पापं प्रतिपद्यताम् ॥ ३७
लाक्षया मधुमांसेन लोहेन च विषेण च ।
सदैव बिभृया द्भृत्यान्यस्याऽर्योऽनुमते गतः ॥ ३८
सङ्ग्रामे समुपोढेस्म शत्रुपक्षभयङ्करे ।
पलायमानो वध्येत यस्याऽर्योऽनुमते गतः ॥ ३९
कपालपाणिः पृथिवी मटतां चीरसंवृतः ।
भिक्षमाणो यथोन्मत्तो यस्याऽर्योऽनुमते गतः ॥ ४०
पाने प्रसक्तो भवतु स्त्रीष्वक्षेपु च नित्यशः ।
कामक्रोधाभिभूत स्तु यस्याऽर्योऽनुमते गतः ॥ ४१
मा स्म धर्मे मनो भूयादधर्मं स निषेवताम् ।
अपात्रवर्षी भवतु यस्याऽर्योऽनुमते गतः ॥ ४२
सञ्चितान्यस्य वित्तानि विविधानि सहस्रशः ।
दस्युभि र्विप्रलुप्यन्तां यस्याऽर्योऽनुमते गतः ॥ ४३
उभे सन्ध्ये शयानस्य यत्पापं परिकल्प्यते ।
तच्चपापं भवेत्तस्य यस्याऽर्योऽनुमते गतः ॥ ४४
यदग्निदायके पापं यत्पापं गुरुतल्पगे ।
मित्रद्रोहे च यत्पापं तत्पापं प्रतिपद्यताम् ॥ ४५
देवतानां पितृणां च मातापित्रो स्तथैव च ।
मास्म कार्षी त्स शिश्रूषां यस्याऽर्योऽनुमते गतः ॥ ४६
सतां लोकात्सतां कीर्त्या स्सज्जुष्टात्कर्मण स्तथा ।
भ्रश्यतु क्षिप्र मद्यैव यस्याऽर्योऽनुमते गतः ॥ ४७

अपास्य मातृशुश्रूषा मनर्थे सोऽवतिष्ठताम् ।
दीर्घबाहु र्महावक्षा यस्याऽर्योऽनुमते गतः ॥ ४८
बहुपुत्रो दरिद्र श्च ज्वररोगसमन्वितः ।
सभूयात्सततक्लेशी यस्याऽर्योऽनुमते गतः ॥ ४९
आशा माशंसमानानां दीनाना मूर्ध्वचक्षुषाम् ।
अर्थिनां वितथां कुर्या द्यस्याऽर्योऽनुमते गतः ॥ ५०
मायया रमतां नित्यं परुषः पिशुनोऽशुचिः ।
राज्ञो भीतस्त्वधर्मात्मा यस्याऽर्योऽनुमते गतः ॥ ५१
ऋतुस्नातां सतीं भार्या मृतुकालानुरोधिनीम् ।
अतिवर्तेत दुष्टात्मा यस्याऽर्योऽनुमते गतः ॥ ५२
धर्मदारान्परित्यज्य परदारान्निषेवताम् ।
त्यक्तधर्मरति र्मूढो यस्याऽर्योऽनुमते गतः ॥ ५३
विप्रलुप्तप्रजातस्य दुष्कृतं ब्राह्मणस्य यत् ।
तदेव प्रतिपद्येत यस्याऽर्योऽनुमते गतः ॥ ५४
पानीयदूषके पापं तथैव विषदायके ।
यत्तदेक स्स लभतां यस्याऽर्योऽनुमते गतः ॥ ५५
ब्राह्मणायोद्यतां पूजां विहन्तु कलुषेन्द्रियः ।
बालवत्सां च गां दोग्धु यस्याऽर्योऽनुमते गतः ॥ ५६
तृष्णार्तं सति पानीये विप्रलम्भेन योजयेत् ।
लभेत तस्य यत्पापं यस्याऽर्योऽनुमते गतः ॥ ५७
भक्त्या विवदमानेषु मार्ग माश्रित्य पश्यतः ।
तस्य पापेन युज्येत यस्याऽर्योऽनुमते गतः ॥" ५८

विहीनां पतिपुत्राभ्यां कौसल्यां पार्थिवात्मजः ।
एव माश्वासयन्नेव दुःखार्तो निपपातह ॥ ५९

तथा तु शपथैः कष्टै श्शपमान मचेतनम् ।
भरतं शोकसन्तप्तं कौसल्या वाक्य मब्रवीत् ॥ ६०

"मम दुःख मिदं पुत्र! भूय स्समुपजायते ।
शपथै श्शपमानो हि प्राणानुपरुणत्सि मे ॥ ६१

दिष्ट्या न चलितो धर्मादात्मा ते सहलक्ष्मणः ।
वत्स! सत्यप्रतिज्ञो मे सतां लोकानवाप्स्यसि ॥" ६२

इत्युक्त्वा चाङ्कमानीय भरतं भ्रातृवत्सलम् ।
परिष्वज्य महाबाहुं रुरोद भृशदुःखिता ॥ ६३

एवं विलपमानस्य दुःखार्तस्य महात्मनः ।
मोहाच्च शोकसंरोधा द्बभूव लुळितं मनः ॥ ६४

लालप्यमानस्य विचेतनस्य प्रणष्टबुद्धेः पतितस्य भूमौ ।
मुहुर्मुहु र्निश्श्वसतश्च घर्म सा तस्य शोकेन जगाम रात्रिः ॥ ६५

इति श्रीमदयोध्याकाण्डे पञ्चसप्ततितमस्सर्गः ॥

---

## ॥ षट्सप्ततितमस्सर्गः ॥

तमेवं शोकसन्तप्तं भरतं कैकयी सुतम् ।
उवाच वदतां श्रेष्ठो वसिष्ठ श्श्रेष्ठवागृषिः ॥ १

"अलं शोकेन भद्रं ते राजपुत्र! महायशः! ।
प्राप्तकालं नरपतेः कुरु संयान मुत्तमम् ॥" २

अपश्चस्य वच इश्रुत्वा भरतो धारणां गतः ।
प्रेतकार्याणि सर्वाणि कारयामास धर्मवित् ॥ ३
उद्धृतं तैलसंरोधात्सतु भूमौ निवेशितम् ।
आपीतवर्णं वदनं प्रसुप्त मिव भूपतिम् ॥ ४
संवेश्य शयने चाग्र्ये नानारत्नपरिष्कृते ।
ततो दशरथं पुत्रो विललाप सुदुःखितः ॥ ५
"किं ते व्यवसितं राज! न्प्रोषिते मय्यनागते ।
विवास्य रामं धर्मज्ञं लक्ष्मणं च महाबलम् ॥ ६
क यास्यामि महाराज! हित्वेमं दुःखितं जनम् ।
हीनं पुरुषसिंहेन रामेणाक्लिष्टकर्मणा ॥ ७
योगक्षेमं तु ते राजन्! कोऽस्मिन्कल्पयिता पुरे ।
त्वयि प्रयाते स्वस्तात! रामे च वन माश्रिते ॥ ८
विधवा पृथिवी राजन्! त्वया हीना न राजते ।
हीनचन्द्रेव रजनी नगरी प्रतिभाति मा ॥" ९
एवं विलपमानं तं भरतं दीनमानसम् ।
अब्रवीद्वचनं भूयो वसिष्ठस्तु महामुनिः ॥ १०
"प्रेतकार्याणि यान्यस्य कर्तव्यानि विशांपतेः ।
तान्यव्यग्रं महाबाहो! क्रियन्तामविचारितम् ॥" ११
तथेति भरतो वाक्यं वसिष्ठस्याभिपूज्य तत् ।
ऋत्विक्पुरोहिताचार्यां स्त्वरयामास सर्वशः ॥ १२
ये त्वग्नयो नरेन्द्रस्य चाग्न्यगारा द्बहिष्कृताः ।
ऋत्विग्भिर्याजकैश्चैव तेऽह्रियन्त यथाविधि ॥ १३

शिबिकाया मथाऽरोप्य राजानं गतचेतनम् ।
बाष्पकण्ठा विमनसस्तमूहुः परिचारकाः ॥ १४
हिरण्यं च सुवर्णं च वासांसि विविधानि च ।
प्रकिरन्तो जना मार्गं नृपते रग्रतो ययुः ॥ १५
चन्दनागरुनिर्यासान् सरळं पद्मकं तथा ।
देवदारूणिचाऽहृत्य क्षेपयन्ति तथाऽपरे ॥ १६
गन्धानुच्चावचां श्चान्यां स्तत्र गत्वाऽथ भूमिपम् ।
तत स्संवेशयामासु श्चितामध्ये तमृत्विजः ॥ १७
तदा हुताशनं दत्त्वा जेपु स्तस्य त मृत्विजः ।
जगुश्च ते यथाशास्त्रं तत्र सामानि सामगाः ॥ १८
शिबिकाभिश्च यानैश्च यथार्हं तस्य योषितः ।
नगरान्निर्ययुस्तत्र वृद्धैः परिवृतास्तदा ॥ १९
प्रसव्यं चापि तं चक्रुः ऋत्विजोऽग्निचितं नृपम् ।
स्त्रियश्च शोकसंतप्ताः कौसल्याप्रमुखास्तदा ॥ २०
क्रौञ्चीनामिव नारीणां निनादस्तत्र शुश्रुवे ।
आर्तानां करुणं काले क्रोशन्तीनां सहस्रशः ॥ २१
ततो रुदन्त्योविवशा विलप्य च पुनः पुनः ।
यानेभ्य स्सरयूतीर मवतेरु र्वराङ्गनाः ॥ २२
कृत्वोदकं ते भरतेन सार्धं नृपाङ्गना मन्त्रिपुरोहिताश्च ।
पुरीं प्रविश्याश्रु परीतनेत्रा भूमौ दशाहं व्यनयन्त दुःखम् ॥ २३

इति श्रीमदयोध्याकाण्डे षट्सप्ततितमस्सर्गः ॥

## ॥ सप्तसप्ततितमस्सर्गः ॥

ततो दशाहेऽति गते कृतशौचो नृपात्मजः ।
द्वादशेऽहनि सम्प्राप्ते श्राद्धकर्माण्यकारयत् ॥ १
ब्राह्मणेभ्यो ददौ रत्नं धन मन्नं च पुष्कलम् ।
वासांसिच महार्हाणि रत्नानि विविधानि च ॥ २
बास्तिकं बहुशुक्लंच गाश्चापि शतशस्तदा ।
दासीदासं च यानं च वेश्मानि सुमहान्ति च ॥ ३
ब्राह्मणेभ्यो ददौ पुत्रो राज्ञस्तस्यौर्ध्वदैहिकम् ।
ततः प्रभातसमये दिवसेऽथ त्रयोदशे ॥ ४
विललाप महाबाहु र्भरत श्शोकमूर्छितः ।
शब्दापिहितकण्ठस्तु शोधनार्थ मुपागतः ॥ ५
चितामूले पितुर्वाक्य मिद माह सुदुःखितः ।
"तात! यस्मिन्विसृष्टोऽहं त्वया भ्रातरि राघवे ॥ ६
तस्मिन्वनं प्रव्रजिते शून्ये त्यक्तोऽस्म्यहं त्वया ।
यस्या गति रनाथायाः पुत्रः प्रव्राजितो वनम् ॥ ७
ता मम्बां तात! कौसल्यां त्यक्त्वा त्वं क्व गतो नृप! ।"
दृष्ट्वा भस्मारुणं तच्च दग्धास्थि स्थानमण्डलम् ॥ ८
पितुश्शरीरनिर्वाणं निष्टनन्विषषाद सः ।
स तु दृष्ट्वा रुदन् दीनः पपात धरणीतले ॥ ९
उत्थाप्यमान श्शक्रस्य यन्त्रध्वज इव च्युतः ।
अभिपेतु स्तत स्सर्वे तस्यामात्या श्शुचिव्रतम् ॥ १०

अन्तकाले निपतितं ययातिमृषयो यथा ।
शत्रुघ्नश्चापि भरतं दृष्ट्वा शोकपरिप्लुतम् ॥ ११
विसंज्ञो न्यपतद्भूमौ भूमिपाल मनुस्मरन् ।
उन्मत्त इव निश्चेता विललाप सुदुःखितः ॥ १२
स्मृत्वा पितु र्गुणाङ्गानि तानि तानि तथातथा ।
मन्थरा प्रभवस्तीव्रः कैकेयी ग्राहसंकुलः ॥ १३
वरदानमयोऽक्षोभ्योऽमज्जय च्छोकसागरः ।
"सुकुमारं च बालं च सततं लालितं त्वया ॥ १४
क्व तात! भरतं हित्वा विलपन्तं गतो भवान् ।
ननु भोज्येषु पानेषु वस्त्रेष्वाभरणेषु च ॥ १५
प्रवारयसि नस्सर्वा स्तन्नःकोऽन्यः करिष्यति ।
अवदारणकाले तु पृथिवीनाऽवदीर्यते ॥ १६
या विहीना त्वया राज्ञा धर्मज्ञेन महात्मना ।
पितरिस्वर्ग मापन्ने रामे चारण्य माश्रिते ॥ १७
किं मे जीवित सामर्थ्यं प्रवेक्ष्यामि हुताशनम् ।
हीनो भ्रात्रा च पित्रा च शून्यामिक्ष्वाकुपालिताम् ॥ १८
अयोध्यां न प्रवेक्ष्यामि प्रवेक्ष्यामि तपोवनम् ।"
तयो र्विलपितं श्रुत्वा व्यसनं चान्ववेक्ष्य तत् ॥ १९
भृशमार्ततरा भूयस्सर्व एवानुगामिनः ।
ततो विषण्णौ विश्रान्तौ शत्रुघ्नभरता वुभौ ॥ २०
धरण्यां संव्यवेष्टतां भग्नशृङ्गाविवर्षभौ ।
ततः प्रकृतिमान्वैद्यः पितुरेषां पुरोहितः ॥ २१

वसिष्ठो भरतं वाक्य मुत्थाप्य तमुवाच ह ।
"त्रयोदशोऽयं दिवसः पितुर्वृत्तस्य ते विभो! ॥ २२
सावशेषास्थिनिचये किमिह त्वं विलम्बसे ।
त्रीणि द्वंद्वानि भूतेषु प्रवृत्तान्यविशेषतः ॥ २३
तेषु चा परिहार्येषु नैवं भवितुमर्हसि ।"
सुमन्त्रश्चापि शत्रुघ्न मुत्थाप्याभिप्रसाद्य च ॥ २४
श्रावयामास तत्त्वज्ञ स्सर्वभूत भवाभवौ ।
उत्थितौ च नरव्याघ्रौ प्रकाशेते यशस्विनौ ॥ २५
वर्षातपपरिक्लिन्नौ पृथगिन्द्रध्वजाविव ।
साश्रूणि परिमृद्नन्तौ रक्ताक्षौ दीनभाषिणौ ॥ २६
अमात्या स्त्वरयन्तिस्म तनयौ चापराः क्रियाः ।

इति श्रीमदयोध्याकाण्डे सप्तसप्ततितमस्सर्गः ॥

## ॥ अष्टसप्ततितमस्सर्गः ॥

अथ यात्रां समीहन्तं शत्रुघ्नो लक्ष्मणानुजः ।
भरतं शोकसन्तप्त मिदं वचनमब्रवीत् ॥ १
"गतिर्यस्सर्वभूतानां दुःखे किं पुनरात्मनः ।
सराम स्सत्त्वसम्पन्नः स्त्रिया प्रव्राजितो वनम् ॥ २
बलवान्वीर्यसम्पन्नो लक्ष्मणो नाम योऽप्यसौ ।
किं न मोचयते रामं कृत्वा स्म पितृनिग्रहम् ॥ ३
पूर्वमेव तु निग्राह्य स्समवेक्ष्य नयानयौ ।
उत्पथं यस्समारूढो नार्या राजावशंगतः ॥" ४

इति सम्भाषमाणे तु शत्रुघ्ने लक्ष्मणानुजे ।
प्राग्द्वारेऽभूत्तदा कुब्जा सर्वाभरणभूषिता ॥ ५
लिप्ता चन्दनसारेण राजवस्त्राणि बिभ्रती ।
विविधं विविधै स्तै स्तै र्भूषणै श्च विभूषिता ॥ ६
मेखलादामभि श्चित्रै रन्यै श्च शुभभूषणैः ।
बभासे बहुभिर्बद्धा रज्जुबद्धेव वानरी ॥ ७
तां समीक्ष्य तदा द्वाःस्था स्सुभृशं पापकारिणीम् ।
गृहीत्वाऽकरुणां कुब्जां शत्रुघ्नाय न्यवेदयन् ॥ ८
"यस्याःकृते वने रामो न्यस्त देहश्च वः पिता ।
सेयं पापा नृशंसा च तस्याःकुरु यथामति ॥ ९
शत्रुघ्नश्च तदाज्ञाय वचनं भृशदुःखितः ।
अन्तःपुरचरान्सर्वानित्युवाच धृतव्रतः ॥ १०
"तीव्रमुत्पादितं दुःखं भ्रातॄणां मे तथा पितुः ।
यया सेयं नृशंसस्य कर्मणः फल मश्नुताम् ॥" ११
एव मुक्त्वा तु तेनाऽशु सखीजन समावृता ।
गृहीता बलवत्कुब्जा सा तद्गृहमनादयत् ॥ १२
ततस्सुभृशसन्तप्त स्तस्या स्सर्वसखीजनः ।
क्रुद्ध माज्ञाय शत्रुघ्नं विपलायत सर्वशः ॥ १३
आमन्त्रयत कृत्स्न श्च तस्या स्सर्वसखीजनः ।
"यथाऽयं समुपक्रान्तो निश्शेषा न्नः करिष्यति ॥ १४
सानुक्रोशां वदान्यां च धर्मज्ञां च यशस्विनीम् ।
कौसल्यां शरणं याम स्सा हि नोऽस्तु ध्रुवा गतिः ॥" १५

स च रोषेण ताम्राक्षश्शत्रुघ्न श्शत्रुतापनः ।
विचकर्ष तदा कुब्जां क्रोशन्तीं धरणीतले ॥ १६

तस्याह्याकृष्यमाणाया मन्थराया स्ततस्ततः ।
च्चित्रं बहुविधं भाण्डं पृथिव्यां तद्व्यशीर्यत ॥ १७

तेन भाण्डेन संस्तीर्णं श्रीमद्राजनिवेशनम् ।
अशोभत तदा भूय श्शारदं गगनं यथा ॥ १८

सबली बलवत्क्रोधा द्गृहीत्वा पुरुषर्षभः ।
कैकेयी मभिनिर्भर्त्स्य बभाषे परुषं वचः ॥ १९

तैर्वाक्यैः परुषैर्दुःखैः कैकेयी भृशदुःखिता ।
शत्रुघ्नभयसन्त्रस्ता पुत्रं शरण मागता ॥ २०

तां प्रेक्ष्य भरतः क्रुद्धं शत्रुघ्न मिदमब्रवीत् ।
"अवध्यास्सर्वभूतानां प्रमदाः क्षम्यतामिति ॥ २१

हन्या महमिमां पापां कैकेयीं दुष्टचारिणीम् ।
यदि मां धार्मिको रामो नासूयेन्मातृघातकम् ॥ २२

इमा मपि हतां कुब्जां यदि जानाति राघवः ।
त्वां च मां च हि धर्मात्मा नाभिभाषिष्यते ध्रुवम् ॥" २३

भरतस्य वचश्श्रुत्वा शत्रुघ्नो लक्ष्मणानुजः ।
न्यवर्तत ततो रोषात्तां मुमोच च मन्थराम् ॥ २४

सा पादमूले कैकेय्या मन्थरा निपपातह ।
निश्श्वसन्ती सुदुःखार्ता कृपणं विललाप च ॥ २५

शत्रुघ्न विक्षेपविमूढ संज्ञां समीक्ष्य कुब्जां भरतस्य माता ।
शनै स्समाश्वासय दार्तरूपां क्रौञ्चीं विलग्ना मिव वीक्षमाणाम् ॥

इति श्रीमदयोध्याकाण्डे अष्टसप्ततितमस्सर्गः ॥

## ॥ एकोनाशीतितमस्सर्गः ॥

ततः प्रभातसमये दिवसे च चतुर्दशे ।
समेत्य राजकर्तारो भरतं वाक्य मब्रुवन् ॥ १
"गतो दशरथस्स्वर्गं यो नो गुरुतरो गुरुः ।
रामं प्रव्राज्य वै ज्येष्ठं लक्ष्मणं च महाबलम् ॥ २
त्व मद्य भव नो राजा राजपुत्र! महायशः! ।
सङ्गत्या नापराध्नोति राज्य मेत दनायकम् ॥ ३
आभिषेचनिकं सर्वमिद मादाय राघव! ।
प्रतीक्षते त्वां स्वजन श्श्रेणयश्च नृपात्मज! । ४
राज्यं गृहाण भरत! पितृपैतामहं ध्रुवम् ।
अभिषेचय चात्मानं पाहि चास्मान्नरर्षभ! ॥" ५
आभिषेचनिकं भाण्डं कृत्वा सर्वं प्रदक्षिणम् ।
भरतस्तं जनं सर्वमित्युवाच धृतव्रतः ॥ ६
"ज्येष्ठस्य राजता नित्य मुचिताहि कुलस्य नः ।
नैवं भवन्तो मां वक्तु मर्हन्ति कुशलाजनाः ॥ ७
रामः पूर्वोहि नो भ्राता भविष्यति महीपतिः ।
अहं त्वरण्ये वत्स्यामि वर्षाणि नव पञ्च च ॥ ८
युज्यतां महती सेना चतुरङ्गमहाबला ।
आनयिष्याम्यहं ज्येष्ठं भ्रातरं राघवं वनात् ॥ ९
आभिषेचनिकं चैव सर्व मेत दुपस्कृतम् ।
पुरस्कृत्य गमिष्यामि रामहेतो र्वनंप्रति ॥ १०

तत्रैव तं नरव्याघ्र मभिषिच्य पुरस्कृतम् ।
आनेष्यामितु वै रामं हव्यवाहमिवाध्वरात् ॥ ११
न सकामां करिष्यामि स्वा मिमां मातृगन्धिनीम् ।
वने वत्स्याम्यहं दुर्गे रामो राजा भविष्यति ॥ १२
क्रियतां शिल्पिभिः पन्था स्समानि विषमाणि च ।
रक्षिण श्चानुसंयान्तु पथि दुर्गविचारकाः ॥" १३
एवं सम्भाषमाणं तं रामहेतो र्नृपात्मजम् ।
प्रत्युवाच जनस्सर्व श्श्रीमद्वाक्यमनुत्तमम् ॥ १४
"एवं ते भाषमाणस्य पद्मा श्रीरुपतिष्ठताम् ।
यस्त्वं ज्येष्ठे नृपसुते पृथिवीं दातु मिच्छसि ॥" १५
अनुत्तमं तद्वचनं नृपात्मज प्रभाषितं संश्रवणे निशम्य च ।
प्रहर्षजास्तं प्रति बाष्पबिन्दवो निपेतु रार्याननेत्रसम्भवाः ॥ १६
ऊचुस्ते वचन मिदं निशम्य हृष्टा स्सामात्या स्सपरिषदो वियातशोकाः।
"पन्थानं नरवर! भक्तिमाञ्जनश्च व्यादिष्ट स्तव वचनाच्च शिल्पिवर्गः॥

॥ इति श्रीमदयोध्याकाण्डे एकोनाशीतितमस्सर्गः ॥

---

## ॥ अशीतितमस्सर्गः ॥

अथ भूमि प्रदेशज्ञा स्सूत्रकर्मविशारदाः ।
स्वकर्माभिरता श्शूरा खनका यन्त्रका स्तथा ॥ १
कर्मान्तिकाः स्थपतयः पुरुषा यन्त्रकोविदाः ।
तथा वर्धकयश्चैव मार्गिणो वृक्षतक्षकाः ॥ २

कूपकारा स्सुधाकारा वंशकर्मकृत स्तथा ।
समर्था ये च द्रष्टारः पुरतस्ते प्रतस्थिरे ॥ ३
स तु हर्षात्तमुद्देशं जनौघो विपुलः प्रयान् ।
अशोभत महावेग स्समुद्र इव पर्वणि ॥ ४
ते स्ववारं समास्थाय वर्त्म कर्मणि कोविदाः ।
करणै र्विविधोपेतैः पुरस्तात्संप्रतस्थिरे ॥ ५
लतावल्ली श्च गुल्मांश्च स्थाणूनश्मन एवच ।
जनास्ते चक्रिरे मार्गं छिन्दन्तो विविधान्द्रुमान् ॥ ६
अवृक्षेषु च देशेषु केचि द्वृक्षा नरोपयन् ।
केचित्कुठारैष्टंकै श्च दात्रैश्छिन्दन्क्वचित्क्वचित् ॥ ७
अपरे वीरणस्तम्बान्बलिनो बलवत्तराः ।
विधमन्ति स्म दुर्गाणि स्थलानि च ततस्ततः ॥ ८
अपरेऽपूरयन्कूपान्पांसुभि श्श्वभ्र मायतम् ।
निम्नभागां स्तथा केचित्समांश्चक्रुस्समन्ततः ॥ ९
बबन्धुर्बन्धनीयांश्च क्षोद्यान्संचुक्षुदु स्तदा ।
बिभिदु र्भेदनीयां श्चतां स्तान्देशान्नरास्तदा ॥ १०
अचिरेणैव कालेन परिवाहान्बहूदकान् ।
चक्रु र्बहुविधाकारान् सागरप्रतिमान्बहून् ॥ ११
निर्जलेषु च देशेषु खानयामासु रुत्तमान् ।
उदपानान्बहुविधान्वेदिकापरिमण्डितान् ॥ १२
ससुधाकुट्टिमतलः प्रपुष्पितमहीरुहः ।
मत्तोद्घुष्टद्विजगणः पताकाभि रलङ्कृतः ॥ १३

चन्दनोदकसंसिक्तो नानाकुसुमभूषितः ।
बह्वशोभत सेनायाः पन्थास्सुरपथोपमः ॥ १४

आज्ञाप्याथ यथाऽऽज्ञप्ति युक्तास्तेऽधिकृता नराः ।
रमणीयेषु देशेषु बहुस्वादुफलेषुच ॥ १५

योनिवेशस्त्वभिप्रेतो भरतस्य महात्मनः ।
भूयस्तंशोभयामासु र्भूषाभिर्भूषणोपमम् ॥ १६

नक्षत्रेषु प्रशस्तेषु मुहूर्तेषु च तद्विदः ।
निवेशान् स्थापयामासु र्भरतस्य महात्मनः ॥ १७

बहुपांसुचयाश्चापि परिखापरिवारिताः ।
तत्रेन्द्रकील प्रतिमाः प्रतोळीवरशोभिताः ॥ १८

प्रासादमालावितता स्सौधप्राकारसंवृताः ।
पताकाशोभिता स्सर्वे सुनिर्मितमहापथाः ॥ १९

विसर्पद्भिरिवाऽकाशे विटङ्काग्रविमानकैः ।
समुच्छ्रितै र्निवेशास्ते बभुश्शक्रपुरोपमाः ॥ २०

जाह्नवीं तु समासाद्य विविधद्रुमकाननाम् ।
शीतलामलपानीयां महामीन समाकुलाम् ॥ २१

स चन्द्रतारागणमण्डितं यथा नभः क्षपाया ममलं विराजते ।
नरेन्द्रमार्ग स्स तथा व्यराजत क्रमेण रम्य श्शुभशिल्पिनिर्मितः ॥

इति श्रीमदयोध्याकाण्डे अशीतितमस्सर्गः ॥



## ॥ एकाशीतितमस्सर्गः ॥

ततो नान्दीमुखीं.रात्रिं भरतं सूतमागधाः ।
तुष्टुवु र्वाग्विशेषज्ञा स्स्तवै र्मङ्गळसंहितैः ॥ १
सुवर्णकोणाभिहतः प्राणद्यामदुन्दुभिः ।
दध्मुश्शंखांश्च शतशो नादांश्चोच्चावचस्वरान् ॥ २
स तूर्यघोषस्सुमहान्दिवमापूरयन्निव ।
भरतं शोकसन्तप्तं भूयश्शोकै ररन्ध्रयत् ॥ ३
ततः प्रबुद्धो भरतस्तं घोषं सन्निवर्त्य च ।
'नाहं रा'जेति चाप्युक्त्वा शत्रुघ्न मिद मब्रवीत् ॥ ४
"पश्य शत्रुघ्न! कैकेय्या लोकस्यापकृतं महत् ।
विसृज्य मयि दुःखानि राजा दशरथो गतः ॥ ५
तस्यैषा धर्मराजस्य धर्ममूला महात्मनः ।
परिभ्रमति राज्यश्रीर्नौरिवाकर्णिका जले ॥ ६
योहि न स्सुमहान्नाथ स्सोऽपि प्रव्राजितो वनम् ।
अनया धर्म मुत्सृज्य मात्रा मे राघवस्स्वयम् ॥ ७
इत्येवं भरतं प्रेक्ष्य विलपन्त मचेतनम् ।
कृपणं रुरुदुस्सर्वा स्सस्वरं योषित स्तदा ॥ ८
तथातस्मिन्विलपति वसिष्ठो राजधर्मवित् ।
सभामिक्ष्वाकुनाथस्य प्रविवेश महायशाः ॥ ९
शातकुम्भमयीं रम्यां मणिरत्नसमाकुलाम् ।
सुधर्मामिव धर्मात्मा सगणः प्रत्यपद्यत ॥ १०

सकाञ्चनमयं पीठं सुखास्तरणसंवृतम् ।
अध्यास्ते सर्ववेदज्ञो दूताननुशशास च ॥ ११

" ब्राह्मणान्क्षत्रियान्वैश्या नमात्यान्गणवल्लभान् ।
क्षिप्रमानयताव्यग्राः कृत्यमात्ययिकं हि नः ॥ १२

स राजपुत्रं शत्रुघ्नं भरतं च यशस्विनम् ।
युधाजितं सुमन्त्रं च ये च तत्र हिताजनाः ॥ १३

ततो हलहलाशब्दो महान्समुदपद्यत ।
रथैरश्वै र्गजै श्चापि जनाना मुपगच्छताम् ॥ १४

ततो भरत मायान्तं शतक्रतुमिवामराः ।
प्रत्यनन्दन्प्रकृतयो यथा दशरथं तथा ॥ १५

ह्रद इव तिमिनाग संवृतः स्तिमितजलो मणिशंख शर्करः ।
दशरथसुतशोभिता सभा स दशरथेव बभौ यथापुरा ॥ १६

इति श्रीमदयोध्याकाण्डे एकाशीतितमस्सर्गः ॥

---

## ॥ द्व्यशीतितमस्सर्गः ॥

तामार्यगणसंपूर्णां भरतः प्रग्रहां सभाम् ।
ददर्श बुद्धिसम्पन्नः पूर्णचन्द्रो निशामिव ॥ १

आसनानि यथान्याय मार्याणां विशतां तदा ।
वस्त्राङ्गरागप्रभया द्योतिता सा सभोत्तमा ॥ २

सा विद्वज्जनसंपूर्णा सभा सुरुचिरा तदा ।
अदृश्यत घनापाये पूर्णचन्द्रेव शर्वरी ॥ ३

राज्ञस्तु प्रकृती स्सर्वा स्समग्राः प्रेक्ष्य धर्मवित् ।
इदं पुरोहितो वाक्यं भरतं मृदु चाब्रवीत् ॥ ४
"तात! राजा दशरथ स्स्वर्गतो धर्ममाचरन् ।
धनधान्यवतीं स्फीतां प्रदाय पृथिवीं तव ॥ ५
रामस्तथा सत्यधृति स्सतां धर्म मनुस्मरन् ।
नाजहात्पितु रादेशं शशी ज्योत्स्नामिवोदितः ॥ ६
पित्रा भ्रात्रा च ते दत्तं राज्यं निहतकण्टकम् ।
तद्भुङ्क्ष्व मुदितामात्यः क्षिप्रमेवाभिषेचय ॥ ७
उदीच्याश्च प्रतीच्याश्च दाक्षिणात्याश्च केवलाः ।
कोट्यापरान्ता स्सामुद्रा रत्नान्यभिहरन्तुते ॥" ८
तच्छ्रुत्वा भरतो वाक्यं शोकेनाभिपरिप्लुतः ।
जगाम मनसा रामं धर्मज्ञो धर्मकाङ्क्षया ॥ ९
स वाष्पकलया वाचा कलहंसस्वरो युवा ।
विललाप सभामध्ये जगर्हे च पुरोहितम् ॥ १०
"चरितब्रह्मचर्यस्य विद्यास्नातस्य धीमतः ।
धर्मे प्रयतमानस्य को राज्यं मद्विधो हरेत् ॥ ११
कथं दशरथा ज्जातो भवे द्राज्यापहारकः ।
राज्यं चाहं च रामस्य धर्मं वक्तुमिहार्हसि ॥ १२
ज्येष्ठ श्श्रेष्ठ श्च धर्मात्मा दिलीपनहुषोपमः ।
लब्धु मर्हति काकुत्स्थो राज्यं दशरथो यथा ॥ १३
अनार्यजुष्ट मस्वर्ग्यं कुर्यां पाप महं यदि ।
इक्ष्वाकूणा महं लोके भवेयं कुलपांसनः ॥ १४

यद्धि मात्रा कृतं पापं नाहं तदपि रोचये ।
इहस्थो वनदुर्गस्थं नमस्यामि कृताञ्जलिः ॥ १५
राममेवानुगच्छामि राजा स द्विपदां वरः ।
त्रयाणा मपि लोकानां राज्य मर्हति राघवः ॥" १६
तद्वाक्यं धर्मसंयुक्तं श्रुत्वा सर्वे सभासदः ।
हर्षान्मुमुचु रश्रूणि रामे निहितचेतसः ॥ १७
"यदि त्वार्यं न शक्ष्यामि विनिवर्तयितुं वनात् ।
वने तत्रैव वत्स्यामि यथाऽऽर्यो लक्ष्मण स्तथा ॥ १८
सर्वोपायं तु वर्तिष्ये विनिवर्तयितुं बलात् ।
समक्ष मार्यमिश्राणां साधूनां गुणवर्तिनाम् ॥ १९
विष्टिकर्मान्तिका स्सर्वे मार्गशोधकरक्षकाः ।
प्रस्थापिता मया पूर्वं यात्राऽपि ममरोचते ॥" २०
एव मुक्त्वातु धर्मात्मा भरतो भ्रातृवत्सलः ।
समीपस्थ मुवाचेदं सुमन्त्रं मन्त्रकोविदम् ॥ २१
"तूर्ण मुत्थाय गच्छत्वं सुमन्त्र! मम शासनात् ।
यात्रा माज्ञापय क्षिप्रं बलं चैव समानय ॥" २२
एव मुक्त स्सुमन्त्रस्तु भरतेन महात्मना ।
हृष्टस्तदाऽऽदिशत्सर्वं यथा संदिष्ट मिष्टवत् ॥ २३
ताः प्रहृष्टाः प्रकृतयो बलाध्यक्षा बलस्य च ।
श्रुत्वा यात्रां समाज्ञप्तां राघवस्य निवर्तने ॥ २४
ततो योधाङ्गना स्सर्वा भर्तॄन्सर्वान्गृहे गृहे ।
यात्रागमन माज्ञाय त्वरयन्तिस्म हर्षिताः ॥ २५

ते हयैर्गोरथै श्शीघ्रै स्स्यन्दनैश्च महाजवैः ।
सहयोधै र्बलाध्यक्षा बलं सर्व मचोदयन् ॥ २६

सज्जं तु तद्बलं दृष्ट्वा भरतो गुरुसन्निधौ ।
रथं मे त्वरयस्वेति सुमन्त्रं पार्श्वतोऽब्रवीत् ॥ २७

भरतस्यतु तस्याऽज्ञां प्रतिगृह्य च हर्षितः ।
रथं गृहीत्वा प्रययौ युक्तं परमवाजिभिः ॥ २८

स राघव स्सत्यधृतिः प्रतापवान्ब्रुवन्सुयुक्तं दृढसत्यविक्रमः ।
गुरुं महारण्यगतं यशस्विनं प्रसादयिष्यन्भरतोऽब्रवी त्तदा ॥ २९

"तूर्णं समुत्थाय सुमन्त्र! गच्छ बलस्य योगाय बलप्रधानान् ।
आनेतु मिच्छामि हितं वनस्थं प्रसाद्य रामं जगतो हिताय ॥" ३०

ससूतपुत्रो भरतेन सम्यगाज्ञापित स्संपरिपूर्ण कामः ।
शशास सर्वान्प्रकृतिप्रधानान्बलस्य मुख्यांश्च सुहृज्जनं च ॥ ३१

ततस्समुत्थाय कुलेकुले ते राजन्य वैश्या वृषलाश्च विप्राः ।
अयूयुज न्नुष्ट्रखरा न्रथांश्च नागान्हयां श्चैव कुलप्रसूतान् ॥ ३२

॥ इति श्रीमदयोध्याकाण्डे द्व्यशीतितमस्सर्गः ॥

---

## ॥ त्र्यशीतितमस्सर्गः ॥

ततस्समुत्थितः काल्य मास्थाय स्यन्दनोत्तमम् ।
प्रययौ भरतश्शीघ्रं रामदर्शनकाङ्क्षया ॥ १

अग्रतः प्रययुस्तस्य सर्वे मन्त्रिपुरोधसः ।
अधिरुह्य हयैर्युक्तान्रथान्सूर्यरथोपमान् ॥ २

नवनागसहस्राणि कल्पितानि यथाविधि ।
अन्वयुर्भरतं यान्त मिक्ष्वाकुकुलनन्दनम् ॥ ३
षष्टी रथसहस्राणि धन्विनो विविधायुधाः ।
अन्वयु र्भरतं यान्तं राजपुत्रं यशस्विनम् ॥ ४
शतं सहस्राण्यश्वानां समारूढानि राघवम् ।
अन्वयुर्भरतं यान्तं सत्यसन्धं जितेन्द्रियम् ॥ ५
कैकेयी च सुमित्राच कौसल्या च यशस्विनी ।
रामानयनसंहृष्टा ययुर्यानेन भास्वता ॥ ६
प्रयाता श्चार्यसङ्घाता रामं द्रष्टुं सलक्ष्मणम् ।
तस्यैव च कथा श्चित्राः कुर्वाणा हृष्टमानसाः ॥ ७
"मेघश्यामं महाबाहुं स्थिरसत्त्वं दृढव्रतम् ।
कदा द्रक्ष्यामहे रामं जगत श्शोकनाशनम् ॥ ८
दृष्ट एव हि न श्शोकमपनेष्यति राघवः ।
तमस्सर्वस्य लोकस्य समुद्यन्निव भास्करः ॥" ९
इत्येवं कथयन्तस्ते सम्प्रहृष्टाः कथा श्शुभाः ।
परिष्वजानाश्चान्योन्यं ययुर्नागरिका जनाः ॥ १०
ये च तत्रापरे सर्वे सम्मता ये च नैगमाः ।
रामं प्रतिययु र्हृष्टा स्सर्वाः प्रकृतय स्तथा ॥ ११
मणिकारा श्च ये केचित्कुम्भकारा श्च शोभनाः ।
सूत्रकर्मकृतश्चैव ये च शस्त्रोपजीविनः ॥ १२
मायूरकाः क्राकचिका रोचका वेधकास्तथा ।
दन्तकारा स्सुधाकारा स्तथा गन्धोपजीविनः ॥ १३

2—20

सुवर्णकाराः प्रख्याता स्तथा कम्बलधावकाः ।
स्नापकोच्छादका वैद्या धूपका श्शौण्डिकास्तथा ॥ १४
रजका स्तुन्नवाया श्च ग्रामघोषमहत्तराः ।
शैलूषा श्च सहस्त्रीभि र्ययुः कैवर्तका स्तथा ॥ १५
समाहिता वेदविदो ब्राह्मणा वृत्तसम्मताः ।
गोरथै र्भरतं यान्त मनुजग्मु स्सहस्रशः ॥ १६
सुवेषा श्शुद्धवसना स्ताम्रमृष्टानुलेपनाः ।
सर्वे ते विविधै र्यानै श्शनै र्भरतमन्वयुः ॥ १७
प्रहृष्टमुदिता सेना साऽन्वयात्कैकयी सुतम् ।
भ्रातु रानयने यान्तं भरतं भ्रातृवत्सलम् ॥ १८
ते गत्वा दूर मध्वानं रथयानाश्वकुञ्जरैः ।
समासेदुस्ततो गङ्गां शृङ्गिबेरपुरं प्रति ॥ १९
यत्र रामसखो वीरो गुहो ज्ञातिगणैर्वृतः ।
निवसत्यप्रमादेन देशं तं परिपालयन् ॥ २०
उपेत्य तीरं गङ्गाया श्चक्रवाकै रलङ्कृतम् ।
व्यवातिष्ठत सा सेना भरतस्यानुयायिनी ॥ २१
निरीक्ष्यानुगतां सेनां तां च गङ्गां शिवोदकाम् ।
भरत स्सचिवान्सर्वानब्रवीद्वाक्यकोविदः ॥ २२
" निवेशयत मे सैन्य मभिप्रायेण सर्वतः ।
विश्रान्ताः प्रतरिष्यामश्श्व इदानी मिमां नदीम् ॥ २३
दातुं च तावदिच्छामि स्वर्गतस्य महीपतेः ।
और्ध्वदेह निमित्तार्थ मवतीर्योदकं नदीम् ॥ " २४

तस्यैवं ब्रुवतोऽमात्या स्तथेत्युक्त्वा समाहिताः ।
न्यवेशयं स्तां छन्देन स्वेन स्वेन पृथक्पृथक् ॥ २५
निवेश्य गङ्गा मनुतां महानदीं चमूं विधानैः परिबर्हशोभिनीम् ।
उवास रामस्य तदा महात्मनो विचिन्तयानो भरतो निवर्तनम् ॥

इति श्रीमदयोध्याकाण्डे त्र्यशीतितमस्सर्गः ॥

## ॥ चतुरशीतितमस्सर्गः ॥

ततो निविष्टां ध्वजिनीं गङ्गा मन्वाश्रितां नदीम् ।
निषादराजो दृष्ट्वैव ज्ञातीन्सन्त्वरितोऽब्रवीत् ॥ १
"महतीयमितस्सेना सागराभा प्रदृश्यते ।
नास्यान्त मधिगच्छामि मनसाऽपि विचिन्तयन् ॥ २
यथा तु खलुदुर्बुद्धि भरत स्स्वयमागतः ।
स एष हि महाकायः कोविदारध्वजो रथे ॥ ३
बन्धयिष्यति वा दाशा नथवाऽस्मान्वधिष्यति ।
अथ दाशरथिं रामं पित्रा राज्याद्विवासितम् ॥ ४
सम्पन्नां श्रिय मन्विच्छं स्तस्य राज्ञ स्सुदुर्लभाम् ।
भरतः कैकयी पुत्रो हन्तुं समधिगच्छति ॥ ५
भर्ताचैव सखा चैव रामो दाशरथिर्मम ।
तस्यार्थकामास्सन्नद्धा गङ्गाऽनूपे प्रतिष्ठत ॥ ५
तिष्ठन्तु सर्वे दाशाश्च गङ्गा मन्वाश्रिता नदीम् ।
बलयुक्ता नदीरक्षा मांसमूलफलाशनाः ॥ ७
नावां शतानां पञ्चानां कैवर्ताणां शतं शतम् ।
सन्नद्धानां तथा यूनां तिष्ठन्त्वित्यभ्यचोदयत् ॥ ८

यदाऽदुष्टस्तु भरतो रामस्येह भविष्यति ।
सेयं स्वस्तिमती सेना गङ्गा मद्य तरिष्यति ॥" ९
इत्युक्त्वोपायनं गृह्य मत्स्यमांसमधूनि च ।
अभिचक्राम भरतं निषादाधिपतिर्गुहः ॥ १०
तमायान्तं तु संप्रेक्ष्य सूतपुत्रः प्रतापवान् ।
भरतायाऽवचक्षेऽथ विनयज्ञो विनीतवत् ॥ ११
"एष ज्ञातिसहस्रेण स्थपतिः परिवारितः ।
कुशलो दण्डकारण्ये वृद्धो भ्रातु श्च ते सखा ॥ १२
तस्मात्पश्यतु काकुत्स्थ! त्वां निषादाधिपो गुहः ।
असंशयं विजानीते यत्र तौ रामलक्ष्मणौ ॥" १३
एतत्तु वचनं श्रुत्वा सुमन्त्रा द्भरत श्शुभम् ।
उवाच वचनं शीघ्रं 'गुहः पश्यतु' मा मिति ॥ १४
लब्ध्वाऽभ्यनुज्ञां संहृष्टो ज्ञातिभिः परिवारितः ।
आगम्य भरतं प्रह्वो गुहो वचन मब्रवीत् ॥ १५
"निष्कुटश्चैव देशोऽयं वंचिता श्चापि ते वयम् ।
निवेदयामस्ते सर्वे स्वके दासकुले वस ॥ १६
अस्ति मूलं फलं चैव निषादै स्समुपाहृतम् ।
आर्द्रं च मांसं शुष्कंच वन्यं चोच्चावचं महत् ॥ १७
आशंसे स्वाशिता सेना वत्स्यतीमां विभावरीम् ।
अर्चितो विविधैः कामै श्श्वस्ससैन्यो गमिष्यसि ॥" १८

इति श्रीमदयोध्याकाण्डे चतुरशीतितमस्सर्गः ॥

## ॥ पञ्चाशीतितमस्सर्गः ॥

एवमुक्तस्तु भरतो निषादाधिपतिं गुहम् ।
प्रत्युवाच महाप्राज्ञो वाक्यं हेत्वर्थसंहितम् ॥ १
"ऊर्जितः खलु ते कामः कृतो मम गुरोस्सखे! ।
यो मे त्व मीदृशीं सेना मेकोऽभ्यर्चितु मिच्छसि ॥" २
इत्युक्त्वातु महातेजा गुहं वचन मुत्तमम् ।
अब्रवीद्भरत श्श्रीमान्निषादाधिपतिं पुनः ॥ ३
"कतरेण गमिष्यामि भरद्वाजाश्रमं गुह! ।
गहनोऽयं भृशं देशो गङ्गाऽनूपो दुरत्ययः ॥" ४
तस्य तद्वचनं श्रुत्वा राजपुत्रस्य धीमतः ।
अब्रवीत्प्राञ्जलि र्वाक्यं गुहो गहनगोचरः ॥ ५
"दाशास्त्वाऽनुगमिष्यन्ति धन्विनस्सुसमाहिताः ।
अहं चानुगमिष्यामि राजपुत्र! महायशः ॥ ६
कच्चिन्न दुष्टो व्रजसि रामस्याक्लिष्टकर्मणः? ।
इयं ते महती सेना शङ्कां जनयतीव मे ॥" ७
तमेव मभिभाषन्त माकाश इव निर्मलः ।
भरतश्श्लक्ष्णया वाचा गुहं वचन मब्रवीत् ॥ ८
"मा भूत्सकालो यत्कष्टं न मां शङ्कितु मर्हसि ।
राघव स्सहि मे भ्राता ज्येष्ठः पितृसमो मतः ॥ ९
तं निवर्तयितुं यामि काकुत्स्थं वनवासिनम् ।
बुद्धिरन्या न ते कार्या गुह! सत्यं ब्रवीमि ते ॥" १०

स तु संहृष्टवदन श्श्रुत्वा भरतभाषितम् ।
पुनरेवाब्रवी द्वाक्यं भरतं प्रतिहर्षितः ॥ ११
“धन्यस्त्वं न त्वया तुल्यं पश्यामि जगतीतले ।
अयत्नादागतं राज्यं यस्त्वं त्यक्तु मिहेच्छसि ॥ १२
शाश्वती खलु ते कीर्ति र्लोकाननुचरिष्यति ।
यस्त्वं कृच्छ्रगतं रामं प्रत्यानयितु मिच्छसि ॥” १३
एवं सम्भाषमाणस्य गुहस्य भरतं तदा ।
बभौ नष्टप्रभस्सूर्यो रजनी चाभ्यवर्तत ॥ १४
सन्निवेश्य सतां सेनां गुहेन परितोषितः ।
शत्रुघ्नेन सह श्रीमाञ्छयनं समुपागमत् ॥ १५
रामचिन्तामय श्शोको भरतस्य महात्मनः ।
उपस्थितो ह्यनर्हस्य धर्मप्रेक्षस्य तादृशः ॥ १६
अन्तर्दाहेन दहन स्सन्तापयति राघवम् ।
वनदाहाभिसन्तप्तं गूढोऽग्नि रिव पादपम् ॥ १७
प्रसृत स्सर्वगात्रेभ्य स्स्वेदं शोकाग्निसम्भवम् ।
यथा सूर्यांशुसन्तप्तो हिमवान् प्रसृतो हिमम् ॥ १८
ध्याननिर्दर शैलेन विनिश्श्वसितधातुना ।
दैन्यपादपसंघेन शोकायासाधिशृङ्गिणा ॥ १९
प्रमोहानन्तसत्त्वेन सन्तापौषधिवेणुना ।
आक्रान्तो दुःखशैलेन महता कैकयीसुतः ॥ २०
विनिश्श्वसन्वै भृशदुर्मना स्ततः प्रमूढसंज्ञः परमापदं गतः ।
शमं न लेभे हृदयज्वरार्दितो नरर्षभो यूथहतो यथर्षभः ॥ २१

गुहेन सार्धं भरत स्समागतो महानुभाव स्सजन स्समाहितः ।
सुदुर्मना स्तं भरतं तदा पुनः गुह स्समाश्वासयदग्रजं प्रति ॥ २२

इति श्रीमदयोध्याकाण्डे पञ्चाशीतितमस्सर्गः ॥

---

## ॥ षडशीतितमस्सर्गः ॥

आचचक्षेऽथ सद्भावं लक्ष्मणस्य महात्मनः ।
भरतायाप्रमेयाय गुहो गहनगोचरः ॥ १
"तं जाग्रतं गुणै र्युक्तं शरचापासिधारिणम् ।
भ्रातृगुप्त्यर्थ मत्यन्तमहं लक्ष्मण मब्रुवम् ॥" २
इयं तात! सुखा शय्या त्वदर्थमुपकल्पिता ।
प्रत्याश्वसिहि शेष्वास्यां सुखं राघवनन्दन! ॥ ३
उचितोऽयं जनस्सर्वो दुःखानां त्वं सुखोचितः ।
धर्मात्मं! स्तस्य गुप्त्यर्थं जागरिष्यामहे वयम् ॥ ४
न हि रामात्प्रियतरो ममास्ति भुवि कश्चन ।
मोत्सुकोऽभूर्ब्रवीम्येत दप्यसत्यं तवाग्रतः ॥ ५
अस्य प्रासादा दाशंसे लोकेऽस्मिन्सुमहद्यशः ।
धर्मावाप्तिं च विपुला मर्थावाप्तिं च केवलाम् ॥ ६
सोऽहं प्रियसखं रामं शयानं सह सीतया ।
रक्षिष्यामि धनुष्पाणि स्सर्वैस्स्वैर्ज्ञातिभि स्सह ॥ ७
नहि मेऽविदितं किंचि द्वनेऽस्मिं श्चरतस्सदा ।
चतुरङ्गं ह्यपि बलं प्रसहेम वयंयुधि ॥ ८

" एव मस्माभिरुक्तेन लक्ष्मणेन महात्मना ।
अनुनीता वयं सर्वे धर्ममेवानुपश्यता ॥" ९
कथं दाशरथौ भूमौ शयाने सह सीतया ।
शक्या निद्रा मया लब्धुं जीवितं वा सुखानिवा ॥ १०
यो न देवासुरै स्सर्वैश्शक्यः प्रसहितुं युधि ।
तं पश्य गुह! संविष्टं तृणेषु सहसीतया ॥ ११
महता तपसा लब्धो विविधै श्च परिश्रमैः ।
एको दशरथस्यैष पुत्र स्सदृशलक्षणः ॥ १२
अस्मिन्प्रव्राजिते राजा नचिरं वर्तयिष्यति ।
विधवा मेदिनी नूनं क्षिप्रमेव भविष्यति ॥ १३
विनद्य सुमहानादं श्रमेणोपरताः स्त्रियः ।
निर्घोषोपरतं तात! मन्ये राजनिवेशनम् ॥ १४
कौसल्या चैव राजा च तथैव जननी मम ।
नाशंसे यदि जीवेयु स्सर्वे ते शर्वरी मिमाम् ॥ १५
जीवेदपि हि मे माता शत्रुघ्नस्यान्ववेक्षया ।
दुःखिता या तु कौसल्या वीरसूर्विनशिष्यति ॥ १६
अतिक्रान्त मतिक्रान्त मनवाप्य मनोरथम् ।
राज्ये राममनिक्षिप्य पिता मे विनशिष्यति ॥ १७
सिद्धार्थाः पितरं वृत्तं तस्मिन्काले ह्युपस्थिते ।
प्रेतकार्येषु सर्वेषु संस्करिष्यन्ति भूमिपम् ॥ १८
रम्यचत्वरसंस्थानां सुविभक्तमहापथाम् ।
हर्म्यप्रासादसम्पन्नां सर्वरत्नविभूषिताम् ॥ १९

गजाश्वरथसंबाधां तूर्यनादविनादिताम् ।
सर्वकल्याणसंपूर्णां हृष्टपुष्टजनाकुलाम् ॥ २०
आरामोद्यानसम्पूर्णां समाजोत्सवशालिनीम् ।
सुखिता विचरिष्यन्ति राजधानीं पितुर्मम ॥ २१
अपि सत्यप्रतिज्ञेन सार्धं कुशलिना वयम् ।
निवृत्ते समये ह्यस्मिन् सुखिताः प्रविशेमहि ॥ २२
"परिदेवयमानस्य तस्यैवं सुमहात्मनः ।
तिष्ठतो राजपुत्रस्य शर्वरी साऽत्यवर्तत ॥ २३
प्रभाते विमले सूर्ये कारयित्वा जटा उभौ ।
अस्मिन् भागीरथीतीरे सुखं सन्तारितौ मया ॥ २४
जटाधरौ तौ द्रुमचीरवाससौ महाबलौ कुञ्जरयूथपोपमौ ।
वरेषुचापासिधरौ परन्तपौ व्यपेक्षमाणौ सह सीतया गतौ ॥" २५

इति श्रीमदयोध्याकाण्डे षडशीतितमस्सर्गः ॥

## ॥ सप्ताशीतितमस्सर्गः ॥

गुहस्य वचनं श्रुत्वा भरतो भृश मप्रियम् ।
ध्यानं जगाम तत्रैव यत्र तच्छ्रुत मप्रियम् ॥ १
[स विह्वलितसर्वाङ्गो विमृश्य विमलेक्षणः ।
पपात सहसा भूमौ कूलाद्भ्रष्ट इव द्रुमः ॥] २
सुकुमारो महासत्त्व स्सिंहस्कन्धो महाभुजः ।
पुण्डरीकविशालाक्ष स्तरुणः प्रियदर्शनः ॥ ३

प्रत्याश्वस्य मुहूर्तं तु कालं परमदुर्मनाः ।
पपात सहसा तोत्रैर्हृतिविद्ध इव द्विपः ॥ ४
तदवस्थं तु भरतं शत्रुघ्नोऽनन्तरास्थितः ।
परिष्वज्य रुरोदोच्चैर्विसंज्ञश्शोककर्शितः ॥ ५
तत स्सर्वास्समापेतु मातरो भरतस्य ताः ।
उपवासकृशादीना भर्तृव्यसनकर्शिताः ॥ ६
ताश्च तं पतितं भूमौ रुदन्त्यः पर्यवारयन् ।
कौसल्यात्वनुसृत्यैनं दुर्मनाः परिषस्वजे ॥ ७
वत्सला स्वं यथा वत्स मुपगूह्य तपस्विनी ।
परिपप्रच्छ भरतं रुदन्ती शोकलालसा ॥ ८
"पुत्र! व्याधिर्नते कच्चि च्छरीरं परिबाधते? ।
अद्य राजकुलस्यास्य त्वदधीनं हि जीवितम् ॥ ९
त्वां दृष्ट्वा पुत्र! जीवामि रामे सभ्रातृके गते ।
वृत्ते दशरथे राज्ञि नाथ एकस्त्वमद्य नः ॥ १०
कच्चिन्नु लक्ष्मणे पुत्र! श्रुतं ते किंचि दप्रियम् ।
पुत्रेवाऽप्येकपुत्राया स्सह भार्ये वनं गते ॥ ११
स मुहूर्तं समाश्वस्य रुदन्नेव महायशाः ।
कौसल्यां परिसांत्व्येदं गुहं वचन मब्रवीत् ॥ १२
"भ्राता मे क्वावसद्रात्रौ क्व सीता क्व च लक्ष्मणः ।
अस्वपच्छयने कस्मिन् किं भुक्त्वा गुह! शंस मे ॥" १३
सोऽब्रवी द्भरतं हृष्टो निषादाधिपति र्गुहः ।
यद्विधं प्रतिपेदे च रामे प्रियहितेऽतिथौ ॥ १४

" अन्न मुच्चावचं भक्षाः फलानि विविधानि च ।
रामायाभ्यवहारार्थं बहु चोपहृतं मया ॥ १५
तत्सर्वं प्रत्यनुज्ञासी द्राम स्सत्यपराक्रमः ।
नतु तत्प्रत्यगृह्णा त्स क्षत्त्रधर्म मनुस्मरन् ॥ १६
न ह्यस्माभिः प्रतिग्राह्यं सखे! देयं तु सर्वदा ।
इति तेन वयं राज! न्ननुनीता महात्मना ॥ १७
लक्ष्मणेन समानीतं पीत्वा वारि महायशाः ।
औपवास्यं तदाऽकार्षी द्राघव स्सह सीतया ॥ १८
ततस्तु जलशेषेण लक्ष्मणोऽप्यकरोत्तदा ।
वाग्यतास्ते त्रय स्सन्ध्यां समुपासत संहिताः ॥ १९
सौमित्रिस्तु ततः पश्चादकरोत्स्वास्तरं शुभम् ।
स्वयमानीय बर्हींषि क्षिप्रं राघवकारणात् ॥ २०
तस्मिन्समविशद्राम स्स्वास्तरे सह सीतया ।
प्रक्षाळ्यच तयोः पादावपचक्राम लक्ष्मणः ॥ २१
एतत्तदिङ्गुदीमूल मिद मेव च तत्तृणम् ।
यस्मिन्रामश्च सीताच रात्रिं तां शयितावुभौ ॥ २२
नियम्य पृष्ठे तु तलाङ्गुळित्रवान् शरै स्सुपूर्णाविषुधी परन्तपः ।
महद्धनु स्सज्य मुपोह्य लक्ष्मणो निशा मतिष्ठत्परितोऽस्य केवलम् ॥
तत स्त्वहं चोत्तमचापबाणधृत्स्थितोऽभवं तत्र स यत्र लक्ष्मणः ।
अतन्द्रिभिर्ज्ञातिभि रात्तकार्मुकै र्महेन्द्रकल्पं परिपालयं स्तदा ॥"

इति श्रीमदयोध्याकाण्डे सप्ताशीतितमस्सर्गः ॥

## ॥ अष्टाशीतितमस्सर्गः ॥

तच्छ्रुत्वा निपुणं सर्वं भरत स्सह मन्त्रिभिः ।
इङ्गुदीमूल मागम्य रामशय्या मवेक्ष्यताम् ॥ १
अब्रवीज्जननी स्सर्वा "इह तेन महात्मना ।
शर्वरी शयिता भूमाविद मस्य विमर्दितम् ॥ २
महाभागकुलीनेन महाभागेन धीमता ।
जातो दशरथेनोर्व्यां न राम स्स्वप्तुमर्हति ॥ ३
अजिनोत्तरसंस्तीर्णे वरास्तरणसंचये ।
शयित्वा पुरुषव्याघ्रः कथं शेते महीतले ॥ ४
प्रासादाग्रविमानेषु वलभीषु च सर्वदा ।
हैमराजतभौमेषु वरास्तरणशालिषु ॥ ५
पुष्पसंचयचित्रेषु चन्दनागरुगन्धिषु ।
पाण्डुराभ्रप्रकाशेषु शुकसङ्घरुतेषु च ॥ ६
प्रासादवरवर्येषु शीतवत्पुण्यगन्धिषु ।
उषित्वा मेरुकल्पेषु कृतकाञ्चनभित्तिषु ॥ ७
गीतवादित्रनिर्घोषै र्वराभरणनिःस्वनैः ।
मृदङ्गवरशब्दैश्च सततं प्रतिबोधितः ॥ ८
वन्दिभि र्वन्दितः काले बहुभि स्सूतमागधैः ।
गाथाभि रनुरूपाभि स्तुतिभिश्चपरन्तपः ॥ ९
अश्रद्धेय मिदं लोके न सत्यं प्रतिभाति मा ।
मुह्यते खलु मे भाव स्स्वप्नोऽय मिति मे मतिः ॥ १०

न नूनं दैवतं किंचित्कालेन बलवत्तरम् ।
यत्र दाशरथी रामो भूमावेव शयीत सः ॥ ११
विदेहराजस्य सुता सीता च प्रियदर्शना ।
दयिता शयिता भूमौ स्नुषा दशरथस्य च ॥ १२
इयं शय्या मम भ्रातु रिदं हि परिवर्तितम् ।
स्थंडिले कठिने सर्वं गात्रै र्विमृदितं तृणम् ॥ १३
मन्ये साभरणा सुप्ता सीताऽस्मि ञ्छयनोत्तमे ।
तत्र तत्र हि दृश्यन्ते सक्ताः कनकबिन्दवः ॥ १४
उत्तरीयमिहाऽसक्तं सुव्यक्तं सीतया तदा ।
तथा ह्येते प्रकाशन्ते सक्ताः कौशेयतन्तवः ॥ १५
मन्ये भर्तु स्सुखा शय्या येन बाला तपस्विनी ।
सुकुमारी सती दुःखं न विजानाति मैथिली ॥ १६
हा हन्ताऽस्मि नृशंसोऽहं यत्सभार्यः कृते मम ।
ईदृशीं राघव श्शय्या मधिशेते ह्यनाथवत् ॥ १७
सार्वभौमकुले जात स्सर्वलोकस्य सम्मतः ।
सर्वलोकप्रिय स्त्यक्त्वा राज्यं सुख मनुत्तमम् ॥ १८
कथ मिन्दीवरश्यामो रक्ताक्षः प्रियदर्शनः ।
सुखभागी न दुःखार्ह श्शयितो भुवि राघवः ॥ १९
धन्यः खलु महाभागो लक्ष्मणश्शुभलक्षणः ।
भ्रातरं विषमे काले यो राम मनुवर्तते ॥ २०
सिद्धार्था खलु वैदेही पतिं याऽनुगता वनम् ।
वयं संशयिता स्सर्वे हीनास्तेन महात्मना ॥ २१

अकर्णधारा पृथिवी शून्येव प्रतिभातिमा ।
गते दशरथे स्वर्गं रामे चारण्य माश्रिते ॥ २२
नच प्रार्थयते कश्चिन्मनसापि वसुन्धराम् ।
वनेऽपि वसत स्तस्य बाहुवीर्याभिरक्षिताम् ॥ २३
शून्यसंवरणारक्षामयन्त्रितहयद्विपाम् ।
अपावृतपुरद्वारां राजधानी मरक्षिताम् ॥ २४
अप्रहृष्टबलां न्यूनां विषमस्थामनावृताम् ।
शत्रवो नाभिमन्यन्ते भक्षान्विषकृतानिव ॥ २५
अद्यप्रभृति भूमौ तु शयिष्येऽहं तृणेषु वा ।
फलमूलाशनो नित्यं जटाचीराणि धारयन् ॥ २६
तस्यार्थ मुत्तरं कालं निवत्स्यामि सुखं वने ।
तं प्रतिश्रवमामुच्य नास्य मिथ्या भविष्यति ॥ २७
वसन्तं भ्रातु रर्थाय शत्रुघ्नो माऽनुवत्स्यति ।
लक्ष्मणेन सह त्वार्योह्ययोध्यां पालयिष्यति ॥ २८
अभिषेक्ष्यन्ति काकुत्स्थ मयोध्यायां द्विजातयः ।
अपि मे देवताः कुर्यु रिमं सत्यं मनोरथम् ॥ २९
प्रसाद्यमान श्शिरसा मया स्वयं बहुप्रकारं यदि नाभिपत्स्यते ।
ततोऽनुवत्स्यामि चिराय राघवं वने वसन्नार्हति मा मुपेक्षितुम् ॥

इति श्रीमदयोध्याकाण्डे अष्टाशीतितमस्सर्गः ॥

---

## ॥ एकोननवतितमस्सर्गः ॥

व्युष्य रात्रिं तु तत्रैव गङ्गाकूले स राघवः ।
भरतः काल्य मुत्थाय शत्रुघ्नमिदमब्रवीत् ॥ १

“ शत्रुघ्नोत्तिष्ठ किं शेषे निषादाधिपतिं गुहम् ।
शीघ्रमानय भद्रं ते तारयिष्यति वाहिनीम् ॥ २
जागर्मि नाहं स्वपिमि तमेवाऽर्यं विचिन्तयन् ।”
इत्येवमब्रवीद्भ्राता शत्रुघ्नोऽपि प्रचोदितः ॥ ३
इति संवदतो रेव मन्योन्यं नरसिंहयोः ।
आगम्य प्राञ्जलिःकाले गुहो भरत मब्रवीत् ॥ ४
“ कच्चित्सुखं नदीतीरेऽवात्सीः काकुत्स्थ ! शर्वरीम् ? ।
कच्चित्ते सहसैन्यस्य तावत्सर्व मनामयम् ? ॥” ५
गुहस्य तत्तु वचनं श्रुत्वा स्नेहादुदीरितम् ।
रामस्यानुवशो वाक्यं भरतोऽपीदमब्रवीत् ॥ ६
“ सुखा न श्शर्वरी राजन् ! पूजिता श्चापि ते वयम् ।
गङ्गां तु नौभिर्बह्वीभि र्दाशास्सन्तारयन्तु नः ॥” ७
ततो गुह स्सन्त्वरितं श्रुत्वा भरतशासनम् ।
प्रति प्रविश्य नगरं तं ज्ञातिजनमब्रवीत् ॥ ८
“ उत्तिष्ठत प्रबुध्यध्वं भद्रमस्तु च वस्सदा ।
नावस्समनुकर्षध्वं तारयिष्याम वाहिनीम् ॥” ९
ते तथोक्ता स्समुत्थाय त्वरिता राजशासनात् ।
पञ्चनावां शतान्याशु समानिन्यु स्समन्ततः ॥ १०
अन्या स्स्वस्तिकविज्ञेया महाघंटाधरा वराः ।
शोभमानाः पताकाभि र्युक्तवाहा स्सुसंहताः ॥ ११
ततस्स्वस्तिक विज्ञेयां पाण्डुकंबळसंवृताम् ।
सनन्दिघोषां कल्याणीं गुहो नावमुपाहरत् ॥ १२

तामारुरोह भरतश्शत्रुघ्न श्च महाबलः ।
कौसल्या च सुमित्राच याश्चान्या राजयोषितः ॥ १३
पुरोहित श्च तत्पूर्वं गुरवो ब्राह्मणा श्च ये ।
अनन्तरं राजदारा स्तथैव शकटापणाः ॥ १४
आवास मादीपयतां तीर्थं चाप्यवगाहताम् ।
भाण्डानि चाददानानां घोष स्त्रिदिव मस्पृशत् ॥ १५
पताकिन्यस्तु तानाव स्स्वयं दाशैरधिष्ठिताः ।
वहन्त्यो जनमारूढं तदा सम्पेतु राशुगाः ॥ १६
नारीणामभिपूर्णा स्तु काश्चित्काश्चि च्च वाजिनाम् ।
काश्चि दत्र वहन्ति स्म यानयुग्यं महाधनम् ॥ १७
तास्स्म गत्वा परं तीर मवरोप्य च तं जनम् ।
निवृत्ताः काण्डचित्राणि क्रियन्ते दाशबन्धुभिः ॥ १८
स वैजयन्ता स्तु गजा गजारोहप्रचोदिताः ।
तरन्तस्स्म प्रकाशन्ते सध्वजा इव पर्वताः ॥ १९
नाव स्त्वारुरुहुश्चान्ये प्लवैस्तेरु स्तथापरे ।
अन्ये कुम्भघटै स्तेरुरन्ये तेरु श्च बाहुभिः ॥ २०
सा पुण्या ध्वजिनी गङ्गां दाशैस्सन्तारिता स्वयम् ।
मैत्रे मुहूर्ते प्रययौ प्रयागवनमुत्तमम् ॥ २१
आश्वासयित्वा च चमूं महात्मा निवेशयित्वा च यथोपजोषम् ।
द्रष्टुं भरद्वाज मृषिप्रवर्य मृत्विग्वृत स्सन्भरतः प्रतस्थे ॥ २२
स ब्राह्मणस्याऽश्रम मभ्युपेत्य महात्मनो देवपुरोहितस्य ।
ददर्श रम्योटजवृक्षषण्डं महद्वनं विप्रवरस्य रम्यम् ॥ २३

इति श्रीमदयोध्याकाण्डे एकोननवतितमस्सर्गः ॥

## ॥ नवतितमस्सर्गः ॥

भरद्वाजाश्रमं दृष्ट्वा क्रोशादेव नरर्षभः ।
बलं सर्व मवस्थाप्य जगाम सहमन्त्रिभिः ॥ १
पद्भ्यामेव हि धर्मज्ञो न्यस्तशस्त्रपरिच्छदः ।
वसानो वाससी क्षौमे पुरोधाय पुरोधसम् ॥ २
ततस्संदर्शने तस्य भरद्वाजस्य राघवः ।
मन्त्रिणस्तानवस्थाप्य जगामानुपुरोहितम् ॥ ३
वसिष्ठमथ दृष्ट्वैव भरद्वाजो महातपाः ।
सञ्चचालाऽऽसना त्तूर्णं शिष्या 'नर्घ्य'मिति ब्रुवन् ॥ ४
समागम्य वसिष्ठेन भरतेनाभिवादितः ।
अबुद्ध्यत महातेजास्सुतं दशरथस्य तम् ॥ ५
ताभ्या मर्घ्यं च पाद्यं च दत्त्वा पश्चात्फलानि च ।
आनुपूर्व्या च्च धर्मज्ञः पप्रच्छ कुशलं कुले ॥ ६
अयोध्यायां बले कोशे मित्रेष्वपि च मन्त्रिषु ।
जानन् दशरथं वृत्तं न राजा न मुदाहरत् ॥ ७
वसिष्ठो भरतश्चैनं पप्रच्छतु रनामयम् ।
शरीरेऽग्निषु वृक्षेषु शिष्येषु मृगपक्षिषु ॥ ८
तथेति तत्प्रतिज्ञाय भरद्वाजो महातपाः ।
भरतं प्रत्युवाचेदं राघवस्नेहबन्धनात् ॥ ९
" किमिहाऽऽगमने कार्यं तवराज्यं प्रशासतः ।
एतदाचक्ष्व मे सर्वं नहि मे शुद्ध्यते मनः ॥ १०

सुषुवे यममित्रघ्नं कौसल्याऽऽनन्दवर्धनम् ।
भ्रात्रा सह सभार्यो य श्चिरं प्रव्राजितो वनम् ॥ ११
नियुक्तः स्त्रीनियुक्तेन पित्रा योऽसौ महायशाः ।
'वनवासी भ'वेतीह समाः किल चतुर्दश ॥ १२
कच्चिन्नतस्यापापस्य पापं कर्तु मिहेच्छसि ?।
अकण्टकं भोक्तु मनाराज्यं तस्यानुजस्य च ॥" १३
एवमुक्तो भरद्वाजं भरतः प्रत्युवाच ह ।
पर्यश्रुनयनो दुःखा द्वाचासंसज्जमानया ॥ १४
"हतोऽस्मि यदि मा मेवं भगवानपि मन्यते ।
मत्तो न दोष माशङ्के नैवं मा मनुशाधि हि ॥ १५
नचैत दिष्टं माता मे यदवोचन्मदन्तरे ।
नाह मेतेन तुष्ट श्च न तद्वचन माददे ॥ १६
अहं तु तं नरव्याघ्र मुपयातः प्रसादकः ।
प्रतिनेतु मयोध्यां च पादौ तस्याभिवन्दितुम् ॥ १७
त्वं मामेवं गतं मत्वा प्रसादं कर्तुमर्हसि ।
शंस मे भगव! न्रामः क्व सम्प्रति महीपतिः ? ॥" १८
वसिष्ठादिभि र्ऋत्विग्भिर्याचितो भगवांस्ततः ।
उवाच तं भरद्वाजः प्रसादा द्भरतं वचः ॥ १९
"त्वय्येतत्पुरुषव्याघ्र! युक्तं राघववंशजे ।
गुरुवृत्तिर्दमश्चैव साधूनां चानुयायिता ॥ २०
जानेचैतन्मनःस्थं ते 'दृढीकरण म'स्त्विति ।
अपृच्छं त्वां तथाऽत्यर्थं कीर्तिं समभिवर्धयन् ॥ २१

जाने च रामं धर्मज्ञं ससीतं सह लक्ष्मणम् ।
असौ वसति ते भ्राता चित्रकूटे महागिरौ ॥ २२
श्वस्तु गन्तासि तं देशं वसाद्य सह मन्त्रिभिः ।
एतन्मे कुरु सुप्राज्ञ! कामं कामार्थकोविद! ॥" २३
ततस्तथेत्येव मुदार दर्शनः प्रतीतरूपो भरतोऽब्रवी द्वचः ।
चकार बुद्धिं च तदा तदाश्रमे निशानिवासाय नराधिपाऽत्मजः ॥

इति श्रीमदयोध्याकाण्डे नवतितमस्सर्गः ॥

## ॥ एकनवतितमस्सर्गः ॥

कृतबुद्धिं निवासाय तत्रैव स मुनिस्तदा ।
भरतं कैकयीपुत्र मातिथ्येन न्यमन्त्रयत् ॥ १
अब्रवीद्भरतस्त्वेनं "न न्विदं भवता कृतम् ।
पाद्य मर्घ्यं तथाऽऽतिथ्यं वने यदुपपद्यते ॥" २
अथोवाच भरद्वाजो भरतं प्रहसन्निव ।
"जाने त्वां प्रीतिसंयुक्तं तुष्ये स्त्वं येन केनचित् ॥ ३
सेनायास्तु तवैतस्याः कर्तु मिच्छामि भोजनम् ।
मम प्रीतिर्यथा रूपा त्व मर्हो मनुजर्षभ! ॥ ४
किमर्थं चापि निक्षिप्य दूरे बल मिहागतः ।
कस्मान्नेहोपयातोऽसि सबलः पुरुषर्षभ! ॥" ५
भरतः प्रत्युवाचेदं प्राञ्जलिस्तं तपोधनम् ।
"ससैन्यो नोपयातोऽस्मि भगवन्! भगवद्भयात् ॥ ६

राज्ञा च भगवन्नित्यं राजपुत्रेण वा सदा ।
यत्नतः परिहर्तव्या विषयेषु तपस्विनः ॥ ७
वाजिमुख्या मनुष्याश्च मत्ताश्च वरवारणाः ।
प्रच्छाद्य भगवन्! भूमिं महती मनुयान्ति माम् ॥ ८
'ते वृक्षा नुदकं भूमि माश्रमेषूटजां स्तथा ।
न हिंस्यु' रिति तेनाह मेक एव समागतः ॥" ९
"आनीयता मित स्सेने" त्याज्ञप्तः परमर्षिणा ।
तत स्स चक्रे भरत स्सेनाया स्समुपागमम् ॥ १०
अग्निशालां प्रविश्याथ पीत्वाऽपः परिमृज्य च ।
आतिथ्यस्य क्रियाहेतो र्विश्वकर्माण माह्वयत् ॥ ११
"आह्वये विश्वकर्माण महं त्वष्टार मेव च ।
आतिथ्यं कर्तुमिच्छामि तत्र मे संविधीयताम् ॥ १२
आह्वये लोकपालां स्त्रीन् देवां छक्रमुखां स्तथा ।
आतिथ्यं कर्तु मिच्छामि तत्र मे संविधीयताम् ॥ १३
प्राक्स्रोतसश्च या नद्यः प्रत्यक्स्रोतस एव च ।
पृथिव्या मन्तरिक्षे च समायान्त्वद्य सर्वशः ॥ १४
अन्या स्स्रवन्तु मैरेयं सुरा मन्या स्सुनिष्ठिताम् ।
अपरा श्चोदकं शीत मिक्षुकाण्डरसोपमम् ॥ १५
आह्वये देवगन्धर्वा न्विश्वावसु हहाहुहून् ।
तथैवाप्सरसो देवी र्गन्धर्वी श्चापि सर्वशः ॥ १६
घृताची मथ विश्वाचीं मित्रकेशी मलम्बुसाम् ।
नागदन्तां च हेमां च हिमा मद्रिकृतस्थलाम् ॥ १७

शक्रं या श्चोपतिष्ठन्ति ब्रह्माणं याश्च योषितः ।
सर्वास्तुम्बुरुणा सार्धं माह्वये सपरिच्छदाः ॥ १८
वनं कुरुषु यद्दिव्यं वासो भूषणपत्रवत् ।
दिव्यनारीफलं शश्वत्तत्कौबेर मिहैतु च ॥ १९
इह मे भगवान् सोमो विधत्ता मन्न मुत्तमम् ।
भक्ष्यं भोज्यं च चोष्यं च लेह्यंच विविधं बहु ॥ २०
विचित्राणिच माल्यानि पादपप्रच्युतानि च ।
सुरादीनि च पेयानि मांसानि विविधानि च ॥" २१
एवं समाधिना युक्तस्तेजसाऽप्रतिमेन च ।
शीक्षास्वरसमायुक्तं तपसा चाब्रवीन्मुनिः ॥ २२
मनसा ध्यायतस्तस्य प्राङ्मुखस्य कृताञ्जलेः ।
आजग्मुस्तानि सर्वाणि दैवतानि पृथक्पृथक् ॥ २३
मलयं दर्दुरं चैव तत स्स्वेदनुदोऽनिलः ।
उपस्पृश्य ववौ युक्त्या सुप्रियात्मा सुखश्शिवः ॥ २४
ततोऽभ्यवर्तन्त घना दिव्याः कुसुमवृष्टयः ।
दिव्यदुन्दुभिघोषश्च दिक्षु सर्वासु शुश्रुवे ॥ २५
प्रववुश्चोत्तमा वाता ननृतुश्चाप्सरोगणाः ।
जगुश्च देवगन्धर्वा वीणाः प्रमुमुचुस्स्वरान् ॥ २६
स शब्दो द्यां च भूमिं च प्राणिनां श्रवणानि च ।
विवेशोच्चारित श्श्लक्ष्ण स्समो लयगुणान्वितः ॥ २७
तस्मिन्नुपरते शब्दे दिव्ये श्रोत्रसुखे नृणाम् ।
ददर्श भारतं सैन्यं विधानं विश्वकर्मणः ॥ २८

बभूव हि समा भूमिस्समन्तात्पञ्चयोजना ।
शाद्वलै र्बहुभिश्छन्ना नीलवैडूर्यसन्निभैः ॥ २९
तस्मिन्बिल्वाः कपित्थाश्च पनसा बीजपूरकाः ।
आमलक्यो बभूवुश्च चूताश्च फलभूषणाः ॥ ३०
उत्तरेभ्यः कुरुभ्यश्च वनं दिव्योपभोगवत् ।
आजगाम नदी दिव्या तीरजै र्बहुभि र्वृता ॥ ३१
चतुश्शालानि शुभ्राणि शालाश्च गजवाजिनाम् ।
हर्म्यप्रासादसम्बाधा स्तोरणानि शुभानिच ॥ ३२
सितमेघनिभं चापि राजवेश्म सुतोरणम् ।
दिव्यमाल्यकृताकारं दिव्यगन्धसमुत्क्षितम् ॥ ३३
चतुरश्र मसम्बाधं शयनासनयानवत् ।
दिव्यै स्सर्वरसै र्युक्तं दिव्यभोजनवस्त्रवत् ॥ ३४
उपकल्पितसर्वान्नं धौतनिर्मल भाजनम् ।
कॢप्तसर्वासनं श्रीमत्स्वास्तीर्णशयनोत्तमम् ॥ ३५
प्रविवेश महाबाहु रनुज्ञातो महर्षिणा ।
वेश्म तद्रत्नसंपूर्णं भरतः कैकयीसुतः ॥ ३६
अनुजग्मुश्च तं सर्वे मन्त्रिण स्सपुरोहिताः ।
बभूवुश्च मुदायुक्ता दृष्ट्वा तं वेश्मसंविधिम् ॥ ३७
तत्र राजासनं दिव्यं व्यजनं छत्र मेवच ।
भरतो मन्त्रिभि स्सार्धं मभ्यवर्तत राजवत् ॥ ३८
आसनं पूजयामास रामायाभिप्रणम्य च ।
वालव्यजन मादाय न्यषीदत्साचिवासने ॥ ३९

आनुपूर्व्यान्निषेदुश्च सर्वे मन्त्रिपुरोहिताः ।
ततः स्सेनापतिः पश्चात्प्रशास्ता च निषेदतुः ॥ ४०
तत स्तत्र मुहूर्तेन नद्यः पायसकर्दमाः ।
उपातिष्ठन्त भरतं भरद्वाजस्य शासनात् ॥ ४१
तासा मुभयतः कूलं पाण्डुमृत्तिकलेपनाः ।
रम्याश्चावसथा दिव्या ब्रह्मणस्तु प्रसादजाः ॥ ४२
तेनैव च मुहूर्तेन दिव्याऽभरणभूषिताः ।
आगु विंशति साहस्रा ब्रह्मणा प्रहितास्स्त्रियः ॥ ४३
सुवर्णमणिमुक्तेन प्रवाळेन च शोभिताः ।
आगुर्विंशति साहस्राः कुबेरप्रहिताः स्त्रियः ॥ ४४
याभिर्गृहीतः पुरुष स्सोन्माद इव लक्ष्यते ।
आगुर्विंशतिसाहस्रा नन्दनादप्सरो गणाः ॥ ४५
नारदस्तुम्बुरुर्गोपः प्रवरा स्सूर्यवर्चसः ।
एते गन्धर्वराजानो भरतस्याग्रतो जगुः ॥ ४६
अलम्बुसा मिश्रकेशी पुण्डरीकाऽथ वामना ।
उपानृत्यंस्तु भरतं भरद्वाजस्य शासनात् ॥ ४७
यानि माल्यानि देवेषु यानि चैत्ररथे वने ।
प्रयागे तान्यदृश्यन्त भरद्वाजस्य तेजसा ॥ ४८
बिल्वा मार्दङ्गिका आसन् शम्या ग्राहा विभीतकाः ।
अश्वत्था नर्तकाश्चासन्भरद्वाजस्य तेजसा ॥ ४९
तत स्सरळतालाश्च तिलकानक्तमालकाः ।
प्रहृष्टास्तत्र सम्पेतुः कुब्जा भूत्वाऽथ वामनाः ॥ ५०

शिंशुपामलकीजम्ब्वो याश्चान्याः काननेषु ताः ।
मालती मल्लिका जातिर्या श्चान्याः कानने लताः ॥ ५१
प्रमदा विग्रहं कृत्वा भरद्वाजाश्रमेऽवदन् ।
सुरा स्सुरापाः पिबत पायसं च बुभुक्षिताः ॥ ५२
मांसानि च सुमेध्यानि भक्ष्यन्तां यावदिच्छथ ।
उच्छाद्य स्नापयन्तिस्म नदीतीरेषु वल्गुषु ॥ ५३
अप्येकमेकं पुरुषं प्रमदा स्सप्त चाष्टच ।
संवाहन्त्य स्समापेतु र्नार्यो रुचिरलोचनाः ॥ ५४
परिमृज्य तथाऽन्योन्यं पाययन्ति वराङ्गनाः ।
हयान् गजान् खरा नुष्ट्रां स्तथैव सुरभेस्सुतान् ॥ ५५
अभोजयन्वाहनपास्तेषां भोज्यं यथाविधि ।
इक्षून्मधु च लाजांश्च भोजयन्तिस्म वाहनान् ॥ ५६
इक्ष्वाकुवरयोधानां चोदयन्तो महाबलाः ।
नाश्वबन्धोऽश्व माजाना न्नगजं कुञ्जरग्रहः ॥ ५७
मत्तप्रमत्तमुदिता चमू स्सा तत्र संबभौ ।
तर्पिता स्सर्वकामैस्ते रक्तचन्दनरूषिताः ॥ ५८
अप्सरोगणसंयुक्ता स्सैन्या वाच मुदैरयन् ।
"नैवायोध्यां गमिष्यामो न गमिष्याम दण्डकान् ॥ ५९
कुशलं भरतस्यास्तु रामस्यास्तु तथा सुखम् ।"
इति पादातयोधाश्च हस्त्यश्वारोहबन्धकाः ॥ ६०
अनाथास्तं विधिं लब्ध्वा वाच मेता मुदैरयन् ।
सम्प्रहृष्टाविनेदुस्ते नरास्तत्र सहस्रशः ॥ ६१

भरतस्यानुयातार स्स्वर्गोऽय मिति चाब्रुवन् ।
नृत्यन्तिस्म हसन्तिस्म गायन्तिस्म च सैनिकाः ॥ ६२
समन्तात्परिधावन्ति माल्योपेताः सहस्रशः ।
ततो भुक्तवतां तेषां तदन्नममृतोपमम् ॥ ६३
दिव्यानुद्वीक्ष्य भक्ष्यां स्ता नभव द्भक्षणे मतिः ।
प्रेष्याश्चेट्यश्च वध्वश्च बलस्थाश्च सहस्रशः ॥ ६४
बभूवुस्ते भृशं दृप्ता स्सर्वे चाहतवाससः ।
कुञ्जराश्च खरोष्ट्राश्च गोऽश्वा श्च मृगपक्षिणः ॥ ६५
बभूवु स्सुभृता स्तत्र नान्यो ह्यन्य मकल्पयत् ।
ना शुक्लवासा स्तत्राऽसी त्क्षुधितो मलिनोऽपिवा ॥ ६६
रजसा ध्वस्तकेशो वा नरः कश्चि दृदृश्यत ।
आजै श्चापि च वाराहै र्निष्ठानवरसंचयैः ॥ ६७
फलनिर्यूहसंसिद्धैस्सूपैर्गन्धरसान्वितैः ।
पुष्पध्वजवतीः पूर्णाश्शुक्लस्यान्नस्य चाभितः ॥ ६८
ददृशुर्विस्मिता स्तत्र नरालौही स्सहस्रशः ।
बभूवु र्वनपार्श्वेषु कूपाः पायसकर्दमाः ॥ ६९
ताश्च कामदुघा गावः द्रुमाश्चासन्मधुच्युतः ।
वाप्यो मैरेयपूर्णाश्च मृष्टमांसचयैर्वृताः ॥ ७०
प्रतप्तपिठरैश्चापि मार्गं मायूरकौक्कुटैः ।
पात्रीणां च सहस्राणि स्थालीनां नियुतानि च ॥ ७१
न्यर्बुदानि च पात्राणि शातकुम्भमयानिच ।
स्थाल्यः कुम्भ्यः करम्भ्यश्च दधिपूर्णा स्सुसंस्कृताः ॥ ७२

यौवनस्थस्य गौरस्य कपित्थस्य सुगन्धिनः ।
ह्रदाः पूर्णा रसालस्य दध्न श्श्वेतस्य चापरे ॥ ७३
बभूवुः पायसस्यान्ये शर्करायाश्च संचयाः ।
कल्कांश्चूर्णकषायांश्च स्नानानि विविधानि च ॥ ७४
ददृशु र्भाजनस्थानि तीर्थेषु सरितां नराः ।
शुक्लानंशुमतश्चापि दन्तधावनसंचयान् ॥ ७५
शुक्लां श्चन्दनकल्कांश्च समुद्गेष्ववतिष्ठतः ।
दर्पणान्परिमृष्टां श्च वाससां चापि सञ्चयान् ॥ ७६
पादुकोपानहां चैव युग्मानि च सहस्रशः ।
आंजनीः कङ्कता न्कूर्चां छत्राणि च धनूंषि च ॥ ७७
मर्मत्राणानि चित्राणि शयनान्यासनानि च ।
प्रतिपानह्रदान्पूर्णा न्खरोष्ट्रगजवाजिनाम् ॥ ७८
अवगाह्य सुतीर्थां श्च ह्रदान् सोत्पलपुष्करान् ।
आकाशवर्ण प्रतिमान् स्वच्छतोयान्सुखप्लवान् ॥ ७९
नीलवैडूर्यवर्णांश्च मृदून्यवससंचयान् ।
निर्वापार्थान् पशूनां ते ददृशु स्तत्र सर्वशः ॥ ८०
व्यस्मयन्त मनुष्यास्ते स्वप्रकल्पं तदद्भुतम् ।
दृष्ट्वाऽऽतिथ्यं कृतं तादृग्भरतस्य महर्षिणा ॥ ८१
इत्येवं रममाणानां देवानामिव नन्दने ।
भरद्वाजाश्रमे रम्ये सा रात्रि र्व्यत्यवर्तत ॥ ८२
प्रतिजग्मुश्च तानद्यो गन्धर्वा श्च यथागतम् ।
भरद्वाज मनुज्ञाप्य ता श्च सर्वा वराङ्गनाः ॥ ८३

तथैव मत्ता मदिरोत्कटा नरास्तथैव दिव्यागरुचन्दनोक्षिताः ।
तथैव दिव्या विविधा स्रगुत्तमाः पृथक्प्रकीर्णा मनुजैः प्रमर्दिताः॥

इति श्रीमदयोध्याकाण्डे एकनवतितमस्सर्गः ॥

## ॥ द्विनवतितमस्सर्गः ॥

ततस्तां रजनी मुष्य भरत स्सपरिच्छदः ।
कृतातिथ्यो भरद्वाजं कामादभिजगामह ॥ १

तमृषिः पुरुषव्याघ्रं प्राञ्जलिं प्रेक्ष्य चाऽगतम् ।
हुताग्निहोत्रो भरतं भरद्वाजोऽभ्यभाषत ॥ २

"कच्चि दत्र सुखा रात्रिस्तवास्मद्विषये गता? ।
समग्रस्ते जनः कच्चिदातिथ्ये शंस मेऽनघ! ॥" ३

तमुवाचाञ्जलिं कृत्वा भरतोऽभि प्रणम्यच ।
आश्रमादभिनिष्क्रांतमृषि मुत्तमतेजसम् ॥ ४

"सुखोषितोऽस्मि भगव! न्समग्रबलवाहनः ।
तर्पित स्सर्व कामैश्च सामात्यो बलवत्त्वया ॥ ५

अपेतक्लमसन्तापाः सुभिक्षास्सुप्रतिश्रयाः ।
अपि प्रेष्या नुपादाय सर्वे स्म सुसुखोषिताः ॥ ६

आमन्त्रयेऽहं भगवन्! कामं त्वा मृषिसत्तम! ।
समीपं प्रस्थितं भ्रातु मैत्रेणेक्षस्व चक्षुषा ॥ ७

आश्रमं तस्य धर्मज्ञ! धार्मिकस्य महात्मनः ।
आचक्ष्व कतमो मार्गः कियानिति च शंस मे ॥" ८

इति पृष्टस्तु भरतं भ्रातृदर्शनलालसम् ।
प्रत्युवाच महातेजा भरद्वाजो महातपाः ॥ ९
"भरतार्धतृतीयेषु योजनेष्वजने वने ।
चित्रकूटो गिरि स्तत्र रम्यनिर्दरकाननः ॥ १०
उत्तरं पार्श्व मासाद्य तस्य मन्दाकिनी नदी ।
पुष्पितद्रुमसञ्छन्ना रम्यपुष्पितकानना ॥ ११
अनन्तरं तत्सरितश्चित्रकूटश्च पर्वतः ।
तयोः पर्णकुटी तात! तत्र तौ वसतो ध्रुवम् ॥ १२
दक्षिणेनैव मार्गेण सव्यदक्षिणमेव वा ।
गजवाजिरथाकीर्णां वाहिनीं वाहिनीपते! ॥ १३
वाहयस्व महाभाग! ततो द्रक्ष्यसि राघवम् ।"
'प्रयाण' मिति तच्छ्रुत्वा राजराजस्य योषितः ॥ १४
हित्वा यानानि यानार्हाब्राह्मणं पर्यवारयन् ।
वेपमाना कृशा दीना सह देव्या सुमित्रया ॥ १५
कौसल्या तत्र जग्राह कराभ्यां चरणौ मुनेः ।
असमृद्धेन कामेन सर्वलोकस्य गर्हिता ॥ १६
कैकेयी तस्य जग्राह चरणौ सव्यपत्रपा ।
तं प्रदक्षिण मागम्य भगवन्तं महामुनिम् ॥ १७
अदूरा द्दूरतस्यैव तस्थौ दीनमना स्तदा ।
ततः पप्रच्छ भरतं भरद्वाजो दृढव्रतः ॥ १८
"विशेषं ज्ञातु मिच्छामि मातॄणां तव राघव! ।"
एवमुक्तस्तु भरतो भरद्वाजेन धार्मिकः ॥ १९

उवाचप्राञ्जलिर्भूत्वा वाक्यं वचनकोविदः ।
" यामिमां भगवन्! दीनां शोकानशनकर्शिताम् ॥ २०
पितुर्हि महिषीं देवीं देवतामिव पश्यसि ।
एषा तं पुरुषव्याघ्रं सिंह विक्रान्तगामिनम् ॥ २१
कौसल्या सुषुवे रामं धातारमदितिर्यथा ।
अस्या वामभुजं श्लिष्टा यैषा तिष्ठति दुर्मनाः ॥ २२
कर्णिकारस्य शाखेव शीर्णपुष्पा वनान्तरे ।
एतस्यास्तु सुतौ देव्याः कुमारौ देववर्णिनौ ॥ २३
उभौ लक्ष्मणशत्रुघ्नौ वीरौ सत्यपराक्रमौ ।
यस्याः कृते नरव्याघ्रौ जीवनाश मितोगतौ ॥ २४
राजा पुत्रविहीनश्च स्वर्गं दशरथो गतः ।
क्रोधनामकृतप्रज्ञां दृप्तां सुभगमानिनीम् ॥ २५
ऐश्वर्यकामां कैकेयी मनार्यामार्यरूपिणीम् ।
ममैतां मातरं विद्धि नृशंसां पापनिश्चयाम् ॥ २६
यतो मूलं हि पश्याम व्यसनं महदात्मनः ।"
इत्युक्त्वा नरशार्दूलो बाष्पगद्गदया गिरा ॥ २७
निशश्वास स ताम्राक्षः क्रुद्धो नाग इव श्वसन् ।
भरद्वाजो महर्षिस्तं ब्रुवन्तं भरतं तथा ॥ २८
प्रत्युवाच महाबुद्धि रिदं वचनमर्थवत् ।
" न दोषेणावगन्तव्या कैकेयी भरत! त्वया ॥ २९
रामप्रव्राजनं ह्येतत्सुखोदर्कं भविष्यति ।
देवानां दानवानां च ऋषीणां भावितात्मनाम् ॥ ३०

हित मेव भविष्यद्धि रामप्रव्राजनादिह ।"
अभिवाद्य तु संसिद्धः कृत्वा चैनं प्रदक्षिणम् ॥ ३१
आमन्त्र्य भरतस्सैन्यं 'युज्यता' मित्यचोदयत् ।
ततो वाजिरथान् युक्त्वा दिव्यान्हेमपरिष्कृतान् ॥ ३२
अध्यारोहत्प्रयाणार्थी बहून्बहुविधो जनः ।
गजकन्या गजाश्चैव हेमकक्ष्याः पताकिनः ॥ ३३
जीमूता इव घर्मान्ते सघोषा स्सम्प्रतस्थिरे ।
विविधान्यपि यानानि महान्ति च लघूनि च ॥ ३४
प्रययुस्सुमहार्हाणि पादैरेव पदातयः ।
अथ यानप्रवेकैस्तु कौसल्या प्रमुखाः स्त्रियः ॥ ३५
रामदर्शन काङ्क्षिण्यः प्रययुर्मुदिता स्तदा ।
चन्द्रार्कतरुणाभासां नियुक्तां शिबिकां शुभाम् ॥ ३६
आस्थाय प्रययौ श्रीमान्भरतस्सपरिच्छदः ।
सा प्रयाता महासेना गजवाजिरथाकुला ॥ ३७
दक्षिणां दिश मावृत्य महामेघइवोत्थितः ।
वनानि तु व्यतिक्रम्य जुष्टानि मृगपक्षिभिः ॥ ३८
गङ्गायाः परवेलायां गिरिष्वपि नदीषु च ।
सा सम्प्रहृष्टद्विपवाजियोधा वित्रासयन्ती मृतपक्षिसङ्घान् ।
महद्वनं तत्प्रविगाहमाना रराज सेना भरतस्य तत्र ॥ ३९

इति श्रीमदयोध्याकाण्डे द्विनवतितमस्सर्गः ॥

## ॥ त्रिनवतितमस्सर्गः ॥

तया महत्या यायिन्या ध्वजिन्या वनवासिनः ।
अर्दिता यूथपा मत्ता सयूथा स्सम्प्रदुद्रुवुः ॥ १
ऋक्षाः पृषतसङ्घाश्च रुरवश्च समन्ततः ।
दृश्यन्ते वनराजीषु गिरिष्वपि नदीषु च ॥ २
स सम्प्रतस्थे धर्मात्मा प्रीतो दशरथात्मजः ।
वृतो महत्या नादिन्या सेनया चतुरङ्गया ॥ ३
सागरौघनिभा सेना भरतस्य महात्मनः ।
महीं संछादयामास प्रावृषि द्यामिवाम्बुदः ॥ ४
तुरंगौघैरवतता वारणैश्च महाजवैः ।
अनालक्ष्या चिरं कालं तस्मिन्काले बभूव भूः ॥ ५
स यात्वा दूरमध्वानं सुपरिश्रान्तवाहनः ।
उवाच भरत श्श्रीमान्वसिष्ठं मन्त्रिणां वरम् ॥ ६
"यादृशं लक्ष्यते रूपं यया चैव श्रुतं मया ।
व्यक्तं प्राप्ताः स्म तं देशं भरद्वाजोऽयमब्रवीत् ॥ ७
अयं गिरि श्चित्रकूट इयं मन्दाकिनी नदी ।
एतत्प्रकाशते दूरान्नीलमेघनिभं वनम् ॥ ८
गिरेस्सानूनि रम्याणि चित्रकूटस्य सम्प्रति ।
वारणै रवमृद्यन्ते मामकैः पर्वतोपमैः ॥ ९
मुञ्चन्ति कुसुमान्येते नगाः पर्वतसानुषु ।
नीला इवातपापाये तोयं तोयधरा घनाः ॥" १०

“ किन्नराचरितं देशं पश्य शत्रुघ्न! पर्वतम् ।
मृगै स्समन्तादाकीर्णं मकरैरिव सागरम् ॥ ११
एते मृगगणा भान्ति शीघ्रवेगाः प्रचोदिताः ।
वायुप्रविद्धा श्शरदि मेघराजिरिवाम्बरे ॥ १२
कुर्वन्ति कुसुमापीडान्शिरस्सु सुरभीनमी ।
मेघप्रकाशैः फलकै र्दाक्षिणात्यायथा नराः ॥ १३
निष्कूजमिव भूत्वेदं वनं घोरप्रदर्शनम् ।
अयोध्येव जनाकीर्णा सम्प्रति प्रतिभातिमा ॥ १४
खुरै रुदीरितो रेणु र्दिवं प्रच्छाद्य तिष्ठति ।
तं वहत्यनिल श्शीघ्रं कुर्वन्निव मम प्रियम् ॥ १५
स्यन्दनांस्तुरगोपेतान्सूतमुख्यै रधिष्ठितान् ।
एता न्संपतत श्शीघ्रं पश्य शत्रुघ्न! कानने ॥ १६
एतान्वित्रासितान्पश्य बर्हिणः प्रियदर्शनान् ।
एत माविशत श्शीघ्र मधिवासं पतत्रिणः ॥ १७
अतिमात्र मयं देशो मनोज्ञः प्रतिभातिमा ।
तापसानां निवासोऽयं व्यक्तं स्वर्गपथो यथा ॥ १८
मृगा मृगीभि स्सहिता बहवः पृषता वने ।
मनोज्ञरूपा दृश्यन्ते कुसुमै रिव चित्रिताः ॥ १९
साधुसैन्याः प्रतिष्ठन्तां विचिन्वन्तु च कानने ।'
यथा तौ पुरुषव्याघ्रौ दृश्येते रामलक्ष्मणौ ॥” २०
भरतस्य वच श्श्रुत्वा पुरुषा श्शस्त्रपाणयः ।
विविशु स्तद्वनं शूरा धूमं च ददृशुस्ततः ॥ २१

ते समालोक्य धूमाग्रमूचु र्भरत मागताः ।
"नामनुष्ये भवत्यग्नि र्व्यक्तमत्रैव राघवौ ॥ २२
अथ नात्र नरव्याघ्रौ राजपुत्रौ परन्तपौ ।
मन्ये रामोपमास्सन्ति व्यक्तमत्र तपस्विनः ॥" २३
तच्छ्रुत्वा भरतस्तेषां वचनं साधुसम्मतम् ।
सैन्यानुवाच सर्वांस्तानमित्रबलमर्दनः ॥ २४
"यत्ताभवन्तस्तिष्ठन्तु नेतो गन्तव्यमग्रतः ।
अहमेव गमिष्यामि सुमन्त्रो गुरुरेवच ॥" २५
एव मुक्तास्ततस्सर्वे तत्र तस्थुस्समन्ततः ।
भरतो यत्र धूमाग्रं तत्र दृष्टिं समादधात् ॥ २६
व्यवस्थिता या भरतेन सा चमूर्निरीक्षमाणाऽपि च धूममग्रतः ।
बभूव हृष्टा न चिरेण जानती प्रियस्य रामस्य समागमं तदा ॥ २७

इति श्रीमदयोध्याकाण्डे त्रिनवतितमस्सर्गः ॥

## ॥ चतुर्नवतितमस्सर्गः ॥

दीर्घकालोषितस्तस्मिन्गिरौ गिरिवनप्रियः ।
वैदेह्याः प्रिय माकाङ्क्षन्स्वंच चित्तं विलोभयन् ॥ १
अथ दाशरथि श्चित्रं चित्रकूटमदर्शयत् ।
भार्या ममरसङ्काश श्शचीमिव पुरन्दरः ॥ २
"न राज्या द्भ्रंशनं भद्रे! न सुहृद्भिर्विनाभवः ।
मनो मे बाधते दृष्ट्वा रमणीय मिमं गिरिम् ॥ ३

पश्येममचलं भद्रे! नानाद्विजगणायुतम् ।
शिखरैः खमिवोद्विद्धैर्धातुमद्भिर्विराजितम् ॥ ४
केचिद्रजतसङ्काशाः केचित्क्षतजसन्निभाः ।
पीतमांजिष्ठवर्णाश्च केचिन्मणिवरप्रभाः ॥ ५
पुष्यार्ककेतकाभाश्च केचिज्ज्योतीरसप्रभाः ।
विराजन्तेऽचलेन्द्रस्य देशाधातुविभूषिताः ॥ ६
नानामृगगणद्वीपितरक्ष्वृक्षगणै र्वृतः ।
अदुष्टै र्भात्ययं शैलो बहुपक्षिसमायुतः ॥ ७
आम्रजम्ब्वसनैर्लोध्रैः प्रियालैः पनसै र्धवैः ।
अङ्कोलै र्भव्यतिनिशै र्बिल्वतिन्दुकवेणुभिः ॥ ८
काश्मर्यरिष्टवरुणै र्मधूकै स्तिलकै स्तथा ।
बदर्यामलकै र्नीपै र्वेत्रधन्वनबीजकैः ॥ ९
पुष्पवद्भिः फलोपेतै श्छायावद्भि र्मनोरमैः ।
एव मादिभि राकीर्ण श्श्रियं पुष्यत्ययं गिरिः ॥ १०
शैलप्रस्थेषु रम्येषु पश्येमान् रोमहर्षणान् ।
किन्नरान् द्वन्द्वशो भद्रे! रममाणान्मनस्विनः ॥ ११
शाखावसक्तान् खड्गां श्च प्रवराण्यम्बराणि च ।
पश्य विद्याधरस्त्रीणां क्रीडोद्देशान्मनोरमान् ॥ १२
जलप्रपातैरुद्भेदै र्निष्यंदै श्च क्वचित्क्वचित् ।
स्रवद्भिर्भात्ययं शैल स्स्रवन्मद इव द्विपः ॥ १३
गुहासमीरणो गन्धा न्नानापुष्पभवान्वहन् ।
घ्राणतर्पणमभ्येत्य कं नरं न प्रहर्षयेत् ॥ १४

यदीह शरदोऽनेका स्त्वया सार्धं मनिन्दिते ! ।
लक्ष्मणेन च वत्स्यामि न मां शोकः प्रधक्ष्यति ॥ १५
बहुपुष्पफले रम्ये नानाद्विजगणायुते ।
विचित्रशिखरे ह्यस्मि न्रतवानस्मि भामिनि ! ॥ १६
अनेन वनवासेन मया प्राप्तं फलद्वयम् ।
पितुश्चा नृणता धर्मे भरतस्य प्रियं तथा ॥ १७
वैदेहि ! रमसे कच्चि चित्रकूटे मयासह ।
पश्यन्ती विविधान्भावान्मनोवाक्कायसंयतान् ? ॥ १८
इद मेवामृतं प्राहू राज्ञि ! राजर्षयः परे ।
वनवासं भवार्थाय प्रेत्य मे प्रपितामहाः ॥ १९
शिला श्शैलस्य शोभन्ते विशालाश्शतशोऽभितः ।
बहुळा बहुळै र्वर्णै र्नीलपीतसितारुणैः ॥ २०
[त्वदर्थमिव विन्यस्त श्शिलापट्टोऽयमग्रतः ।
यस्याय मभितः पुष्पैः प्रवृद्ध इव केसरः ॥] २१
निशिभान्त्यचलेन्द्रस्य हुताशनशिखा इव ।
ओषध्यस्स्वप्रभालक्ष्म्या भ्राजमाना स्सहस्रशः ॥ २२
केचित्क्षयनिभा देशाः केचिदुद्यानसन्निभाः ।
केचि देकशिला भान्ति पर्वतस्यास्य भामिनि ! ॥ २३
भित्त्वेव वसुधां भाति चित्रकूट स्समुत्थितः ।
चित्रकूटस्य कूटोऽसौ दृश्यते सर्वत श्शुभः ॥ २४
कुष्ठपुन्नागस्थगरभूर्जपत्रोत्तरच्छदान् ।
कामिनां स्वास्तरान्पश्यकुशेशयदळायुतान् ॥ २५

मृदिता श्चापविद्धाश्च दृश्यन्ते कमलस्रजः ।
कामिभि र्वनिते! पश्य फलानि विविधानि च ॥ २६

वस्वौकसारां नळिनी मत्येतीवोत्तरान्कुरून् ।
पर्वतश्चित्रकूटोऽसौ बहुमूलफलोदकः । २७

इमंतु कालं वनिते! विजह्रिवां स्त्वया च सीते! सहलक्ष्मणेनघ ।
रतिं प्रप्रत्स्ये कुलधर्मवर्धिनीं सतां पथिस्वैर्नियमैः परैः स्थितः ॥"

इति श्रीमदयोध्याकाण्डे चतुर्नवतितमस्सर्गः ॥

## ॥ पञ्चनवतितमस्सर्गः ॥

अथ शैलाद्विनिष्क्रम्य मैथिलीं कोसलेश्वरः ।
अदर्शय च्छुभजलां रम्यां मन्दाकिनीं नदीम् ॥ १

अब्रवीच्च वरारोहां चारुचन्द्रनिभाननाम् ।
विदेहराजस्य सुतां रामो राजीवलोचनः ॥ २

"विचित्रपुळिनां रम्यां हंससारससेविताम् ।
कमलैरुपसम्पन्नां पश्य मन्दाकिनीं नदीम् ॥ ३

नानाविधै स्तीररुहै र्वृतां पुष्पफलद्रुमैः ।
राजन्तीं राजराजस्य नळिनी मिव सर्वतः ॥ ४

मृगयूथनिपीतानि कलुषांभांसि साम्प्रतम् ।
तीर्थानि रमणीयानि रतिं सञ्जनयन्ति मे ॥ ५

जटाजिनधराः काले वल्कलोत्तरवाससः ।
ऋषयस्त्ववगाहन्ते नदीं मन्दाकिनीं प्रिये! ॥ ६

आदित्य मुपतिष्ठन्ते नियमा दूर्ध्वबाहवः ।
एते परे विशालाक्षि! मुनय स्संशितव्रताः ॥ ७
मारुतोद्धूत शिखरैः प्रनृत्त इव पर्वतः ।
पादपैः पत्रपुष्पाणि सृजद्भि रभितो नदीम् ॥ ८
क्वचिन्मणिनिकाशोदां क्वचित्पुळिनशाळिनीम् ।
क्वचित्सिद्धजनाकीर्णां पश्य मन्दाकिनीं नदीम् ॥ ९
निर्धूतान्वायुना पश्य विततान्पुष्पसंचयान् ।
पोप्लूयमानानपरान्पश्य त्वं जलमध्यगान् ॥ १०
तां श्चातिवल्गुवचसो रथाङ्गाह्वयना द्विजाः ।
अधिरोहन्ति कल्याणि! निष्कूजन्त श्शुभा गिरः ॥ ११
दर्शनं चित्रकूटस्य मन्दाकिन्याश्च शोभने ।
अधिकं पुरवासाच्च मन्येच तव दर्शनात् ॥ १२
विधूतकलुषै स्सिद्धै स्तपोदमशमान्वितैः ।
नित्यविक्षोभितजलां विगाहस्व मयासह ॥ १३
सखीवच्च विगाहस्व सीते! मन्दाकिनीं नदीम् ।
कमलान्यवमज्जन्ती पुष्कराणि च भामिनि ॥ १४
त्वं पौरजनवद्व्याळानयोध्या मिव पर्वतम् ।
मन्यस्व वनिते! नित्यं सरयूवदिमां नदीम् ॥ १५
लक्ष्मण श्चापि धर्मात्मा मन्निदेशे व्यवस्थितः ।
त्वं चानुकूला वैदेहि! प्रीतिं जनयथो मम ॥ १६
उपस्पृशं स्त्रिषवणं मधुमूलफलाशनः ।
नायोध्यायै न राज्याय स्पृहयेऽद्य त्वया सह ॥ १७

इमां हि रम्यां गजयूथशालिनीं निपीततोयां गजसिंहवानरैः ।
सुपुष्पितैः पुष्पधरै रलङ्कृतां न सोऽस्ति यस्स्यादगतक्लम स्सुखी ॥"
इतीव रामो बहुसङ्गतं वचः प्रियासहाय स्सरितं प्रति ब्रुवन् ।
चचार रम्यं नयनाञ्जनप्रभं स चित्रकूटं रघुवंशवर्धनः ॥ १९

इति श्रीमदयोध्याकाण्डे पञ्चनवतितमस्सर्गः ॥

---

## ॥ षण्णवतितमस्सर्गः ॥

अधिकपाठसर्गः—

(रामस्तु नळिनीं रम्यां चित्रकूटं च पर्वतम् ।
उत्तरेतु गिरेः पादे चित्रकूटस्य राघवः ॥ १
ददर्श कन्दरं रम्यं शिलाधातुसमन्वितम् ।
सुखप्रसेकैस्तरुभिः पुष्पभारावलम्बिभिः ॥ २
संवृतं च रहस्यं च मत्तद्विजगणायुतम् ।
तदृष्ट्वा सर्वभूतानां मनोदृष्टिहरं वनम् ॥ ३
उवाच सीतां काकुत्स्थो वनदर्शनविस्मितः ।
वैदेहि रमते चक्षुस्तवास्मिन्गिरिकन्दरे ॥ ४
पथि श्रमविघातार्थं साधु ताव दिहाऽस्यताम् ।
त्वदर्थमिह विन्यस्तात्वियं श्लक्ष्णतमा शिला ॥ ५
यस्याः पार्श्वे तरुः पुष्पैः प्रविष्टइव केसरैः ।
राघवेणैव मुक्ता सा सीता प्रकृतिदक्षिणा ॥ ६
उवाच प्रणयस्निग्ध मिदं श्लक्ष्णतरं वचः ।
अवश्यकार्यं वचनं तव मे रघुनन्दन! ॥ ७

बहुशो भ्रमितश्चाद्य तव चैवं मनोरथः ।
एव मुक्त्वा वरारोहा शिलां तां प्रससर्पह ॥ ८
सह भर्त्राऽनवद्याङ्गी रनुकामा मनस्विनी ।
तामेवं ब्रुवतीं सीतां रामो वचन मब्रवीत् ॥ ९
रम्यं पश्यसि भूतार्थं वनं पुष्पितपादपम् ।
पश्य देवि! गिरौ रम्ये रम्यपुण्याङ्कितानिमान् ॥ १०
गजदन्तक्षतान्वृक्षा न्पश्य निर्यासवर्षिणः ।
झिल्लिकाविरुतै र्दीर्घै रुदन्तीव समन्ततः ॥ ११
पुत्रप्रियोऽसौ शकुनिः पुत्रपुत्रेति भाषते ।
मधुरां करुणां वाचं पुरेव जननी मम ॥ १२
विहगो भृङ्गराजोऽयं सालस्कन्धं समास्थितः ।
संगीतमिव कुर्वाणः कोकिलेनावकूजति ॥ १३
अयं वा बालकश्शङ्के कोकिलानां विहङ्गमः ।
ससम्बन्ध मसम्बन्धं तथा ह्येष प्रभाषते ॥ १४
एषा कुसुमिता नूनं पुष्पभारानतालता ।
दृश्यते मामिवात्यर्थं श्रमाद्देवि! त्वमाश्रिता ॥ १५
एव मुक्त्वा प्रियस्याङ्के मैथिली प्रियभाषिणी ।
भूयस्तरामनिन्द्याङ्गी समारोहत भामिनी ॥ १६
अङ्केतु परिवर्तन्ती सीता सुरसुतोपमा ।
हर्षयामास रामस्य मनो मनसिजार्पितम् ॥ १७
स निर्घृष्याङ्गुलिं रामो धौते मनश्शिलोच्चये ।
चकार तिलकं तस्या ललाटे रुचिरं तदा ॥ १८

बालार्कसमवर्णेन तेजसा गिरिधातुना ।
केसरस्य च पुष्पाणि करेणामृद्य राघवः ॥ १९
तिलकं पूरयामास मैथिल्याः प्रीतमानसः ।
अभिगम्य तदा तस्याः शिलायां रघुनन्दनः ॥ २०
अन्वीयमानो वैदेह्या देशमन्यं जगाम ह ।
विचरन्ता तदा सीता ददर्श हरियूथपम् ॥ २१
वने बहुमृगाकीर्णे वित्रस्ता राम माश्लिषत् ।
रामस्तां परिरब्धाङ्गीं परिरभ्य महाभुजः ॥ २२
सान्त्वयामास वामोरुमवभर्त्स्याथ वानरम् ।
मनश्शिलायास्तिलकस्सीताया स्सोऽथ वक्षसि ॥ २३
समदृश्यत सङ्क्रान्तो रामस्य विपुलौजसः ।
प्रजहास तदा सीता गते वानरपुङ्गवे ॥ २४
दृष्ट्वा भर्तारि सङ्क्रान्त मपाङ्गैस्स मनश्शिलम् ।
नातिदूरे त्वशोकानां प्रदीप्तमिव काननम् ॥ २५
ददर्श पुष्पस्तबकै स्सृजद्भिरिव वानरैः ।
वैदेही त्वब्रवी द्राम मशोककुसुमार्थिनी ॥ २६
वयं तदभिगच्छामो वन मिक्ष्वाकुनन्दन! ।
तस्याः प्रिये स्थितो रामो देव्या दिव्यार्थरूपया ॥ २७
सहित स्तदशोकानां विशोकः प्रययौ वनम् ।
तदाऽशोकवनं राम स्सभार्यो व्यचरत्तदा ॥ २८
गिरिपुत्र्या पिनाकीव सहहैमवतं वनम् ।
तावन्योन्य मशोकस्य पुष्पैः पल्लवधारिभिः ॥ २९

समलं चक्रतु रुभौ कामिनौ नीललोहितैः ।
आबद्धवनमालौतौ कृतापीडावतंसकौ ॥ ३०
भार्यापती तावचलं शोभयांचक्रतु र्भृशम् ।
एवं स विविधान्देशान्दर्शयित्वा प्रियान्प्रियः ॥ ३१
आजगामाऽऽश्रमपदं सुसंश्लिष्टमलं कृतम् ।
प्रत्युज्जगाम तं भ्राता लक्ष्मणो गुरुवत्सलः ॥ ३२
दर्शयन्विविधं रम्यं सौमित्रि स्स्वकृतं तदा ।
शुद्धबाणहतां स्तत्र मेध्यान्कृष्णमृगान्दश ॥ ३३
राशीकृतां छुष्यमाणा नन्यान्कांश्चन कांश्चन ।
तद्दृष्ट्वाकर्म सौमित्रे र्भ्राता प्रीतोऽभवत्तदा ॥ ३४
क्रियन्तां बलयश्चेति राम स्सीता मथान्वशात् ।
अग्रं प्रदाय भूतेभ्य स्सीताऽथ वरवर्णिनी ॥ ३५
तयो रुपाददा द्भ्रात्रोर्मधु मांसंच तद्भृशम् ।
तयोस्तुष्टि मथोत्पाद्य वीरयोः कृतशौचयोः ॥ ३६
विधिवज्जानकी पश्चाच्चक्रे सा प्राणधारणम् ।
शिष्टं मांसं निकृत्तं यच्छोषणायावकल्पितम् ॥ ३७
तद्रामवचनात्सीता काकेभ्यः पर्यरक्षत ।
श्रमात्ततो निदद्रौ सा प्रियाङ्काहितमस्तका ॥ ३८
प्रबुद्धायां तत स्तस्यां सोऽपि शिश्ये रघूत्तमः ।
उपधायतु वैदेह्या स्तथाऽङ्क मरिसूदनः ॥ ३९
तत्राऽऽजग्मुस्तदा काका मृगमांसबुभुक्षया ।
तेष्वेकोऽपीडयत्सीतां तत्स्तनामिषलोलुपः ॥ ४०

निवार्यमाणोऽपि मुहुर्न्यावर्तत सोऽधमः ।
नाबोधयत्प्रियं सीता सुखसुप्तं तथाऽपि सा ॥ ४१
खण्डितात्तत् स्तनभरात्स्रवद्धी रुधिरैस्ततः ।
प्रतिबुद्ध स्स्वयं रामः किमेतदिति दृष्टवान् ॥ ४२
उपान्ते काक मासीन मापत द्रुधिरंच तत् ।
तां ददर्श तथा भर्ता काकेनाऽयासितां दृढम् ॥ ४३
यस्स्याद्धरान्तरचरः कामचारी विहङ्गमः ।
काकेनाऽर्या तुद्यमाना सा मुमोह तदाऽऽतुरा ॥ ४४
सा चुकोपानवद्याङ्गी भर्तृप्रणयदर्पिता ।
इतश्चेतश्च तां काको वारयन्तीं पुनः पुनः ॥ ४५
पक्षतुण्डनखाग्रैश्च कोपयामास कोपनाम् ।
तस्याः प्रस्फुरमाणोष्ठं भ्रुकुटी पुटसूचितम् ॥ ४६
मुख मालोक्य काकुत्स्थस्तं काकं प्रत्यबोधयत् ।
स धृष्टमानो विहगो रामवाक्य मचिन्तयन् ॥ ४७
सीता मभिपपातैव तत श्चुक्रोध राघवः ।
सोऽभि मन्त्र्य शरैषीक मैषीकास्त्रेण वीर्यवान् ॥ ४८
काकं तदभिसंधाय विससर्ज नरर्षभः ।
सतेनाभिद्रुतः काक स्त्रीन्लोका न्पर्यगात्ततः ॥ ४९
देवैर्दत्तवरः पक्षी धरान्तरचरो लघुः ।
यत्रयत्रागमत्काकस्तत्र तत्र ददर्शह ॥ ५०
इषीकभूत माकाशं स रामं पुन रागमत् ।
स मूर्ध्ना न्यपतत्काको राघवस्य महात्मनः ॥ ५१

सीताया स्तत्र पश्यन्त्या मानुषीमैरयद्गिरम् ।
प्रसादं कुरु मे राम! प्राणै स्सामग्र्यमस्तु मे ॥ ५२
अस्त्रस्यास्य प्रभावेन शरणं न लभे क्वचित् ।
तं काक मग्रतो रामः पादयो श्शिरसा गतम् ॥ ५३
सानुक्रोशतया धीमा निदं वचन मब्रवीत् ।
मया रोषपरीतेन सीता प्रियहितार्थिना ॥ ५४
अस्त्र मेतत्समादाय त्वद्वधायाभिमन्त्रितम् ।
यत्तु मे चरणौ मूर्ध्ना गतस्त्वं जीवितेप्सया ॥ ५५
अतोऽस्त्यपेक्षा त्वयि मे रक्ष्यो हि शरणागतः ।
अमोघं क्रियता मस्त्रमेक मङ्गं परित्यज ॥ ५६
किमङ्गं शातयतु ते शरैषीकं ब्रवीहि मे ।
एतावद्धि मया शक्यं तव कर्तुं प्रियंखग! ॥ ५७
एकाङ्गहीनं ह्यस्त्रेण जीवितं मरणा द्वरम् ।
एवमुक्तस्तु रामेण सम्प्रधार्य स वायसः ॥ ५८
अभ्यगच्छद्द्वयो रक्ष्णोस्त्यागमेकस्य पण्डितः ।
सोऽब्रवी द्राघवं काको नेत्र मेकं त्यजाम्यहम् ॥ ५९
एकनेत्रोऽपि जीवेऽहं त्वत्प्रसादान्नराधिप! ।
रामानुज्ञात मस्त्रं तत्काकस्य नयनेऽपतत् ॥ ६०
वैदेही विस्मिता तत्र काकस्य नयने हते ।
निपत्य शिरसा काको जगामाऽऽशु यथेप्सितम् ॥ ६१

लक्ष्मणानुचरो रामश्चकारानन्तरं प्रियाम् ।
संतुष्टहृदयां श्रीमान्मैथिलीं जनकात्मजाम् ॥ ६२
स्वयं संतुष्टचित्तस्सन्विजहार वने प्रभुः)

इति श्रीमदयोध्याकाण्डे षण्णवतितमस्सर्गः ॥

॥ षण्णवतितमस्सर्गः ॥

तां तथा दर्शयित्वा तु मैथिलीं गिरिनिम्नगाम् ।
निषसाद गिरिप्रस्थे सीतां मांसेन छन्दयन् ॥ १
इदं मेध्य मिदं स्वादु निष्टप्तमिद मग्निना ।
एव मास्ते स धर्मात्मा सीतया सह राघवः ॥ २
तथा तत्राऽऽसतस्तस्य भरतस्योपयायिनः ।
सैन्यरेणुश्च शब्दश्च प्रादुरास्तां नभस्पृशौ ॥ ३
एतस्मिन्नन्तरे त्रस्ता श्शब्देन महता ततः ।
अर्दिता यूथपा मत्ता स्सयूथादुद्रुवुर्दिशः ॥ ४
स तं सैन्यसमुद्भूतं शब्दं शुश्राव राघवः ।
तां श्च विप्रद्रुतान्सर्वा न्यूथपा नन्ववैक्षत ॥ ५
तां श्च विद्रवतो दृष्ट्वा तं च श्रुत्वा च निस्वनम् ।
उवाच राम स्सौमित्रं लक्ष्मणं दीप्ततेजसम् ॥ ६
"हन्तलक्ष्मण! पश्येह सुमित्रासुप्रजा स्त्वया ।
भीमस्तनितगम्भीर स्तुमुलश्श्रूयते स्वनः ॥ ७
गजयूथानि वाऽरण्ये महिषा वा महावने ।
वित्रासिता मृगास्सिंहै स्सहसा प्रद्रुता दिशः ॥ ८

राजा वा राजमात्रो वा मृगया मटते वने ।
अन्यद्वाश्वापदं किंचित्सौमित्रे! ज्ञातु मर्हसि ॥ ९
सुदुश्चरो गिरिश्चायं पक्षिणा मपि लक्ष्मण! ।
सर्वमेतद्यथातत्त्व मचिरात् ज्ञातुमर्हसि ॥" १०
स लक्ष्मण स्सन्त्वरितस्सालमारुह्य पुष्पितम् ।
प्रेक्षमाणो दिशस्सर्वाः पूर्वां दिशमुदैक्षत ॥ ११
उदङ्मुखः प्रेक्षमाणो ददर्श महतीं चमूम् ।
रथाश्वगजसम्बाधां यत्तैर्युक्तां पदातिभिः ॥ १२
तामश्वगजसंपूर्णां रथध्वजविभूषिताम् ।
शशंससेनां रामाय वचनं चेदमब्रवीत् ॥ १३
"अग्निं संशमयत्वार्य स्सीता च भजतां गुहाम् ।
सज्यं कुरुष्व चापं च शरांश्च कवचं तथा ॥" १४
तं रामः पुरुषव्याघ्रो लक्ष्मणं प्रत्युवाच ह ।
"अङ्गावेक्षस्व सौमित्रे! कस्येमां मन्यसे चमूम् ॥" १५
एवमुक्तस्तु रामेण लक्ष्मणो वाक्यमब्रवीत् ।
दिधक्षन्निव तां सेनां रुषितः पावको यथा ॥ १६
"सम्पन्नं राज्यमिच्छंस्तु व्यक्तं प्राप्याभिषेचनम् ।
आवां हन्तुं समभ्येति कैकेय्या भरतस्सुतः ॥ १७
एषवै सुमहाञ्छ्रीमान्विटपी सम्प्रकाशते ।
विराजत्युद्गतस्कन्धः कोविदारध्वजो रथे ॥ १८
[असौ हि सुमहास्कन्धो विटपी च महाद्रुमः ।
विराजते महासैन्ये कोविदारध्वजो रथे ॥ १९

भजन्त्येते यथा काममश्वानारुह्य शीघ्रगान् ।
एते भ्राजन्ति संहृष्टा गजानारुह्य सादिनः ॥ २०
गृहीतधनुषौ चावां गिरिं वीर! श्रयावहै ।
अथवेहैव तिष्ठावस्सन्नद्धावुद्यतायुधौ ॥ २१
अपि नौ वशमागच्छेत्कोविदारध्वजो रणे ।
अपि द्रक्ष्यामि भरतं यत्कृते व्यसनं महत् ॥ २२
त्वया राघव! सम्प्राप्तं सीतया च मया तथा ।
यन्निमित्तं भवान्राज्याच्च्युतो राघव! शाश्वतात् ॥ २३
सम्प्राप्तोऽय मरिर्वीर! भरतो वध्य एव मे ।
भरतस्य वधे दोषं नाहं पश्यामि राघव! ॥ २४
पूर्वापकारिणां त्यागे न ह्यधर्मो विधीयते ।
पूर्वापकारी भरतस्त्यक्तधर्मश्च राघव! ॥ २५
एतस्मिन्निहते कृत्स्नामनुशाधि वसुन्धराम् ।
अद्य पुत्रं हतं संख्ये कैकेयी राज्यकामुका ॥ २६
मया पश्येत्सुदुःखार्ता हस्तिभग्नमिव द्रुमम् ।
कैकेयीं च वधिष्यामि सानुबन्धां सबान्धवाम् ॥ २७
कलुषेणाद्य महता मेदिनी परिमुच्यताम् ।
अद्येमं संयत क्रोधमसत्कारं च मानद! ॥ २८
मोक्ष्यामि शत्रुसैन्येषु कक्षेष्विव हुताशनम् ।
अद्यैतच्चित्रकूटस्य काननं निशितैश्शरैः ॥ २९
छिंदञ्छत्रुशरीराणि करिष्ये शोणितोक्षितम् ।
शरैर्निर्भिन्नहृदयान्कुञ्जरां स्तुरगां स्तथा ॥ ३०

श्वापदाः परिकर्षन्तु नरांश्च निहतान्मया ।
शराणां धनुषश्चाहमनृणोऽस्मि महामृधे ॥ ३१
ससैन्यं भरतं हत्वा भविष्यामि न संशयः ॥"

इति श्रीमदयोध्याकाण्डे षण्णवतितमस्सर्गः ॥

॥ सप्तनवतितमस्सर्गः ॥

सुसंरब्धं तु सौमित्रिं लक्ष्मणं क्रोधमूर्छितम् ।
रामस्तु परिसान्त्व्याथ वचनं चेद मब्रवीत् ॥ १
"किमत्र धनुषा कार्य मसिना वा सचर्मणा ।
महेष्वासे महाप्राज्ञे भरते स्वयमागते ॥ २
पितु स्सत्यं प्रतिश्रुत्य हत्वा भरत मागतम् ।
किं करिष्यामि राज्येन सापवादेन लक्ष्मण! ॥ ३
यद्द्रव्यं बान्धवानां वा मित्राणां वा क्षये भवेत् ।
नाहं तत्प्रतिगृह्णीयां भक्षान्विषकृतानिव ॥ ४
धर्म मर्थं च कामं च पृथिवीं चापि लक्ष्मण! ।
इच्छामि भवता मर्थे ह्येत त्प्रतिशृणोमिते ॥ ५
भ्रातॄणां संग्रहार्थं च सुखार्थं चापि लक्ष्मण! ।
राज्य मप्यह मिच्छामि सत्येनाऽयुध मालभे ॥ ६
नेयं मम मही सौम्य! दुर्लभा सागराम्बरा ।
नहीच्छेय मधर्मेण शक्रत्व मपि लक्ष्मण! ॥ ७
यद्विना भरतं त्वां च शत्रुघ्नं चापि मानद! ।
भवेन्मम सुखं किंचि द्भस्म तत्कुरुतां शिखी ॥ ८

मन्येऽह मागतोऽयोध्यां भरतो भ्रातृवत्सलः ।
मम प्राणात्प्रियतरः कुलधर्म मनुस्मरन् ॥ ९
श्रुत्वा प्रव्राजितं मां हि जटावल्कलधारिणम् ।
जानक्या सहितं वीर! त्वया च पुरुषर्षभ! ॥ १०
स्नेहेनाऽक्रान्त हृदय श्शोकेनाऽकुलितेन्द्रियः ।
द्रष्टु मभ्यागतोह्येष भरतो नान्यथाऽगतः ॥ ११
अम्बां च कैकयीं रुष्य परुषं चाप्रियं वदन् ।
प्रसाद्य पितरं श्रीमा न्राज्यं मे दातु मागतः ॥ १२
प्राप्तकालं यदेषोऽस्मा न्भरतो द्रष्टु मिच्छति ।
अस्मासु मनसाऽप्येष नाप्रियं किंचिदाचरेत् ॥ १३
विप्रियं कृतपूर्वं ते भरतेन कदानु किम् ।
ईदृशं वा भयं तेऽद्य भरतं योऽत्र शङ्कसे ॥ १४
नहि ते निष्ठुरं वाच्यो भरतो नाप्रियं वचः ।
अहं ह्यप्रिय मुक्तस्स्यां भरतस्याप्रिये कृते ॥ १५
कथंनु पुत्राः पितरं हन्युः कस्यां चिदापदि ।
भ्राता वा भ्रातरं हन्या त्सौमित्रे! प्राणमात्मनः ॥ १६
यदि राज्यस्य हेतो स्त्व मिमां वाचं प्रभाषसे ।
वक्ष्यामि भरतं दृष्ट्वा राज्य मस्मै प्रदीयताम् ॥ १७
उच्यमानोऽपि भरतो मया लक्ष्मण! तत्त्वतः ।
राज्य मस्मै प्रयच्छेति 'बाढ'मित्येव वक्ष्यति ॥" १८
तथोक्तो धर्मशीलेन भ्रात्रा तस्य हितेरतः ।
लक्ष्मणः प्रविवेशेव स्वानि गात्राणि लज्जया ॥ १९

तद्वाक्यं लक्ष्मणश्श्रुत्वा व्रीळितः प्रत्युवाच ह ।
"त्वां मन्ये द्रष्टु मायातः पिता दशरथ स्स्वयम् ॥" २०
व्रीळितं लक्ष्मणं दृष्ट्वा राघवः प्रत्युवाच ह ।
"एष मन्ये महाबाहु रिहास्मान् द्रष्टुमागतः ॥ २१
अथवा नौ ध्रुवं मन्ये मन्यमानः सुखोचितौ ।
वनवास मनुध्याय गृहाय प्रतिनेष्यति ॥ २२
इमां वाऽप्येष वैदेहीमत्यन्तसुखसेविनीम् ।
पिता मे राघव श्श्रीमान्वनादादाय यास्यति ॥ २३
एतौ तौ सम्प्रकाशेते गोत्रवन्तौ मनोरमौ ।
वायुवेगसमौ वीर! जवनौ तुरगोत्तमौ ॥ २४
स एष सुमहाकायः कम्पते वाहिनीमुखे ।
नागश्शत्रुंजयो नाम वृद्ध स्तातस्य धीमतः ॥ २५
न तु पश्यामि तच्छत्रं पाण्डुरं लोकसत्कृतम् ।
पितुर्दिव्यं महाबाहो! संशयो भवतीह मे ॥ २६
वृक्षाग्रा दवरोह त्वं कुरु लक्ष्मण! मद्वचः ।"
इतीव रामो धर्मात्मा सौमित्रिं तमुवाच ह ॥ २७
अवतीर्यतु सालाग्रा त्तस्मा त्स समितिंजयः ।
लक्ष्मणः प्राञ्जलि र्भूत्वा तस्थौ रामस्य पार्श्वतः ॥ २८
भरतेनापि संदिष्टा 'सम्मर्दो न भवे'दिति ।
समन्तात्तस्य शैलस्य सेनावास मकल्पयत् ॥ २९
अध्यर्धं मिक्ष्वाकुचमूर्योजनं पर्वतस्य सा ।
पार्श्वे न्यविशदावृत्य गजवाजिरथाकुला ॥ ३०

सा चित्रकूटे भरतेन सेना धर्मं पुरस्कृत्य विधूय दर्पम् ।
प्रसादनार्थं रघुनन्दनस्य विराजते नीतिमता प्रणीता ॥ ३१

इति श्रीमदयोध्याकाण्डे सप्तनवतितमस्सर्गः ॥

---

## ॥ अष्टनवतितमस्सर्गः ॥

निवेश्य सेनां तु विभुः पद्भ्यां पादवतां वरः ।
अभिगन्तुं स काकुत्स्थ मियेष गुरुवर्तकम् ॥ १
निविष्टमात्रे सैन्ये तु यथोद्देशं विनीतवत् ।
भरतो भ्रातरं वाक्यं शत्रुघ्न मिदमब्रवीत् ॥ २
"क्षिप्रं वनमिदं सौम्य! नरसंघै स्समंततः ।
लुब्धै श्च सहितै रेभिः त्व मन्वेषितु मर्हसि ॥ ३
गुहो ज्ञातिसहस्रेण शरचापासिधारिणा ।
समन्वेषतु काकुत्स्थावस्मिन्परिवृत स्स्वयम् ॥ ४
अमात्यै स्सह पौरैश्च गुरुभिश्च द्विजातिभिः ।
वनं सर्वं चरिष्यामि पद्भ्यां परिवृत स्स्वयम् ॥ ५
यावन्नरामं द्रक्ष्यामि लक्ष्मणं वा महाबलम् ।
वैदेहीं च महाभागां न मे शान्ति र्भविष्यति ॥ ६
यावन्न चन्द्रसंकाशं द्रक्ष्यामि शुभमाननम् ।
भ्रातुः पद्मपलाशाक्षं न मे शान्ति र्भविष्यति ॥ ७
यावन्न चरणौ भ्रातुः पार्थिवव्यञ्जनान्वितौ ।
शिरसा धारयिष्यामि न मे शान्ति र्भविष्यति ॥ ८

यावन्न राज्ये राज्यार्हः पितृपैतामहे स्थितः ।
अभिषेकजलक्लिन्नो न मे शान्तिं भविष्यति ॥ ९
सिद्धार्थः खलु सौमित्रि र्यश्चन्द्रविमलोपमम् ।
मुखं पश्यति रामस्य राजीवाक्षं महाद्युति ॥ १०
कृतकृत्या महाभागा वैदेही जनकात्मजा ।
भर्तारं सागरान्तायाः पृथिव्या याऽनुगच्छति ॥ ११
सुभग श्चित्रकूटोऽसौ गिरिराजोपमो गिरिः ।
यस्मिन्वसति काकुत्स्थः कुबेर इव नन्दने ॥ १२
कृतकार्यमिदं दुर्गं वनं व्यालनिषेवितम् ।
यदध्यास्ते महातेजा रामश्शस्त्रभृतां वरः ॥" १३
एव मुक्त्वा महातेजा भरतः पुरुषर्षभः ।
पद्भ्यामेव महाबाहुः प्रविवेश महद्वनम् ॥ १४
स तानि द्रुमजालानि जातानि गिरिसानुषु ।
पुष्पिताग्राणि मध्येन जगाम वदतां वरः ॥ १५
स गिरे श्चित्रकूटस्य सालमासाद्य पुष्पितम् ।
रामाश्रमगतस्याग्नेर्ददर्श ध्वजमुच्छ्रितम् ॥ १६
तं दृष्ट्वा भरतश्श्रीमान्मुमोह सहबान्धवः ।
'अत्र राम' इति ज्ञात्वा गतःपारमिवाम्भसः ॥ १७
स चित्रकूटे तु गिरौ निशाम्य रामाश्रमं पुण्यजनोपपन्नम् ।
गुहेन सार्धं त्वरितो जगाम पुनर्निवेश्यैव चमूं महात्मा ॥ १८

इति श्रीमदयोध्याकाण्डे अष्टनवतितमस्सर्गः ॥

## ॥ एकोनशततमस्सर्गः ॥

निविष्टायां तु सेनायामुत्सुको भरत स्तदा ।
जगाम भ्रातरं द्रष्टुं शत्रुघ्न मनुदर्शयन् ॥ १
ऋषिं वसिष्ठं सन्दिश्य 'मातॄर्मे शीघ्रमानय' ।
इति त्वरितमग्रे स जगाम गुरुवत्सलः ॥ २
सुमन्त्रस्त्वपि शत्रुघ्न मदूरादन्वपद्यत ।
रामदर्शनजस्तर्षो भरतस्येव तस्य च ॥ ३
गच्छन्नेवाथ भरतस्तापसालयसंस्थिताम् ।
भ्रातुः पर्णकुटीं श्रीमानुटजं च ददर्श ह ॥ ४
शालायास्त्वग्रतस्तस्या ददर्श भरत स्तदा ।
काष्ठानि चावभग्नानि पुष्पाण्यपचितानि च ॥ ५
स लक्ष्मणस्य रामस्य ददर्शाऽश्रममीयुषः ।
कृतं वृक्षेष्वभिज्ञानं कुशचीरैः क्वचित्क्वचित् ॥ ६
ददर्श च वने तस्मिन्महत स्संचयान्कृतान् ।
मृगाणां महिषाणां च करीषैश्शीतकारणात् ॥ ७
गच्छन्नेव महाबाहुर्द्युतिमान्भरत स्तदा ।
शत्रुघ्नं चाब्रवीद्धृष्ट स्तानमात्यांश्च सर्वशः ॥ ८
"मन्ये प्राप्ताःस्म तं देशं भरद्वाजोऽय मब्रवीत् ।
नातिदूरे हि मन्येऽहं नदीं मन्दाकिनी मितः ॥ ९
उच्चैर्बद्धानि चीराणि लक्ष्मणेन भवेदयम् ।
अभिज्ञानकृतःपन्था विकाले गन्तु मिच्छता ॥ १०

इदं चोदात्तदन्तानां कुञ्जराणां तरस्विनाम् ।
शैलपार्श्वे परिक्रान्त मन्योन्यमभिगर्जताम् ॥ ११
यमेवाधातु मिच्छन्ति तापसा स्सततं वने ।
तस्यासौ दृश्यते धूमस्संकुलः कृष्णवर्त्मनः ॥ १२
अत्राहं पुरुषव्याघ्रं गुरुसंस्कारकारिणम् ।
आर्यं द्रक्ष्यामि संहृष्टो महर्षिमिव राघवम् ॥ १३
अथ गत्वा मुहूर्तन्तु चित्रकूटं स राघवः ।
मन्दाकिनी मत्र प्राप्तस्तं जनं चेद मब्रवीत् ॥ १४
"जगत्यां पुरुषव्याघ्र! आस्ते वीरासने रतः ।
जनेन्द्रो निर्जनं प्राप्य धिङ्मे जन्म सजीवितम् ॥ १५
मत्कृते व्यसनं प्राप्तो लोकनाथो महाद्युतिः ।
सर्वान्कामान्परित्यज्य वने वसति राघवः ॥ १६
इति शोकसमाक्रुष्टः पादे ष्वद्य प्रसादयन् ।
रामस्यानिपतिष्यामि सीतायालक्ष्मणस्य च ॥" १७
एवं स विलपं स्तस्मिन्वने दशरथात्मजः ।
ददर्श महतीं पुण्यां पर्णशालां मनोरमाम् ॥ १८
सालतालाश्वकर्णानां पर्णैर्बहुभि रावृताम् ।
विशालां मृदुभि स्तीर्णां कुशैर्वेदिमिवाध्वरे ॥ १९
शक्रायुधनिकाशैश्च कार्मुकै र्भारसाधनैः ।
रुक्मपृष्ठैर्महासारै श्शोभितां शत्रुबाधकैः ॥ २०
अर्करश्मिप्रतीकाशै र्घोरै स्तूणीगतै श्शरैः ।
शोभितां दीप्तवदनै स्सर्पैः भोगवतीं मिव ॥ २१

महारजतवासोभ्या मसिभ्यां च विराजितम् ।
रुक्मबिन्दुविचित्राभ्यां चर्मभ्यां चापि शोभिताम् ॥ २२
गोधाङ्गुलित्रै रासक्तै श्चित्रैः क
अरिसंघै रनाधृष्यां मृगै स्सिंहगुहामिव ॥ २३
प्रागुदक्प्रवणां वेदिं विशालां दीप्तपावकाम् ।
ददर्श भरतस्तत्र पुण्यां रामनिवेशने ॥ २४
निरीक्ष्य स मुहूर्तं तु ददर्श भरतो गुरुम् ।
उटजे राम मासीनं जटामण्डलधारिणम् ॥ २५
तं तु कृष्णाजिनधरं चीरवल्कलवाससम् ।
ददर्श राम मासीन मभितः पावकोपमम् ॥ २६
सिंहस्कन्धं महाबाहुं पुण्डरीकनिभेक्षणम् ।
पृथिव्या स्सागरान्ताया भर्तारं धर्मचारिणम् ॥ २७
उपविष्टं महाबाहुं ब्रह्माण मिव शाश्वतम् ।
स्थण्डिले दर्भसंस्तीर्णे सीतया लक्ष्मणेन च ॥ २८
तं दृष्ट्वा भरत श्श्रीमान् दुःखशोकपरिप्लुतः ।
अभ्यधावत धर्मात्मा भरतः कैकयीसुतः ॥ २९
दृष्ट्वैव विललापाऽऽर्तो बाष्पसंदिग्धया गिरा ।
अशक्नुवन् धारयितुं धैर्या द्वचन मब्रवीत् ॥ ३०
"यस्संसदि प्रकृतिभि र्भवेद्युक्त उपासितुम् ।
वन्यै र्मृगै रुपासीना स्सोऽय मास्ते ममाग्रजः ॥ ३१
वासोभि र्बहुसाहस्रैर्यो महात्मा पुरोचितः ।
मृगाजिने सोऽय मिह प्रवस्ते धर्म माचरन् ॥ ३२

अधारयद्यो विविधाश्चित्रा स्सुमनस स्सदा ।
सोऽयं जटाभार मिमं वहते राघवः कथम् ॥ ३३
यस्य यज्ञै र्यथोद्दिष्टै र्युक्तो धर्मस्य संचयः ।
शरीरक्लेश संभूतं स धर्मं परिमार्गते ॥ ३४
चन्दनेन महार्हेण यस्याङ्गमुपसेवितम् ।
मलेन तस्याङ्ग मिदं कथ मार्यस्य सेव्यते ॥ ३५
मन्निमित्त मिदं दुःखं प्राप्तो राम सुखोचितः ।
धिग्जीवितं नृशंसस्य मम लोकविगर्हितम् ॥" ३६
इत्येवं विलपन्दीनः प्रस्विन्नमुखपङ्कजः ।
पादावप्राप्य रामस्य पपात भरतो रुदन् ॥ ३७
दुःखाभितप्तो भरतो राजपुत्रो महाबलः ।
उक्त्वा'ऽऽर्ये'ति सकृद्दीनं पुनर्नो वाच किंचन ॥ ३८
बाष्पापिहितकण्ठश्च प्रेक्ष्य रामं यशस्विनम् ।
'आर्ये' त्येवाथ संक्रुश्य व्याहर्तुं नाशकत्तदा ॥ ३९
शत्रुघ्न श्चापि रामस्य ववन्दे चरणौ रुदन् ।
ता वुभौ स समालिङ्ग्य रामोऽप्यश्रूण्यवर्तयत् ॥ ४०
तत स्सुमन्त्रेण गुहेन चैव समीयतू राजसुतावरण्ये ।
दिवाकरश्चैव निशाकरश्च यथाऽम्बरे शुक्रबृहस्पतिभ्याम् ॥ ४१
तान्पार्थिवान्वारणयूथपाभान्समागतां स्तत्र महत्यरण्ये ।
वनौकस स्तेऽपि समीक्ष्य सर्वेऽप्यश्रूण्यमुञ्चन्प्रविहाय हर्षम् ॥

इति श्रीमदयोध्याकाण्डे एकोनशततमस्सर्गः ॥

## ॥ षोडशोत्तरशततमस्सर्गः ॥

प्रतिप्रयाते भरते वसन्रामस्तपोवने ।
लक्षयामास सोद्वेग मथौस्तुक्यं तपस्विनाम् ॥ १
ये तत्र चित्रकूटस्य पुरस्तात्तापसाश्रमे ।
राममाश्रित्य निरता स्तानलक्षयदुत्सुकान् ॥ २
नयनै र्भ्रुकुटीभिश्च रामं निर्दिश्य शङ्किताः ।
अन्योन्य मुपजल्पन्त श्शनैश्चक्रुर्मिथः कथाः ॥ ३
तेषामौस्तुक्य मथालक्ष्य राम स्त्वात्मनि शङ्कितः ।
कृताञ्जलि रुवाचेद मृषिं कुलपतिं ततः ॥ ४
"न कच्चि द्भगव! न्किंचि त्पूर्ववृत्त मिदं मयि ।
दृश्यते विकृतं येन विक्रियन्ते तपस्विनः ॥ ५
प्रमादा च्चरितं कच्चित्किंचिन्नावरजस्य मे ।
लक्ष्मणस्यर्षिभि र्दृष्टं नानुरूपमिवात्मनः ॥ ६
कच्चिच्छुश्रूषमाणाव श्शुश्रूषणपरा मयि ।
प्रमदाभ्युचितां वृत्तिं सीता युक्तं न वर्तते ॥" ७
अथर्षि र्जरयावृद्ध स्तपसाच जरांगतः ।
वेपमान इवोवाच रामं भूतदयापरम् ॥ ८
"कुतः कल्याणसत्त्वायाः कल्याणाभिरते स्तथा ।
चलनं तात! वैदेह्या स्तपस्विषु विशेषतः ॥ ९
त्वन्निमित्तमिदं तावत्तापसान्प्रति वर्तते ।
रक्षोभ्य स्तेन संविग्नाः कथयन्ति मिथः कथाः ॥ १०

रावणावरजः कश्चि त्खरो नामेह राक्षसः ।
उत्पाट्य तापसान्सर्वा ञ्जनस्थाननिकेतनान् ॥ ११
धृष्ट श्च जितकाशी च नृशंसः पुरुषादकः ।
अवलिप्त श्च पाप श्च त्वां च तात! न मृष्यते ॥ १२
त्वं यदा प्रभृति ह्यस्मि न्नाश्रमे तात! वर्तसे ।
तदा प्रभृति रक्षांसि विप्रकुर्वन्ति तापसान् ॥ १३
दर्शयन्ति हि बीभत्सैः क्रूरै र्भीषणकै रपि ।
नानारूपै र्विरूपै श्च रूपैर्विकृतदर्शनैः ॥ १४
अप्रशस्तै रशुचिभि स्सम्प्रयोज्य च तापसान् ।
प्रतिघ्नन्त्यपरान्क्षिप्रमनार्याः पुरतः स्थिताः ॥ १५
तेषु तेष्वाश्रमस्थानेष्वबुद्ध मवलीय च ।
रमन्ते तापसां स्तत्र नाशयन्तोऽल्पचेतसः ॥ १६
अपक्षिपन्ति स्रुग्भाण्डा नग्नीन्सिञ्चन्ति वारिणा ।
कलशां श्च प्रमृद्नन्ति हवने समुपस्थिते ॥ १७
तैर्दुरात्मभि राक्रान्ता नाश्रमान्प्राजिहासवः ।
गमनायान्यदेशस्य चोदयन्त्यृषयोऽद्य माम् ॥ १८
तत्पुरा राम! शारीरा मुपहिंसां तपस्विषु ।
दर्शयन्ति हि दुष्टास्ते त्यक्ष्याम इम माश्रमम् ॥ १९
बहुमूलफलं चित्र मतिदूरादितो वनम् ।
पुराणाश्रम मेवाहं श्रयिष्ये सगणः पुनः ॥ २०
खरस्त्वय्यपि चायुक्तं पुरा तात! प्रवर्तते ।
सहास्माभि रितो गच्छ यदि बुद्धिः प्रवर्तते ॥ २१

स कळत्रस्य सन्देहो नित्यं यत्तस्य राघव! ।
समर्थस्यापि हि सतो वासो दुःख मिहाऽद्यते ॥ २२

इत्युक्तवन्तं रामस्तं राजपुत्र स्तपस्विनम् ।
न शशाकोत्तरै र्वाक्यै रवरोद्धुं समुत्सुकम् ॥ २३

अभिनन्द्य समापृच्छ्य समाधाय च राघवम् ।"
स जगामाऽश्रमं त्यक्त्वा कुशलैः कुलपति स्सह ॥ २४

रामस्संसाध्यत्वृषिगण मनुगमनाद्देशात्तस्मात्कुलपति मभिवाद्य ऋषिम्।
सम्यक्प्रीतै स्तै रनुमत उपदिष्टार्थः पुण्यं वासाय स्वनिलय मुपसंपेदे॥

आश्रमं त्वृषि विरहितं प्रभुः क्षणमपि न विजहौ स राघवः ।
राघवं हि सतत मनुगता स्तापसा श्चार्षचरितधृतगुणाः ॥ २६

इति श्रीमदयोध्याकाण्डे षोडशोत्तरशततमस्सर्गः ॥

---

## ॥ सप्तदशोत्तरशततमस्सर्गः ॥

राघवस्त्वथ यातेषु तपस्विषु विचिन्तयन् ।
न तत्रारोचय द्वासं कारणै र्बहुभिस्तदा ॥ १

"इह मे भरतो दृष्टो मातर श्च सनागराः ।
सा च मे स्मृतिरन्वेति तान्नित्यमनुशोचतः ॥ २

स्कन्धावारनिवेशेन तेन तस्य महात्मनः ।
हयहस्तिकरीषै श्च उपमर्दः कृतोभृशम् ॥ ३

तस्मादन्यत्र गच्छाम" इति संचिन्त्य राघवः ।
प्रातिष्ठत स वैदेह्या लक्ष्मणेन च संगतः ॥ ४

सोऽत्रे राश्रममासाद्य तं ववन्दे महायशाः ।
तं चापि भगवानत्रिः पुत्रवत्प्रत्यपद्यत ॥ ५
स्वयमातिथ्य मादिश्य सर्वमस्य सुसत्कृतम् ।
सौमित्रिं च महाभागां सीतां च समसान्त्वयत् ॥ ६
पत्नीं च समनुप्राप्तां वृद्धामामन्त्र्य सत्कृताम् ।
सान्त्वयामास धर्मज्ञ स्सर्वभूतहिते रतः ॥ ७
अनसूयां महाभागां तापसीं धर्मचारिणीम् ।
"प्रतिगृह्णीष्व वैदेही" मब्रवी दृषिसत्तमः ॥ ८
रामाय चाऽचचक्षेतां तापसीं धर्मचारिणीम् ।
"दशवर्षाण्यनावृष्ट्या दग्धे लोके निरन्तरम् ॥ ९
यया मूलफले सृष्टे जाह्नवी च प्रवर्तिता ।
उग्रेण तपसा युक्ता नियमै श्चाप्यलङ्कृता ॥ १०
दशवर्षसहस्राणि तया तप्तं महत्तपः ।
अनसूया व्रतैस्स्नाता प्रत्यूहाश्च निवर्तिताः ॥ ११
देवकार्य निमित्तं च यया सन्त्वरमाणया ।
दशरात्रं कृता रात्रि स्सेयं मातेव तेऽनघ! ॥ १२
तामिमां सर्वभूतानां नमस्कार्यां यशस्विनीम् ।
अभिगच्छतु वैदेही वृद्धा मक्रोधनां सदा ॥ १३
'अनसू'येति यालोके कर्मभिः ख्यातिमागता ।"
एवं ब्रुवाणं त मृषिं 'तथे'त्युक्त्वा स राघवः ॥ १४
सीता मुवाच धर्मज्ञा मिदं वचन मुत्तमम् ।
"राजपुत्रि! श्रुतमिदं मुनेरस्य समीरितम् ॥ १५

श्रेयोऽर्थ मात्मनश्शीघ्र मभिगच्छ तपस्विनीम् ।"
[तां शीघ्र मभिगच्छत्व मभिगम्यां तपस्विनीम् ॥] १६
सीता त्वेत द्वचश्श्रुत्वा राघवस्य हितैषिणः ।
ता मत्रिपत्नीं धर्मज्ञा मभिचक्राम मैथिली ॥ १७
शिथिलां वलितां वृद्धां जरापाण्डुरमूर्धजाम् ।
सततं वेपमानाङ्गीं प्रवाते कदळी यथा ॥ १८
तां तु सीता महाभागा मनसूयां पतिव्रताम् ।
अभ्यवादय दव्यग्रा स्वं नाम समुदाहरत् ॥ १९
अभिवाद्य च वैदेही तापसीं तामनिन्दिताम् ।
बद्धाञ्जलिपुटा हृष्टा पर्यपृच्छ दनामयम् ॥ २०
ततस्सीतां महाभागां दृष्ट्वा तां धर्मचारिणीम् ।
सान्त्वयन्त्यब्रवी द्धृष्टा "दिष्ट्या धर्म मवेक्षसे ॥ २१
त्यक्त्वा ज्ञातिजनं सीते! मान मृद्धिं च भामिनि! ।
अवरुद्धं वने रामं दिष्ट्या त्व मनुगच्छसि ॥ २२
नगरस्थो वनस्थो वा पापो वा यदि वा शुभः ।
यासां स्त्रीणां प्रियो भर्ता तासां लोका महोदयाः ॥ २३
दुश्शीलः कामवृत्तो वा धनै र्वा परिवर्जितः ।
स्त्रीणामार्य स्वभावानां परमं दैवतं पतिः ॥ २४
नातो विशिष्टं पश्यामि बान्धवं विमृशन्त्यहम् ।
सर्वत्रयोग्यं वैदेहि! तपःकृत मिवाव्ययम् ॥ २५
नत्वेव मवगच्छन्ति गुणदोष मसत्स्त्रियः ।
कामवक्तव्य हृदया भर्तृनाथा श्चरन्ति याः ॥ २६

प्राप्नुवन्त्ययशश्चैव धर्मभ्रंशंच मैथिलि! ।
अकार्यवशमापन्नाः स्त्रियो याः खलु तद्विधाः ॥ २७
त्वद्विधा स्तु गुणैर्युक्ता दृष्टलोकपरावराः ।
स्त्रिय स्स्वर्गे चरिष्यन्ति यथा धर्मकृतस्तथा ॥ २८
तदेवमेनं त्व मनुव्रता सती पतिव्रतानां समयानुवर्तिनी ।
भवस्व भर्तु स्सहधर्मचारिणी यशश्च धर्मं च तत स्समाप्स्यासि ॥"

इति श्रीमदयोध्याकाण्डे सप्तदशोत्तरशततमस्सर्गः ॥

## ॥ अष्टादशोत्तरशततमस्सर्गः ॥

सात्वेव मुक्ता वैदेही अनसूयाऽनसूयया ।
प्रतिपूज्य वचो मन्दं प्रवक्तु मुपचक्रमे ॥ १
नैतदाश्चर्य मार्याया यन्मां त्वमभिभाषसे ।
विदितन्तु ममाप्येतद्यथानार्याः पतिर्गुरुः ॥ २
यद्यप्येष भवेद्भर्ता ममार्ये! वृत्तवर्जितः ।
द्वैध मुपचतव्य स्तथाप्येष मया भवत् ॥ ३
किं पुनर्यो गुणश्लाघ्य स्सानुक्रोशो जितेन्द्रियः ।
स्थिरानुरागो धर्मात्मा मातृवत्पितृवत्प्रियः ॥ ४
यां वृत्तिं वर्तते रामः कौसल्यायां महाबलः ।
तामेव नृपनारीणामन्यासा मपि वर्तते ॥ ५
सकृद्दृष्टास्वपि स्त्रीषु नृपेण नृपवत्सलः ।
मातृवद्वर्तते वीरो मानमुत्सृज्य धर्मवित् ॥ ६

आगच्छन्त्या श्च विजनं वनमेवं भयावहम् ।
समाहितं मे श्वश्र्वाच हृदये तद्धृतं महत् ॥ ७
पाणिप्रदानकाले च यत्पुरात्वग्निसन्निधौ ।
अनुशिष्टा जनन्याऽस्मि वाक्यं तदपि मे धृतम् ॥ ८
नवीकृतं तु तत्सर्वं वाक्यैस्ते धर्मचारिणि ! ।
पतिशिश्रूषणान्नार्यस्तपो नान्यद्विधीयते ॥ ९
सावित्री पतिशिश्रूषां कृत्वा स्वर्गे महीयते ।
तथा वृत्तिश्च याता त्वं पतिशिश्रूषयादिवम् ॥ १०
वरिष्ठा सर्वनारीणा मेषा च दिवि देवता ।
रोहिणी न विना चन्द्रं मुहूर्तमपि दृश्यते ॥ ११
एवंविधाश्च प्रवराः स्त्रियो भर्तृदृढव्रताः ।
देवलोके महीयन्ते पुण्येन स्वेन कर्मणा ॥" १२
ततोऽनसूया संहृष्टा श्रुत्वोक्तं सीतया वचः ।
शिरस्याघ्राय चोवाच मैथिलीं हर्षयन्त्युत ॥ १३
"नियमै र्विविधै राप्तं तपो हि महदस्ति मे ।
तत्संश्रित्य बलं सीते ! छन्दये त्वां शुचिव्रते ! ॥ १४
उपपन्नं मनाज्ञंच वचनं तव मैथिलि ! ।
प्रीताचास्म्युचितं किं ते करवाणि ब्रवीहिमे ॥" १५
तस्यास्तद्वचनं श्रुत्वा विस्मिता मन्दविस्मया ।
'कृत' मित्यब्रवीत्सीता तपोबलसमन्विताम् ॥ १६
सा त्वेवमुक्ता धर्मज्ञा तया प्रीततराऽभवत् ।
"सफलंच प्रहर्षंते हन्तसीते ! करोम्यहम् ॥ १७

इदं दिव्यं वरं माल्यं वस्त्रमाभरणानिच ।
अङ्गरागंच वैदेहि! महार्हं चानुलेपनम् ॥ १८
मयादत्तमिदं सीते! तव गात्राणि शोभयेत् ।
अनुरूप मसंश्लिष्टं नित्यमेवभविष्यति ॥ १९
अङ्गरागेण दिव्येन लिप्ताङ्गी जनकात्मजे ।
शोभयिष्यसि भर्तारं यथा श्रीर्विष्णु मव्ययम् ॥" २०
सा वस्त्र मङ्गरागंच भूषणानि स्रजस्तथा ।
मैथिली प्रतिजग्राह प्रीतिदान मनुत्तमम् ॥ २१
प्रतिगृह्यच तत्सीता प्रीतिदानं यशस्विनी ।
श्लिष्टाञ्जलिपुटा तत्र समुपास्त तपोधनाम् ॥ २२
तथा सीता मुपासीना मनसूया दृढव्रता ।
वचनं प्रष्टुमारेभे कांचित्प्रियकथा मनु ॥ २३
"स्वयंवरे किल प्राप्ता त्व मनेन यशस्विना ।
राघवेणेति मे सीते! कथाश्रुति मुपागता ॥ २४
तां कथां श्रोतु मिच्छामि विस्तरेणच मैथिलि! ।
यथाऽनुभूतं कार्त्स्न्येन तन्मेत्वं वक्तु मर्हसि ॥" २५
एवमुक्तातु सा सीता तां ततो धर्मचारिणीम् ।
'श्रूयता' मिति चोक्त्वावै कथयामास तां कथाम् ॥ २६
"मिथिलाधिपति र्वीरो जनको नाम धर्मवित् ।
क्षत्रधर्मे ह्यभिरतो न्यायत श्शास्ति मेदिनीम् ॥ २७
तस्य लाङ्गलहस्तस्य कर्षतः क्षेत्रमण्डलम् ।
अहं किलोत्थिता भित्त्वा जगतीं नृपते स्सुता ॥ २८

न मां दृष्ट्वा नरपति मुष्टिविक्षेपतत्परः ।
पांसुकुण्ठितसर्वाङ्गीं जनको विस्मितोऽभवत् ॥ २९
अनपत्येनच स्नेहादङ्कमारोप्यच स्वयम् ।
'ममेयं तनये' त्युक्त्वा स्नेहो मयि निपातितः ॥ ३०
अन्तरिक्षेच वागुक्ताऽप्रतिमाऽमानुषी किल ।
'एवमेतन्नरपते धर्मेण तनया तव ॥' ३१
ततः प्रहृष्टो धर्मात्मा पिता मे मिथिलाधिपः ।
अवाप्तो विपुला मृद्धिं मा मवाप्य नराधिपः ॥ ३२
दत्ताचास्मीष्टवदेव्यै ज्येष्ठायै पुण्यकर्मणा ।
तया सम्भाविता चास्मि स्निग्धया मातृसौहृदात् ॥ ३३
पतिसंयोगसुलभं वयो दृष्ट्वातु मे पिता ।
चिन्ता मभ्यगम द्दीनो वित्तनाशादिवाधनः ॥ ३४
'सदृशाच्चापकृष्टाच्च लोके कन्यापिता जनात् ।
प्रधर्षणा मवाप्नोति शक्रेणापि समो भुवि ।' ३५
तां धर्षणा मदूरस्थां दृष्ट्वा चात्मनि पार्थिवः ।
चिन्तार्णवगतः पारं नाससादाप्लवो यथा ॥ ३६
अयोनिजां हि मां ज्ञात्वा नाध्यगच्छद्विचिन्तयन् ।
सदृशंचानुरूपंच महीपालः पतिं मम ॥ ३७
तस्य बुद्धि रियं जाता चिन्तयानस्य सन्ततम् ।
'स्वयंवरं तनूजायाः करिष्या' मीति धीमतः ॥ ३८
महायज्ञे तदा तस्य वरुणेन महात्मना ।
दत्तं धनुर्वरं प्रीत्या तूणीचाक्षयसायकौ ॥ ३९

असंचाल्यं मनुष्यैश्च यत्नेनापिच गौरवात् ।
तन्न शक्ता नमयितुं स्वप्नेष्वपि नराधिपाः ॥ ४०
तद्धनुः प्राप्य मे पित्रा व्याहृतं सत्यवादिना ।
समवाये नरेन्द्राणां पूर्वं मामन्त्र्य पार्थिवान् ॥ ४१
'इदंच धनु रुद्यम्य सज्यं यः कुरुते नरः ।
तस्य मे दुहिता भार्या भविष्यति न संशयः ॥' ४२
तच्च दृष्ट्वा धनु श्श्रेष्ठं गौरवाद्गिरिसन्निभम् ।
अभिवाद्य नृपा जग्मुरशक्ता स्तस्य तोलने ॥ ४३
सुदीर्घस्य तु कालस्य राघवोऽयं महाद्युतिः ।
विश्वामित्रेण सहितो यज्ञं द्रष्टुं समागतः ॥ ४४
लक्ष्मणेन सहभ्रात्रा राम स्सत्यपराक्रमः ।
विश्वामित्र स्तु धर्मात्मा मम पित्रा सुपूजितः ॥ ४५
प्रोवाच पितरं तत्र 'भ्रातरौ रामलक्ष्मणौ ।
सुतौ दशरथस्येमौ धनुर्दर्शनकाङ्क्षिणौ ॥ ४६
धनुर्दर्शय रामाय राजपुत्राय दैविकम् ।'
इत्युक्तस्तेन विप्रेण तद्धनु स्समुपानयत् ॥ ४७
[तद्धनु दर्शयामास राजपुत्राय दैविकम् ॥]
निमेषान्तरमात्रेण तदाऽनम्य स वीर्यवान् ।
ज्यां समारोप्य झडिति पूरयामास वीर्यवत् ॥ ४८
तेन पूरयता वेगान्मध्ये भग्नं द्विधाधनुः ।
तस्य शब्दोऽभवद्भीमः पतितस्याशनेरिव ॥ ४९

ततोऽहं तत्र रामाय पित्रा सत्याभिसन्धिना ।
निश्चिता दातुमुद्यम्य जलभाजन मुत्तमम् ॥ ५०
दीयमानां न तु तदा प्रतिजग्राह राघवः ।
अविज्ञाय पितु श्छन्द मयोध्याधिपतेः प्रभोः ॥ ५१
तत श्श्वशुरमामन्त्र्य वृद्धं दशरथं नृपम् ।
मम पित्रा त्वहं दत्ता रामाय विदितात्मने ॥ ५२
मम चैवानुजा साध्वी ऊर्मिळा प्रियदर्शना ।
भार्यार्थे लक्ष्मणस्यापि दत्ता पित्रा मम स्वयम् ॥ ५३
एवं दत्तास्मि रामाय तदा तस्मिन्स्वयंवरे ।
अनुरक्ताऽस्मि धर्मेण पतिं वीर्यवतां वरम् ॥ ५४

इति श्रीमदयोध्याकाण्डे अष्टादशोत्तरशततमस्सर्गः ॥

## ॥ एकोनविंशोत्तरशततमस्सर्गः ॥

अनसूया तु धर्मज्ञा श्रुत्वा तां महतीं कथाम् ।
पर्यष्वजत बाहुभ्यां शिरस्याघ्राय मैथिलीम् ॥ १
व्यक्ताक्षरपदं चित्रं भाषितं मधुरं त्वया ।
"यथा स्वयंवरं वृत्तं तत्सर्वं हि श्रुतं मया ॥ २
रमेऽहं कथया ते तु दृढं मधुरभाषिणि! ।
रवि रस्तङ्गत श्श्रीमा नुपोह्य रजनीं शिवाम् ॥ ३
दिवसं प्रतिकीर्णानामाहारार्थं पतत्रिणाम् ।
सन्ध्याकाले निलीनानां निद्रार्थं श्रूयते ध्वनिः ॥ ४

एते चाप्यभिषेकार्द्रा मुनयः कलशोद्यताः ।
सहिता उपवर्तन्ते सलिलाप्लुतवल्कलाः ॥ ५
ऋषीणा मग्निहोत्रेषु हुतेषु विधिपूर्वकम् ।
कपोताङ्गारुणो धूमो दृश्यते पवनोद्धतः ॥ ६
अल्पपर्णाहि तरवो घनीभूता स्समन्ततः ।
विप्रकृष्टेऽपि देशेऽस्मि न्न प्रकाशन्ति वै दिशः ॥ ७
रजनीचरसत्त्वानि प्रचरन्ति समन्ततः ।
तपोवनमृगाह्येते वेदितीर्थेषु शेरते ॥ ८
सम्प्रवृत्ता निशा सीते! नक्षत्रसमलङ्कृता ।
ज्योत्स्नाप्रावरण श्चन्द्रो दृश्यतेऽभ्युदितोऽम्बरे ॥ ९
गम्यता मनुजानामि रामस्यानुचरी भव ।
कथयन्त्याहि मधुरं त्वयाऽहं परितोषिता ॥ १०
अलङ्कुरु च तावत्त्वं प्रत्यक्षं मम मैथिलि! ।
प्रीतिं जनय मे वत्से! दिव्यालङ्कारशोभिता ॥" ११
सा तदा समलङ्कृत्य सीता सुरसुतोपमा ।
प्रणम्य शिरसा तस्यै रामं त्वभिमुखी ययौ ॥ १२
तथानुभूषितां सीतां ददर्श वदतां वरः ।
राघवः प्रीतिदानेन तपस्विन्या जहर्ष च ॥ १३
न्यवेदयत्तत स्सर्वं सीता रामाय मैथिली ।
प्रीतिदानं तपस्विन्या वसनाभरणस्रजम् ॥ १४
प्रहृष्ट स्त्वभव द्रामो लक्ष्मणश्च महारथः ।
मैथिल्या स्सत्क्रियां दृष्ट्वा मानुषेषु सुदुर्लभाम् ॥ १५

तत स्तां शर्वरीं प्रीतः पुण्यां शशिनिभाननः ।
अर्चितस्तापसै स्सिद्धै रुवास रघुनन्दनः ॥ १६

तस्यां रात्र्यां व्यतीताया मभिषिच्य हुताग्निकान् ।
आपृच्छेतां नरव्याघ्रौ तापसान्वनगोचरान् ॥ १७

ता वूचुस्ते वनचरा स्तापसा धर्मचारिणः ।
"वनस्य तस्य संचारं राक्षसै स्समभिप्लुतम् ॥ १८

रक्षांसि पुरुषादानि नानारूपाणि राघव! ।
वसन्त्यस्मिन्महारण्ये व्यालाश्च रुधिराशनाः ॥ १९

उच्छिष्टं वा प्रमत्तं वा तापसं धर्मचारिणम् ।
अदन्त्यस्मिन्महारण्ये तान्निवारय राघव! ॥ २०

एष पन्था महर्षीणां फलान्याहरतां वने ।
अनेन तु वनं दुर्गं गन्तुं राघव! ते क्षमम् ॥" २१

इतीव तैः प्राञ्जलिभि स्तपस्विभि र्द्विजैः कृतस्वस्त्ययनः परन्तपः ।
वनं सभार्यः प्रविवेश राघव स्सलक्ष्मण स्सूर्य इवाभ्रमण्डलम्॥ २२

इत्यार्षे श्रीमद्रामायणे आदिकाव्ये वाल्मीकीये
चतुर्विंशत्सहस्रिकायां संहिताया मयोध्याकाण्डे एकोनविंशोत्तरशततमस्सर्गः ॥

Printed by V. Ramaswamy Sastrulu & Sons, at 'Vavilla Press', Madras.

# ARANYAKANDAM

OF

# SRIMADRAMAYANAM



MADRAS

V. RAMASWAMY SASTRULU & SONS

*292, Esplanade.*

**1929.**

॥ श्रीरस्तु ॥

श्रीमद्वाल्मीकिरामायणे

# ॥ आरण्यकाण्डः ॥



वाविळ्ळ. रामस्वामिशास्त्रुलु अण्ड् सन्स्

इत्येतैः प्रकटितः

१९२९.

## आरण्यकाण्ड फलश्रुतिरारभ्यते-
## उमासंहितायां उमां प्रति शिवोक्तिः ॥

यो विराधवधं नित्यं शृणोति श्रावयेत वा ।
तस्य सर्वाणि पापानि लयं यान्ति न संशयः ॥ १
शरभङ्गाश्रमगतिं राघवस्य महात्मनः ।
शृण्वन्त्रिदशलोकं वै प्राप्नोत्येव न संशयः ॥ २
अप्यहं जीवितं जह्यां त्वां वा सीते सलक्ष्मणाम् ।
इत्यादिश्रवणान्मर्त्यो रामात्कांक्षित माप्नुयात् ॥ ३
श्रुत्वा श्रीरामविजयं पापबंधाद्विमुच्यते ।
भरतस्यार्यपुत्रस्येत्यत्रत्यनवमाक्षरम् ॥ ४
भक्त्या श्रुत्वा च गायत्र्याः परां सिद्धिमवाप्नुयात् ।
सीतापहारमारभ्य लंकायां स्थापनावधि ॥ ५
श्रवणाच्छास्त्रविहितं ज्येष्ठा देवी विमुंचति ।
सीतान्वेषणमाकर्ण्य नैव लक्ष्मी र्वियुज्यते ॥ ६
जटायोस्संस्कृतिं श्रुत्वा नरस्स्वर्गमवाप्नुयात् ।
कबंधमोक्षणं श्रुत्वा स्वर्लोकं याति मानवः ॥ ७
शबर्या स्स्वर्गतिं श्रुत्वा साध्वीनां लोकगो भवेत् ।
गच्छ शीघ्रमितो रामेत्यत्रत्यं दशमाक्षरम् ॥ ८
निशम्य देव्या मनुज स्सूर्यलोकमवाप्नुयात् ।
आरण्यकाण्डमाहात्म्यं ये शृण्वन्ति महीतले ॥ ९
राघवस्य प्रसादेन विष्णुलोकं व्रजंति ते ।

### आरण्यकांडपारायणादिसमये श्रीरामध्यानक्रमः ॥

जटिलं चीरवसनं दण्डकारण्यवासिनम् ।
मुनिवेषधरं ध्यायेदारण्ये काण्ड उत्तमे ॥ १०

॥ श्रीः ॥

# स्मार्तादीनां सर्वेषां श्रीरामायणपारायणादौ

## ॥ कर्तव्यपूजाविधानम् ॥

आचम्य। प्राणानायम्य। ममोपात्त....शुभे शोभने मुहूर्ते अस्यां शुभतिथौ श्रीसीतालक्ष्मणभरतशत्रुघ्न हनुमत्समेत श्रीरामचन्द्रदेवताप्रीत्यर्थं यावच्छक्तिध्यानावाहनादिषोडशोपचारपूजां करिष्ये॥ आदौ निर्विघ्नेन परिसमाप्त्यर्थं गणाधिपतिपूजां करिष्ये॥ तदंगत्वेन कलशपूजां करिष्ये॥ कलशपूजां गणपतिपूजांच कृत्वा॥

वैदेहीसहितं सुरद्रुमतले हैमे महामंटपे
मध्ये पुष्पकमासने मणिमये वीरासने सुस्थितम्।
अग्रे वाचयति प्रभञ्जनसुते तत्त्वं मुनिभ्यः
परं व्याख्यांतं भरतादिभिः परिवृतं रामं भजे श्यामलम्॥

ततश्श्रीमत्कोशोपरि श्रीरामध्यानावाहनादिनैवेद्यांतपूजाविधेया॥ श्रीरामचन्द्रदेवताभ्यां नमः॥ ध्यानावाहनादिषोडशोपचारपूजां च कृत्वा॥

---

## ॥ श्रीमद्रामायणपारायणारम्भक्रमः ॥

सद्गुरुसकाशाल्लब्धोपदेशोवक्ष्यमाणरीत्या श्रीरामायणपारायणं कुर्यात्-देशकालौ संकीर्त्य—

अस्य श्रीरामायणमहामंत्रस्य वाल्मीकि भगवान् ऋषिः-अनुष्टुप्छन्दः-श्रीसीतालक्ष्मणभरतशत्रुघ्न हनुमत्समेत श्रीरामचन्द्रो देवता-रां बीजं-श्रीं शक्तिः-मं कीलकं-मम श्रीसीतालक्ष्मणभरतशत्रुघ्नहनुमत्समेतश्रीरामचन्द्रप्रसादसिद्ध्यर्थे पारायणजपे विनि-

योगः - रां अंगुष्ठाभ्यान्नमः - रीं तर्जनीभ्यां स्वाहा - रूं मध्यमाभ्यां वषट् - रैं अनामिकाभ्यां हुं - रौं कनिष्ठिकाभ्यां वौषट् - रः करतलकरपृष्ठाभ्यां फट् - रां हृदयाय नमः - रीं शिरसे स्वाहा - रूं शिखायै वषट् - रैं कवचाय हुं - रौं नेत्रत्रयाय वौषट् - रः अस्त्राय फट् ॥ लोकत्रयेण दिग्बंधः ॥

ध्यानम् :—

कालांभोधरकांतिकांतमनिशं वीरासनाध्यासिनं
मुद्रां ज्ञानमयीं दधान मपरं हस्तांबुजं जानुनि ।
सीतां पार्श्वगतां सरोरुहकरां विद्युन्निभां राघवं
पश्यंतं मकुटांगदादिविविधाकल्पोज्ज्वलांगं भजे ॥

॥ अथ मानसिकपूजा ॥

लं पृथिव्यात्मने श्रीरामचन्द्रपरब्रह्मणे गंधं समर्पयामि - हं आकाशात्मने श्रीरामचन्द्रपरब्रह्मणे पुष्पं समर्पयामि - यं वाय्वात्मने श्रीरामचन्द्रपरब्रह्मणे धूपमाघ्रापयामि - रं अग्न्यात्मने श्रीरामचन्द्रपरब्रह्मणे दीपं दर्शयामि - वं अमृतात्मने श्रीरामचन्द्रपरब्रह्मणे अमृतोपहारं समर्पयामि - सं सर्वात्मने श्रीरामचन्द्रपरब्रह्मणे सर्वोपचारपूजास्समर्पयामि - इति मानसिकपूजा ॥

मूलमंत्रः—

धर्मात्मा सत्यसंधश्च रामो दाशरथि र्यदि ।
पौरुषे चा प्रतिद्वंद्वश्शरैनं जहि रावणिम् ॥

इति यथाशक्ति जपित्वा श्रीरामायणपारायणं कुर्यात् ॥ अनंतरं पुनः ध्यानं मानसिकपूजां हृदयादिन्यासं च कुर्यात् - लोकत्रयेण दिग्विमोकः ॥

गुह्यातिगुह्यगोप्ता त्वं गृहाणास्मत्कृतं जपम् ।
सिद्धि र्भवतु मे देव ! त्वत्प्रसादा द्रघूद्वह ! ॥

श्रीवैष्णवानां

॥ श्रीमद्रामायणपठनोपक्रमानुसंधेयक्रमः ॥

प्रथमतः(रामानुज) श्रीशैलेशेत्यादि स्वस्वसंप्रदाय निर्वाहकाचार्यानुसंधानम्। ततः 'लक्ष्मीनाथे' त्यारभ्य 'प्रणतोऽस्मिनित्य' मित्यंतम्। अनंतरं श्रीशैलपूर्णविषयम् 'पितामह'स्येति श्लोकमारभ्य श्रीभाष्यकारप्रभृतिस्वाचार्यपर्यंत विषया स्सांप्रदायिकश्लोका अनुसंधेयाः ॥ यद्वा श्रीधरादिस्वाचार्यपर्यंताः प्रतिव्यक्तिश्लोका अनुसंधेयाः ॥

ततः —

कूजंतं रामरामेति मधुरं मधुराक्षरम् ।
आरुह्य कविताशाखां वन्दे वाल्मीकिकोकिलम् ॥ १
वाल्मीकेर्मुनिसिंहस्य कवितावनचारिणः ।
शृण्वन्रामकथानादं को न याति परां गतिम् ॥ २
यःपिबन्सततं रामचरितामृतसागरम् ।
अतृप्त स्तं मुनिं वन्दे प्राचेतस मकल्मषम् ॥ ३
गोष्पदीकृतवाराशिं मशकीकृतराक्षसम् ।
रामायणमहामालारत्नं वन्देऽनिलात्मजम् ॥ ४

अञ्जनानन्दनं वीरं जानकीशोकनाशनम् ।
कपीश मक्षहंतारं वन्दे लङ्काभयंकरम् ॥ ५
मनोजवं मारुततुल्यवेगं जितेंद्रियं बुद्धिमतां वरिष्ठम् ।
वातात्मजं वानरयूथमुख्यं श्रीरामदूतं शिरसा नमामि ॥ ६
उल्लङ्घ्य सिन्धोस्सलिलं सलीलं यश्शोकवह्निं जनकात्मजायाः ।
आदायतेनैव ददाह लङ्कां नमामि तं प्राञ्जलि राञ्जनेयम् ॥ ७
आञ्जनेयमतिपाटलाननं काञ्चनाद्रिकमनीयविग्रहम् ।
पारिजाततरुमूलवासिनं भावयामि पवमाननन्दनम् ॥ ८
यत्रयत्र रघुनाथकीर्तनं तत्रतत्र कृतमस्तकाञ्जलिम् ।
बाष्पवारिपरिपूर्णलोचनं मारुतिं नमत राक्षसान्तकम् ॥ ९
वेदवेद्ये परे पुंसि जाते दशरथात्मजे ।
वेदः प्राचेतसादासीत्साक्षाद्रामायणात्मना ॥ १०
तदुपगतसमाससन्धियोगं सममधुरोपनतार्थवाक्यबद्धम् ।
रघुवरचरितं मुनिप्रणीतं दशशिरसश्च वधं निशामयध्वम् ॥ ११
श्रीराघवं दशरथात्मज मप्रमेयं सीतापतिं रघुकुलान्वयरत्नदीपम् ।
आजानुबाहु मरविन्ददळायताक्षं रामं निशाचरविनाशकरं नमामि ॥
वैदेहीसहितं सुरद्रुमतले हैमे महामण्डपे
मध्येपुष्पकमासने मणिमये वीरासने सुस्थितम् ।
अग्रे वाचयति प्रभञ्जनसुते तत्त्वं मुनिभ्यः परं
व्याख्यान्तं भरतादिभिः परिवृतं रामं भजे श्यामलम् ॥ १३

ततो यथाशक्ति श्रीकोशोपरि भगवदाराधनं कर्तव्यम् ॥

## ॥ पारायणसमापनक्रमः ॥

एवमेतत्पुरावृत्त माख्यानं भद्र मस्तु वः ।
प्रव्याहरत विस्रब्धं बळं विष्णोः प्रवर्धताम् ॥ १

लाभस्तेषां जयस्तेषां कुतस्तेषां पराभवः ।
येषामिन्दीवरश्यामो हृदये सुप्रतिष्ठितः ॥ २

काले वर्षतु पर्जन्यः पृथिवी सस्यशालिनी ।
देशोऽयं क्षोभरहितो ब्राह्मणा स्सन्तु निर्भयाः ॥ ३

कावेरी वर्धतां काले काले वर्षतु वासवः ।
श्रीरङ्गनाथो जयतु श्रीरङ्गश्रीश्च वर्धताम् ॥ ४

स्वस्ति प्रजाभ्यः परिपालयन्तां न्याय्येन मार्गेण महीं महीशाः ।
गोब्राह्मणेभ्य श्शुभमस्तु नित्यं लोका स्समस्ता स्सुखिनो भवन्तु ॥

मङ्गळं कोसलेन्द्राय महनीयगुणाब्धये ।
चक्रवर्तितनूजाय सार्वभौमाय मङ्गळम् ॥ ६

वेदवेदान्तवेद्याय मेघश्यामलमूर्तये ।
पुंसां मोहनरूपाय पुण्यश्लोकाय मङ्गळम् ॥ ७

विश्वामित्रान्तरङ्गाय मिथिलानगरीपतेः ।
भाग्यानां परिपाकाय भव्यरूपाय मङ्गळम् ॥ ८

पितृभक्तायसततं भ्रातृभि स्सहसीतया ।
नन्दिताखिललोकाय रामभद्राय मङ्गळम् ॥ ९

त्यक्तसाकेतवासाय चित्रकूटविहारिणे ।
सेव्याय सर्वयमिनां धीरोदाराय मङ्गळम् ॥ १०

सौमित्रिणा च जानक्या चापबाणासिधारिणे ।
संसेव्याय सदाभक्त्या स्वामिने मम मङ्गळम् ॥ ११

दण्डकारण्यवासाय खण्डितामरशत्रवे ।
गृध्रराजाय भक्ताय मुक्तिदायास्तु मङ्गळम् ॥ १२

सादरं शबरीदत्तफलमूलाभिलाषिणे ।
सौलभ्यपरिपूर्णाय सत्त्वोद्रिक्ताय मङ्गळम् ॥ १३

हनुमत्समवेताय हरीशाभीष्टदायिने ।
वालिप्रमथनायास्तु महाधीराय मङ्गळम् ॥ १४

श्रीमते रघुवीराय सेतूल्लङ्घितसिन्धवे ।
जितराक्षसराजाय रणधीराय मङ्गळम् ॥ १५

आसाद्य नगरीं दिव्यामभिषिक्ताय सीतया ।
राजाधिराजराजाय रामभद्राय मङ्गळम् ॥ १६

मङ्गळाशासनपरैर्मदाचार्यपुरोगमैः ।
सर्वैश्च पूर्वैराचार्यैस्सत्कृतायास्तु मङ्गळम् ॥ १७

[कायेन वाचा मनसेन्द्रियैर्वा बुद्ध्याऽऽत्मनावा प्रकृते स्स्वभावात् ।
करोमि यद्यत्सकलं परस्मै नारायणायेति समर्पयामि ॥]

ततः 'पितामह' स्येत्यारभ्य स्वाचार्यान्ताश्श्लोका अनुसन्धेयाः ॥

## श्रीस्मार्तमध्वादीनां श्रीमद्रामायण

## ॥ पठनोपक्रमानुसन्धेयक्रमः ॥

शुक्लांबरधरं विष्णुं शशिवर्णं चतुर्भुजम् ।
प्रसन्नवदनं ध्यायेत्सर्वविघ्नोपशान्तये ॥ १

वागीशाद्या स्सुमनस स्सर्वार्थाना मुपक्रमे ।
यं नत्वा कृतकृत्यास्स्युस्तं नमामि गजाननम् ॥ २

ततः श्रीमच्छङ्कराचार्यादि गुरुपरम्परानुसन्धेया ॥

दोर्भिर्युक्ता चतुर्भि स्स्फटिकमणिमयी मक्षमालां दधाना
हस्तेनैकेन पद्मं सितमपिच शुकं पुस्तकं चापरेण ।
भासा कुन्देन्दुशङ्खस्फटिकमणिनिभा भासमानाऽसमाना
सा मे वाग्देवतेयं निवसतु वदने सर्वदा सुप्रसन्ना ॥ ३

कूजन्तं रामरामेति मधुरं मधुराक्षरम् ।
आरुह्यकविताशाखां वन्दे वाल्मीकिकोकिलम् ॥ ४

वाल्मीकेर्मुनिसिंहस्य कवितावनचारिणः ।
शृण्वन् रामकथानादं को न याति परां गतिम् ॥ ५

यः पिबन् सततं रामचरितामृतसागरम् ।
अतृप्तस्तं मुनिं वन्दे प्राचेतस मकल्मषम् ॥ ६

गोष्पदीकृतवाराशिं मशकीकृतराक्षसम् ।
रामायणमहामालारत्नं वन्देऽनिलात्मजम् ॥ ७

अञ्जनानन्दनं वीरं जानकीशोकनाशनम् ।
कपीशमक्षहन्तारं वन्दे लङ्काभयङ्करम् ॥ ८

उल्लङ्घ्यसिन्धो स्सलिलं सलीलं यश्शोकवह्निं जनकात्मजायाः ।
आदाय तेनैव ददाह लङ्कां नमामि तं प्राञ्जलि राञ्जनेयम् ॥ ९
आञ्जनेय मतिपाटलाननं काञ्चनाद्रिकमनीयविग्रहम् ।
पारिजाततरुमूलवासिनं भावयामि पवमाननन्दनम् ॥ १०
यत्रयत्र रघुनाथकीर्तनं तत्रतत्र कृतमस्तकाञ्जलिम् ।
बाष्पवारिपरिपूर्णलोचनं मारुतिं नमत राक्षसान्तकम् ॥ ११
मनोजवं मारुततुल्यवेगं जितेन्द्रियं बुद्धिमतां वरिष्ठम् ।
बातात्मजं वानरयूथमुख्यं श्रीरामदूतं शिरसा नमामि ॥ १२
यः कर्णांजलिसंपुटै रहरह स्सम्यक्पिबत्यादरा-
द्वाल्मीके र्वदनारविंदगळितं रामायणाख्यं मधु ।
जन्मव्याधिजराविपत्तिमरणै रत्यन्तसोपद्रवं
संसारं स विहाय गच्छति पुमान्विष्णोः पदं शाश्वतम् ॥ १३
तदुपगतसमाससन्धियोगं सममधुरोपनतार्थवाक्यबद्धम् ।
रघुवरचरितं मुनिप्रणीतं दशशिरसश्च वधं निशामयध्वम् ॥ १४
बाल्मीकिगिरिसंभूता रामसागरगामिनी ।
पुनाति भुवनं पुण्या रामायणमहानदी ॥ १५
श्लोकसारसमाकीर्णं सर्गकल्लोलसङ्कुलम् ।
काण्डग्राहमहामीनं वन्दे रामायणार्णवम् ॥ १६
वेदवेद्ये परेपुंसि जाते दशरथात्मजे ।
वेदः प्राचेतसादासीत्साक्षाद्रामायणात्मना ॥ १७
वैदेहीसहितं सुरद्रुमतले हैमे महामण्डपे
मध्येपुष्पक मासने मणिमये वीरासने सुस्थितम् ।

अग्रे वाचयति प्रभञ्जनसुते तत्त्वं मुनिभ्यःपरं
व्याख्यान्तं भरतादिभिः परिवृतं रामं भजे श्यामलम् ॥ १८

वामे भूमिसुता पुरश्च हनुमान् पश्चात्सुमित्रासुत-
श्शत्रुघ्नो भरत श्च पार्श्वदळयो र्वाय्वादिकोणेषु च ।
सुग्रीव श्च विभीषण श्च युवराट्ताराासुतो जाम्बवा-
न्मध्ये नीलसरोजकोमलरुचिं रामं भजे श्यामलम् ॥ १९

नमोऽस्तु रामाय स लक्ष्मणाय देव्यै च तस्यै जनकात्मजायै ।
नमोऽस्तु रुद्रेन्द्रयमानिलेभ्यो नमोऽस्तु चन्द्रार्कमरुद्गणेभ्यः ॥ २०

[ततश्श्रीकोशोपरि श्रीरामावाहनादिनैवेद्यान्तपूजा विधेया पारायणावसाने च पुनः पूजा कर्तव्या ॥]

---

## ॥ पारायणसमापनसमयानुसन्धेयक्रमः ॥

स्वस्ति प्रजाभ्यः परिपालयन्तां न्याय्येनमार्गेण महींमहीशाः ।
गोब्राह्मणेभ्य श्शुभमस्तु नित्यं लोकास्समस्ता स्सुखिनो भवन्तु ॥ १

काले वर्षतु पर्जन्यः पृथिवी सस्यशालिनी ।
देशोऽयं क्षोभरहितो ब्राह्मणा स्सन्तुनिर्भयाः ॥ २

अपुत्त्राः पुत्त्रिणस्सन्तु पुत्त्रिणस्सन्तु पौत्त्रिणः ।
अधना स्सधना स्सन्तुजीवन्तु शरदां शतम् ॥ ३

चरितं रघुनाथस्य शतकोटिप्रविस्तरम् ।
एकैक मक्षरं प्रोक्तं महापातकनाशनम् ॥ ४

श्रृण्वन् रामायणं भक्त्या यः पादं पद मेव वा।
स याति ब्रह्मणः स्थानं ब्रह्मणा पूज्यते सदा ॥ ५

रामाय रामभद्राय रामचन्द्राय वेधसे ।
रघुनाथाय नाथाय सीतायाः पतये नमः ॥ ६

यन्मङ्गळं सहस्राक्षे सर्वदेवनमस्कृते ।
वृत्रनाशे समभवत्तत्ते भवतु मङ्गळम् ॥ ७

यन्मङ्गळं सुपर्णस्य विनताऽकल्पयत्पुरा ।
अमृतं प्रार्थयानस्य तत्ते भवतु मङ्गळम् ॥ ८

मङ्गळं कोसलेन्द्राय महनीयगुणाब्धये ।
चक्रवर्तितनूजायसार्वभौमायमङ्गळम् ॥ ९

अमृतोत्पादने दैत्यान् घ्नतो वज्रधरस्य यत् ।
अदितिर्मङ्गळं प्रादात्तत्ते भवतु मङ्गळम् ॥ १०

त्रीन्विक्रमान् प्रक्रमतो विष्णोरमिततेजसः ।
यदासीन्मङ्गळं राम तत्ते भवतु मङ्गळम् ॥ ११

ऋतवस्सागराद्वीपा वेदा लोकादिशश्चते ।
मङ्गळानि महाबाहो दिशन्तु तव सर्वदा ॥ १२

कायेन वाचा मनसेन्द्रियैर्वा बुद्ध्याऽऽत्मनावा प्रकृतेस्स्वभावात् ।
करोमि यद्यत्सकलं परस्मै श्रीराघवायेति समर्पयामि ॥ १३

## ॥ श्रीगायत्रीरामायणम् ॥

तपस्स्वाध्यायनिरतं तपस्वी वाग्विदां वरम् ।
नारदं परिपप्रच्छ वाल्मीकिर्मुनिपुङ्गवम् ॥ १

स हत्वा राक्षसान् सर्वान् यज्ञघ्नान् रघुनन्दनः ।
ऋषिभिः पूजित स्सम्यग्यथेन्द्रो विजयी पुरा ॥ २

विश्वामित्र स्स धर्मात्मा श्रुत्वा जनकभाषितम् ।
वत्स राम धनुः पश्य इति राघव मब्रवीत् ॥ ३

तुष्टावास्य तदा वंशं प्रविश्य स विशांपतेः ।
शयनीयं नरेन्द्रस्य तदासाद्यव्यतिष्ठत ॥ ४

वनवासं हि संख्याय वासांस्याभरणानिच ।
भर्तार मनुगच्छन्त्यै सीतायै श्वशुरो ददौ ॥ ५

राजा सत्यं च धर्मश्च राजा कुलवतां कुलम् ।
राजा माता पिता चैव राजा हितकरो नृणाम् ॥ ६

निरीक्ष्य स मुहूर्तंतु ददर्श भरतो गुरुम् ।
उटजे राम मासीनं जटावल्कलधारिणम् ॥ ७

यदि बुद्धिः कृता द्रष्टु मगस्त्यं तं महामुनिम् ।
अद्यैव गमने बुद्धिं रोचयस्व महायशाः ॥ ८

भरतस्यार्यपुत्रस्य श्वश्रूणां मम च प्रभो ।
मृगरूपमिदं व्यक्तं विस्मयं जनयिष्यति ॥ ९

गच्छ शीघ्र मितोरामसुग्रीवंतं महाबलम् ।
वयस्यं तं कुरुक्षिप्रमितो गत्वाऽद्य राघव ॥ १०

देशकालौ प्रतीक्षस्व क्षममाणः प्रियाप्रिये ।
सुखदुःखसहः काले सुग्रीववशगोभव ॥ ११

वन्द्यास्तेतु तपस्सिद्धास्तपसावीतकल्मषाः ।
प्रष्टव्यास्तेऽपिसीतायाः प्रवृत्तिं विनयान्वितैः ॥ १२

स निर्जित्य पुरीं श्रेष्टां लङ्कां तां कामरूपिणीम् ।
विक्रमेण महातेजा हनूमान् मारुतात्मजः ॥ १३

धन्या देवा स्सगन्धर्वा स्सिद्धाश्च परमर्षयः ।
मम पश्यन्ति ये नाथं रामं राजीवलोचनम् ॥ १४

मङ्गलाभिमुखी तस्य सा तदाऽसीन्महाकपेः ।
उपतस्थे विशालाक्षी प्रयताहव्यवाहनम् ॥ १५

हितं महार्थं मृदुपूर्व संहितं व्यतीतकालायतिसंप्रतिक्षमम् ।
निशम्य तद्वाक्य मुपस्थितज्वरः प्रसङ्गवानुत्तरमेतदब्रवीत् ॥ १६

धर्मात्मा रक्षसां श्रेष्ठ स्संप्राप्तोऽयं विभीषणः ।
लंकैश्वर्यं ध्रुवं श्रीमानयं प्राप्नोत्यकण्टकम् ॥ १७

यो वज्रपाताशनिसन्निपातान्न चुक्षुभे नापि चचाल राजा ।
स रामबाणाभिहतो भृशार्तश्चचाल चापंचमुमोच वीरः ॥ १८

यस्यविक्रममासाद्य राक्षसा निधनं गताः ।
तं मन्ये राघवं वीरं नारायण मनामयम् ॥ १९

नते ददृशिरे रामं दहन्तमरिवाहिनीम् ।
मोहिताः परमास्त्रेण गान्धर्वेण महात्मना ॥ २०

प्रणम्य देवताभ्यश्चब्राह्मणेभ्यश्च मैथिली ।
बद्धाञ्जलिपुटा चेद मुवाचाग्निसमीपतः ॥ २१

चलनात्पर्वतेन्द्रस्य गणा देवाश्च कम्पिताः ।
चचाल पार्वती चापितदाऽश्लिष्टामहेश्वरम् ॥ २२

दाराः पुत्त्राः पुरं राष्ट्रं भोगाच्छादनभाजनम् ।
सर्वमेवाविभक्तं नो भविष्यति हरीश्वरः ॥ २३

या मेव रात्रिं शत्रुघ्नः पर्णशालां समाविशत् ।
ता मेव रात्रिं सीताऽपि प्रसूता दारकद्वयम् ॥ २४

इदं रामायणं कृत्स्नंगायत्रीबीजसंयुतम् ।
त्रिसन्ध्यं यः पठेन्नित्यं सर्वपापैः प्रमुच्यते ॥ २५

गायत्रीरामायणं संपूर्णम् ॥

## ॥ देवताप्रार्थना ॥

शुक्लाम्बरधरं विष्णुं शशिवर्णं चतुर्भुजम् ।
प्रसन्नवदनं ध्याये त्सर्वविघ्नोपशान्तये ॥ १

रामाय रामभद्राय रामचन्द्राय वेधसे ।
रघुनाथाय नाथाय सीतायाःपतये नमः ॥ २

## ॥ वाल्मीकिप्रार्थना ॥

कूजंतं रामरामेति मधुरं मधुराक्षरम् ।
आरुह्य कविताशाखां वन्दे वाल्मीकिकोकिलम् ॥ १

वाल्मीकेर्मुनिसिंहस्य कवितावनचारिणः ।
शृण्वन् रामकथानादं कोनयाति परांगतिम् ॥ २

---

## ॥ आंजनेयप्रार्थना ॥

अंजनानंदनं वीरं जानकीशोकनाशनम् ।
कपीश मक्षहंतारं वन्दे लङ्काभयंकरम् ॥ १

गोष्पदीकृतवाराशिं मशकीकृतराक्षसम् ।
रामायणमहामालारत्नं वन्देऽनिलात्मजम् ॥ २

मनोजवं मारुततुल्यवेगं जितेन्द्रियं बुद्धिमतां वरिष्ठम् ।
वातात्मजं वानरयूथमुख्यं श्रीरामदूतं शिरसा नमामि ॥ ३

---

## ॥ श्रीरामायणप्रशंसा ॥

श्रीमद्ब्रह्मतदेव बीज ममलं यस्याङ्कुर श्चिन्मयः
काण्डै स्सप्तभि रन्वितोऽतिविततो ऋष्यालवालोदितः ।
पत्त्रैस्तत्त्वसहस्रकै स्सुविलसच्छाखाशतैः पञ्चभिः
स्वात्मप्राप्तिफलप्रदो विजयते रामायणस्वस्तरुः ॥

यः कर्णाञ्जलिसंपुटै रहरह स्सम्य क्पिबत्यादरा-
द्वाल्मीके र्वदनारविन्दगळितं रामायणाख्यं मधु ।
जन्मव्याधिजराविपत्तिमरणै रत्यन्तसोपद्रवं
संसारं स विहाय गच्छति पुमान्विष्णोःपदं शाश्वतम् ॥

वाल्मीकिगिरिसंभूता रामांभोनिधिसंगता ।
श्रीमद्रामायणी गंगा पुनातु भुवनत्रयम् ॥

॥ श्रीरस्तु ॥

# श्रीमद्रामायणे-आरण्यकाण्डे

## ॥ प्रथमस्सर्गः ॥



प्रविश्यतु महारण्यं दण्डकारण्य मात्मवान् ।
ददर्श रामो दुर्धर्ष स्तापसाश्रममण्डलम् ॥ १
कुशचीरपरिक्षिप्तं ब्राह्मया लक्ष्म्या समावृतम् ।
यथा प्रदीप्तं दुर्दर्शं गगने सूर्यमण्डलम् ॥ २
शरण्यं सर्वभूतानां सुसम्मृष्टाजिरं तथा ।
मृगैर्बहुभिराकीर्णं पक्षिसंघैस्समाकुलम् ॥ ३
पूजितं च प्रनृत्तं च नित्यमप्सरसां गणैः ।
विशालै रग्निशरणै स्स्रुग्भाण्डै रजिनैः कुशैः ॥ ४
समिद्भि स्तोयकलशैः फलमूलैश्च शोभितम् ।
आरण्यैश्च महावृक्षैः पुण्यैस्स्वादुफलै र्वृतम् ॥ ५
बलिहोमार्चितं पुण्यं ब्रह्मघोषनिनादितम् ।
पुष्पै र्वन्यैः परिक्षिप्तं पद्मिन्याच सपद्मया ॥ ६
फलमूलाशनै र्दान्तै श्चीरकृष्णाजिनाम्बरैः।
सूर्यवैश्वानराभैश्च पुराणै र्मुनिभि र्वृतम् ॥ ७
पुण्यैश्च नियताहारै श्शोभितं परमर्षिभिः ।
तद्ब्रह्मभवनप्रख्यं ब्रह्मघोषनिनादितम् ॥ ८

ब्रह्मविद्भि र्महाभागै र्ब्राह्मणै रूपशोभितम् ।
स दृष्ट्वा राघव श्श्रीमां स्तापसाश्रममण्डलम् ॥ ९
अभ्यगच्छन्महातेजा विज्यं कृत्वा महद्धनुः ।
दिव्यज्ञानोपपन्नास्ते रामं दृष्ट्वा महर्षयः ॥ १०
अभ्यगच्छं स्तथा प्रीता वैदेहींच यशस्विनीम् ।
ते तं सोम मिवोद्यन्तं दृष्ट्वा वै धर्मचारिणः ॥ ११
लक्ष्मणंचैव दृष्ट्वातु वैदेहींच यशस्विनीम् ।
मङ्गलानि प्रयुञ्जानाः प्रत्यगृह्णन्दृढव्रताः ॥ १२
रूपसंहननं लक्ष्मीं सौकुमार्यं सुवेषताम् ।
ददृशुर्विस्मिताकारा रामस्य वनवासिनः ॥ १३
वैदेहीं लक्ष्मणं रामं नेत्रै रनिमिषैरिव ।
आश्चर्यभूतान् ददृशु स्सर्वे ते वनचारिणः ॥ १४
अत्रैनं हि महाभागा स्सर्वभूतहिते रतम् ।
अतिथिं पर्णशालायां राघवं सन्यवेशयन् ॥ १५
ततो रामस्य सत्कृत्य विधिना पावकोपमाः ।
आजह्रु स्ते महाभागा स्सलिलं धर्मचारिणः ॥ १६
मूलं पुष्पं फलं वन्यमाश्रमंच महात्मनः ।
निवेदयित्वा धर्मज्ञा स्ततः प्राञ्जलयोऽब्रुवन् ॥ १७
"धर्मपालो जनस्यास्य शरण्यस्त्वं महायशाः ।
पूजनीयश्च मान्यश्च राजा दण्डधरो गुरुः । १८
इन्द्रस्येह चतुर्भागः प्रजारक्षति राघव ।
राजा तस्माद्वरान्भोगान्भुंक्ते लोकनमस्कृतः ॥ १९

ते वयं भवता रक्ष्याभवद्विषयवासिनः ।
नगरस्थो वनस्थो वा त्वं नो राजा जनेश्वरः २०
न्यस्तदण्डा वयं राज! न्जितक्रोधा जितेन्द्रियाः ।
रक्षितव्या स्त्वया शश्वद्गर्भभूता स्तपोधनाः ॥ २१
एव मुक्त्वा फलैर्मूलैः पुष्पैर्वन्यैश्च राघवम् ।
अन्यैश्च विविधाहारै स्सलक्ष्मण मपूजयन् ॥ २२
तथाऽन्ये तापसा स्सिद्धारामंवैश्वानरोपमाः ।
न्यायवृत्ता यथान्यायं तर्पयामासु रीश्वरम् ॥ २३

इति श्रीमदारण्यकाण्डे प्रथमस्सर्गः ॥

---

## ॥ द्वितीयस्सर्गः ॥

कृतातिथ्योऽथ रामस्तु सूर्यस्योदयनं प्रति ।
आमन्त्र्य स मुनी न्सर्वा न्वनमेवान्वगाहत ॥ १
नानामृगगणाकीर्णं शार्दूलवृकसेवितम् ।
ध्वस्तवृक्षलतागुल्मं ददर्श सलिलाशयम् ॥ २
निष्कूजनानाश्शकुनिझिल्लिकागणनादितम् ।
लक्ष्मणानुगतो रामो वनमध्यं ददर्श ह ॥ ३
सीतया सह काकुत्स्थ स्तस्मिन्घोरमृगायुते ।
ददर्श गिरिश्रृङ्गाभं पुरुषादं महास्वनम् । ४
गम्भीराक्षं महावक्त्रं विकटं विषमोदरम् ।
बीभत्स विषमं दीर्घं विकृतं घोरदर्शनम् ॥ ५

वसानं चर्म वैयाघ्रं वसार्द्रं रुधिरोक्षितम् ।
त्रासनं सर्वभूतानां व्यादितास्यमिवान्तकम् ॥ ६
त्रीन्सिंहां श्चतुरो व्याघ्रा न्द्वौ वृकौ पृषतान् दश ।
सविषाणं वसादिग्धं गजस्यच शिरोमहत् ॥ ७
अवसज्याऽयसे शूले विनदन्तं महास्वनम् ।
स रामं लक्ष्मणंचैव सीतां दृष्ट्वाच मैथिलीम् ॥ ८
अभ्यधावत संक्रुद्धः प्रजाः काल इवान्तकः ।
स कृत्वा भैरवं नादं चालयन्निव मेदिनीम् ॥ ९
अङ्केनादाय वैदेही मपक्रम्य ततोऽब्रवीत् ।
"युवां जटाचीरधरौ सभार्यौ क्षीणजीवितौ ॥ १०
प्रविष्टौ दण्डकारण्यं शरचापासिधारिणौ ।
कथं तापसयो र्वांच वासः प्रमदया सह ॥ ११
अधर्मचारिणौ पापौ कौ युवां मुनिदूषकौ ।
अहं वन मिदं दुर्गं विराधोनाम राक्षसः ॥ १२
चरामि सायुधो नित्य मृषिमांसानि भक्षयन् ।
इयं नारी वरारोहा मम भार्या भविष्यति ॥ १३
युवयोः पापयो श्चाहं पास्यामि रुधिरं मृधे ॥"
तस्यैवं ब्रुवतो दुष्टं विराधस्य दुरात्मनः ॥ १४
श्रुत्वा सगर्वितं वाक्यं सम्भ्रान्ता जनकाऽऽत्मजा ।
सीता प्रावेपतोद्वेगा त्प्रवाते कदळी यथा ॥ १५
तां दृष्ट्वा राघव स्सीतां विराधाङ्कगतां शुभाम् ।
अब्रवी ल्लक्ष्मणं वाक्यं मुखेन परिशुष्यता ॥ १६

"पश्य सौम्य! नरेन्द्रस्य जनकस्याऽत्मसम्भवाम् ।
मम भार्यां शुभाचारां विराधाङ्के प्रवेशिताम् ॥ १७
अत्यन्तसुखसंवृद्धां राजपुत्रीं मनस्विनीम् ।
यदभिप्रेत मस्मासु प्रियं वरवृतंच यत् ॥ १८
कैकेय्यास्तु सुसंपन्नं क्षिप्र मद्यैव लक्ष्मण ।
या न तुष्यति राज्येन पुत्रार्थे दीर्घदर्शिनी ॥ १९
ययाऽहं सर्वभूतानां हितः प्रस्थापितो वनम् ।
अद्येदानीं सकामासा या माता मम मध्यमा ॥ २०
परस्पर्शात्तु वैदेह्या न दुःखतरमस्ति मे ।
पितु र्नियोगात्सौमित्रे! स्वराज्यहरणा त्तथा ॥" २१
इति ब्रुवति काकुत्स्थे बाष्पशोकपरिप्लुते ।
अब्रवी ल्लक्ष्मणः क्रुद्धो रुद्धो नाग इव श्वसन् ॥ २२
"अनाथ इवभूतानां नाथ स्त्वं वासवोपमः ।
मया प्रेष्येण काकुत्स्थ! किमर्थं परितप्यसे ॥ २३
शरेण निहतस्याद्य मया क्रुद्धेन रक्षसः ।
विराधस्य गतासोर्हि मही पास्यति शोणितम् ॥ २४
राज्यकामे मम क्रोधो भरते यो बभूवह ।
तं विराधे प्रमोक्ष्यामि वज्री वज्र मिवाचले ॥ २५
मम भुजबलवेगवेगितः पततु शरोऽस्य महान्महोरसि ।
व्यपनयतु तनोश्च जीवितं पततु तत स्स महीं विघूर्णितः ॥" २६

इति श्रीमदारण्यकाण्डे द्वितीयस्सर्गः ॥

## ॥ तृतीयस्सर्गः ॥

[इत्युक्त्वा लक्ष्मण श्श्रीमा न्राक्षसं प्रहसन्निव ।
उवाच परमोदारस्सुमित्रानन्दवर्धनः ॥ १
को भवान्वनमभ्येत्य चरिष्यति यथासुखम् ।]
अथोवाच पुनर्वाक्यं विराधः पूरयन्वनम् ॥ २
" आत्मानं पृच्छते ब्रूतं कौ युवां क्व गमिष्यथः ?" ।
तमुवाच ततो रामो राक्षसं ज्वलिताननम् ॥ ३
पृच्छन्तं सुमहातेजा इक्ष्वाकुकुलमात्मनः ।
" क्षत्रियौ वृत्तसम्पन्नौ विद्धि नौ वनगोचरौ ॥ ४
त्वां तु वेदितु मिच्छावः क स्त्वं चरासि दण्डकान् ?" ।
त मुवाच विराधस्तु रामं सत्यपराक्रमम् ॥ ५
" हन्त वक्ष्यामि ते राज! न्निबोध मम राघव! ।
पुत्रःकिल जयस्याहं मम माता शतह्रदा ६
विराध इति मामाहुः पृथिव्यां सर्वराक्षसाः ।
तपसा चापि मे प्राप्ता ब्रह्मणो हि प्रसादजा ॥ ७
शस्त्रेणावध्यता लोकेऽच्छेद्याभेद्यत्व मेवच ।
उत्सृज्य प्रमदामेना मनपेक्षौ यथागतम् ॥ ८
त्वरमाणौ पलायेथां न वां जीवित माददे" ।
तं रामः प्रत्युवाचेदं कोपसंरक्तलोचनः ॥ ९
राक्षसं विकृताकारं विराधं पापचेतसम् ।
" क्षुद्र! धित्त्वां तु हीनार्थं मृत्युमन्वेषसे ध्रुवम् ॥ १०

रणे सम्प्राप्स्यसे तिष्ठ न मे जीवन् गमिष्यसि ।"
तत स्सज्यं धनुः कृत्वा राम स्सु निशिताञ्छरान् ॥ ११
सुशीघ्र मभिसंधाय राक्षसं निजघानह ।
धनुषा ज्यागुणवता सप्तबाणान्मुमोचह ॥ १२
रुक्मपुङ्खान्महावेगां त्सुपर्णानिलतुल्यगान् ।
ते शरीरं विराधस्य भित्वा बर्हिणवाससः ॥ १३
निपेतुः शोणितादिग्धा धरण्यां पावकोपमाः ।
स विद्धो न्यस्य वैदेहीं शूल मुद्यम्य राक्षसः ॥ १४
अभ्यद्रवत्सुसंक्रुद्ध स्तदा रामं सलक्ष्मणम् ।
सविनद्य महानादं शूलं शक्रध्वजोपमम् ॥ १५
प्रगृह्याशोभत तदा व्यात्तानन इवान्तकः ।
अथतौ भ्रातरौ दीप्तं शरवर्षं ववर्षतुः ॥ १६
विराधे राक्षसे तस्मिन्कालान्तकयमोपमे ।
स प्रहस्य महारौद्रः स्थित्वाऽजृम्भत राक्षसः ॥ १७
जृम्भमाणस्य ते बाणाः कायान्निष्पेतुराशुगाः ।
स्पर्शात्तु वरदानेन प्राणां त्संरोध्य राक्षसः ॥ १८
विराध श्शूलमुद्यम्य राघवायाभ्यधावत ।
तच्छूलं वज्रसङ्काशं गगने ज्वलनोपमम् ॥ १९
द्वाभ्यां शराभ्यां चिच्छेद राम श्शस्त्रभृतां वरः ।
तद्रामविशिखच्छिन्नं शूलं तस्य कराद्भुवि ॥ २०
पपाताशनिना छिन्नं मेरोरिव शिलातलम् ।
तौ खड्गौक्षिप्र मुद्यम्य कृष्णसर्पोपमौ शुभौ ॥ २१

तूर्ण मापतत स्तस्य तदा प्रहरतां बलात् ।
स वध्यमान स्सुभृशं बाहुभ्यां परिरभ्य तौ ॥ २२
अप्रकम्प्यौ नरव्याघ्रौ रौद्रः प्रस्थातु मैच्छत ।
तस्याभिप्राय माज्ञाय रामो लक्ष्मण मब्रवीत् ॥ २३
"वहत्वय मलं ताव त्पथाऽनेन तु राक्षसः ।
यथा चेच्छति सौमित्रे! तथा वहतु राक्षसः ॥ २४
अयमेव हि नः पन्था येन याति निशाचरः ।"
स तु स्वबलवीर्येण समुत्क्षिप्य निशाचरः ॥ २५
बालाविव स्कन्धगतौ चकारातिबलौ ततः ।
ता वारोप्य ततः स्कन्धं राघवौ रजनीचरः ॥ १६
विराधो निनदन्घोरं जगामाभिमुखो वनम् ।
वनं महामेघनिभं प्रविष्टो द्रुमैर्महद्भिर्विविधै रुपेतम् ।
नानाविधैः पक्षिशतै र्विचित्रं शिवायुतं व्याळमृगै र्विकीर्णम् ॥ २७

इति श्रीमदारण्यकाण्डे तृतीयस्सर्गः ॥

## ॥ चतुर्थस्सर्गः ॥

ह्रियमाणौ तु तौ दृष्ट्वा वैदेही रामलक्ष्मणौ ।
उच्चै स्स्वरेण चुक्रोश प्रगृह्य सुभुजा भुजौ ॥ १
"एष दाशरथी राम स्सत्यवान् शीलवान् शुचिः ।
रक्षसा रौद्ररूपेण ह्रियते सहलक्ष्मणः ॥ २
मां वृका भक्षयिष्यन्ति शार्दूला द्वीपिन स्तथा ।
मां हरोत्सृज्य काकुत्स्थौ नमस्ते राक्षसोत्तम! ॥" ३

तस्या स्तद्वचनं श्रुत्वा वैदेह्या रामलक्ष्मणौ ।
वेगं प्रचक्रतु र्वीरौ वधे तस्य दुरात्मनः ॥ ४
तस्यरौद्रस्य सौमित्रि स्सव्यबाहुं बभञ्ज ह ।
रामस्तु दाक्षिणं बाहुं तरसा तस्य रक्षसः ॥ ५
स भग्नोबाहु स्संविग्नो निपपाताऽऽशु राक्षसः ।
धरण्यां मेघसङ्काशो वज्रभिन्न इवाचलः ॥ ६
मुष्टिभि र्जानुभिः पद्भि स्सूदयन्तौ तु राक्षसम् ।
उद्यम्योद्यम्य चाप्येनं स्थण्डिले निष्पिपेषतुः ॥ ७
स विद्धो बहुभि र्बाणैः खड्गाभ्यां च परिक्षतः ।
निष्पिष्टो बहुधा भूमौ न ममार स राक्षसः ॥ ८
तं प्रेक्ष्य राम स्सुभृशमवध्य मचलोपमम् ।
भयेष्वभयद श्श्रीमा निदं वचन मब्रवीत् ॥ ९
"तपसा पुरुषव्याघ्र! राक्षसोऽयं न शक्यते ।
शस्त्रेण युधि निर्जेतुं राक्षसं निखनावहे ॥" १०
तच्छ्रुत्वा राघवेणोक्तं राक्षसः प्रश्रितं वचः ।
इदं प्रोवाच काकुत्स्थं विराधः पुरुषर्षभम् ॥ ११
"हतोऽस्मि पुरुषव्याघ्र! शक्रतुल्यबलेन वै ।
मया तु पूर्वं त्वं मोहा न्नज्ञातः पुरुषर्षभः ॥ १२
कौसल्या सुप्रजा! राम! तात! त्वं विदितो मया ।
वैदेही च महाभागा लक्ष्मणश्च महायशाः ॥ १३
अभिशापा दहं घोरां प्रविष्टो राक्षसीं तनुम् ।
तुम्बुरु र्नामगन्धर्व श्शप्तो वैश्रवणेन ह ॥ १४

प्रसाद्यमान श्च मया सोऽब्रवीन्मां महायशाः ।
यदा दाशरथी रामस्त्वां वधिष्यति संयुगे ॥ १५
तदा प्रकृति मापन्नो भवां त्स्वर्गं गमिष्यति ।"
इति वैश्रवणो राजा रम्भासक्तं पुराऽनघ! ॥ १६
अनुपस्थीयमानो मां संक्रुद्धो व्याजहार ह ।
तव प्रसादान्मुक्तोऽह मभिशापात्सुदारुणात् ॥ १७
भुवनं स्वं गमिष्यामि स्वस्ति वोऽस्तु परन्तप! ।
इतो वसति धर्मात्मा शरभङ्गः प्रतापवान् ॥ १८
अध्यर्धयोजने तात! महर्षि स्सूर्यसन्निभः ।
तं क्षिप्र मभिगच्छत्वं स ते श्रेयो विधास्यति ॥ १९
अवटे चापि मां राम! प्रक्षिप्य कुशली व्रज ।
रक्षसां गतसत्त्वाना मेष धर्मस्सनातनः ॥ २०
अवटे ये निधीयन्ते तेषां लोका स्सनातनाः ।
एव मुक्त्वा तु काकुत्स्थं विराध श्शरपीडितः ॥ २१
बभूव स्वर्गसम्प्राप्तो न्यस्तदेहो महाबलः ।
तच्छ्रुत्वा राघवो वाक्यं लक्ष्मणं व्यादिदेश ह ॥ २२
"कुञ्जरस्येव रौद्रस्य राक्षसस्यास्य लक्ष्मण! ।
वनेऽस्मिंत्सुमहच्छ्वभ्रं खन्यतां रौद्रकर्मणः ॥" २३
इत्युक्त्वा लक्ष्मणं रामः 'प्रदरः खन्यता'मिति ।
तस्थौ विराध माक्रम्य कण्ठे पादेन वीर्यवान् ॥ २४
ततः खनित्र मादाय लक्ष्मण श्श्वभ्रमुत्तमम् ।
अखनत्पार्श्वत स्तस्य विराधस्य महात्मनः ॥ २५

तं मुक्तकण्ठं निष्पिष्य शङ्कुकर्णं महास्वनम् ।
विराधं प्राक्षिपच्छ्वभ्रे नदन्तं भैरवस्वनम् ॥ २६

त माहवे निर्जित माशु विक्रमौ स्थिरा वुभौ संयति रामलक्ष्मणौ ।
मुदान्वितौ चिक्षिपतु भयावहं नदन्त मुत्क्षिप्य बिलेतु राक्षसम् ॥

अवध्यतां प्रेक्ष्य महासुरस्य तौ शितेन शस्त्रेण तदा नरर्षभौ ।
समर्थ्य चात्यर्थ विशारदा वुभौ बिले विराधस्य वधं प्रचक्रतुः ॥

स्वयं विराधेन हि मृत्युरात्मनः प्रसह्य रामेण वधार्थ मीप्सितः ।
निवेदितः काननचारिणा स्वयं "न मे वध श्शस्त्रकृतो भवे"दिति ॥

तदेव रामेण निशम्य भाषितं कृता मतिस्तस्य बिलप्रवेशने ।
बिलं च रामेण बलेन रक्षसा प्रवेश्यमानेन वनं विनादितम् ॥ ३०

प्रहृष्टरूपाविव रामलक्ष्मणौ विराध मुर्व्याः प्रदरे निहत्य तौ ।
ननन्दतु र्वीतभयौ महावने शिलाभि रन्तर्दधतु श्च राक्षसम् ॥ ३१

तत स्तु तौ काञ्चनचित्रकार्मुकौ निहत्य रक्षः परिगृह्य मैथिलीम् ।
विजह्रतु स्तौ मुदितौ महावने दिवि स्थितौ चन्द्रदिवाकराविव ॥ ३२

इति श्रीमदारण्यकाण्डे चतुर्थस्सर्गः ॥

## ॥ पञ्चमस्सर्गः ॥

हत्वा तु तं भीमबलं विराधं राक्षसंवने ।
तत स्सीतां परिष्वज्य समाश्वास्य च वीर्यवान् ॥ १

अब्रवी ल्लक्ष्मणं रामो भ्रातरं दीप्ततेजसम् ।
"कष्टं वन मिदं दुर्गं न च स्म वनगोचराः २

अभिगच्छामहे शीघ्रं शरभङ्गं तपोधनम् ।
आश्रमं शरभङ्गस्य राघवोऽभिजगाम ह ॥ ३
तस्यदेवप्रभावस्य तपसा भावितात्मनः ।
समीपे शरभङ्गस्य ददर्श महदद्भुतम् ॥ ४
विभ्राजमानं वपुषा सूर्यवैश्वानरोपमम् ।
अवरुह्य रथोत्सङ्गादाकाशे विबुधानुगम् ॥ ५
असंस्पृशन्तं वसुधां ददर्श विबुधेश्वरम् ।
सुप्रभाभरणं देवं विरजोऽम्बरधारिणम् ॥ ६
तद्विधैरेव बहुभिः पूज्यमानं महात्मभिः ।
हरिभि र्वाजिभिर्युक्त मन्तरिक्षगतं रथम् ॥ ७
ददर्शादूरतस्तस्यतरुणादित्यसन्निभम् ।
पाण्डुराभ्रघनप्रख्यं चन्द्रमण्डलसन्निभम् ॥ ८
अपश्यद्विमलं छत्रं चित्रमाल्योपशोभितम् ।
चामरव्यजने चाग्र्ये रुक्मदण्डेमहाधने ॥ ९
गृहीते वरनारीभ्यां धूयमाने च मूर्धनि ।
गन्धर्वामरसिद्धाश्च बहवः परमर्षयः ॥ १०
अन्तरिक्षगतं देवं वाग्भि रग्र्याभि रीडिरे ।
सहसम्भाषमाणेतु शरभङ्गेण वासवे ॥ ११
दृष्ट्वा शतक्रतुं तत्र रामो लक्ष्मण मब्रवीत् ।
रामोऽथ रथ मुद्दिश्य लक्ष्मणाय प्रदर्शयन् ॥ १२
अर्चिष्मन्तं श्रिया जुष्ट मद्भुतं पश्य लक्ष्मण! ।
प्रतपन्त मिवादित्य मन्तरिक्षगतं रथम् ॥ १३

ये हयाः पुरुहूतस्य पुरा शक्रस्य न श्श्रुताः ।
अन्तरिक्षगता दिव्यास्त इमे हरयो ध्रुवम् ॥ १४
इमेच्च पुरुषव्याघ्राये तिष्ठन्त्यभितो रथम् ।
शतं शतं कुण्डलिनो युवानः खड्गपाणयः ॥ १५
विस्तीर्णविपुलोरस्काः परिघाऽयतबाहवः ।
शोणांशुवसना स्सर्वे व्याघ्रा इव दुरासदाः ॥ १६
उरोदेशेषु सर्वेषां हारा ज्वलनसन्निभाः ।
रूपं बिभ्रति सौमित्रे! पञ्चविंशतिवार्षिकम् ॥ १७
एत द्धि किल देवानां वयो भवति नित्यदा ।
यथेमे पुरुषव्याघ्र! दृश्यन्ते प्रियदर्शनाः ॥ १८
इहैव सह वैदेह्या मुहूर्तं तिष्ठ लक्ष्मण! ।
यावज्ज्ञाना म्यहं व्यक्तं क एष द्युतिमान्रथे ॥" १९
त मेव मुक्त्वा सौमित्रि "मिहैव स्थीयता" मिति ।
अभिचक्राम काकुत्स्थ श्शरभङ्गाश्रमं प्रति ॥ २०
तत स्समभिगच्छन्तं प्रेक्ष्य रामं शचीपतिः ।
शरभङ्ग मनुप्राप्य विविक्त इदमब्रवीत् ॥ २१
"इहोपयात्यसौ रामो यावन्मां नाभिभाषते ।
निष्ठां नयतु तावत्तु ततो मां द्रष्टु मर्हति ॥ २२
जितवन्तं कृतार्थंच द्रष्टाऽह माचिरादिमम् ।
कर्मह्यनेन कर्तव्यं मह दन्यैस्सुदुष्करम् ॥ २३
निष्पादयित्वा तत्कर्म ततोमां द्रष्टु मर्हति ।"
इति वज्री तमामन्त्र्य मानयित्वाच तापसम् ॥ २४

रथेन हरियुक्तेन ययौ दिव मरिन्दमः ।
प्रयाते तु सहस्राक्षे राघव स्सपरिच्छदम् ॥ २५
अग्निहोत्रमुपासीनं शरभङ्ग मुपागमत् ।
तस्य पादौच सङ्गृह्य राम स्सीताच लक्ष्मणः ॥ २६
निषेदु स्समनुज्ञाता लब्धवासा निमन्त्रिताः ।
तत श्शक्रोपयानंतु पर्यपृच्छत्स राघवः ॥ २७
शरभंगश्च तत्सर्वं राघवाय न्यवेदयत् ।
"मा मेष वरदो राम! ब्रह्मलोकं निनीषति ॥ २८
जित मुग्रेण तपसा दुष्प्राप मकृतात्मभिः ।
अहं ज्ञात्वा नरव्याघ्र! वर्तमान मदूरतः ॥ २९
ब्रह्मलोकं न गच्छामि त्वा मदृष्ट्वा प्रियातिथिम् ।
त्वयाऽहं पुरुषव्याघ्र! धार्मिकेण महात्मना ॥ ३०
समागम्य गमिष्यामि त्रिदिवं देवसेविनम् ।
अक्षया नरशार्दूल! मया लोका जिता श्शुभाः ॥ ३१
ब्राह्म्याश्च नाकपृष्ठ्याश्च प्रतिगृह्णीष्व मामकान् ।"
एवमुक्तो नरव्याघ्रस्सर्वशास्त्रविशारदः ३२
ऋषिणा शरभङ्गेण राघवो वाक्य मब्रवीत् ।
"अह मेवाहरिष्यामि सर्वलोकान्महामुने! ॥ ३३
आवासं त्वह मिच्छामि प्रदिष्टमिह कानने ।"
राघवेणैव मुक्तस्तु शक्रतुल्यबलेनवै ॥ ३४
शरभङ्गो महाप्राज्ञः पुनरेवाब्रवी द्वचः ।
"इह राम! महातेजा स्सुतीक्ष्णो नाम धार्मिकः ॥ ३५

वसत्यरण्ये धर्मात्मा स ते श्रेयो विधास्यति ।
सुतीक्ष्ण मभिगच्छ त्वं शुचौ देशे तपस्विनम् ॥ ३६
रमणीये वनोद्देशे स ते वासं विधास्यति ।
इमां मन्दाकिनीं राम! प्रतिस्रोता मनुव्रज ॥ ३७
नदीं पुष्पोडुपवहां तत्र तत्र गमिष्यसि ।
एष पन्थानरव्याघ्र! मुहूर्तं पश्य तात! माम् ॥ ३८
यावज्जहामिगात्राणि जीर्णां त्वच मिवोरगः ।"
ततोऽग्निं सु समाधाय हुत्वा चाज्येन मन्त्रवित् ॥ ३९
शरभङ्गो महातेजाः प्रविवेश हुताशनम् ।
तस्य रोमाणि केशांश्च ददाहाग्नि र्महात्मनः ॥ ४०
जीर्णां त्वचं तथाऽस्थीनि यच्च मांसं सशोणितम् ।
रामस्तु विस्मितो भ्राता भार्ययाच सहात्मवान् ॥ ४१
स च पावकसङ्काशः कुमार स्समपद्यत ।
उत्थायाग्निचयात्तस्मा च्छरभङ्गो व्यरोचत ॥ ४२
स लोकानाहिताग्नीनामृषीणांच महात्मनाम् ।
देवानांच व्यतिक्रम्य ब्रह्मलोकं व्यरोहत ॥ ४३
स पुण्यकर्मा भवने द्विजर्षभः पितामहं सानुचरं ददर्शह ।
पितामहश्चापि समीक्ष्य तं द्विजं ननन्द 'सुस्वागत' मित्युवाचह ॥

इति श्रीमदारण्यकाण्डे पञ्चमस्सर्गः ॥

---

## ॥ षष्ठस्सर्गः ॥

शरभङ्गे दिवं याते मुनिसङ्घा स्समागताः ।
अभ्यगच्छन्त काकुत्स्थं रामं ज्वलिततेजसम् ॥ १

वैखानसा वालखिल्या सम्प्रक्षाळा मरीचिपाः ।
अश्मकुट्टा श्च बहवः पत्राहाराश्च धार्मिकाः ॥ २
दन्तोलूखलिन श्चैव तथैवोन्मज्जकाः परे ।
गात्रशय्या अशय्याश्च तथैवाभ्रावकाशकाः ॥ ३
मुनय स्सलिलाहारा वायुभक्षास्तथा परे ।
आकाशनिलया श्चैव तथास्थण्डिलशायिनः ॥ ४
व्रतोपवासिनो दान्ता स्तथाऽर्द्रपटवाससः ।
सजपाश्च तपोनित्या स्तथापञ्चतपोऽन्विताः ॥ ५
सर्वे ब्राह्मया श्रियाजुष्टा दृढयोगा स्समाहिताः ।
शरभङ्गाश्रमे राममभिजग्मु श्च तापसाः । ६
अभिगम्य च धर्मज्ञा रामं धर्मभृतां वरम् ॥
ऊचुः परमधर्मज्ञ मृषिसङ्घा स्समाहिताः ॥ ७
"त्व मिक्ष्वाकुकुलस्यास्य पृथिव्याश्च महारथ! ।
प्रधानश्चासि नाथश्च देवानां मघवानिव ॥ ८
विश्रुत स्त्रिषु लोकेषु यशसा विक्रमेण च ।
पितृभक्ति श्च सत्यं च त्वयि धर्म श्च पुष्कलः ॥ ९
त्वा मासाद्य महात्मानं धर्मज्ञं धर्मवत्सलम्
अर्थित्वान्नाथ! वक्ष्याम स्तच्च नः क्षन्तु मर्हसि ॥ १०
अधर्म स्तु महां स्तात! भवेत्तस्य महीपतेः ।
यो हरे द्बलिषड्भागं न च रक्षति पुत्रवत् ॥ ११
युञ्जान स्स्वानिव प्राणान्प्राणै रिष्टांस्सुतानिव ।
नित्ययुक्तस्सदा रक्षंत्सर्वान्विषयवासिनः ॥ १२

प्राप्नोति शाश्वतीं राम! कीर्तिं स बहुवार्षिकीम् ।
ब्रह्मणः स्थान मासाद्य तत्रचापि महीयते ॥ १३
यत्करोति परं धर्मं मुनिर्मूलफलाशनः ।
तत्र राज्ञ श्चतुर्भागः प्रजा धर्मेण रक्षतः ॥ १४
[यस्यान्नपानपुष्टाङ्गः कुरुते धर्मसंग्रहम् ।
अन्नप्रदातु स्तस्यार्धं कर्तुश्चार्धं न संशयः ॥ १५
सोऽयं ब्राह्मणभूयिष्ठो वानप्रस्थगणो महान् ।
त्वं नाथोऽनाथवद्राम! राक्षसै र्वध्यते भृशम् ॥ १६
एहि पश्य शरीराणि मुनीनां भावितात्मनाम् ।
हतानां राक्षसै र्घोरै र्बहूनां बहुधा बने ॥ १७
पम्पानदीनिवासाना मनुमन्दाकिनी मपि ।
चित्रकूटालयानां च क्रियते कदनं महत् ॥ १८
एवं वयं न मृष्यामो विप्रकारं तपस्विनाम् ।
क्रियमाणं वने घोरं रक्षोभि र्भीमकर्मभिः ॥ १९
तत स्त्वां शरणार्थं च शरण्यं समुपस्थिताः ।
परिपालय नो राम! वध्यमानान्निशाचरैः ॥ २०
परा त्वत्तो गति र्वीर! पृथिव्यां नोपपद्यते ।
परिपालय न स्सर्वा न्राक्षसेभ्यो नृपाऽत्मज ॥ २१
एतच्छ्रुत्वा तु काकुत्स्थ स्तापसानां तपस्विनाम् ।
इदं प्रोवाच धर्मात्मा सर्वानेव तपस्विनः ॥ २२
नैव मर्हथ मां वक्तु माज्ञप्तोऽहं तपस्विनाम् ।
केवलेनात्मकार्येण प्रवेष्टव्यं मया वनम् ॥ २३

विप्रकार मपाकर्ष्टुं राक्षसैर्भवतामिमम् ।
पितु स्तु निर्देशकरः प्रविष्टोऽह मिदं वनम् ॥ २४
भवता मर्थसिद्ध्यर्थ मागतोऽहं यदृच्छया ।
तस्य मेऽयं वने वासो भविष्यति महाफलः ॥ २५
तपस्विनां रणे शत्रू न्हन्तु मिच्छामि राक्षसान् ।
पश्यन्तु वीर्य मृषय स्सभ्रातु र्मे तपोधनाः ॥ " २६
दत्वाऽभयं चापि तपोधनानां धर्मे धृतात्मा सह लक्ष्मणेन,
तपोधनैश्चापि सभाज्यवृत्त स्सुतीक्ष्ण मेवाभिजगाम वीरः २७

इति श्रीमदारण्यकाण्डे षष्ठस्सर्गः ॥

॥ सप्तमस्सर्गः ॥

राम स्तु सहितो भ्रात्रा सीतया च परन्तपः ।
सुतीक्ष्णस्याश्रमपदं जगाम सह तै र्द्विजैः ॥ १
स गत्वा दूरमध्वानं नदी स्तीर्त्वा बहूदकाः ।
ददर्श विपुलं शैलं महामेघ मिवोन्नतम् ॥ २
तत स्तदिक्ष्वाकुवरौ सन्ततं विविधै र्द्रुमैः ।
काननं तौ विविशतु स्सीतया सह राघवौ ॥ ३
प्रविष्टस्तु वनं घोरं बहुपुष्पफलद्रुमम् ।
ददर्शाऽश्रम मेकान्ते चीरमालापरिष्कृतम् ॥ ४
तत्र तापस मासीनं मलपङ्कजटाधरम् ।
राम स्सुतीक्ष्णं विधिवत्तपोवृद्ध मभाषत ॥ ५

"रामोऽह मस्मि भगव! न्भवन्तं द्रष्टुमागतः ।
त्वं माभिवद धर्मज्ञ! महर्षे! सत्यविक्रम! ॥" ६
स निरीक्ष्य ततो वीरं रामं धर्मभृतांवरम् ।
समाश्लिष्यच बाहुभ्या मिदं वचन मब्रवीत् ॥ ७
"स्वागतं खलुते वीर! राम! धर्मभृतां वर! ।
आश्रमोऽयं त्वयाऽऽक्रान्त स्सनाथ इव साम्प्रतम् ॥ ८
प्रतीक्षमाण स्त्वामेव नारोहेऽहं महायशः ।
देवलोक मितो वीर! देहं त्यक्त्वा महीतले ॥ ९
चित्रकूट मुपादाय राज्यभ्रष्टोऽसि मे श्रुतः ।
इहोपयातः काकुत्स्थ! देवराज श्शतक्रतुः ॥ १०
उपागम्य च मां देवो महादेव स्सुरेश्वर : ।
सर्वान्लोका ञ्जितानाह मम पुण्येन कर्मणा ॥ ११
तेषु देवर्षिजुष्टेषु जितेषु तपसा मया ।
मत्प्रसादात्सभार्य स्त्वं विहरस्व सलक्ष्मणः ॥" १२
त मुग्रतपसा युक्तं महर्षिं सत्यवादिनम् ।
प्रत्युवाचात्मवा न्रामो ब्रह्माण मिव काश्यपः ॥ १३
"अह मेवाहरिष्यामि स्वयं लोकान्महामुने! ।
आवासं त्वह मिच्छामि प्रदिष्ट मिह कानने ॥ १४
भवां स्सर्वत्र कुशल स्सर्वभूताहितेरतः ।
आख्यात श्शरभङ्गेण गौतमेन महात्मना ॥" १५
एव मुक्तस्तु रामेण महर्षिर्लोकविश्रुतः ।
अब्रवी न्मधुरं वाक्यं हर्षेण महताऽऽप्लुतः ॥ १६

“अयमेवाश्रमो राम! गुणवा न्रम्यता मिह ।
ऋषिसंघानुचरित स्सदा मूलफलान्वितः ॥ १७
इम माश्रम मागम्य मृगसंघा महायशः! ।
अटित्वा प्रतिगच्छन्ति लोभयित्वाऽकुतो भयाः ॥ १८
नान्य द्दोषं भवे दत्र मृगेभ्योऽन्यत्र विद्धिवै ।”
तच्छ्रुत्वा वचनं तस्य महर्षे र्लक्ष्मणाग्रजः ॥ १९
उवाच वचनं धीरो विकृष्य सशरं धनुः ।
“तानहं सुमहाभाग! मृगसङ्घांत्समागतान् ॥ २०
हन्यां निशितधारेण शरेणाशनिवर्चसा ।
भवां स्त त्राभिषज्येत किं स्यात्कृच्छ्रतरं ततः ॥ २१
एतस्मि न्नाश्रमे वासं चिरं तु न समर्थये ।”
तमेव मुक्त्वा वरदं रामस्सन्ध्या मुपागमत् ॥ २२
अन्वास्य पश्चिमां सन्ध्यां तत्रवास मकल्पयत् ।
सुतीक्ष्णस्याऽश्रमे रम्ये सीतया लक्ष्मणेन च ॥ २३
ततश्शुभं तापसभोज्य मन्नं स्वयं सुतीक्ष्णः पुरुषर्षभाभ्याम् ।
ताभ्यां सुसत्कृत्य ददौ महात्मा सन्ध्यानिवृत्तौ रजनी मवेक्ष्य ॥

इति श्रीमदारण्यकाण्डे सप्तमस्सर्गः ॥

---

## ॥ अष्टमस्सर्गः ॥

रामस्तु सह सौमित्रि स्सुतीक्ष्णेनाभिपूजितः ।
परिणाम्य निशां तत्र प्रभाते प्रत्यबुद्ध्यत ॥ १

उत्थाय तु यथाकालं राघव स्सह सीतया ।
उपास्पृशत्सुशीतेन जलेनोत्पलगन्धिना ॥ २
अथ तेऽग्निं सुरां श्चैव वैदेही रामलक्ष्मणौ ।
काल्यं विधिवदभ्यर्च्य तपस्विशरणे वने ॥ ३
उदयन्तं दिनकरं दृष्ट्वा विगतकल्मषाः ।
सुतीक्ष्ण मभिगम्येदं श्लक्ष्णं वचन मब्रुवन् ॥ ४
"सुखोषितास्स्म भगवन्! त्वया पूज्येन पूजिताः ।
आपृच्छामः प्रयास्यामो मुनयस्त्वरयन्ति नः ॥ ५
त्वरामहे वयं द्रष्टुं कृत्स्न माश्रममण्डलम् ।
ऋषीणां पुण्यशीलानां दण्डकारण्यवासिनाम् ॥ ६
अभ्यनुज्ञातु मिच्छाम स्सहैभि र्मुनिपुङ्गवैः ।
धर्मनित्यै स्तपोदान्तै र्विशिखैरिव पावकैः ॥ ७
अविषह्यातपो यावत्सूर्यो नाति विराजते ।
अमार्गेणाऽगतां लक्ष्मीं प्राप्येवान्वयवर्जितः ॥ ८
तावदिच्छामहे गन्तु" मित्युक्त्वा चरणौ मुनेः ।
ववन्दे सह सौमित्रि स्सीतया सह राघवः ॥ ९
तौ संस्पृशन्तौ चरणा वुत्थाप्य मुनिपुङ्गवः ।
गाढमालिङ्ग्य सस्नेह मिदं वचनमब्रवीत् ॥ १०
"अरिष्टं गच्छ पन्थानं राम! सौमित्रिणा सह ।
सीतया चानया सार्धं छाययेवानुवृत्तया ॥ ११
पश्याऽश्रमपदं रम्यं दण्डकारण्यवासिनाम् ।
एषां तपस्विनां वीर! तपसा भावितात्मनाम् ॥ १२

सम्प्राज्य फलमूलानि पुष्पितानि वनानि च ।
प्रशस्तमृगयूथानि शान्तपक्षिगणानि च ॥ १३
फुल्लपङ्कजषण्डानि प्रसन्नसलिलानि च ।
कारण्डवविकीर्णानि तटाकानि सरांसि च ॥ १४
द्रक्ष्यसे दृष्टिरम्याणि गिरिप्रस्रवणानि च ।
रमणीयान्यरण्यानि मयूराभिरुतानि च ॥ १५
गम्यतां वत्स! सौमित्रे! भवानपि च गच्छतु ।
आगन्तव्यं त्वया तात! पुनरेवाश्रमं मम ॥" १६
एव मुक्त 'स्तथे'त्युक्त्वा काकुत्स्थ स्सह लक्ष्मणः ।
प्रदक्षिणं मुनिं कृत्वा प्रस्थातु मुपचक्रमे ॥ १७
तत श्शुभतरे तूणी धनुषी चायतेक्षणा ।
ददौ सीता तयोर्भ्रात्रोः खड्गौ च विमलौ ततः ॥ १८
आबद्ध्य च शुभे तूणी चापौ चादाय सुस्वनौ ।
निष्क्रान्तावाश्रमा द्गन्तु मुभौ तौ रामलक्ष्मणौ ॥ १९
श्रीमन्तौ रूपसम्पन्नौ दीप्यमानौ स्वतेजसा ।
प्रस्थितौ धृतचापौ तौ सीतया सह राघवौ ॥ २०

इति श्रीमदारण्यकाण्डे अष्टमस्सर्गः ॥

---

## ॥ नवमस्सर्गः ॥

सुतीक्ष्णेनाभ्यनुज्ञातं प्रस्थितं रघुनन्दनम् ।
हृद्यया स्निग्धया वाचा भर्तार मिदमब्रवीत् ॥ १

"अयं धर्म स्सुसूक्ष्मेण विधिना प्राप्यते महान् ।
निवृत्तेन तु शक्योऽयं व्यसनात्कामजा दिह ॥ २

त्रीण्येव व्यसनान्यत्र कामजानि भवन्त्युत ।
मिथ्यावाक्यं परमकं तस्माद्गुरुतरा वुभौ ॥ ३

परदाराभिगमनं विना वैरं च रौद्रता ।
मिथ्यावाक्यं न ते भूतं न भविष्यति राघव! ॥ ४

कुतोऽभिलाषणं स्त्रीणां परेषां धर्मनाशनम् ।
तव नास्ति मनुष्येन्द्र! न चाभूत्ते कदाचन ॥ ५

मनस्यपि तथा राम! नचैतद्विद्यचे क्वचित् ।
स्वदारनिरतस्त्वं च नित्यमेव नृपात्मज! ॥ ६

धर्मिष्ठ स्सत्यसन्ध श्च पितुर्निर्देशकारकः ।
सत्यसन्ध! महाभाग! श्रीमन्! लक्ष्मणपूर्वज!।
त्वयि सत्यं च धर्म श्च त्वयि सर्वं प्रतिष्ठितम् ॥ ७

तच्च सर्वं महाबाहो! शक्यं धर्तुं जितेन्द्रियैः ।
तववश्येन्द्रियत्वं च जानामि शुभदर्शन! ॥ ८

तृतीयं यदिदं रौद्रं परप्राणाभिहिंसनम् ।
निर्वैरं क्रियते मोहात्तच्च ते समुपस्थितम् ॥ ९

प्रतिज्ञातस्त्वया वीर! दण्डकारण्यवासिनाम् ।
ऋषीणां रक्षणार्थाय वधस्संयति रक्षसाम् ॥ १०

एतन्निमित्तंच वनं दण्डका इति विश्रुतम् ।
प्रस्थितस्त्वं सहभ्रात्रा धृतबाणशरासनः ॥ ११

ततस्त्वां प्रस्थितं दृष्ट्वा मम चिन्ताकुलं मनः ।
तद्वृत्तं चिन्तयन्त्या वै भवेन्निश्रेयसंहितम् ॥ १२
नहि मे रोचते वीर! गमनं दण्डकान्प्रति ।
कारणं तत्र वक्ष्यामि वदन्त्या श्श्रूयतां मम ॥ १३
त्वं हि बाणधनुष्पाणिः भ्रात्रा सहवनं गतः ।
दृष्ट्वा वनचरांत्सर्वान्कच्चित्कुर्याश्शरव्ययम् ॥ १४
क्षत्रियाणा मपि धनुर्हुताशस्येन्धनानि च ।
समीपतः स्थितं तेजो बलमुच्छ्रयते भृशम् ॥ १५
'पुराकिल महाबाहो! तपस्वी सत्यवाक्छुचिः ।
कस्मि श्चिदभवत्पुण्ये वने रतमृगाद्विजे ॥ १६
तस्यैव तपसो विघ्नं कर्तुमिन्द्रश्शचीपतिः ।
खड्गपाणि रथागच्छदाश्रमं भटरूपधृत् ॥ १७
तस्मि स्तदाश्रमपदे निशितः खड्ग उत्तमः ।
सन्यास विधिना दत्तः पुण्ये तपसि तिष्ठतः ॥ १८
सतच्छस्त्र मनुप्राप्य न्यासरक्षणतत्परः ।
वने तं विचरत्येव रक्षन्प्रत्यय मात्मनः ॥ १९
यत्र गच्छत्युपादातुं मूलानिच फलानिच ।
नविना याति तं खड्गं न्यासरक्षणतत्परः ॥ २०
नित्यं शस्त्रं परिवहन्क्रमेण स तपोधनः ।
चकार रौद्रीं स्वां बुद्धिं त्यक्त्वा तपसि निश्चयम् ॥ २१
ततस्सरौद्रेऽभिरतः प्रमत्तो धर्मकर्शितः ।
तस्य शस्त्रस्य संवासा ज्जगाम नरकं मुनिः ॥' २२

एव मेतत्पुरावृत्तं शस्त्रसंयोगकारणम् ।
अग्निसंयोगवद्धेतु श्शस्त्रसंयोग उच्यते ॥ २३
स्नेहाच्च बहुमानाच्च स्मारये त्वां न शिक्षये ।
न कथंचन साकार्या गृहीतधनुषात्वया ॥ २४
बुद्धिर्वैरं विनाहन्तुं राक्षसान्दण्डकाश्रितान् ।
अपराधं विनाहन्तुं लोकान्वीर! नकामये ॥ २५
क्षत्रियाणां तु वीराणां वनेषुनिरतात्मनाम् ।
धनुषा कार्यमेताव दार्तानामभिरक्षणम् ॥ २६
क्व च शस्त्रं क्व च वनं क्व च क्षात्रं तपः क्व च ।
व्याविद्धमिदमस्माभि र्देशधर्म स्तु पूज्यताम् ॥ २७
तदार्य कलुषा बुद्धि र्जायते शस्त्रसेवनात् ।
पुन र्गत्वा त्वयोध्यायां क्षत्रधर्मं चरिष्यसि ॥ २८
अक्षयातु भवेत्प्रीति श्श्वश्रू श्वशुरयो र्मम ।
यदि राज्यं परित्यज्य भवे स्त्वं निरतो मुनिः ॥ २९
धर्मा दर्थः प्रभवति धर्मा त्प्रभवते सुखम् ।
धर्मेण लभते सर्वं धर्मसार मिदं जगत् ॥ ३०
आत्मानं नियमै स्तैस्तैः कर्शयित्वा प्रयत्नतः ।
प्राप्यते निपुणै र्धर्मो न सुखा ल्लभ्यते सुखम् ॥ ३१
नित्यं शुचिमति स्सौम्य! चर धर्मं तपोवने ।
सर्वं हि विदितं तुभ्यं त्रैलोक्य मपि तत्त्वतः ॥ ३२
स्त्रीचापला देतदुदाहृतं मे धर्मं च वक्तुं तव क स्समर्थः ।
विचार्य बुद्ध्या तु सहानुजेन यद्रोचते तत्कुरु मा चिरेण ॥" ३३

इति श्रीमदारण्यकाण्डे नवमस्सर्गः ॥

वितत्य च धनुर्भीमं तूण्योश्चोद्धृत्य सायकान् ।
क्रोधमाहारयत्तीव्रं वधार्थं सर्वरक्षसाम् ॥ ३३
दुष्प्रेक्ष्यस्सोऽभवत्क्रुद्धो युगान्ताग्निरिव ज्वलन् ।
तं दृष्ट्वा तेजसाविष्टं प्राद्रवन्वनदेवताः ॥ ३४
तस्य क्रुद्धस्य रूपं तु रामस्य ददृशे तदा ।
दक्षस्येव क्रतुं हन्तु मुद्यतस्य पिनाकिनः ॥ ३५
आविष्टं तेजसा रामं संग्रामशिरसि स्थितम् ।
दृष्ट्वा सर्वाणि भूतानि भयार्तानि प्रदुद्रुवुः ॥ ३६
तत्कार्मुकै राभरणैर्ध्वजैश्च तैर्वर्मभि श्चाग्निसमानवर्णैः ।
बभूव सैन्यं पिशिताशनानां सूर्योदये नीलमिवाभ्रबृन्दम् ॥ ३७

इति श्रीमदारण्यकाण्डे चतुर्विंशस्सर्गः ॥

## ॥ पञ्चविंशस्सर्गः ॥

अवष्टब्धधनुं रामं क्रुद्धंच रिपुघातिनम् ।
ददर्शाऽश्रम मागम्य खरस्सह पुरस्सरैः ॥ १
तं दृष्ट्वा सशरंचाप मुद्यम्य खरनिस्वनम् ।
'रामस्याऽभिमुखं सूतं 'चोद्यता' मित्यचोदयत् ॥ २
सखरस्याज्ञयासूत स्तुरङ्गांत्समचोदयत् ।
यत्र रामो महाबाहुरेको धून्वन् स्थितो धनुः ॥ ३
तं तु निष्पतितं दृष्ट्वा सर्वे ते रजनीचराः ।
नर्दमाना महानादं सचिवाः पर्यवारयन् ॥ ४

स तेषां यातुधानानां मध्ये रथगतः खरः ।
बभूवमध्ये ताराणां लोहिताङ्गइवोदितः ॥ ५
ततश्शरसहस्रेण राम मप्रतिमौजसम् ।
अर्दयित्वा महानादं ननाद समरेखरः ॥ ६
ततस्तं भीमधन्वानं क्रुद्धा स्सर्वे निशाचराः ।
रामं नानाविधै श्शस्त्रै रभ्यवर्षन्त दुर्जयम् ॥ ७
मुद्गरैः पट्टसै श्शूलैः प्रासैः खड्गैः परश्वथैः ।
राक्षसास्समरे रामं निजघ्नू रोषतत्पराः ॥ ८
ते वलाहकसंकाशा महानादा महौजसः ।
अभ्यधावन्त काकुत्स्थं रथै र्वाजिभि रेव च ॥ ९
गजैः पर्वतकूटाभै रामं युद्धे जिघांसवः ।
ते रामे शरवर्षाणि व्यसृजन्रक्षसांगणाः ॥ १०
शैलेन्द्रमिव धाराभिर्वर्षमाणा वलाहकाः ।
सतैः परिवृतो घोरै राघवो रक्षसां गणैः ॥ ११
तानि मुक्तानि शस्त्राणि यातुधानैस्स राघवः ।
प्रतिजग्राह विशिखैर्नद्योघानिव सागरः ॥ १२
सतैः प्रहरणै र्घोरै र्भिन्नगात्रो न विव्यथे ।
रामः प्रदीप्तै र्बहुभि र्वज्रै रिव महाचलः ॥ १३
स विद्धः क्षतजादिग्धस्सर्वगात्रेषु राघवः ।
बभूव रामस्सन्ध्याभ्रैर्दिवाकर इवावृतः ॥ १४
विषेदु र्देवगन्धर्वा स्सिद्धाश्च परमर्षयः ।
एकं सहस्रै र्बहुभि स्तदा दृष्ट्वा समावृतम् ॥ १५

ततो राम स्सुसंक्रुद्धो मण्डलीकृतकार्मुकः ।
ससर्ज विशिखान्बाणाञ्छतशोऽथ सहस्रशः ॥ १६
दुरावारान्दुर्विषहान्कालदण्डोपमान्रणे ।
मुमोच लीलया रामः कङ्कपत्रानजिह्मगान् ॥ १७
ते शराश्शत्रुसैन्येषु मुक्ता रामेण लीलया ।
आददू रक्षसां प्राणान्पाशाः कालकृता इव ॥ १८
भित्त्वा राक्षसदेहां स्तां स्ते शरा रुधिराप्लुताः ।
अन्तरिक्षगतारेजु र्दीप्ताग्निसमतेजसः ॥ १९
असंख्येयास्तु रामस्य सायकाश्चापमण्डलात् ।
विनिष्पेतु रतीवोग्रा रक्षःप्राणापहारिणः ॥ २०
[ते रणे साङ्गदान्बाहूंत्सहस्ताभरणान् भुजान् ।
चिच्छिदुर्बिभिदुश्चापि रामचापगुणाच्च्युताः ॥] २१
तैर्धनूंषि ध्वजाग्राणि वर्माणिच शिरांसिच ।
बाहूंत्सहस्ताभरणा नूरून्करिकरोपमान् ॥ २२
चिच्छेद राम स्समरे शतशोऽथ सहस्रशः ।
हयान्काञ्चनसन्नाहान्रथयुक्तांत्ससारथीन् ॥ २३
गजांश्च सगजारोहां त्सहयांत्सादिन स्तथा ।
पदातीं त्समरे हत्वा ह्यनय द्यमसादनम् ॥ २४
ततो नाळीकनाराचै स्तीक्ष्णाग्रैश्च विकर्णिभिः ।
भीममार्तस्वरं चक्रु र्भिद्यमाना निशाचराः ॥ २५
तत्सैन्यं निशितै र्बाणै रर्दितं मर्मभेदिभिः ।
रामेण न सुखं लेभे शुष्कं वनमिवाग्निना ॥ २६

केचिद्भीमबलाश्शूरा श्शूलान्खड्गान्परश्वथान् ।
रामस्याभिमुखं गत्वा चिक्षिपुः परमायुधान् ॥ २७
तानि बाणै र्महाबाहु श्शस्त्राण्यावार्य राघवः ।
जहार समरे प्राणांश्चिच्छेद च शिरोधरान् ॥ २८
ते छिन्नशिरसः पेतुश्छिन्नवर्मशरासनाः ।
सुवर्णवाताविक्षिप्ता जगत्यां पादपा यथा ॥ २९
अवशिष्टाश्च ये तत्र विषण्णाश्च निशाचराः ।
खरमेवाभ्यधावन्त शरणार्थं शरार्दिताः ॥ ३०
तां स्सर्वान्पुनरादाय समाश्वास्यच दूषणः ।
अभ्यधावत काकुत्स्थं क्रुद्धो रुद्रमिवान्तकः ॥ ३१
निवृत्तास्तु पुनस्सर्वे दूषणाऽश्रयनिर्भयाः ।
राममेवाभ्यधावन्त सालतालशिलायुधाः ॥ ३२
शूलमुद्गरहस्ताश्च चापहस्ता महाबलाः ।
सृजन्त श्शरवर्षाणि शस्त्रवर्षाणि संयुगे ॥ ३३
द्रुमवर्षाणि मुञ्चन्त श्शिलावर्षाणि राक्षसाः ।
तद्बभूवाद्भुतं युद्धं तुमुलं रोमहर्षणम् ॥ ३४
रामस्यच महाघोरं पुनस्तेषां च रक्षसाम् ।
ते समन्तादतिक्रुद्धा राघवं पुन रभ्ययुः ॥ ३५
तैश्च सर्वादिशो दृष्ट्वा प्रदिशश्च समावृतः ।
राक्षसै रुद्यतप्रासै श्शरवर्षाभिवर्षिभिः ॥ ३६
स कृत्वा भैरवं नाद मस्त्रं परमभास्वरम् ।
संयोजयत गान्धर्वं राक्षसेषु महाबलः ॥ ३७

तत श्शरसहस्राणि निर्ययु श्चापमण्डलात् ।
सर्वा दशदिशो बाणै रावार्यन्त समागतैः ॥ ३८
नाददानं शराघोरान्नमुञ्चन्तं शिलीमुखान् ।
विकर्षमाणं पश्यन्ति राक्षसास्ते शरार्दिताः ॥ ३९
शरान्धकारमाकाश मावृणोत्स दिवाकरम् ।
बभूवावस्थितो रामः प्रवमन्निव ताञ्छरान् ॥ ४०
युगपत्पतमानैश्च युगपच्च हतैर्भृशम् ।
युगपत्पतितैश्चैव विकीर्णा वसुधाऽभवत् ॥ ४१
निहताः पतिताः क्षीणा श्छिन्ना भिन्ना विदारिताः ।
तत्र तत्र स्म दृश्यन्ते राक्षसास्ते सहस्रशः ॥ ४२
सोष्णीषै रुत्तमाङ्गैश्च साङ्गदै र्बाहुभिस्तथा ।
ऊरुभि र्जानुभि श्छिन्नै र्नानारूपै र्विभूषणैः ४३
हयैश्च द्विपमुख्यैश्च रथैर्भिन्नैरनेकशः ।
चामरै र्व्यजनै श्छत्रै र्ध्वजै र्नानाविधैरपि ॥ ४४
रामस्य बाणाभिहतैर्विचित्रै श्शूलपट्टसैः ।
खड्गैः खण्डीकृतैः प्रासै र्विकीर्णैश्च परश्वधैः ॥ ४५
चूर्णिताभि श्शिलाभिश्च शरैश्चित्रैरनेकशः ।
विच्छिन्नै स्समरे भूमि र्विकीर्णाऽभूद्भयङ्करा ॥ ४६

इति श्रीमदारण्यकाण्डे पञ्चविंशस्सर्गः ॥

## ॥ षड्विंशस्सर्गः ॥

दूषणस्तु स्वकं सैन्यं हन्यमानं निरीक्ष्य सः ।
संदिदेश महाबाहु र्भीमवेगान्दुरासदान् ॥ १
राक्षसान्पञ्चसाहस्रांत्समरेष्वनिवर्तिनः ।
ते शूलैः पट्टसैः खड्गै श्शिलावर्षैर्द्रुमै रपि ॥ २
शरवर्षै रविच्छिन्नं ववृषु स्तं समन्ततः ।
स द्रुमाणां शिलानां च वर्षं प्राणहरं महत् ॥ ३
प्रतिजग्राह धर्मात्मा राघव स्तीक्ष्णसायकैः ।
प्रतिगृह्य च तद्वर्षं निमीलित इवर्षभः ॥ ४
रामः क्रोधं परं भेजे वधार्थं सर्वरक्षसाम् ।
ततः क्रोधसमाविष्टः प्रदीप्त इव तेजसा ॥ ५
शरै रवाकिरत्सैन्यं सर्वतस्सहदूषणम् ।
तत स्सेनापतिः क्रुद्धो दूषण श्शत्रुदूषणः ॥ ६
शरैरशनिकल्पैस्तं राघवं समवाकिरत् ।
ततो राम स्सुसंक्रुद्धः क्षुरेणास्य महद्धनुः ॥ ७
चिच्छेद समरे वीरश्चतुर्भि श्चतुरो हयान् ।
हत्वा चाश्वान्शरै स्तीक्ष्णै रर्धचन्द्रेण सारथेः ॥ ८
शिरो जहार तद्रक्षस्त्रिभि र्विव्याध वक्षसि ।
सच्छिन्नधन्वा विरथो हताश्वो हतसारथिः ॥ ९
जग्राह गिरिशृङ्गाभं परिघं रोमहर्षणम् ।
वेष्टितं काञ्चनैः पट्टै र्देवसैन्यप्रमर्दनम् ॥ १०

आयसै श्शङ्कुभि स्तीक्ष्णैः कीर्णं परवसोक्षितम् ।
वज्राशनिसमस्पर्शं परगोपुरदारणम् ॥ ११
तं महोरगसंकाशं प्रगृह्य परिघं रणे ।
दूषणोऽभ्यद्रवद्रामं क्रूरकर्मा निशाचरः ॥ १२
तस्याभिपतमानस्य दूषणस्य स राघवः ।
द्वाभ्यां शराभ्यां चिच्छेद सहस्ताभरणौ भुजौ ॥ १३
भ्रष्टस्तस्य महाकायः पपात रणमूर्धनि ।
परिघश्छिन्नहस्तस्य शक्रध्वज इवाग्रतः ॥ १४
सकराभ्यां विकीर्णाभ्यां पपात भुवि दूषणः ।
विषाणाभ्यां विशीर्णाभ्यां मनस्वीव महागजः ॥ १५
तं दृष्ट्वा पतितं भूमौ दूषणं निहतं रणे ।
'साधु सा'ध्विति काकुत्स्थं सर्वभूतान्यपूजयन् ॥ १६
एतस्मिन्नन्तरे क्रुद्धा स्त्रय स्सेनाग्रयायिनः ।
संहत्याभ्यद्रव न्रामं मृत्युपाशावपाशिताः ॥ १७
महाकपालः स्थूलाक्षः प्रमाथी च महाबलः ।
महाकपालो विपुलं शूलमुद्यम्य राक्षसः ॥ १८
स्थूलाक्षः पट्टसं गृह्य प्रमाथीच परश्वथम् ।
दृष्ट्वैवापततस्तूर्णं राघव स्सायकै श्शितैः ॥ १९
तीक्ष्णाग्रैः प्रतिजग्राह संप्राप्तानतिथीनिव ।
महाकपालस्य शिर श्छिच्छेद परमेषुभिः ॥ २०
असंख्येयै स्तु बाणौघैः प्रममाथ प्रमाथिनम् ।
स पपात हतो भूमौ विटपीव महाद्रुमः ॥ २१

स्थूलाक्षस्याक्षिणी तीक्ष्णैः पूरयामास सायकैः ।
दूषणस्यानुगान्पञ्च साहस्रान्कुपितः क्षणात् ॥ २२
बाणौघैःपञ्चसाहस्रै रनयद्यमसादनम् ।
दूषणं निहतं दृष्ट्वा तस्य चैव पदानुगान् ॥ २३
व्यादिदेश खरः क्रुद्ध स्सेनाध्यक्षान्महाबलान् ।
"अयं विनिहत स्संख्ये दूषण स्सपदानुगः ॥ २४
महत्या सेनया सार्धं युद्ध्वा रामं कुमानुषम् ।
शस्त्रै र्नानाविधाकारै र्हनध्वं सर्वराक्षसाः ! ॥" २५
एवमुक्त्वा खरः क्रुद्धो राम मेवाभिदुद्रुवे ।
श्येनगामी पृथुग्रीवो यज्ञशत्रु र्विहङ्गमः ॥ २६
दुर्जयःकरवीराक्षो परुषः कालकार्मुकः ।
मेघमाली महामाली सर्पास्यो रुधिराशनः ॥ २७
द्वादशैते महावीर्या बलाध्यक्षास्ससैनिकाः ।
राम मेवाभ्यवर्तन्त विसृजन्तश्शरोत्तमान् ॥ २८
ततः पावकसंकाशै र्हेमवज्रविभूषितैः ।
जघान शेषं तेजस्वी तस्य सैन्यस्य सायकैः ॥ २९
ते रुक्मपुङ्खा विशिखा स्सधूमा इव पावकाः ।
निजघ्नु स्तानि रक्षांसि वज्रा इव महाद्रुमान् ॥ ३०
रक्षसां नु शतं राम श्शतेनैकेन कर्णिना ।
सहस्रं च सहस्रेण जघान रणमूर्धनि ॥ ३१
तैर्भिन्नवर्माभरणा श्छिन्ना भग्नशरासनाः ।
निपेतु श्शोणितादिग्धा धरण्यां रजनीचराः ॥ ३२

तै मुक्तकेशै स्समरे पतितै श्शोणितोक्षितैः ।
आस्तीर्णा वसुधा कृत्स्ना महावेदिः कुशैरिव ॥ ३३

क्षणेन तु महाघोरं वनं निहतराक्षसम् ।
बभूव निरयप्रख्यं मांसशोणितकर्दमम् ॥ ३४

चतुर्दश सहस्राणि रक्षसां भीमकर्मणाम् ।
हतान्येकेन रामेण मानुषेण पदातिना ॥ ३५

तस्य सैन्यस्य सर्वस्य खरश्शेषो महारथः ।
राक्षसस्त्रिशिरा श्चैव राम श्च रिपुसूदनः ॥ ३६

शेषा हता महासत्त्वा राक्षसा रणमूर्धनि ।
घोरादुर्विषहा स्सर्वे लक्ष्मणस्याग्रजेन ते ॥ ३७

तत स्तु तद्भीमबलं महाहवे समीक्ष्य रामेण हतं बलीयसा ।
रथेन रामं महता खर स्तदा समाससादेन्द्र इवोद्यताशनिः ॥ ३८

इति श्रीमदारण्यकाण्डे षड्विंशस्सर्गः ॥

---

## ॥ सप्तविंशस्सर्गः ॥

खरं तु रामाभिमुखं प्रयान्तं वाहिनीपतिः ।
राक्षस स्त्रिशिरानाम सन्निपत्येदमब्रवीत् ॥ १

मां नियोजय विक्रान्त! सन्निवर्तय साहसात् ।
पश्य रामं महाबाहुं संयुगे विनिपातितम् ॥ २

प्रतिजानामि ते सत्य मायुधं चाहमालभे ।
यथा रामं वधिष्यामि वधार्हं सर्वरक्षसाम् ॥ ३

'अहं वास्य रणे मृत्यु रेषवा समरे मम' ।
विनिवृत्य रणोत्साहान्मुहूर्तं प्राश्निको भव ॥ ४
प्रहृष्टो वा हते रामे जनस्थानं प्रयास्यसि ।
मयिव निहते रामं संयुगायोपयास्यसि ॥" ५
खरस्त्रिशिरसा तेन मृत्युलोभात्प्रसादितः ।
[युद्धश्रद्धां परित्यज्य युद्धाय समचोदयत् ॥] ६
'गच्छ यु'ध्येत्यनुज्ञातो राघवाभिमुखो ययौ ।
त्रिशिराश्च रथेनैव वाजियुक्तेन भास्वता ॥ ७
अभ्यद्रवद्रणे रामं त्रिश्रृङ्गइव पर्वतः ।
शरधारासमुहांत्स महामेघ इवोत्सृजन् ॥ ८
व्यसृजत्सदृशं नादं जलार्द्रस्य तु दुन्दुभेः ।
आगच्छन्तं त्रिशिरसं राक्षसं प्रेक्ष्य राघवः ॥ ९
धनुषा प्रतिजग्राह विधून्वन्सायकान् शितान् ।
स संप्रहारस्तुमुलो रामत्रिशिरसोर्महान् ॥ १०
बभूवातीव बलिनो स्सिंहकुञ्जरयोरिव ।
तत स्त्रिशिरसा बाणै र्ललाटे ताडित स्त्रिभिः ॥ ११
अमर्षी कुपितो रामस्संरब्धमिद मब्रवीत् ।
"अहो विक्रमशूरस्य राक्षसस्येदृशं बलम् ॥ १२
पुष्पै रिव शरै र्यस्य ललाटेऽस्मिन्परिक्षतः ।
ममापि प्रतिगृह्णीष्व शरांश्चापगुणाच्च्युतान् ॥" १३
एवमुक्त्वा तु संरब्ध श्शरा नाशीविषोपमान् ।
त्रिशिरो वक्षसि क्रुद्धो निजघान चतुर्दश ॥ १४

चतुर्भि स्तुरगानस्य शरै स्सन्नतपर्वभिः ।
न्यपातयत तेजस्वी चतुरस्तस्य वाजिनः ॥ १५
अष्टभिस्सायकै स्सूतं रथोपस्थे न्यपातयत् ।
रामश्चिच्छेद बाणेन ध्वजं चास्य समुच्छ्रितम् ॥ १६
ततो हतरथात्तस्मा दुत्पतन्तं निशाचरम् ।
बिभेद रामस्तं बाणैर्हृदये सोऽभवज्जडः ॥ १७
सायकैश्चाप्रमेयात्मा सामर्षस्तस्य रक्षसः ।
शिरांस्यपातयद्रामो वेगवद्भि स्त्रिभिश्शितैः ॥ १८
स भूमौ रुधिरोद्गारी रामबाणाभिपीडितः ।
न्यपतत्पतितैः पूर्वं स्वशिरोभिर्निशाचरः ॥ १९
हतशेषा स्ततो भग्ना राक्षसाः खरसंश्रयाः ।
द्रवन्ति स्म नतिष्ठन्ति व्याघ्रत्रस्ता मृगा इव ॥ २०
तान्खरो द्रवतो दृष्ट्वा निवर्त्य रुषितस्स्वयम् ।
राममेवाभिदुद्राव राहुश्चन्द्रमसं यथा ॥ २१

इति श्रीमदारण्यकाण्डे सप्तविंशस्सर्गः ॥

---

## ॥ अष्टाविंशस्सर्गः ॥

निहतं दूषणं दृष्ट्वा रणे त्रिशिरसा सह ।
खरस्याप्यभवत्त्रासो दृष्ट्वा रामस्य विक्रमम् ॥ १
सदृष्ट्वा राक्षसं सैन्य मविषह्यं महाबलः ।
हतमेकेन रामेण त्रिशिरोदूषणावपि ॥ २

तद्बलं हतभूयिष्ठं विमनाः प्रेक्ष्य राक्षसः ।
आससाद खरो रामं नमुचिर्वासवं यथा ॥ ३
विकृष्य बलवच्चापं नाराचान्रक्तभोजनान् ।
खरश्चिक्षेप रामाय क्रुद्धानाशीविषानिव ॥ ४
ज्यां विधून्वंत्सुबहुशश्शिक्षयास्त्राणि दर्शयन् ।
चकार समरे मार्गाञ्छरै रथगतः खरः ॥ ५
ससर्वांश्च दिशोबाणैः प्रदिशश्च महारथः ।
पूरयामास तं दृष्ट्वा रामोऽपि सुमहद्धनुः ॥ ६
ससायकै र्दुर्विषहै स्सस्फुलिङ्गै रिवाग्निभिः ।
नभश्चकाराविवरं पर्जन्य इव वृष्टिभिः ॥ ७
तद्बभूव शितैर्बाणैः खररामविसर्जितैः ।
पर्याकाश मनाकाशं सर्वतश्शरसंकुलम् ॥ ८
शरजालावृतस्सूर्यो न तदा स्म प्रकाशते ।
अन्योन्यवधसंरम्भादुभयोः संप्रयुध्यतोः ॥ ९
ततो नाळीकनाराचै स्तीक्ष्णाग्रै श्च विकर्णिभिः ।
आजघान खरो रामं तोत्रैरिव महाद्विपम ॥ १०
तं रथस्थं धनुष्पाणिं राक्षसं पर्यवस्थितम् ।
ददृशु स्सर्वभूतानि पाशहस्तमिवान्तकम् ॥ ११
हन्तारं सर्वसैन्यस्य पौरुषे पर्यवस्थितम् ।
परिश्रान्तं महासत्त्वं मेने रामं खरस्तदा ॥ १२
तं सिंहमिव विक्रान्तं सिंहविक्रान्तगामिनम् ।
दृष्ट्वा नोद्विजते राम स्सिंहः क्षुद्रमृगं यथा ॥ १३

ततस्सूर्यनिकाशेन रथेन महता खरः ।
आससाद रणे रामं पतङ्ग इव पावकम् ॥ १४
ततोऽस्य सशरं चापं मुष्टिदेशे महात्मनः ।
खरश्चिच्छेद रामस्य दर्शयन्पाणिलाघवम् ॥ १५
स पुनस्त्वपरांत्सप्त शरानादाय वर्मणि ।
निजघान खरः क्रुद्ध श्शक्रासनिसमप्रभान् ॥ १६
ततस्तत्प्रहतं बाणैः खरमुक्तैस्सुपर्वभिः ।
पपात कवचं भूमौ रामस्यादित्यवर्चसः ॥ १७
ततश्शरसहस्रेण राममप्रतिमौजसम् ।
अर्दयित्वा महानादं ननाद समरे खरः ॥ १८
सशरै रर्पितः क्रुद्ध स्सर्वगात्रेषु राघवः ।
रराज समरे रामो विधूमोऽग्निरिव ज्वलन् ॥ १९
ततो गम्भीरनिर्ह्रादं राम श्शत्रुनिबर्हणः ।
चकारान्ताय सरिपोस्सज्यमन्यन्महद्धनुः ॥ २०
सुमहद्वैष्णवं यत्तदतिसृष्टं महर्षिणा ।
वरंतद्धनुरुद्यम्य खरं समभिधावत ॥ २१
ततः कनकपुङ्खैस्तु शरै स्सन्नतपर्वभिः ।
बिभेद रामस्संक्रुद्धः खरस्य समरे ध्वजम् ॥ २२
स दर्शनीयो बहुधा विकीर्णः काञ्चनध्वजः ।
जगाम धरणीं सूर्यो देवतानामिवाज्ञया ॥ २३
तं चतुर्भिः खरः क्रुद्धो रामं गात्रेषु मार्गणैः ।
विव्याथ युधि मर्मज्ञो मातङ्गमिव तोमरैः ॥ २४

स रामो बहुभिर्बाणैः खरकार्मुकनिस्सृतैः ।
विद्धो रुधिरसिक्ताङ्गो बभूव रुषितो भृशम् ॥ २५

स धनु र्धन्विनां श्रेष्ठः प्रगृह्य परमाहवे ।
मुमोच परमेष्वासष्षट्छरानभिलक्षितान् ॥ २६

शिरस्येकेन बाणेन द्वाभ्यां बाह्वोरथार्दयत् ।
त्रिभि श्चन्द्रार्धवक्त्रैश्च वक्षस्यभिजघानह ॥ २७

ततः पश्चान्महातेजा नाराचान्भास्करोपमान् ।
जिघांसू राक्षसं क्रुद्धस्त्रयोदश समाददे ॥ २८

ततोऽस्य युगमेकेन चतुर्भि श्चतुरो हयान् ।
षष्ठेन तु शिरस्संख्ये खरस्य रथसारथेः ॥ २९

त्रिभिस्त्रिवेणुं बलवान्द्वाभ्या मक्षं महाबलः ।
द्वादशेन तु बाणेन खरस्य सशरं धनुः ॥ ३०

छित्त्वा वज्रनिकाशेन राघवः प्रहसन्निव ।
त्रयोदशेनेन्द्रसमो बिभेद समरे खरम् ॥ ३१

प्रभग्नधन्वा विरथो हताश्वो हतसारथिः ।
गदापाणि रवप्लुत्य तस्थौ भूमौ खरस्तदा ॥ ३२

तत्कर्म रामस्य महारथस्य समेत्य देवाश्च महर्षयश्च ।
अपूजयन्प्राञ्जलयः प्रहृष्टा स्तदा विमानाग्रगता स्समेताः ॥ ३३

इति श्रीमदारण्यकाण्डे अष्टाविंशस्सर्गः ॥

## ॥ एकोनत्रिंशस्सर्गः ॥

खरंतु विरथं रामो गदापाणि मवस्थितम् ।
मृदुपूर्वं महातेजाः परुषं वाक्यमब्रवीत् ॥ १
" गजाश्वरथसंबाधे बले महति तिष्ठता ।
कृतं सुदारुणं कर्म सर्वलोकजुगुप्सितम् ॥ २
उद्वेजनीयो भूतानां नृशंसः पापकर्मकृत् ।
त्रयाणामपि लोकाना मीश्वरोऽपि न तिष्ठति ॥ ३
कर्म लोकविरुद्धं तु कुर्वाणं क्षणदाचर! ।
तीक्ष्णं सर्वजनो हन्ति सर्पं दुष्टमिवागतम् ॥ ४
लोभात्पापानि कुर्वाणः कामा द्वायो न बुध्यते ।
भ्रष्टः पश्यति तस्यान्तं ब्राह्मणी करकादिव ॥ ५
वसतो दण्डकारण्ये तापसान्धर्मचारिणः ।
किन्नु हत्वा महाभागान्फलं प्राप्स्यसि राक्षस! ॥ ६
न चिरं पापकर्माणः क्रूरा लोकजुगुप्सिताः ।
ऐश्वर्यं प्राप्य तिष्ठन्ति शीर्णमूला इव द्रुमाः ॥ ७
अवश्यं लभते जन्तुः फलं पापस्य कर्मणः ।
घोरं पर्यागते काले द्रुमाः पुष्पमिवार्तवम् ॥ ८
न चिरात्प्राप्यते लोके पापानां कर्मणां फलम् ।
सविषाणामिवान्नानां भुक्तानां क्षणदाचर! ॥ ९
पापमाचरतां घोरं लोकस्याप्रियमिच्छताम् ।
अहं मासादितो राज्ञा प्राणान्हन्तुं निशाचर! ॥ १०

अद्यहित्वां मया मुक्ता श्शराः काञ्चनभूषणाः ।
विदार्य निपतिष्यन्ति वल्मीकमिव पन्नगाः ॥ ११
ये त्वया दण्डकारण्ये भक्षिता धर्मचारिणः ।
तानद्य निहत स्सङ्ख्ये ससैन्योऽनुगमिष्यसि ॥ १२
अद्य त्वां निहतं बाणैः पश्यन्तु परमर्षयः ।
निरयस्थं विमानस्था ये त्वया हिंसिताः पुरा ॥ १३
प्रहरत्वं यथाकामं कुरु यत्नं कुलाधम! ।
अद्य ते पातयिष्यामि शिरस्तालफलं यथा ॥" १४
एवमुक्तस्तु रामेण क्रुद्धस्संरक्तलोचनः ।
प्रत्युवाच खरो रामं प्रहसन्क्रोधमूर्छितः ॥ १५
"प्राकृतान्राक्षसान् हत्वा युद्धे दशरथात्मज! ।
आत्मना कथ मात्मान मप्रशस्यं प्रशंससि ॥ १६
विक्रान्ता बलवन्तो वा ये भवन्ति नरर्षभः ।
कथयन्ति न ते किंचि त्तेजसा स्वेन गर्विताः ॥ १७
प्राकृता स्त्वकृतात्मानो लोके क्षत्रियपांसनाः ।
निरर्थकं विकत्थन्ते यथा राम! विकत्थसे ॥ १८
कुलं व्यपदिशन्वीर स्समरे कोऽभिधास्यति ।
मृत्युकाले हि संप्राप्ते स्वयमप्रस्तवे स्तवम् ॥ १९
सर्वथैव लघुत्वं ते कत्थनेन विदर्शितम् ।
सुवर्णप्रतिरूपेण तप्तेनेव कुशाग्निना ॥ २०
न तु मा मिह तिष्ठन्तं पश्यसि त्वं गदाधरम् ।
धराधरमिवाकम्प्यं पर्वतं धातुभिश्चितम् ॥ २१

पर्याप्तोऽहंगदापाणि र्हन्तुं प्राणान्रणे तव ।
त्रयाणामपि लोकानां पाशहस्तइवान्तकः ॥ २२
कामं बह्वपि वक्तव्यं त्वयि वक्ष्यामि न त्वहम् ।
अस्तंगच्छेद्धि सविता युद्धविघ्नस्ततो भवेत् ॥ २३
चतुर्दश सहस्राणि राक्षसानां हतानि ते ।
त्वद्विनाशात्करोम्येषां तेषा मश्रुप्रमार्जनम् ॥" २४
इत्युक्त्वा परमक्रुद्धस्तां गदां परमाङ्गदः ।
खर श्चिक्षेप रामाय प्रदीप्तामशनिं यथा ॥ २५
खरबाहुप्रमुक्ता सा प्रदीप्ता महती गदा ।
भस्मवृक्षांश्च गुल्मांश्च कृत्वाऽगा त्तत्समीपतः ॥ २६
ता मापतन्तीं ज्वलितां मृत्युपाशोपमां गदाम् ।
अन्तरिक्षगतां राम श्चिच्छेद बहुधा शरैः ॥ २७
साविकीर्णा शरैर्भग्ना पपात धरणीतले ।
गदा मन्त्रौषधबलै र्व्यालीव विनिपातिता ॥ २८

इति श्रीमदारण्यकाण्डे एकोनत्रिंशस्सर्गः ॥

---

## ॥ त्रिंशस्सर्गः ॥

भित्त्वातु तां गदां बाणै राघवो धर्मवत्सलः ।
स्मयमानःखरं वाक्यं संरब्ध मिद मब्रवीत् ॥ १
"एतत्ते बलसर्वस्वं दर्शितं राक्षसाधम! ।
शक्तिहीनतरो मत्तो वृथात्व मवगर्जसि ॥ २

एषा बाणविनिर्भिन्ना गदा भूमितलं गता ।
अभिधानप्रगल्भस्य तव प्रत्यर्थिघातिनी ॥ ३
यत्त्वयोक्तं विनष्टाना मह मश्रुप्रमार्जनम् ।
"राक्षसानां करो"मीति मिथ्या तदपि ते वचः ॥ ४
नीचस्य क्षुद्रशीलस्य मिथ्यावृत्तस्य रक्षसः ।
प्राणानपहरिष्यामि गरुत्मानमृतं यथा ॥ ५
अद्य ते च्छिन्नकण्ठस्य फेनबुद्बुदभूषितम् ।
विदारितस्य मद्बाणै र्मही पास्यति शोणितम् ॥ ६
पांसुरूषितसर्वाङ्गस्स्रस्तन्यस्तभुजद्वयः ।
स्वप्स्यसे गां समालिङ्ग्य दुर्लभां प्रमदामिव ॥ ७
प्रवृद्धनिद्रे शयिते त्वयि राक्षसपांसने ।
भविष्यन्त्य शरण्यानां शरण्या दण्डका इमे ॥ ८
जनस्थाने हतस्थाने तव राक्षस! मच्छरैः ।
निर्भया विचरिष्यन्ति सर्वतो मुनयो वने ॥ ९
अद्य विप्रसरिष्यन्ति राक्षस्यो हतबान्धवाः ।
बाष्पार्द्रवदना दीना भयादन्यभयावहाः ॥ १०
अद्यशोकरसज्ञा स्ता भविष्यन्ति निरर्थकाः ।
अनुरूपकुलाः पत्न्यो यासां त्वं पतिरीदृशः ॥ ११
नृशंस! नीच! क्षुद्रात्म! न्नित्यं ब्राह्मणकण्टक! ।
यत्कृते शङ्कितै रग्नौ मुनिभिः पात्यते हविः ॥" १२
तमेव मभिसंरब्धं ब्रुवाणं राघवं रणे ।
खरो निर्भर्त्सयामास रोषात्खरतरस्वनः ॥ १३

"दृढं खल्ववलिप्तोऽसि भयेष्वपिच निर्भयः ।
वाच्यावाच्यं ततो हि त्वं मृत्युवश्यो न बुध्यसे ॥ १४
कालपाशपरिक्षिप्ता भवन्ति पुरुषा हि ये ।
कार्याकार्यं न जानन्ति ते निरस्य षडिन्द्रियाः ॥" १५
एव मुक्त्वा ततो राम संरुध्य भ्रुकुटी ततः ।
स ददर्श महासालमविदूरे निशाचरः ॥ १६
रणे प्रहरणस्यार्थे सर्वतो ह्यवलोकयन् ।
स त मुत्पाटयामास संदश्य दशनच्छदम् ॥ १७
तं समुत्क्षिप्य बाहुभ्यां विनद्य च महाबलः ।
राम मुद्दिश्य चिक्षेप 'हत स्त्व' मिति चाब्रवीत् ॥ १८
तमापतन्तं बाणौघै श्छित्वा रामः प्रतापवान् ।
रोषमाहारयत्तीव्रं निहन्तुं समरे खरम् ॥ १९
जातस्वेद स्ततो रामो रोषाद्रक्तान्तलोचनः ।
निर्बिभेद सहस्रेण बाणानां समरे खरम् ॥ २०
तस्य बाणान्तराद्रक्तं बहु सुस्राव फेनिलम् ।
गिरेः प्रस्रवणस्येव तोयधारापरिस्रवः ॥ २१
विह्वल स्सकृतो बाणैः खरो रामेण संयुगे ।
मत्तो रुधिरगन्धेन तमेवाभ्यद्रवद्द्रुतम् ॥ २२
तमापतन्तं संरब्धं कृतास्त्रो रुधिराप्लुतम् ।
अपासर्पत्प्रतिपदं किंचित्त्वरितविक्रमः ॥ २३
ततः पावकसंकाशं वधाय समरे शरम् ।
खरस्य रामो जग्राह ब्रह्मदण्डमिवापरम् ॥ २४

स तं दत्तं मघवता सुरराजेन धीमता ।
संदधे चापि धर्मात्मा मुमोच च खरं प्रति ॥ २५
स विमुक्तो महाबाणो निर्घातसमनिस्वनः ।
रामेण धनु रायम्य खरस्योरसि चापतत् ॥ २६
स पपात खरो भूमौ दह्यमान श्शराग्निना ।
रुद्रेणेव विनिर्दग्ध श्श्वेतारण्ये यथाऽन्तकः ॥ २७
स वृत्र इव वज्रेण फेनेन नमुचि र्यथा ।
बलोवेन्द्राशनिहतो निपपात हतःखरः ॥ २८
ततोराजर्षय स्सर्वे सङ्गताः परमर्षयः ।
सभाज्य मुदिता राममिदं वचनमब्रुवम् ॥ २९
एतदर्थं महातेजा महेन्द्रः पाकशासनः ।
शरभङ्गाश्रमं पुण्यमाजगाम पुरन्दरः ॥ ३०
आनीत स्त्व मिमं देश मुपायेन महर्षिभिः ।
एषां वधार्थं क्रूराणां रक्षसां पापकर्मणाम् ॥ ३१
तदिदं नः कृतं कार्यं त्वया दशरथाऽत्मज ! ।
सुखं धर्मं चरिष्यन्ति दण्डकेषु महर्षयः ॥" ३२
एतस्मिन्नन्तरे देवाश्चारणैस्सह सङ्गताः ।
दुन्दुभींश्चापि निघ्नन्तः पुष्पवर्षं समन्ततः ॥ ३३
रामस्योपरि संहृष्टा ववृपुर्विस्मिता स्तदा ।
"अर्धाधिकमुहूर्तेन रामेण निशितै श्शरैः ॥ ३४
चतुर्दश सहस्राणि रक्षसां भीमकर्मणाम् ।
खरदूषणमुख्यानां निहतानि महाहवे ॥ ३५

अहो! बत! महत्कर्म रामस्य विदितात्मनः ।
अहो वीर्य महो! दाक्ष्यं विष्णो रिव हि दृश्यते ॥" ३६
इत्येवमुक्त्वा ते सर्वे ययु र्देवा यथागतम् ।
एतस्मिन्नन्तरे वीरो लक्ष्मणस्सहसीतया ॥ ३७
गिरिदुर्गा द्विनिष्क्रम्य संविवेशाश्रमं सुखी ।
ततो रामस्तु विजयी पूज्यमानो महर्षिभिः ॥ ३८
प्रविवेशाश्रमं वीरो लक्ष्मणेनाभिपूजितः ।
तं दृष्ट्वा शत्रुहन्तारं महर्षीणां सुखावहम् ॥ ३९
बभूव हृष्टा वैदेही भर्तारं परिषस्वजे ।
मुदा परमया युक्ता दृष्ट्वा रक्षोगणान्हतान् ॥ ४०
रामं चैवाव्यथं दृष्ट्वा तुतोष जनकात्मजा ।
ततस्तु तं राक्षससंघमर्दनं सभाज्यमानं मुदितैर्महर्षिभिः ।
पुनः परिष्वज्य शशिप्रभानना बभूव हृष्टा जनकात्मजा तदा ४१

इति श्रीमदारण्यकाण्डे त्रिंशस्सर्गः ॥

---

## ॥ एकत्रिंशस्सर्गः ॥

त्वरमाण स्ततो गत्वा जनस्थानादकम्पनः ।
प्रविश्य लङ्कां वेगेन रावणं वाक्यमब्रवीत् ॥ १
"जनस्थानस्थिता राजन्! राक्षसा बहवो हताः ।
खरश्च निहतस्सङ्ख्ये कथंचिदहमागतः ॥" २
एव मुक्तो दशग्रीवः क्रुद्धस्संरक्तलोचनः ।
अकम्पनमुवाचेदं निर्दहन्निव चक्षुषा ॥ ३

"केन रम्यं जनस्थानं हृतं मम परासुना ।
कोहि सर्वेषु लोकेषु गतिं चाधिगमिष्यति ॥ ४
नहि मे विप्रियं कृत्वा शक्यं मघवता सुखम् ।
प्राप्तुं वैश्रवणेनापि न यमेन न विष्णुना ॥ ५
कालस्य चाप्यहं कालो दहेयमपि पावकम् ।
मृत्युं मरणधर्मेण संयोजयितुमुत्सहे ॥ ६
दहेयमपि संक्रुद्धस्तेजसाऽऽदित्यपावकौ ।
वातस्य तरसा वेगं निहन्तुमहमुत्सहे ॥" ७
तथा क्रुद्धं दशग्रीवं कृताञ्जलिरकम्पनः ।
भयात्संदिग्धया वाचा रावणं याचतेऽभयम् ॥ ८
दशग्रीवोऽभयं तस्मै प्रददौ रक्षसां वरः ।
सविस्रब्धोऽब्रवीद्वाक्य मसंदिग्धमकम्पनः ॥ ९
"पुत्रो दशरथस्यास्ति सिंहसंहननो युवा ।
रामो नाम वृषस्कन्धो वृत्तायतमहाभुजः ॥ १०
वीरः पृथुयशा श्श्रीमानतुल्यबलविक्रमः ।
हतं तेन जनस्थानं खरश्च सहदूषणः ॥" ११
अकम्पनवचश्श्रुत्वा रावणो राक्षसाधिपः ।
नागेन्द्र इव निःश्श्वस्य वचनं चेदमब्रवीत् ॥ १२
ससुरेन्द्रेण संयुक्तो रामस्सर्वामरै स्सह ।
उपयातो जनस्थानं ब्रूहि कच्चिदकम्पन ! ॥" १३
रावणस्य पुनर्वाक्यं निशम्य तदकम्पनः ।
आचचक्षे बलं तस्य विक्रमंच महात्मनः ॥ १४

रामो नाम महातेजा श्श्रेष्ठस्सर्वधनुष्मताम् ।
दिव्यास्त्रगुणसंपन्नः पुरन्दरसमो युधि ॥ १५
तस्यानुरूपो बलवान् रक्ताक्षो दुन्दुभिस्वनः ।
कनीयान् लक्ष्मणो नाम भ्राता शशिनिभाननः ॥ १६
स तेन सह संयुक्तः पावकेनानिलो यथा ।
श्रीमान्राजवरस्तेन जनस्थानं निपातितम् ॥ १७
नैव देवा महात्मानो नात्र कार्या विचारणा ।
शरा रामेण तूत्सृष्टारुक्मपुङ्खाः पतत्रिणः ॥ १८
सर्पाः पञ्चानना भूत्वा भक्षयन्तिस्म राक्षसान् ।
येन येन च गच्छन्ति राक्षसा भयकर्शिताः ॥ १९
तेन तेन स्म पश्यन्ति राममेवाग्रतः स्थितम् ।
इत्थं विनाशितं तेन जनस्थानं तवानघ! ॥ २०
अकम्पनवचश्श्रुत्वा रावणो वाक्य मब्रवीत् ।
"जनस्थानं गमिष्यामि हन्तुं रामं सलक्ष्मणम् ॥" २१
अथैवमुक्ते वचने प्रोवाचेदमकम्पनः ।
श्रृणु राज! न्यथावृत्तं रामस्य बलपौरुषम् ॥ २२
"असाध्यःकुपितो रामो विक्रमेण महायशाः ।
आपगायास्सुपूर्णाया वेगं परिहरेच्छरैः ॥ २३
सतारग्रहनक्षत्रं नभश्चाप्यवसादयेत् ।
असौ राम स्तु मज्जन्तीं श्रीमानभ्युद्धरेन्महीम् ॥ २४
भित्वा वेलां समुद्रस्य लोकानाप्लावयेद्विभुः ।
वेगं वापि समुद्रस्य वायुं वा विधमे च्छरैः ॥ २५

संहृत्य वा पुनर्लोकान्विक्रमेण महायशाः ।
शक्त स्स पुरुषव्याघ्र स्स्रष्टुं पुन रपि प्रजाः ॥ २६
न हि रामो दशग्रीव! शक्यो जेतुं त्वया युधि ।
रक्षसां वापि लोकेन स्वर्गः पापजनैरिव ॥ २७
न तं वध्य महं मन्ये सर्वै र्देवासुरै रपि ।
अयं तस्य वधोपाय स्तं म मैकमनाऽश्शृणु ॥ २८
भार्या तस्योत्तमा लोके सीता नाम सुमध्यमा ।
श्यामा समविभक्ताङ्गी स्त्रीरत्नं रत्नभूषिता ॥ २९
नैव देवी न गन्धर्वी नाप्सरा नापि दानवी ।
तुल्यासीमन्तिनी तस्या मानुषीषु कुतो भवेत् ॥ ३०
तस्यापहर भार्यां त्वं प्रमथ्य तु महावने ।
स तया रहितः कामी रामो हास्यति जीवितम् ॥" ३१
अरोचयत तद्वाक्यं रावणो राक्षसाधिपः ।
चिन्तयित्वा महाबाहुरकम्पनमुवाच ह ॥ ३२
"बाढं काल्यं गमिष्यामि ह्येक स्सारथिना सह ।
आनयिष्यामि वैदेही मिमां हृष्टो महापुरीम् ॥" ३३
अथैव मुक्त्वा प्रययौ खरयुक्तेन रावणः ।
रथेनादित्यवर्णेन दिश स्सर्वाः प्रकाशयन् ॥ ३४
स रथो राक्षसेन्द्रस्य नक्षत्रपथगो महान् ।
सं चार्यमाण श्शुशुभे जलदे चन्द्रमा इव ॥ ३५
स मारीचाश्रमं प्राप्य ताटकेय मुपागमत् ।
मारीचेनार्चितो राजा भक्ष्यभोज्यै रमानुषैः ॥ ३६

तं स्वयं पूजयित्वा तु आसनेनोदकेन च ।
अर्थोपहितया वाचा मारीचो वाक्य मब्रवीत् ॥ ३७
" कच्चित्सुकुशलं राजन् ! लोकानां राक्षसेश्वर ! ।
आशङ्केनाथ ! जानेत्वं यतस्तूर्ण मिहागतः ॥" ३८
एव मुक्तो महातेजा मारीचेन स रावणः ।
ततः पश्चादिदं वाक्य मब्रवी द्वाक्यकोविदः ॥ ३९
" आरक्षो मे हत स्तात ! रामेणाक्लिष्ट कर्मणा ।
जनस्थानमवध्यं तत्सर्वं युधि निपातितम् ॥ ४०
तस्य मे कुरु साचिव्यं तस्य भार्यापहारणे । !'
राक्षसेन्द्रवचश्श्रुत्वा मारीचो वाक्यमब्रवीत् ॥ ४१
आख्याता केन सीता सा मित्ररूपेण शत्रुणा ।
त्वया राक्षसशार्दूल ! को न नन्दति निन्दितः ॥ ४२
' सीता मिहानय' त्वेति को ब्रवीति ब्रवीहि मे ।
रक्षोलोकस्य सर्वस्य क श्शृङ्गं छेत्तु मिच्छति ॥ ४३
प्रोत्साहयति कश्च त्वां सच शत्रु रसंशयः ।
आशीविषमुखाद्दंष्ट्रा मुद्धर्तुं चेच्छति त्वया ॥ ४४
कर्मणा तेन केनासि कापथं प्रतिपादितः ।
सुखंसुप्तस्य ते राजन् ! प्रहृतं केन मूर्धनि ॥ ४५
विशुद्धवंशाभिजनाग्रहस्त स्तेजोमद स्संस्थितदोर्विषाणः ।
उदीक्षितुं रावण ! नेह युक्त स्ससंयुगे राघवगन्धहस्ती ॥ ४६
असौ रणान्तस्थितिसन्धिवालो विदग्धरक्षोमृगहा नृसिंहः ।
सुप्तस्त्वया बोधयितुं न युक्त श्शराङ्गपूर्णो निशितासिदंष्ट्रः ॥ ४७

चापावहारे भुजवेगपङ्के शरोर्मिमाले सुमहाहवौघे ।
न रामपाताळमुखेऽतिघोरे प्रस्कन्दितुं राक्षसराज! युक्तम् ॥ ४८
प्रसीद लङ्केश्वर! राक्षसेन्द्र! लङ्कां प्रसन्नो भव साधुगच्छ ।
त्वं स्वेषु दारेषु रमस्व नित्यं राम स्सभार्यो रमतां वनेषु ॥" ४९
एवमुक्तो दशग्रीवो मारीचेन स रावणः ।
न्यवर्तत पुरीं लङ्कां विवेश च गृहोत्तमम् ॥ ५०

इति श्रीमदारण्यकाण्डे एकत्रिंशस्सर्गः ॥

## ॥ द्वात्रिंशस्सर्गः ॥

तत श्शूर्पणखा दृष्ट्वा सहस्राणि चतुर्दश ।
हतान्येकेन रामेण रक्षसां भीमकर्मणाम् ॥ १
दूषणंच खरं चैव हतं त्रिशिरसा सह ।
दृष्ट्वा पुनर्महानादं ननाद जलदो यथा ॥ २
स दृष्ट्वा कर्म रामस्य कृतमन्यै स्सुदुष्करम् ।
जगाम परमोद्विग्ना लङ्कां रावणपालिताम् ॥ ३
सा ददर्श विमानाग्रे रावणं दीप्ततेजसम् ।
उपोपविष्टं सचिवै र्मरुद्भि रिव वासवम् ॥ ४
आसीनं सूर्यसङ्काशे काञ्चने परमासने ।
रुक्मवेदिगतं प्राज्यं ज्वलन्त मिव पावकम् ॥ ५
देवगन्धर्वभूताना मृषीणां च महात्मनाम् ।
अजेयं समरे शूरं व्यात्तानन मिवान्तकम् ॥ ६

देवासुरविमर्देषु वज्राशनिकृतव्रणम् ।
ऐरावतविषाणाग्रै रुद्धृष्टकिणवक्षसम् ॥ ७
विंशद्भुजं दशग्रीवं दर्शनीयपरिच्छदम् ।
विशालवक्षसं वीरं राजलक्षणशोभितम् ॥ ८
स्निग्ध वैडूर्यसङ्काशं तप्तकाञ्चनकुण्डलम् ।
सुभुजं शुक्लदशनं महास्यं पर्वतोपमम् ॥ ९
विष्णुचक्रनिपातैश्च शतशो देवसंयुगे ।
अन्यै श्शस्त्रप्रहारैश्च महायुद्धेषु ताडितम् ॥ १०
आहताङ्गं समस्तैश्च देवप्रहरणै स्तथा ।
अक्षोभ्याणां समुद्राणां क्षोभणं क्षिप्रकारिणम् ॥ ११
क्षेप्तारं पर्वतेन्द्राणां सुराणांच प्रमर्दनम् ।
उच्छेत्तारंच धर्माणां परदाराभिमर्शनम् ॥ १२
सर्वदिव्यास्त्रयोक्तारं यज्ञविघ्नकरं सदा ।
पुरीं भोगवतीं प्राप्य पराजित्य च वासुकिम् ॥ १३
तक्षकस्य प्रियां भार्यां पराजित्य जहार यः ।
कैलासपर्वतं गत्वा विजित्य नरवाहनम् ॥ १४
विमानं पुष्पकं तस्य कामगं वै जहारयः ।
वनं चैत्ररथं दिव्यं नळिनीं नन्दनंवनम् ॥ १५
विनाशयति यः क्रोधा देवोद्यानानि वीर्यवान् ।
चन्द्रसूर्यौ महाभागा वुत्तिष्ठन्तौ परन्तपौ ॥ १६
निवारयति बाहुभ्यां यश्शैलशिखरोपमः ।
दशवर्षसहस्राणि तप स्तप्त्वा महावने ॥ १७

पुरा स्वयंभुवे धीर श्शिरांस्युपजहार यः ।
देवदानवगन्धर्व पिशाचपतगोरगैः ॥ १८
अभयं यस्य संग्रामे मृत्युतो मानुषादृते ।
मन्त्रै रभिष्टुतं पुण्यमध्वरेषु द्विजातिभिः ॥ १९
हविर्धानेषु य स्सोममुपहन्ति महाबलः ।
आप्तयज्ञहरं क्रूरं ब्रह्मघ्नं दुष्टचारिणम् ॥ २०
कर्कशं निरनुक्रोशं प्रजानामहिते रतम् ।
रावणं सर्वभूतानां सर्वलोकभयावहम् ॥ २१
राक्षसी भ्रातरं शूरं सा ददर्श महाबलम् ।
तं दिव्यवस्त्राभरणं दिव्यमाल्योपशोभितम् ॥ २२
आसने सूपविष्टंच कालकालमिवोद्यतम् ।
राक्षसेन्द्रं महाभागं पौलस्त्यकुलनन्दनम् ॥ २३
रावणं शत्रुहन्तारं मन्त्रिभिः परिवारितम् ।
अभिगम्याब्रवीद्वाक्यं राक्षसी भयविह्वला ॥ २४
तमब्रवीद्दीप्तविशाललोचनं प्रदर्शयित्वा भयमोहमूर्छिता ।
सुदारुणं वाक्य मभीतचारिणी महात्मना शूर्पणखा विरूपिता ॥

इति श्रीमदारण्यकाण्डे द्वात्रिंशस्सर्गः ॥

## ॥ त्रयस्त्रिंशस्सर्गः ॥

ततश्शूर्पणखा दीना रावणं लोकरावणम् ।
अमात्यमध्ये संक्रुद्धा परुषं वाक्य मब्रवीत् ॥ १

" प्रमत्तः कामभोगेषु स्वैरवृत्तो निरङ्कुशः ।
समुत्पन्नं भयं घोरं बोद्धव्यं नावबुध्यसे ॥ २
सक्तं ग्राम्येषु भोगेषु कामवृत्तं महीपतिम् ।
लुब्धं न बहुमन्यन्ते श्मशानाग्निमिव प्रजाः ॥ ३
स्वयं कार्याणि यः काले नानुतिष्ठति पार्थिव ।
स तु वै सह राज्येन तैश्च कार्यैर्विनश्यति ॥ ४
अयुक्तचारं दुर्दर्श मस्वाधीनं नराधिपम् ।
वर्जयन्ति नरादूरा न्नदीपङ्क मिव द्विपाः ॥ ५
येन रक्षन्ति विषय मस्वाधीना नराधिपाः ।
तेन वृद्ध्या प्रकाशन्ते गिरय स्सागरे यथा ॥ ६
आत्मवद्भिर्विगृह्य त्वं देवगन्धर्वदानवैः ।
अयुक्तचारश्चपलः कथं राजा भविष्यसि ॥ ७
त्वन्तु बालस्वभावश्च बुद्धिहीनश्च राक्षस ! ।
ज्ञातव्यन्तु न जानीषे कथं राजा भविष्यसि ॥ ८
येषां चारश्च कोशश्च नयश्च जयतां वर ! ।
अस्वाधीना नरेन्द्राणां प्राकृतैस्ते जनै स्समाः ॥ ९
यस्मात्पश्यन्ति दूरस्थां त्सर्वा नर्थान्नराधिपाः ।
चारेण तस्मा दुच्यन्ते राजानो दीर्घचक्षुषः ॥ १०
अयुक्तचारं मन्ये त्वां प्राकृतै स्सचिवै र्वृतम् ।
स्वजनन्तु जनस्थानं हतं यो नावबुध्यसे ॥ ११
चतुर्दश सहस्राणि रक्षसां क्रूरकर्मणाम् ।
हतान्येकेन रामेण खरश्च सह दूषणः ॥ १२

ऋषीणा मभयं दत्तं कृतक्षेमाश्च दण्डकाः ।
धर्षितं च जनस्थानं रामेणाक्लिष्टकर्मणा ॥ १३
त्वन्तु लुब्धः प्रमत्तश्च पराधीनश्च रावण! ।
विषये स्वे समुत्पन्नं भयं यो नावबुध्यसे ॥ १४
तीक्ष्णमल्पप्रदातारं प्रमत्तं गर्वितं शठम् ।
व्यसने सर्वभूतानि नाभिधावन्ति पार्थिवम् ॥ १५
अतिमानिन मग्राह्यमात्मसम्भावितं नरम् ।
क्रोधिनं व्यसने हन्ति स्वजनोऽपि महीपतिम् ॥ १६
नानुतिष्टति कार्याणि भयेपु न बिभेति च ।
क्षिप्रं राज्याच्च्युतो दीन स्तृणै स्तुल्यो भविष्यति ॥ १७
शुष्कैः काष्ठै र्भवेत्कार्यं लोष्टै रपि च पांसुभिः ।
न तु स्थानात्परिभ्रष्टैः कार्यं स्या द्वसुधाधिपैः ॥ १८
उपभुक्तं यथा वास स्स्रजो वा मृदिता यथा ।
एवं राज्यात्परिभ्रष्ट स्समर्थोऽपि निरर्थकः ॥ १९
अप्रमत्तश्चयो राजा सर्वज्ञो विजितेन्द्रियः ।
कृतज्ञो धर्मशीलश्च स राजा तिष्टते चिरम् ॥ २०
नयनाभ्यां प्रसुप्तोऽसि जागर्ति नयचक्षुषा ।
व्यक्तक्रोध प्रसादश्च स राजा पूज्यते जनैः ॥ २१
त्वन्तु रावण! दुर्बुद्धि र्गुणै रेतै र्विवर्जितः ।
यस्य तेऽविदित श्चारै रक्षसां सुमहान्वधः ॥ २२
परावमन्ता विषयेषु सङ्गतो न देशकालप्रविभागतत्त्ववित् ।
अयुक्तबुद्धिर्गुणदोषनिश्चये विपन्नराज्यो नचिराद्विपत्स्यसे ॥" २३

इतिस्वदोषान्परिकीर्तितां स्तया समीक्ष्य बुद्ध्वाक्षणदाचरेश्वरः ।
धनेन दर्पेण बलेन चान्वितो विचिन्तयामास चिरं स रावणः ॥

इति श्रीमदारण्यकाण्डे त्रयस्त्रिंशस्सर्गः ॥

## ॥ चतुस्त्रिंशस्सर्गः ॥

तत श्शूर्पणखां क्रुद्धां ब्रुवन्तीं परुषं वचः ।
अमात्यमध्ये संक्रुद्धः परिपप्रच्छ रावणः ॥ १
"कश्च रामः कथं वीर्यः किंरूपः किंपराक्रमः ।
किमर्थं दण्डकारण्यं प्रविष्ट स्सुदुरासदम् ॥ २
आयुधं किञ्च रामस्य निहता येन राक्षसाः ।
खरश्च निहत स्संख्ये दूषण स्त्रिशिरास्तथा ॥" ३
इत्युक्ता राक्षसेन्द्रेण राक्षसी क्रोधमूर्छिता ।
ततो रामं यथातत्त्व माख्यातु मुपचक्रमे ॥ ४
"दीर्घवाहु र्विशालाक्ष श्चीरकृष्णाजिनाम्बरः ।
कन्दर्प समरूपश्च रामो दशरथात्मजः ॥ ५
शक्रचापनिभं चापं विकृष्य कनकाङ्गदम् ।
दीप्तान् क्षिपति नाराचां त्सर्पा निव महाविषान् ॥ ६
नाददानं शरान्घोरान्न मुञ्चन्तं शिलीमुखान् ।
न कार्मुकं विकर्षन्तं रामं पश्यामि संयुगे ॥ ७
हन्यमानन्तु तत्सैन्यं पश्यामि शरवृष्टिभिः ।
इन्द्रेणेवोत्तमं सस्य माहतन्त्वश्मवृष्टिभिः ॥ ८

रक्षसां भीमरूपाणां सहस्राणि चतुर्दश ।
निहतानि शरैस्तीक्ष्णैस्तेनैकेन पदातिना ॥ ९
अर्धाधिकमुहूर्तेन खरश्च सहदूषणः ।
ऋषीणा मभयं दत्तं कृतक्षेमाश्च दण्डकाः ॥ १०
एका कथंचिन्मुक्ताऽहं परिभूय महात्मना ।
स्त्रीवधं शङ्कमानेन रामेण विदितात्मना ॥ ११
भ्राता चास्य महातेजा गुणतस्तुल्यविक्रमः ।
अनुरक्तश्च भक्तश्च लक्ष्मणो नाम वीर्यवान् ॥ १२
अमर्षीदुर्जयो जेता विक्रान्तो बुद्धिमा न्बली ।
रामस्य दक्षिणो बाहुर्नित्यं प्राणो बहिश्चरः ॥ १३
रामस्य तु विशालाक्षी पूर्णेन्दुसदृशानना ।
धर्मपत्नी प्रिया भर्तुर्नित्यं प्रियहिते रता ॥ १४
सा सुकेशी सुनासोरु स्सुरूपाच यशास्विनी ।
देवतेव वनस्यास्य राजते श्रीरिवापरा ॥ १५
तप्तकञ्चनवर्णाभा रक्ततुङ्गनखी शुभा ।
सीता नाम वरारोहा वैदेही तनुमध्यमा ॥ १६
नैवदेवी न गन्धर्वी न यक्षी न च किन्नरी ।
नै वंरूपा मया नारी दृष्टपूर्वा महीतले ॥ १७
यस्य सीता भवे द्भार्या यं च हृष्टा परिष्वजेत् ।
अतिजीवे त्स सर्वेषु लोके ष्वपि पुरन्दरात् ॥ १८
सा सुशीला वपुःश्लाघ्या रूपेणाप्रतिमा भुवि ।
तवानुरूपा भार्या स्या त्त्वं च तस्यास्तथा पतिः ॥ १९

तान्तु विस्तीर्णजघनां पीनश्रोणीपयोधराम् ।
भार्यार्थंच तवानेतु मुद्यताऽहं वराननाम् ॥ २०
विरूपिताऽस्मि क्रूरेण लक्ष्मणेन महाभुज ! ।
तान्तु दृष्ट्वाऽद्य वैदेहीं पूर्णचन्द्रनिभाननाम् ॥ २१
मन्मथस्य शराणां वै त्वं विधेयो भविष्यसि ।
यदि तस्या मभिप्रायो भार्यार्थे तव जायते ॥ २२
शीघ्र मुद्भियतां पादो जयार्थमिह दक्षिणः ।
कुरु प्रियं तथा तेषां रक्षसां राक्षसेश्वर ! ॥ २३
वधात्तस्य नृशंसस्य रामस्याऽश्रमवासिनः ।
तं शरै र्निशितै र्हत्वा लक्ष्मणंच महारथम् ॥ २४
हतनाथां सुखं सीतां यथाव दुपभोक्ष्यसि ।
रोचते यदि ते वाक्यंममैत द्राक्षसेश्वर ! ॥ २५
क्रियतां निर्विशङ्केन वचनं मम रावण ! ।
विज्ञाये हात्मशक्तिं च ह्रियता मबला बलात् ॥ २६
सीता सर्वानवद्याङ्गी भार्यार्थे राक्षसेश्वर ! ।
निशम्य रामेण शरै रजिह्मगै र्हतान्जनस्थानगतान्निशाचरान् ॥ २७
खरञ्च बुद्ध्वा निहतं च दूषणं त्व मत्र कृत्यं प्रतिपत्तु मर्हसि ।"

इति श्रीमदारण्यकाण्डे चतुस्त्रिंशस्सर्गः ॥

॥ पञ्चत्रिंशस्सर्गः ॥

तत श्शूर्पणखावाक्यं तच्छ्रुत्वा रोमहर्षणम् ।
सचिवानभ्यनुज्ञाय कार्यं बुद्ध्वा जगाम सः ॥ १

तत्कार्य मनुगम्याथ यथावदुपलभ्य च ।
दोषाणां च गुणानां च संप्रधार्य बलाबलम् ॥ २
'इतिकर्तव्य' मित्येव कृत्वा निश्चय मात्मनः ।
स्थिरबुद्धि स्ततो रम्यां यानशालां जगाम ह ॥ ३
यानशालां ततो गत्वा प्रच्छन्नो राक्षसाधिपः ।
सूतं संचोदयामास 'रथ स्संयोज्यता' मिति ४
एव मुक्तः क्षणेनैव सारथि र्लघुविक्रमः ।
रथं संयोजयामास तस्याभिमत मुत्तमम् ॥ ५
काञ्चनं रथमास्थाय कामगं रत्नभूषितम् ।
पिशाचवदनै र्युक्तं खरैः काञ्चनभूषणैः ॥ ६
मेघप्रतिमनादेन स तेन धनदानुजः ।
राक्षसाधिपति श्श्रीमा न्ययौ नदनदीपतिम् ॥ ७
सश्वेतवालव्यजनः श्वेतच्छत्रो दशाननः ।
स्निग्धवैडूर्यसंकाशस्तप्तकाञ्चनकुण्डलः ॥ ८
विंशद्भुजो दशग्रीवो दर्शनीयपरिच्छदः ।
त्रिदशारि र्मुनीन्द्रघ्नो दशशीर्ष इवाद्रिराट् ॥ ९
कामगं रथमास्थाय शुशुभे राक्षसेश्वरः ।
विद्युन्मण्डलवा न्मेघ स्सबलाक इवाम्बरे ॥ १०
स शैलं सागरानूपं वीर्यवा नवलोकयन् ।
नानापुष्पफलै र्वृक्षै रनुकीर्णं सहस्रशः ॥ ११
शीतमङ्गलतोयाभिः पद्मिनीभि स्समन्ततः ।
विशालै राश्रमपदै र्वेदिमद्भि स्समावृतम् ॥ १२

कदळ्याढकिसम्बाधं नाळिकेरोपशोभितम् ।
सालै स्तालैस्तमालैश्च पुष्पितै स्तरुभि र्वृतम् ॥ १३
नागै स्सुपर्णै र्गन्धर्वैः किन्नरैश्च सहस्रशः ।
अजै र्वैखानसै र्माषै र्वालखिल्यै र्मरीचिपैः ॥ १४
अत्यन्तनियताहारै श्शोभितं परमर्षिभिः ।
जितकामैश्च सिद्धैश्च चारणै रुपशोभितम् ॥ १५
दिव्याभरणमाल्याभि र्दिव्यरूपाभि रावृतम् ।
क्रीडारतिविधिज्ञाभि रप्सरोभि स्सहस्रशः ॥ १६
सेवितं देवपत्नीभि श्श्रीमतीभि श्श्रियाऽऽवृतम् ।
देवदानवसंघैश्च चरितं त्वमृताशिभिः ॥ १७
हंसक्रौञ्चप्लवाकीर्णं सारसै स्संप्रणादितम् ।
वैडूर्य प्रस्तरं रम्यं स्निग्धं सागरतेजसा ॥ १८
पाण्डुराणि विशालानि दिव्यमाल्ययुतानिच ।
तूर्यगीताभिजुष्टानि विमानानि समन्ततः ॥ १९
तपसा जितलोकानां कामगान्यभिसंपतन् ।
गन्धर्वाप्सरस श्चैव ददर्श धनदानुजः ॥ २०
निर्यासरसमूलानां चन्दनानां सहस्रशः ।
वनानि पश्यंत्सौम्यानि घ्राणतृप्तिकराणि च ॥ २१
अगरूणांच मुख्यानां वनान्युपवनानिच ।
तक्कोलानांच जात्यानां फलानांच सुगन्धिनाम् ॥ २२
पुष्पाणिच तमालस्य गुल्मानि मरिचस्यच ॥
मुक्तानांच समूहानि शुष्यमाणानितीरतः ॥ २३

शङ्खानां प्रस्तरं चैव प्रवाळनिचयं तथा ।
काञ्चनानिच शैलानि राजतानिच सर्वशः ॥ २४
प्रस्रवाणि मनोज्ञानि प्रसन्नानि ह्रदानिच ।
धनधान्योपपन्नानि स्त्रीरत्नै श्शोभितानिच ॥ २५
हस्त्यश्वरथगाढानि नगराण्यवलोकयन् ।
तं समं सर्वतस्स्निग्धं मृदुसंस्पर्शमारुतम् ॥ २६
अनूपं सिन्धुराजस्य ददर्श त्रिदिवोपमम् ।
तत्रापश्यत्स मेघाभं न्यग्रोध मृषिभि र्वृतम् ॥ २७
समन्ताद्यस्यता श्शाखा श्शतयोजनमायताः ।
यस्य हस्तिन मादाय महाकायं च कच्छपम् ॥ २८
भक्षार्थं गरुड श्शाखा माजगाम महाबलः ।
तस्य तां सहसा शाखां भारेण पतगोत्तमः ॥ २९
सुपर्णः पर्णबहुळां बभञ्जच महाबलः ।
तत्र वैखानसा माषा वालखिल्या मरीचिपाः ॥ ३०
अजा बभूवु र्धूम्राश्च सङ्गताः परमर्षयः ।
तेषां दयार्थं गरुडस्तां शाखां शतयोजनाम् ॥ ३१
जगामादाय वेगेन तौ चोभौ गजकच्छपौ ।
एकपादेन धर्मात्मा भक्षयित्वा तदामिषम् ॥ ३२
निषादविषयं हत्वा शाखया पतगोत्तमः ।
प्रहर्ष मतुलं लेभे मोक्षयित्वा महामुनीन् ॥ ३३
स तेनैव प्रहर्षेण द्विगुणीकृतविक्रमः ।
अमृतानयनार्थं वै चकार मतिमान्मतिम् ॥ ३४

अयोजालानि निर्मथ्य भित्वा रत्नमयं गृहम् ।
महेन्द्र भवना द्गुप्तमाजहारामृतं ततः ॥ ३५
तं महर्षिगणैर्जुष्टं सुवर्णकृतलक्षणम् ।
नाम्ना सुभद्रं न्यग्रोधं ददर्श धनदानुजः ॥ ३६
तं तु गत्वा परं पारं समुद्रस्य नदीपतेः ।
ददर्शाश्रम मेकान्ते रम्ये पुण्ये वनान्तरे ॥ ३७
तत्र कृष्णाजिनधरं जटावल्कलधारिणम् ।
ददर्श नियताहारं मारीचं नाम राक्षसम् ॥ ३८
स रावण स्समागम्य विधिवत्तेन रक्षसा ।
मारीचेनार्चितोराजा सर्वकामैरमानुषैः ॥ ३९
तं स्वयं पूजयित्वा च भोजनेनोदकेन च ।
अर्थोपहितया वाचा मारीचो वाक्यमब्रवीत् ॥ ४०
"कच्चि त्सुकुशलं राजन्! लङ्कायां राक्षसेश्वर! ।
केनार्थेन पुन स्त्वं वै तूर्ण मेव मिहाऽगतः ॥" ४१
एवमुक्तो महातेजा मारीचेन स रावणः ।
ततः पश्चादिदं वाक्यमब्रवी द्वाक्यकोविदः ॥ [४२

इति श्रीमदारण्यकाण्डे पञ्चत्रिंशस्सर्गः ॥

## ॥ षट्त्रिंशस्सर्गः ॥

"मारीच! श्रूयतां तात! वचनं ममभाषतः ।
आर्तोऽस्मि मम चार्तस्य भवान्हि परमा गतिः १

जानीषे त्वं जनस्थाने यथा भ्राता खरो मम ।
दूषण श्च महाबाहु स्स्वसा शूर्पणखा च मे ॥ २
त्रिशिरा श्च महातेजा राक्षसः पिशिताशनः ।
अन्ये च बहव श्शूरा लब्धलक्षा निशाचराः ॥ ३
वसन्ति मन्नियोगेन नित्यवासं च राक्षसाः ।
बाधमाना महारण्ये मुनीन्वै धर्मचारिणः ॥ ४
चतुर्दश सहस्राणि रक्षसां भीमकर्मणाम् ।
शूराणां लब्धलक्षाणां खरचित्तानुवर्तिनाम् ॥ ५
ते त्विदानीं जनस्थाने वसमाना महाबलाः ।
सङ्गताः परमायत्ता रामेण यह संयुगे ॥ ६
नानाप्रहरणोपेताः खरप्रमुखराक्षसाः ।
तेन संजातरोषेण रामेण रणमूर्धनि ॥ ७
अनुक्त्वा परुषं किञ्चि च्छरै र्व्यापारितं धनुः ।
चतुर्दश सहस्राणि रक्षसा मुग्रतेजसाम् ॥ ८
निहतानि शरै स्तीक्ष्णै र्मानुषेण पदातिना ।
खर श्च निहतस्संख्ये दूषण श्च निपातितः ॥ ९
हत श्च त्रिशिरा श्चापि निर्भया दण्डकाःकृताः ।
पित्रा निरस्तां क्रुद्धेन सभार्यः क्षीणजीवितः ॥ १०
स हन्ता तस्य सैन्यस्य रामः क्षत्रियपांसनः ।
दुश्शीलः कर्कश स्तीक्ष्णो मूर्खो लुब्धोऽजितेन्द्रियः ॥ ११
त्यक्तधर्मो ह्यधर्मात्मा भूताना महिते रतः ।
येन वैरं विनाऽ रण्ये सत्त्व माश्रित्य केवलम् ॥ १२

कर्णनासापहरणाद्भगिनी मे विरूपिता ।
तस्यभार्यां जनस्थाना त्सीतां सुरसुतोपमाम् ॥ १३
आनयिष्यामि विक्रम्य सहाय स्तत्व मे भव ।
त्वया ह्यहं सहायेन पार्श्वस्थेन महाबल! ॥ १४
भ्रातृभिश्च सुरा न्युद्धे समग्रा न्नाभिचिन्तये ।
तत्सहायो भवत्वं मे समर्थोह्यसि राक्षस! ॥ १५
वीर्ये युद्धेच दर्पेच नह्यस्ति सदृशस्तव ।
उपायज्ञो महान् शूर स्सर्वमायाविशारदः ॥ १६
एतदर्थ महं प्राप्त स्त्वत्समीपं निशाचर! ।
शृणु तत्कर्मसाहाय्ये यत्कार्यं वचनान्मम ॥ १७
सौवर्ण स्त्वं मृगो भूत्वा चित्रो रजतबिन्दुभिः ।
आश्रमे तस्य रामस्य सीतायाः प्रमुखे चर ॥ १८
त्वांतु निस्संशयं सीता दृष्ट्वातु मृगरूपिणम् ।
'गृह्यता' मिति भर्तारं लक्ष्मणं चाभिधास्यति ॥ १९
तत स्तयो रपायेतु शून्ये सीतां यथासुखम् ।
निराबाधो हरिष्यामि राहु श्चन्द्रप्रभामिव ॥ २०
ततः पश्चात्सुखं रामे भार्याहरणकर्शिते ।
विस्रब्धः प्रहरिष्यामि कृतार्थे नान्तरात्मना ॥" २१
तस्य रामकथां श्रुत्वा मारीचस्य महात्मनः ।
शुष्कं समभव द्वक्त्रं परित्रस्तो बभूवह ॥ २२
ओष्ठौ परिलिह ञ्छुष्कौ नेत्रै रनिमिषै रिव ।
मृतभूत इवार्तस्तु रावणं समुदैक्षत ॥ २३

स रावणं त्रस्तविषण्णचेता महावने रामपराक्रमज्ञः ।
कृताञ्जलि स्तत्त्व मुवाच वाक्यं हितंच तस्मै हितमात्मनश्च ॥ २४

इति श्रीमदारण्यकाण्डे षट्त्रिंशस्सर्गः ॥

## ॥ सप्तत्रिंशस्सर्गः ॥

तच्छ्रुत्वा राक्षसेन्द्रस्य वाक्यं वाक्यविशारदः ।
प्रत्युवाच महाप्राज्ञो मारीचो राक्षसेश्वरम् ॥ १
सुलभाः पुरुषा राजं! स्सततं प्रियवादिनः ।
अप्रियस्यतु पथ्यस्य वक्ता श्रोताच दुर्लभः ॥ २
न नूनं बुध्यसे रामं महावीर्यं गुणोन्नतम् ।
अयुक्तचार श्चपलो महेन्द्रवरुणोपमम् ॥ ३
अपि स्वस्ति भवेत्तात! सर्वेषां भुवि रक्षसाम् ।
अपि रामो न संक्रुद्धः कुर्या ल्लोक मराक्षसम् ॥ ४
अपि ते जीवितान्ताय नोत्पन्ना जनकात्मजा ।
अपि सीतानिमित्तंच न भवे द्व्यसनं मम ॥ ५
अपित्वा मीश्वरं प्राप्य कामवृत्तं निरङ्कुशम् ।
न विनश्ये त्पुरी लङ्का त्वया सह सराक्षसा ॥ ६
त्वद्विधः कामवृत्तो हि दुश्शीलः पापमन्त्रितः ।
आत्मानं स्वजनं राष्ट्रं स राजा हन्ति दुर्मतिः ॥ ७
न च पित्रा परित्यक्तो नामर्यादः कथंचन ।
न लुब्धो न च दुश्शीलो न च क्षत्रियपांसनः ॥ ८

न च धर्मगुणै र्हीनः कौसल्यानन्दवर्धनः ।
न तीक्ष्णो नच भूतानां सर्वेषा महिते रतः ॥ ९
'वञ्चितं पितरं' दृष्ट्वा कैकेय्या 'सत्यवादिनम् ।
करिष्या' मीति धर्मात्मा तात! प्रव्राजितो वनम् ॥ १०
कैकेय्याः प्रियकामार्थं पितु र्दशरथस्यच ।
हित्वा राज्यंच भोगांश्च प्रविष्टो दण्डकावनम् ॥ ११
न रामः कर्कशस्तात! नाविद्वान्नाजितेन्द्रियः ।
अनृतं दुश्श्रुतं चैव नैवं त्वं वक्तु मर्हसि ॥ १२
रामो विग्रहवान्धर्म स्साधु स्सत्यपराक्रमः ।
राजा सर्वस्य लोकस्य देवानां मघवा निव ॥ १३
कथं त्वं तस्य वैदेहीं रक्षितां स्वेन तेजसा ।
इच्छसि प्रसभं हर्तुं प्रभा मिव विवस्वतः ॥ १४
शरार्चिष मनाधृष्यं चापखड्गेन्धनं रणे ।
रामाग्निं सहसा दीप्तं न प्रवेष्टुं त्व मर्हसि ॥ १५
धनुर्व्यादितदीप्तास्यं शरार्चिष ममर्षणम् ।
चापपाशधरं वीरं शत्रुसैन्य प्रहारिणम् ॥ १६
राज्यं सुखं च संत्यज्य जीवितं चेष्टमात्मनः ।
नात्यासादयितुं तात! रामान्तकमिहार्हसि ॥ १७
अप्रमेयं हि तत्तेजो यस्य सा जनकात्मजा ।
न त्वं समर्थस्तां हर्तुं रामचापाश्रयं वने ॥ १८
तस्यसा नरसिंहस्य सिंहो रस्कस्य भामिनी ।
प्राणेभ्योऽपि प्रियतरा भार्या नित्य मनुव्रता ॥ १९

न सा धर्षयितुं शक्या मैथिल्योजस्विनः प्रिया ।
दीप्तस्येव हुताशस्य शिखा सीता सुमध्यमा ॥ २०
किमुद्यम मिमं व्यर्थं कृत्वाते राक्षसाधिप ! ।
दृष्टश्चे त्वं रणे तेन तदन्तं तव जीवितम् ॥ २१
जीवितञ्च सुखं चैव राज्यं चैव सुदुर्लभम् ।
यदीच्छसि चिरं भोक्तुं माकृथा रामविप्रियम् ॥ २२
स सर्वै स्सचिवै स्सार्थं विभीषणपुरोगमैः ।
मन्त्रयित्वातु धर्मिष्ठैः कृत्वा निश्चय मात्मनः ॥ २३
दोषाणां च गुणानां च संप्रधार्य बलाबलम् ।
आत्मनश्च बलं ज्ञात्वा राघवस्य च तत्त्वतः ॥ ४२
हिता हितं विनिश्चित्य क्षमं त्वं कर्तुमर्हसि ।
अहं तु मन्ये तव न क्षमं रणे समागमं कोसलराजसूनुना ॥ २५
इदं हि भूयश्शृणु वाक्य मुत्तमं क्षमं च युक्तं च निशाचरेश्वर ! ॥

इति श्रीमदारण्यकाण्डे सप्तत्रिंशस्सर्गः ॥

## ॥ अष्टत्रिंशस्सर्गः ॥

कदाचिदप्यहं वीर्या त्पर्यट न्पृथिवी मिमाम् ।
बलं नागसहस्रस्य धारय न्पर्वतोपमः ॥ १
नील जीमूतसंकाशस्तप्त काञ्चन कुण्डलः ।
भयं लोकस्य जनयन्किरीटी परिघायुधः ॥ २
व्यचरं दण्डकारण्ये ऋषिमांसानि भक्षयन् ।
विश्वामित्रोऽथ धर्मात्मा मद्वित्रस्तो महामुनिः ॥ ३

स्वयं गत्वा दशरथं नरेन्द्र मिद मब्रवीत् ।
अद्य रक्षतु मां रामः पर्वकाले समाहितः ॥ ४
मारीचान्मे भयं घोरं समुत्पन्नं नरेश्वर ! ।
इत्येवमुक्तो धर्मात्मा राजा दशरथ स्तथा ॥ ५
प्रत्युवाच महाभागं विश्वामित्रं महामुनिम् ।
"बालो द्वादशवर्षोऽय मकृतास्त्रश्च राघवः ॥ ६
कामन्तु मम यत्सैन्यं मया सह गमिष्यति ।
बलेन चतुरङ्गेण स्वय मेत्य निशाचरान् ॥ ७
वधिष्यामि मुनिश्रेष्ठ ! शत्रूंस्ते मनसेप्सितान् ।"
इत्येव मुक्तस्स मुनी राजान मिद मब्रवीत् ॥ ८
"रामा न्नान्य द्बलं लोके पर्याप्तं तस्य रक्षसः ।
देवताना मपि भवां स्समरेष्वभिपालकः ॥ ९
आसीत्तव कृतं कर्म त्रिलोके विदितं नृप ! ।
काम मस्तु महत्सैन्यं तिष्ठत्विह परन्तप ! ॥ १०
बालोऽप्येष महातेजा स्समर्थ स्तस्य निग्रहे ।
गमिष्ये राम मादाय स्वस्ति तेऽस्तु परन्तप ! ॥" ११
एवमुक्त्वा तु स मुनि स्तमादाय नृपात्मजम् ।
जगाम परम प्रीतो विश्वामित्र स्स्वमाश्रमम् ॥ १२
तं तदा दण्डकारण्ये यज्ञ मुद्दिश्य दीक्षितम् ।
बभूवोपस्थितो राम श्चित्रं विस्फारयन्धनुः ॥ १३
अजातव्यञ्जन श्श्रीमान् पद्मपत्रनिभेक्षणः ।
एक वस्त्रधरो धन्वी शिखी कनकमालया ॥ १४

शोभयन्दण्डकारण्यं दीप्तेन स्वेन तेजसा ।
अदृश्यत ततो रामो बालचन्द्र इवोदितः ॥ १५
ततोऽहं मेघसङ्काश स्तप्तकाञ्चनकुण्डलः ।
बली दत्तवरो दर्पा दाजगाम तदाश्रमम् ॥ १६
तेन दृष्टः प्रविष्टोऽहं सहसैवोद्यतायुधः ।
मां तु दृष्ट्वा धनु स्सज्य मसंभ्रान्तश्चकार सः ॥ १७
अवजानन्नहं मोहा 'द्बालोऽय' मिति राघवम् ।
विश्वामित्रस्य तां वेदि मभ्यधावं कृतत्वरः ॥ १८
तेन मुक्तस्ततो बाणश्शितश्शत्रुनिबर्हणः ।
तेनाहं त्वाहतः क्षिप्त स्समुद्रे शतयोजने ॥ १९
नेच्छता तात! मां हन्तुं तदा वीरेण रक्षितः ।
रामस्य शरवेगेन निरस्तोऽह मचेतनः ॥ २०
पातितोऽहं तदा तेन गम्भीरे सागराम्भसि ।
प्राप्य संज्ञां चिरं तात! लङ्कां प्रतिगतः पुरीम् ॥ २१
एव मास्मि तदा मुक्त स्सहायास्तुनिपातिताः ।
अकृतास्त्रेण बालेन रामेणाक्लिष्टकर्मणा ॥ २२
तन्मया वार्यमाण स्त्वं यदि रामेण विग्रहम् ।
करिष्यस्यापदं घोरां क्षिप्रं प्राप्स्यसि रावण! ॥ २३
क्रीडारातिविधिज्ञानां समाजोत्सवशालिनाम् ।
रक्षसांचैव संताप मनर्थं चाहरिष्यसि ॥ २४
हर्म्यप्रासादसम्बाधां नानारत्नविभूषिताम् ।
द्रक्ष्यसि त्वं पुरीं लङ्कां विनष्टां मैथलीकृते ॥ २५

अकुर्वन्तोऽपि पापानि शुचयः पापसंश्रयात् ।
परपापै र्विनश्यन्ति मत्स्या नागह्रदे यथा ॥ २६

दिव्यचन्दन दिग्धाङ्गान्दिव्याभरणभूषितान् ।
द्रक्ष्यस्यभिहतान्भूमौ तव दोषात्तु राक्षसान् ॥ २७

हृतदारांत्सदारांश्च दश विद्रवतो दिशः ।
हतशेषानशरणान्द्रक्ष्यसि त्वं निशाचरान् ॥ २८

शरजालपरिक्षिप्ता मग्निज्वालासमावृताम् ।
प्रदग्धभवनां लङ्कां द्रक्ष्यसि त्वं न संशयः ॥ २९

परदाराभिमर्शात्तु नान्यत्पापतरं महत् ।
प्रमदानां सहस्राणि तव राज! न्परिग्रहः ॥ ३०

भव स्वदारनिरत स्स्वकुलं रक्षराक्षस! ।
मान मृद्धिं च राज्यं च जीवितं चेष्ट मात्मनः ॥ ३१

कळत्राणि च सौम्यानि मित्रवर्गं तथैव च ।
यदीच्छसि चिरं भोक्तुं माकृथा राम विप्रियम् ॥ ३२

निवार्यमाण स्सुहृदामयाभृशं प्रसह्य सीतां यदि धर्षयिष्यसि ।
गमिष्यसि क्षीणबल स्सबान्धवो यमक्षयं रामशरात्तजीवितः ॥"

इति श्रीमदारण्यकाण्डे अष्टत्रिंशस्सर्गः ॥

---

## ॥ एकोनचत्वारिंशस्सर्गः ॥

"एव मस्मि तदा मुक्तः कथंचित्तेन संयुगे ।
इदानी मपि यद्वृत्तं तच्छृणुष्व निरुत्तरम् ॥ १

राक्षसाभ्या महं द्वाभ्या मनिर्विण्णस्तथाकृतः ।
सहितो मृगरूपाभ्यां प्रविष्टो दण्डकावनम् ॥ २
दीप्तजिह्वो महाकाय स्तीक्ष्णदंष्ट्रो महाबलः ।
व्यचरं दण्डकारण्यं मांसभक्षो महामृगः ॥ ३
अग्निहोत्रेषु तीर्थेषु चैत्यवृक्षेषु रावण ! ।
अत्यन्तघोरो व्यचरं तापसांस्संप्रधर्षयन् ॥ ४
निहत्य दण्डकारण्ये तापसान्धर्मचारिणः ।
रुधिराणि पिबंस्तेषां तथा मांसानि भक्षयन् ॥ ५
ऋषिमांसाशनः क्रूर स्त्रासयन्वनगोचरान् ।
तथा रुधिरमत्तोऽहं विचरन् धर्मदूषकः ॥ ६
आसादयं तदा रामं तापसं धर्मचारिणम् ।
वैदेहीं च महाभागां लक्ष्मणं च महारथम् ॥ ७
तापसं नियताहारं सर्वभूत हिते रतम् ।
सोऽहं वनगतं रामं परिभूय महाबलम् ॥ ८
'तापसोऽय' मिति ज्ञात्वा पूर्ववैर मनुस्मरन् ।
अभ्यधावं हि संक्रुद्ध स्तीक्ष्णशृङ्गो मृगाकृतिः ॥ ९
जिघांसु रकृतप्रज्ञस्तं प्रहार मनुस्मरन् ।
तेन मुक्तास्त्रयो बाणा श्शिता श्शत्रुनिबर्हणाः ॥ १०
विकृष्य बलवच्चापं सुपर्णानिलनिस्वनाः ।
ते बाणा वज्रसङ्काशा स्सुमुक्ता रक्तभोजनाः ॥ ११
आजग्मु स्सहिता स्सर्वे त्रय स्सन्नतपर्वणः ।
पराक्रमज्ञो रामस्य शठो दृष्टभयः पुरा ॥ १२

समुद्भ्रान्त स्ततो मुक्त स्ता वुभौ राक्षसौ हतौ ।
शरेण मुक्तो रामस्य कथंचित्प्राप्य जीवितम् ॥ १३
इह प्रव्राजितो युक्त स्तापसोऽहं समाहितः ।
वृक्षे वृक्षे च पश्यामि चीरकृष्णाजिनाम्बरम् ॥ १४
गृहीतधनुषं रामं पाशहस्तमिवान्तकम् ।
अपि रामसहस्राणि भीतः पश्यामि रावण! ॥ १५
रामभूत मिदं सर्व मरण्यं प्रतिभाति मे ।
राम मेव हि पश्यामि रहिते राक्षसाधिप! ॥ १६
दृष्ट्वा स्वप्नगतं राम मुद्भ्रमामि विचेतनः ।
रकारादीनि नामानि रामत्रस्तस्य रावण! ॥ १७
रत्नानि च रथाश्चैव त्रासं सञ्जनयन्तिमे ।
अहं तस्य प्रभावज्ञो न युद्धं तेन ते क्षमम् ॥ १८
बलिं वा नमुचिं वापि हन्याद्धि रघुनन्दनः ।
रणे रामेण युध्यस्व क्षमां वा कुरु राक्षस! ॥ १९
न ते रामकथा कार्या यदि मां द्रष्टु मिच्छसि ।
बहव स्साधवो लोके युक्ता धर्म मनुष्ठिताः ॥ २०
परेषा मपराधेन विनष्टा स्सपरिच्छदाः ।
सोऽहं तवापराधेन विनश्येयं निशाचर! ॥ २१
कुरु यत्ते क्षमं तत्त्व महं त्वा नानुयामि ह ।
रामश्च हि महातेजा महासत्त्वो महाबलः ॥ २२
अपि राक्षसलोकस्य न भवे दन्तकोऽपि सः ।
यदि शूर्पणखाहेतो र्जनस्थानगतः खरः ॥ २३

अतिवृत्तो हतः पूर्वं रामेणाक्लिष्टकर्मणा ।
अत्र ब्रूहि यथातत्त्वं को रामस्य व्यतिक्रमः ॥ २४
इदं वचो बन्धुहितार्थिना मया यथोच्यमानं यदि नाभिपत्स्यसे ।
सबान्धवस्त्यक्ष्यसि जीवितं रणे हतोऽद्य रामेण शरै रजिह्मगैः ॥"

इति श्रीमदारण्यकाण्डे एकोनचत्वारिंशस्सर्गः ॥

## ॥ चत्वारिंशस्सर्गः ॥

मारीचेन तु तद्वाक्यं क्षमं युक्तं निशाचरः ।
उक्तो न प्रतिजग्राह मर्तुकाम इवौषधम् ॥ १
तं पथ्यहितवक्तारं मारीचं राक्षसाधिपः ।
अब्रवीत्परुषं वाक्य मयुक्तं कालचोदितः ॥ २
"यत्किलैतदयुक्तार्थं मारीच! मयि कथ्यते ।
वाक्यं निष्फल मत्यर्थ मुप्तं बीजमिवोषरे ॥ ३
त्वद्वाक्यै र्नतु मां शक्यं भेत्तुं रामस्य संयुगे ।
पापशीलस्य मूर्खस्य मानुषस्य विशेषतः ॥ ४
यस्त्यक्त्वा सुहृदो राज्यं मातरं पितरं तथा ।
स्त्रीवाक्यं प्राकृतं श्रुत्वा वनमेकपदे गतः ॥ ५
अवश्यन्तु मया तस्य संयुगे खरघातिनः ।
प्राणैः प्रियतरा सीता हर्तव्या तव सन्निधौ ॥ ६
एवं मे निश्चिता बुद्धि र्हृदि मारीच! वर्तते ।
न व्यावर्तयितुं शक्या सेन्द्रै रपि सुरासुरैः ॥ ७

दोषं गुणं वा संपृष्टस्त्व मेकं वक्तु मर्हसि ।
अपायं वा प्युपायं वा कार्यस्यास्य विनिश्चये ॥ ८
संपृष्टेन तु वक्तव्यं सचिवेन विपश्चिता ।
उद्यताञ्जलिना राज्ञेय इच्छे द्भूति मात्मनः ॥ ९
वाक्य मप्रतिकूलं तु मृदुपूर्वं शुभं हितम् ।
उपचारेण युक्तं च वक्तव्यो वसुधाधिपः ॥ १०
सावमर्दं तु यद्वाक्यं मारीच! हित मुच्यते ।
नाभिनन्दति तद्राजा मानार्हो मानवर्जितम् ॥ ११
पञ्च रूपाणि राजानो धारयन्त्यमितौजसः ।
अग्नेरिन्द्रस्य सोमस्य वरुणस्य यमस्यच ॥ १२
औष्ण्यं तथा विक्रमं च सौम्यं दण्डं प्रसन्नताम् ।
धारयन्ति महात्मानो राजानः क्षणदाचर! ॥ १३
तस्मात्सर्वा स्ववस्थासु मान्याः पूज्याश्च पार्थिवाः ।
त्वं धर्म मविज्ञाय केवलं मोह मास्थितः ॥ १४
अभ्यागतं मां दौरात्म्या त्परुषं वक्तु मिच्छसि ।
गुणदोषौ न पृच्छामि क्षमं चात्मनि राक्षस! ॥ १५
मयोक्तं तव चैतावत्संप्रत्यमितविक्रम ।
अस्मिंस्तु त्वं महाकृत्ये साहाय्यं कर्तु मर्हसि ॥ १६
शृणु तत्कर्म साहाय्ये यत्कार्यं वचना न्मम ।
सौवर्णस्त्वं मृगो भूत्वा चित्रो रजतबिन्दुभिः ॥ १७
आश्रमे तस्य रामस्य सीतायाः प्रमुखे चर ।
प्रलोभयित्वा वैदेहीं यथेष्टं गन्तु मर्हसि ॥ १८

त्वां तु मायामृगं दृष्ट्वा काञ्चनं जातविस्मया ।
'आनयैन' मिति क्षिप्रं रामं वक्ष्यति मैथिली ।
अपक्रान्ते तु काकुत्स्थे दूरं यात्वाप्युदाहर ॥ १९
'हा सीते! लक्ष्मणे' त्येवं रामवाक्यानुरूपकम् ।
तच्छ्रुत्वा रामपदवीं सीतया च प्रचोदितः ॥ २०
अनुगच्छति संभ्रान्तः सौमित्रि रपि सौहृदात् ।
अपक्रान्ते च काकुत्स्थे लक्ष्मणे च यथासुखम् ॥ २१
आनयिष्यामि वैदेहीं सहस्राक्ष श्शचीमिव ।
एवं कृत्वा त्विदं कार्यं यथेष्टं गच्छ राक्षस! ॥ २२
राज्यस्यार्धं प्रयच्छामि मारीच! तव सुव्रत!
गच्छ सौम्य! शिवं मार्गं कार्यस्यास्य विवृद्धये ॥ २३
अहं त्वाऽनुगमिष्यामि सरथो दण्डकावनम् ।
प्राप्य सीता मयुद्धेन वञ्चयित्वा तु राघवम् ॥ २४
लङ्कां प्रतिगमिष्यामि कृतकार्य स्सह त्वया ।
न चे त्करोषि मारीच! हन्मि त्वा मह मद्य वै ॥ २५
एतत्कार्य मवश्यं मे बलादपि करिष्यसि ।
राज्ञो हि प्रतिकूलस्थो न जातु सुख मेधते ॥ २६
आसाद्य तं जीवितसंशयस्ते मृत्यु र्ध्रुवो ह्यद्य मया विरुध्य ।
एत द्यथावत्प्रतिगृह्य बुद्ध्या यदत्र कृत्यं कुरु तत्तथात्वम् ॥" २७

इति श्रीमदारण्यकाण्डे चत्वारिंशस्सर्गः ॥

## ॥ एकचत्वारिंशस्सर्गः ॥

आज्ञप्तो राजव द्वाक्यं प्रतिकूलं निशाचरः ।
अब्रवी त्परुषं वाक्यं मारीचो राक्षसाधिपम् ॥ १
"केनाय मुपदिष्टस्ते विनाशः पापकर्मणा ।
सपुत्रस्य सराष्ट्रस्य सामात्यस्य निशाचर! ॥ २
कस्त्वया सुखिना राज! न्नाभिनन्दति पापकृत् ।
केनेद मुपदिष्टं ते मृत्युद्वार मुपागतः ॥ ३
शत्रवस्तव सुव्यक्तं हीनवीर्या निशाचराः ।
इच्छन्ति त्वां विनश्यन्त मुपरुद्धं बलीयसा ॥ ४
केनेद मुपदिष्टं ते क्षुद्रेणाहितवादिना ।
य स्त्वा मिच्छति नश्यन्तं स्वकृतेन निशाचर! ॥ ५
वध्याः खलु न हन्यन्ते सचिवास्तव रावण! ।
ये त्वा मुत्पथमारूढं न निगृह्णन्ति सर्वशः ॥ ६
अमात्यैः कामवृत्तो हि राजा कापथ माश्रितः ।
निग्राह्य स्सर्वथा सद्भि र्न निग्राह्यो निगृह्यसे ॥ ७
धर्म मर्थं च कामं च यश श्च जयतां वर! ।
स्वामिप्रसादा त्सचिवाः प्राप्नुवन्ति निशाचर! ॥ ८
विपर्यये तु तत्सर्वं व्यर्थं भवति रावण! ।
व्यसनं स्वामिवैगुण्यात्प्राप्नुवन्तीतरे जनाः ॥ ९
राजमूलो हि धर्मश्च जय श्च जयतां वर! ।
तस्मात्सर्वास्ववस्थासु रक्षितव्या नराधिपाः ॥ १०

राज्यं पालयितुं शक्यं न तीक्ष्णेन निशाचर! ।
न चापि प्रतिकूलेन नाविनीतेन राक्षस! ॥ ११
ये तीक्ष्णमन्त्रा स्सचिवा भज्यन्ते सहतेन वै ।
विषमे तुरगा श्शीघ्रा मन्दसारथयो यथा ॥ १२
बहव स्साधवो लोके युक्ता धर्म मनुष्ठिताः ।
परेषा मपराधेन विनष्टा स्सपरिच्छदाः ॥ १३
स्वामिना प्रतिकूलेन प्रजा स्तीक्ष्णेण रावण! ।
रक्ष्यमाणा न वर्धन्ते मेषा गोमायुना यथा ॥ १४
अवश्यं विनशिष्यन्ति सर्वे रावण! राक्षसाः ।
येषां त्वं कर्कशो राजा दुर्बुद्धि रजितेन्द्रियः ॥ १५
तदिदं काकताळीयं घोर मासादितं मया ।
अत्रैव शोचनीय स्त्वं ससैन्यो विनशिष्यसि ॥ १६
मां निहत्य तु राम श्च नचिरात्त्वां वधिष्यति ।
अनेन कृतकृत्योऽस्मि म्रिये यदरिणा हतः ॥ १७
दर्शनादेव रामस्य हतं मा मवधारय
आत्मानं च हतं विद्धि हृत्वा सीतां सबान्धवम् ॥ १८
आनयिष्यसि चे त्सीता माश्रमा त्सहितो मया ।
नैव त्व मसि नाहं च नैव लङ्का न राक्षसाः ॥ १९
निवार्यमाण स्तु मया हितैषिणा न मृष्यसे वाक्यमिदं निशाचर! ।
परेतकल्पा हि गतायुषो नरा हितं न गृह्णन्ति सुहृद्भि रीरितम् ॥

इति श्रीमदारण्यकाण्डे एकचत्वारिंशस्सर्गः ॥

## ॥ द्विचत्वारिंशस्सर्गः ॥

एव मुक्त्वा तु वचनं मारीचो रावणं ततः ।
'गच्छा' वेत्यब्रवी द्दीनो भया द्रात्रिंचरप्रभोः ॥ १
"दृष्ट श्चाहं पुन स्तेन शरचापासिधारिणा ।
मद्वधोद्यतशस्त्रेण विनष्टं जीवितं च मे ॥ २
न हि रामं पराक्रम्य जीवन्प्रतिनिवर्तते ।
वर्तते प्रतिरूपोऽसौ यमदण्डहतस्य ते ॥ ३
किं नु शक्यं मया कर्तु मेवं त्वयि दुरात्मनि ।
एष गच्छाम्यहं तात! स्वस्ति तेऽस्तु निशाचर! ॥ ४
प्रहृष्ट स्त्वभवत्तेन वचनेन स रावणः
परिष्वज्य सुसंश्लिष्ट मिदं वचन मब्रवीत् ॥ ५
"एतच्छौण्डीर्ययुक्तं ते मच्छन्दा दिव भाषितम् ।
इदानी मसि मारीचः पूर्व मन्यो निशाचरः ॥ ६
आरुह्यता मयं शीघ्रं रथो रत्नविभूषितः ।
मया सह तथा युक्तः पिशाचवदनैः खरैः ॥ ७
प्रलोभयित्वा वैदेहीं यथेष्टं गन्तु मर्हसि ।
तां शून्ये प्रसभं सीता मानयिष्यामि मैथिलीम् ॥" ८
ततो रावणमारीचौ विमान मिव तं रथम् ।
आरुह्य ययतु श्शीघ्रं तस्मा दाश्रममण्डलात् ॥ ९
तथैव तत्र पश्यन्तौ पत्तनानि वनानि च ।
गिरीं श्च सरित स्सर्वा राष्ट्राणि नगराणि च ॥ १०

समेत्य दण्डकारण्यं राघवस्याश्रमं ततः ।
ददर्श सहमारीचो रावणो राक्षसाधिपः ॥ ११
अवतीर्य रथा त्तस्मा त्ततः काञ्चनभूषणात् ।
हस्ते गृहीत्वा मारीचं रावणो वाक्य मब्रवीत् ॥ १२
"एत द्रामाश्रमपदं दृश्यते कदळीवृतम् ।
क्रियतां तत्सखे शीघ्रं यदर्थं वय मागताः ॥" १३
स रावण वच श्श्रुत्वा मारीचो राक्षस स्तदा ।
मृगो भूत्वाऽऽश्रमद्वारि रामस्य विचचार ह ॥ १४
सतु रूपं समास्थाय महदद्भुतदर्शनम् ।
मणिप्रवर शृङ्गाग्र स्सितासितमुखाकृतिः ॥ १५
रक्तपद्मोत्पलमुखः इन्द्रनीलोत्पलश्रवाः ।
किंचिदभ्युन्नतग्रीवः इन्द्रनीलदळाधरः ॥ १६
कुन्देन्दुवज्रसङ्काश मुदरं चास्य भास्वरम् ।
मधूकनिभपार्श्व श्च पद्मकिञ्जल्कसन्निभः ॥ १७
वैडूर्य संकाशखुर स्तनुजङ्घ स्सुसंहतः ।
इन्द्रायुधसवर्णेन पुच्छेनोर्ध्वं विराजता ॥ १८
मनोहरस्निग्धवर्णो रत्नै र्नानाविधै र्वृतः ।
क्षणेन राक्षसो जातो मृगः परमशोभनः ॥ १९
वनं प्रज्वलयन् रम्यं रामाश्रमपदं च तत् ।
मनोहरं दर्शनीयं रूपं कृत्वा स राक्षसः ॥ २०
प्रलोभनार्थं वैदेह्या नानाधातुविचित्रितम् ।
विचरन्गच्छते तस्मा च्छाद्वलानि समन्ततः ॥ २१

रूप्यै र्बिन्दुशतै श्चित्रो भूत्वा स प्रियदर्शनः ।
विटपीनां किसलयान्भङ्क्त्वाऽदन्विचचार ह ॥ २२
कदळीगृहकं गत्वा कर्णिकारानितस्ततः ।
समाश्रयन्मन्दगति स्सीतासंदर्शनं तथा ॥ २३
राजीवचित्रपृष्ठ स्स विरराज महामृगः ।
रामाश्रमपदाभ्याशे विचचार यथासुखम् ॥ २४
पुनर्गत्वा निवृत्तश्च विचचार मृगोत्तमः ।
गत्वा मुहूर्तं त्वरया पुनः प्रति निवर्तते ॥ २५
विक्रीडं श्च क्वचि द्भूमौ पुनरेव निषीदति ।
आश्रमद्वारमागम्य मृगयूथानि गच्छति ॥ २६
मृगयूथै रनुगतः पुनरेव निवर्तते ।
सीतादर्शन माकाङ्क्ष न्राक्षसो मृगतां गतः ॥ २७
परिभ्रमति चित्राणि मण्डलानि विनिष्पतन् ।
समुद्वीक्ष्य च तं सर्वे मृगा ह्यन्ये वनेचराः ॥ २८
उपागम्य समाघ्राय विद्रवन्ति दिशो दश ।
राक्षस स्सोऽपि तान्वन्या न्मृगान्मृगवधे रतः ॥ २९
प्रच्छादनार्थं भावस्य न भक्षयति संस्पृशन् ।
तस्मिन्नेव ततः काले बैदेही शुभलोचना ॥ ३०
कुसुमापचयव्यग्रा पादपा नभ्यवर्तत ।
कर्णिकारा नशोकांश्च चूतां श्च मदिरेक्षणा ॥ ३१
कुसुमान्यपचिन्वन्ती चचार रुचिरानना ।
अनर्हाऽरण्य वासस्य सा तं रत्नमयं मृगम् ॥ ३२

मुक्तामणिविचित्राङ्गं ददर्श परमाङ्गना ।
सा तं रुचिरदन्तोष्ठी रूप्यधातुतनूरुहम् ॥ ३३
विस्मयोत्फुल्लनयना सस्नेहं समुदैक्षत ।
स च तां रामदयितां पश्यन्मायामयो मृगः ॥ ३४
विचचार पुनश्चित्रं दीपयन्निव तद्वनम् ।
अदृष्टपूर्वं तं दृष्ट्वा नानारत्नमयं मृगम् ॥ ३५
विस्मयं परमं सीता जगाम जनकात्मजा ॥

इति श्रीमदारण्यकाण्डे द्विचत्वारिंशस्सर्गः ॥

---

## ॥ त्रिचत्वारिंशस्सर्गः ॥

सा तं संप्रेक्ष्य सुश्रोणी कुसुमान्यपचिन्वती ।
हैमराजतवर्णाभ्यां पार्श्वाभ्या मुपशोभितम् ॥ १
प्रहृष्टा चानवद्याङ्गी मृष्टहाटकवर्णिनी ।
भर्तार मभिचक्रन्द लक्ष्मणं चापि सायुधम् ॥ २
तयाऽऽहूतौ नरव्याघ्रौ वैदेह्या रामलक्ष्मणौ ।
वीक्षमाणौ तु तं देशं तदा ददृशतु र्मृगम् ॥ ३
शङ्कमानस्तु तं दृष्ट्वा लक्ष्मणो राम मब्रवीत् ।
"त मेवैन महं मन्ये मारीचं राक्षसं मृगम् ॥ ४
चरन्तो मृगयां हृष्टाः पापेनोपाधिना वने ।
अनेन निहता राजन्! राजानः कामरूपिणः ॥ ५
अस्य मायाविदो मायामृगरूप मिदं कृतम् ।
भानुमत्पुरुषव्याघ्र! गन्धर्वपुरसन्निभम् ॥ ६

मृगो ह्येवंविधो रत्नविचित्रो नास्ति राघव! ।
जगत्यां जगतीनाथ! मायैषा हि न संशयः ॥" ७
एवं ब्रुवाणं काकुत्स्थं प्रतिवार्य शुचिस्मिता ।
उवाच सीता संहृष्टा चर्मणा हृतचेतना ॥ ८
"आर्यपुत्राभिरामोऽसौ मृगो हरति मे मनः ।
आनयैनं महाबाहो! क्रीडार्थं नो भविष्यति ॥ ९
इहाश्रमपदेऽस्माकं बहवः पुण्यदर्शनाः ।
मृगाश्चरन्ति सहिता श्चमरा स्सृमरा स्तथा ॥ १०
ऋक्षाःपृषतसंघाश्च वानराः किन्नरा स्तथा ।
विचरन्ति महाबाहो! रूपश्रेष्ठा मनोहराः ॥ ११
न चास्य सदृशो राज! न्दृष्टपूर्वो मृगः पुरा ।
तेजसा क्षमया दीप्त्या यथाऽयं मृगसत्तमः ॥ १२
नानावर्णविचित्राङ्गो रत्नबिन्दुसमाचितः ।
द्योतयन्वनमव्यग्रं शोभते शशिसन्निभः ॥ १३
अहो रूप महो लक्ष्मी स्स्वरसंपच्च शोभना ।
मृगोऽद्भुतो विचित्राङ्गो हृदयं हरतीव मे ॥ १४
यदिग्रहण मभ्येति जीवन्नेव मृग स्तव ।
आश्चर्यभूतं भवति विस्मयं जनयिष्यति ॥ १५
समाप्तवनवासानां राज्यस्थानां च नः पुनः ।
अन्तःपुरावभूषार्थो मृग एष भविष्यति ॥ १६
भरतस्यार्यपुत्रस्य श्वश्रूणां मम च प्रभो! ।
मृगरूप मिदं व्यक्तं विस्मयं जनयिष्यति ॥ १७

जीवन्न यदि तेऽभ्येति ग्रहणं मृगसत्तमः ।
अजिनं नरशार्दूल! रुचिरं मे भविष्यति ॥ १८
विहतस्यास्य सत्त्वस्य जाम्बूनदमयत्वचि ।
शष्पबृस्यां विनीताया मिच्छाम्यह मुपासितुम् ॥ १९
कामवृत्त मिदं रौद्रं स्त्रीणा मसदृशं मतम् ।
वपुषा त्वस्य सत्त्वस्य विस्मयो जनितो मम ॥ २०
तेन काञ्चनरूपेण मणिप्रवरशृङ्गिणा ।
तरुणादित्यवर्णेन नक्षत्रपथवर्चसा ॥ २१
बभूवराघवस्यापि मनो विस्मय मागतम् ।
"एवं सीतावच श्श्रुत्वा तं दृष्ट्वा मृगमद्भुतम् ॥ २२
लोभितस्तेन रूपेण सीतया च प्रचोदितः ।
उवाच राघवो हृष्टो भ्रातरं लक्ष्मणं वचः ॥ २३
"पश्य लक्ष्मण! वैदेह्याः स्पृहां मृगगता मिमाम् ।
रूपश्रेष्ठतया ह्येष मृगोऽद्य न भविष्यति ॥ २४
न वने नन्दनोद्देशे न चैत्ररथसंश्रये ।
कुतः पृथिव्यां सौमित्रे! योऽस्यकश्चित्समो मृगः ॥ २५
प्रतिलोमानुलोमाश्च रुचिरा रोमराजयः ।
शोभन्ते मृग माश्रित्य चित्राः कनकबिन्दवः ॥ २६
पश्यास्य जृम्भमाणस्यदीप्ता मग्निशिखोपमाम् ।
जिह्वां मुखा न्निस्सरन्तीं मेघादिव शतह्रदाम् ॥ २७
मसारगल्लर्कमुख श्शङ्खमुक्तानिभोदरः ।
कस्य नामाभिरूप्योऽसौ न मनो लोभयेन्मृगः ॥ २८

कस्य रूप मिदं दृष्ट्वा जाम्बूनदमयंप्रभो! ॥
नानारत्नमयं दिव्यं न मनो विस्मयं व्रजेत् ॥ २९
[किं पुनर्मैथिलीसीता बाला नारी न विस्मयेत्]।
मांसहेतो रपि मृगान्विनोदार्थं च धन्विनः ॥ ३०
घ्नन्ति लक्ष्मण! राजानो मृगयायां महावने।
धनानिव्यवसायेन विचीयन्ते महावने ॥ ३१
धातवो विविधा श्चापि मणिरत्नसुवर्णिनः।
तत्सार मखिलं नृणां धनं निचयवर्धनम् ॥ ३२
मनसा चिन्तितं सर्वं यथा शुक्रस्य लक्ष्मण!।
अर्थी येनार्थकृत्येन संव्रजत्यविचारयन् ॥ ३३
तमर्थ मर्थशास्त्रज्ञाः प्राहु रर्था श्च लक्ष्मण!।
एतस्य मृगरत्नस्य परार्थे काञ्चनत्वचि ॥ ३४
उपवेक्ष्यति वैदेही मया सह सुमध्यमा।
न कादळी नप्रियकी न प्रवेणी न चाविकी ॥ ३५
भवे देतस्य सदृशी स्पर्शनेनेति मे मतिः।
एषचैव मृग श्श्रीमा न्यश्च दिव्यो नभश्चरः ॥ ३६
उभा वेतौ मृगौ दिव्यौ तारामृगमहीमृगौ।
यदि वायं तथा य न्मां भवे द्वदसि लक्ष्मण! ॥ ३७
मायैषा राक्षसस्येति कर्तव्योऽस्य वधो मया।
एतेन हि नृशंसेन मारीचेनाकृतात्मना ॥ ३८
वने विचरता पूर्वं हिंसिता मुनिपुङ्गवाः।
उत्थाय बहवो येन मृगयायां जनाधिपाः ॥ ३९

निहताः परमेष्वासा स्तस्मा द्वध्य स्त्वयं मृगः ।
पुरस्तादिह वातापिः परिभूय तपस्विनः ॥ ४०
उदरस्थो द्विजान्हन्ति स्वगर्भोऽश्वतरी मिव ।
स कदाचि च्चिरा ल्लोभा दाससाद महामुनिम् ॥ ४१
अगस्त्यं तेजसा युक्तं भक्षस्तस्य बभूव ह ।
समुत्थाने च तद्रूपं कर्तुकामं समीक्ष्यतम् ॥ ४२
उत्स्मयित्वा तु भगवान्वातापि मिद मब्रवीत् ।
"त्वया विगण्य वातापे परिभूता स्स्वतेजसा ॥ ४३
जीवलोके द्विजश्रेष्ठा स्तस्मा दसि जरां गतः ।"
तदेवंनभवे द्रक्षो वातापि रिव लक्ष्मण! ॥ ४४
मद्विधं योऽतिमन्येत धर्मनित्यं जितेन्द्रियम् ।
भवे द्धतोऽयं वातापि रगस्त्येनेव मां गतः ॥ ४५
इह त्वं भव सन्नद्धो यन्त्रितो रक्ष मैथिलीम् ।
अस्या मायत्त मस्माकं यत्कृत्यं रघुनन्दन ॥ ४६
अह मेनं वधिष्यामि ग्रहीष्याम्यपि वामृगम् ।
यावद्गच्छामि सौमित्रे! मृग मानयितुं द्रुतम् ॥ ४७
पश्य लक्ष्मण! वैदेहीं मृगत्वचि गतस्पृहाम् ।
त्वचा प्रधानया ह्येष मृगोऽद्य न भविष्यति ॥ ४८
अप्रमत्तेन ते भाव्य माश्रमस्थेन सीतया ।
यावत्पृषत मेकेन सायकेन निहन्म्यहम् ॥ ४९
हत्वैतच्चर्म चादाय शीघ्र मेष्यामि लक्ष्मण! ।

प्रदक्षिणेनातिबलेन पक्षिणा जटायुषा बुद्धिमता च लक्ष्मण! ।
भवाप्रमत्तः परिगृह्य मैथिलीं प्रतिक्षणं सर्वत एव शङ्कितः ॥"

इति श्रीमदारण्यकाण्डे त्रिचत्वारिंशस्सर्गः ॥

## ॥ चतुश्चत्वारिंशस्सर्गः ॥

तथा तु तं समादिश्य भ्रातरं रघुनन्दनः ।
बबन्धासिं महातेजा जाम्बूनदमयत्सरुम् ॥ १

ततस्त्र्यवनतं चाप मादायात्मविभूषणम् ।
आबध्य च कलापौ द्वौ जगामोदग्रविक्रमः ॥ २

तं वञ्चयानो राजेन्द्र मापतन्तं निरीक्ष्यवै ।
बभूवान्तर्हितस्त्रासात्पुन स्सन्दर्शनेऽभवत ॥ ३

बद्धासि धनुरादाय प्रदुद्राव यतो मृगः ।
तं स्म पश्यति रूपेण द्योतमान मिवाग्रतः ॥ ४

अवेक्ष्यावेक्ष्य धावन्तं धनुष्पाणिं महावने ।
अति वृत्त मिषोः पाताल्लोभयानं कदाचन ॥ ५

शङ्कितन्तु समुद्भ्रान्त मुत्पतन्तमिवाम्बरे ।
दृश्यमान मदृश्यं च वनोद्देशेषु केषुचित् ॥ ६

छिन्नाभ्रैरिव संवीतं शारदं चन्द्रमण्डलम् ।
मुहूर्ता देव ददृशे मुहुर्दूरात्प्रकाशते ॥ ७

दर्शनादर्शना देवं सोऽपाकर्षत राघवम् ।
सुदूर माश्रमस्यास्य मारीचो मृगतां गतः ॥ ८

आसीत्क्रुद्धस्तु काकुत्स्थो विवशस्तेन मोहितः ।
अथावतस्थे संभ्रान्त श्छाया माश्रित्य शाद्वले ॥ ९
स त मुन्मादयामास मृगरूपो निशाचरः ।
मृगैः परिवृतो वन्यै रदूरात्प्रत्यदृश्यत ॥ १०
गृहीतु कामं दृष्ट्वैवं पुनरेवाभ्यधावत ।
तत्क्षणा देव संत्रासा त्पुन रन्तर्हितोऽभवत् ॥ ११
पुनरेव ततो दूरा द्वृक्षषण्डाद्विनिस्सृतम् ।
दृष्ट्वा रामो महातेजास्तं हन्तुं कृतनिश्चयः ॥ १२
भूयस्तु शर मुद्धृत्य कुपितस्तत्र राघवः ।
सूर्यरश्मि प्रतीकाशं ज्वलन्त मरिमर्दनः ॥ १३
संधाय सुदृढे चापे विकृष्य बलवद्बली ।
तमेव मृग मुद्दिश्य श्वसन्त मिव पन्नगम् ॥ १४
मुमोच ज्वलितं दीप्त मस्त्रं ब्रह्मविनिर्मितम् ।
शरीरं मृगरूपस्य विनिर्भिद्य शरोत्तमः ॥ १५
मारीचस्यैव हृदयं बिभेदाशनिसन्निभः ।
तालमात्र मथोत्प्लुत्य न्यपतत्स शरातुरः ॥ १६
विनदन्भैरवं नादं धरण्या मल्पजीवितः ।
म्रियमाणस्तु मारीचो [जहौ तां कृत्रिमां तनुम् ॥ १७
स्मृत्वा तद्वचनं रक्षो] दध्यौ केन तु लक्ष्मणम् ।
इह प्रस्थापये त्सीताशून्येतां रावणो हरेत् ॥ १८
सम्प्राप्तकाल माज्ञाय चकार च तत स्स्वरम् ।
सदृशं राघवस्यैव "हासीते! लक्ष्मणेति च ॥ १९

तेन मर्माणि निर्विद्ध श्शरेणानुपमेन च ।
मृगरूपं तु तत्त्यक्त्वा राक्षसं रूपमात्मनः ॥ २०
चक्रे स सुमहाकायो मारीचो जीवितं त्यजन् ।
ततो विचित्रकेयूर स्सर्वाभरणभूषितः ॥ २१
हेममाली महादंष्ट्रो राक्षसोऽभूच्छराहतः ।
तं दृष्ट्वा पतितं भूमौ राक्षसं घोरदर्शनम् ॥ २२
रामो रुधिरसिक्ताङ्गं वेष्टमानं महीतले ।
जगाम मनसा सीतां लक्ष्मणस्य वचः स्मरन् ॥ २३
"मारीचस्येति मायैषा पूर्वोक्तं लक्ष्मणेन तु ।
तत्तथा ह्यभवच्चाद्य मारीचोऽयं मया हतः ॥ २४
हासीते! लक्ष्मणे त्येव माक्रुश्य तु महास्वनम् ।
ममार राक्षसस्सोऽयं श्रुत्वा सीता कथंभवेत् ॥ २५
लक्ष्मणश्च महाबाहुः का मवस्थां गमिष्यति ।"
इति संचिन्त्य धर्मात्मा रामो हृष्टतनूरुहः ॥ २६
तत्र रामं भयं तीव्र माविवेश विषादजम् ।
राक्षसं मृगरूपं तं हत्वा श्रुत्वा च तत्स्वरम् ॥ २७
निहत्य पृषतं चान्यं मांस मादाय राघवः ।
त्वरमाणो जनस्थानं ससाराभिमुखस्तदा ॥ २८

इति श्रीमदारण्यकाण्डे चतुश्चत्वारिंशस्सर्गः ॥

## ॥ पञ्चचत्वारिंशस्सर्गः ॥

आर्तस्वरं तु तं भर्तुर्विज्ञाय सदृशं वने ।
उवाच लक्ष्मणं सीता गच्छ जानीहि राघवम् ॥ १

नहि मे हृदयं स्थाने जीवितं वाऽवतिष्ठति ।
क्रोशतः परमार्तस्य श्रुत श्शब्दो मया भृशम् ॥ २
आक्रन्दमानं तु वने भ्रातरं त्रातु मर्हसि ।
तं क्षिप्र मभिधाव त्वं भ्रातरं शरणैषिणम् ॥ ३
रक्षसां वश मापन्नं सिंहाना मिव गोवृषम् ।"
न जगाम तथोक्त स्तु भ्रातुराज्ञाय शासनम् ॥ ४
त मुवाच तत स्तत्र कुपिता जनकात्मजा ।
"सौमित्रे! मित्ररूपेण भ्रातु स्त्व मसि शत्रुवत् ॥ ५
य स्त्व मस्या मवस्थायां भ्रातरं नाभिपत्स्यसे ।
इच्छसि त्वं विनश्यन्तं रामं लक्ष्मण! मत्कृते ॥ ६
लोभान्ममकृते नूनं नानुगच्छसि राघवम् ।
व्यसनं तेप्रियं मन्ये स्नेहो भ्रातरि नास्तिते ॥ ७
तेन तिष्ठसि विस्रब्ध स्तमपश्यन्महाद्युतिम् ।
किं हि संशय मापन्ने तस्मिन्निह मया भवेत् ॥ ८
कर्तव्य मिह तिष्ठन्त्या यत्प्रधान स्त्वमागतः ।"
इति ब्रुवाणां वैदेहीं बाष्पशोकपरिप्लुताम् ॥ ९
अब्रवील्लक्ष्मण स्त्रस्तां सीतां मृगवधूमिव ।
"पन्नगासुरगन्धर्व देवमानुषराक्षसैः ॥ १०
अशक्य स्तव वैदेहि! भर्ता जेतुं न संशयः ।
देवि! देवमनुष्येषु गन्धर्वेषु पतत्रिषु ॥ ११
राक्षसेषु पिशाचेषु किन्नरेषु मृगेषु च ।
दानवेषु च घोरेषु न स विद्येत शोभने! ॥ १२

यो रामं प्रतियुध्येत समरे वासवोपमम् ।
अवध्य स्समरे रामो नैवं त्वं वक्तु मर्हसि ॥ १३
न त्वा मस्मिन्वने हातु मुत्सहे राघवं विना ।
अनिवार्यं बलं तस्य बलै र्बलवतामपि ॥ १४
त्रिभिर्लोकै स्समुद्युक्तै स्सेश्वरै रपि सामरैः ।
हृदयं निर्वृतं तेऽस्तु संताप स्त्यज्यता मयम् ॥ १५
आगमिष्यति ते भर्ता शीघ्रं हत्वा मृगोत्तमम् ।
न च तस्य स्वरो व्यक्तं मायया केन चित्कृतः ॥ १६
गन्धर्वनगरप्रख्या माया सा तस्य रक्षसः ।
न्यासभूताऽसि वैदेहि! न्यस्तामयि महात्मना ॥ १७
रामेण त्वं वरारोहे! न त्वां त्यक्तु मिहोत्सहे ।
कृतवैरा श्च वैदेहि! वय मेतै र्निशाचरैः ॥ १८
खरस्य निधनादेव जनस्थानवधं प्रति ।
राक्षसा विविधा वाचो विसृजन्ति महावने ॥ १९
हिंसाविहारा वैदेहि! न चिन्तितु मर्हसि ।"
लक्ष्मणेनैव मुक्ता सा क्रुद्धा संरक्तलोचना ॥ २०
अब्रवी त्परुषं वाक्यं लक्ष्मणं सत्यवादिनम् ।
"अनार्याकरुणारम्भ! नृशंस! कुलपांसन! ॥ २१
अहं तव प्रियं मन्ये रामस्य व्यसनं महत् ।
रामस्य व्यसनं दृष्ट्वा तेनैतानि प्रभाषसे ॥ २२
नैतच्चित्रं सपत्नेषु पापं लक्ष्मण! यद्भवेत् ।
त्वद्विधेषु नृशंसेषु नित्यं प्रच्छन्नचारिषु ॥ २३

सुदुष्टं वने राममेक मेकोऽनुगच्छसि ।
मम हेतोः प्रतिच्छन्नः प्रयुक्तो भरतेन वा ॥ २४
तन्न सिध्यति सौमित्रे! तव वा भरतस्य वा ।
कथ मिन्दीवरश्यामं पद्मपत्रनिभेक्षणम् ॥ २५
उपसंश्रित्य भर्तारं कामयेयं पृथग्जनम् ।
समक्षं तव सौमित्रे! प्राणां स्त्यक्ष्ये न संशयः ॥ २६
रामं विना क्षण मपि नहि जीवामि भूतले ।"
इत्युक्तः परुषं वाक्यं सीतया रोमहर्षणम् ॥ २७
अब्रवी ल्लक्ष्मण स्सीतां प्राञ्जलि र्विजितेन्द्रियः ।
"उत्तरं नोत्सहे वक्तुं दैवतं भवती मम ॥ २८
वाक्य मप्रतिरूपं तु न चित्रं स्त्रीषु मैथिलि! ।
स्वभाव स्त्वेष नारीणा मेवं लोकेषु दृश्यते ॥ २९
विमुक्तधर्मा श्चपला स्तीक्ष्णा भेदकराः स्त्रियः ।
न सहे हीदृशं वाक्यं वैदेहि! जनकात्मजे! ॥ ३०
श्रोत्रयो रुभयो र्मेऽद्य तप्तनाराचसन्निभम् ।
उपशृण्वन्तु मे सर्वे साक्षिभूता वनेचराः ॥ ३१
न्यायवादी यथान्याय मुक्तोऽहं परुषं त्वया ।
धित्त्वामद्य प्रणश्य त्वं यन्मा मेवं विशङ्कसे ॥ ३२
स्त्रीत्वं दुष्टं स्वभावेन गुरुवाक्ये व्यवस्थितम् ।
गमिष्ये यत्र काकुत्स्थ स्स्वस्ति तेऽस्तु वरानने! ॥ ३३
रक्षन्तु त्वां विशालाक्षि! समग्रा वनदेवताः ।
निमित्तानि हि घोराणि यानि प्रादुर्भवन्ति मे ॥ ३४

अपि त्वां सह रामेण पश्येयं पुनरागतः ? ।"
[नवेत्येतन्न जानामि वैदेहि ! जनकात्मजे ! ॥] ३५
लक्ष्मणेनैव मुक्ता सा रुदन्ती जनकात्मजा ।
प्रत्युवाच ततो वाक्यं तीव्रं बाष्पपरिप्लुता ॥ ३६
"गोदावरीं प्रवेक्ष्यामि विना रामेण लक्ष्मण ! ।
आबन्धिष्येऽथवा त्यक्ष्ये विषमे देह मात्मनः ॥ ३७
पिबाम्यहं विषं तीक्ष्णं प्रवेक्ष्यामि हुताशनम् ।
न त्वहं राघवादन्यं पदापि पुरुषं स्पृशे ॥" ३८
इति लक्ष्मण माक्रुश्य सीता दुःखसमन्विता ।
पाणिभ्यां रुदती दुःखा दुदरं प्रजघान च ॥ ३९
ता मार्तरूपां विमना रुदन्तीं सौमित्रि रालोक्य विशालनेत्राम् ।
आश्वासयामास न चैव भर्तु स्तं भ्रातरं किञ्चिदुवाच सीता ॥ ४०
तत स्तु सीतामभिवाद्य लक्ष्मणः कृताञ्जलिः किञ्चिदभिप्रणम्य च ।
अन्वीक्षमाणो बहुश श्च मैथिलीं जगाम रामस्य समीप मात्मवान् ॥

इति श्रीमदारण्यकाण्डे पञ्चचत्वारिंशस्सर्गः ॥

॥ षट्चत्वारिंशस्सर्गः ॥

तया परुष मुक्त स्तु कुपितो राघवानुजः ।
स विकाङ्क्षन्भृशं रामं प्रतस्थे नचिरादिव ॥ १
तदासाद्य दशग्रीवः क्षिप्रमन्तर मास्थितः ।
अभिचक्राम वैदेहीं परिव्राजकरूपधृत् ॥ २

श्लक्ष्णकाषायसंवीतश्शिखी छत्री उपानही ।
वामे चांसेऽवसज्याथ शुभे यष्टिकमण्डलू ॥ ३
परिव्राजकरूपेण वैदेही मन्वपद्यत ।
तामाससादातिबलो भ्रातृभ्यां रहितां वने ॥ ४
रहितां चन्द्रसूर्याभ्यां सन्ध्या मिव महत्तमः ।
ता मपश्यत्ततो बालां रामपत्नीं यशस्विनीम् ॥ ५
रोहिणीं शशिना हीनां ग्रहवद्भृशदारुणः ।
तमुग्रतेजःकर्माणं जनस्थानरुहा द्रुमाः ॥ ६
समीक्ष्य न प्रकम्पन्ते न प्रवाति च मारुतः ।
शीघ्रस्रोता श्च तं दृष्ट्वा वीक्षन्तं रक्तलोचनम् ॥ ७
स्तिमितं गन्तुमारेभे भया द्गोदावरी नदी ।
रामस्य त्वन्तरं प्रेप्सुर्दशग्रीवस्तदन्तरे ॥ ८
उपतस्थे च वैदेहीं भिक्षुरूपेण रावणः ।
अभव्यो भव्यरूपेण भर्तार मनुशोचतीम् ॥ ९
अभ्यवर्तत वैदेहीं चित्रामिव शनैश्चरः ।
स पापो भव्यरूपेण तृणैः कूप इवावृतः ॥ १०
अतिष्ठत्प्रेक्ष्य वैदेहीं रामपत्नीं यशस्विनीम् ।
शुभां रुचिरदन्तोष्ठीं पूर्णचन्द्रनिभाननाम् ॥ ११
आसीनां पर्णशालायां बाष्पशोकाभिपीडिताम् ।
स तां पद्मपलाशाक्षीं पीतकौशेयवासिनीम् ॥ १२
अभ्यगच्छत वैदेहीं दुष्टचेता निशाचरः ।
स मन्मथशराविष्टो ब्रह्मघोष मुदीरयन् ॥ १३

अब्रवीत्प्रश्रितं वाक्यं रहिते राक्षसाधिपः ।
तामुत्तमां स्त्रियं लोके पद्महीना मिव श्रियम् ॥ १४
विभ्राजमानां वपुषा रावणः प्रशशंसह ।
"का त्वं काञ्चनवर्णाभे! पीतकौशेयवासिनि! ॥ १५
कमलानां शुभां मालां पद्मिनीव हि बिभ्रती ।
ह्री श्रीः कीर्ति श्शुभा लक्ष्मी रप्सरा वा शुभानने ॥ १६
भूति र्वा त्वं वरारोहे! रति र्वा स्वैरचारिणी ।
समाश्शिखरिणः स्निग्धाःपाण्डुरा दशना स्तव ॥ १७
विशाले विमले नेत्रे रक्तान्ते कृष्णतारके ।
विशालं जघनं पीन मूरू करिकरोपमौ ॥ १८
एतावुपचितौ वृत्तौ संहतौ संप्रवल्गितौ ।
पीनोन्नतमुखौ कान्तौ स्निग्धौ तालफलोपमौ ॥ १९
मणिप्रवेकाभरणौ रुचिरौ ते पयोधरौ ।
चारुस्मिते! चारुदति! चारुनेत्रे! विलासिनि! ॥ २०
मनो हरसि मे कान्ते! नदीकूलमिवाम्भसा ।
करान्तमितमध्याऽसि सुकेशी संहतस्तनी ॥ २१
नैव देवी न गन्धर्वी न यक्षी न च किन्नरी ।
नैवं रूपा मया नारी दृष्टपूर्वा महीतले ॥ २२
रूपमग्र्यं च लोकेषु सौकुमार्यं वयश्च ते ।
इह वासश्च कान्तारे चित्त मुन्मादयन्ति मे ॥ २३
सा प्रतिक्राम भद्रं ते न त्वं वस्तु मिहार्हसि ।
राक्षसानामयं वासो घोराणां कामरूपिणाम् ॥ २४

प्रासादाग्राणि रम्याणि नगरोपवनानि च ।
संपन्नानि सुगन्धीनि युक्तान्याचरितुं त्वया ॥ २५
वरं माल्यं वरं भोज्यं वरं वस्त्रं च शोभने! ।
भर्तारं च वरं मन्ये त्वद्युक्तमसितेक्षणे! ॥ २६
का त्वं भवसि रुद्राणां मरुतां वा वरानने! ।
वसूनां वा वरारोहे! देवता प्रतिभासि मे ॥ २७
नेह गच्छन्ति गन्धर्वा न देवा न च किन्नराः ।
राक्षसाना मयं वासः कथं नु त्वमिहागता ॥ २८
इह शाखामृगास्सिंहा द्वीपिव्याघ्रमृगा स्तथा ।
ऋक्षास्तरक्षवः कङ्काः कथं तेभ्यो न बिभ्यसि ॥ २९
मदान्वितानां घोराणां कुञ्जराणां तरस्विनाम् ।
कथ मेका महारण्ये न बिभेषि वरानने! ॥ ३०
काऽसि कस्य कुतश्चित्त्वं किन्निमित्तं च दण्डकान् ।
एका चरसि कल्याणि! घोरान्राक्षससेवितान् ॥" ३१
इति प्रशस्ता वैदेही रावणेन दुरात्मना ।
द्विजातिवेषेण हि तं दृष्ट्वा रावण मागतम् ॥ ३२
सर्वै रतिथिसत्कारैः पूजयामास मैथिली ।
उपनीयासनं पूर्वं पाद्येनाभिनिमन्त्र्य च ॥ ३३
अब्रवी त्सिद्धमित्येव तदा तं सौम्यदर्शनम् ।
द्विजातिवेषेण समीक्ष्य मैथली समागतं पात्रकुसुम्भधारिणम् ।
अशक्य मुद्वेष्टु मपायदर्शनं न्यमन्त्रय द्ब्राह्मणवत्तदाऽङ्गना ॥ ३४
"इयं बृसी ब्राह्मण! काम मास्यता मिदं च पाद्यं प्रतिगृह्यता"मिति ।
"इदं च सिद्धं वनजात मुत्तमं त्वदर्थ मव्यग्रमिहोपभुज्यताम् ॥"

निमन्त्र्यमाणः प्रतिपूर्णभाषिणीं नरेन्द्रपत्नीं प्रसमीक्ष्य मैथिलीम् ।
प्रसह्य तस्या हरणे धृतं मन स्समर्पयत्स्वात्मवधाय रावणः ॥ ३६

ततः स्सुवेषं मृगयागतं पतिं प्रतीक्षमाणा सहलक्ष्मणं तदा ।
विवीक्षमाणा हरितं ददर्श तन्महद्वनं नैव तु रामलक्ष्मणौ ॥ ३७

इति श्रीमदारण्यकाण्डे षट्चत्वारिंशस्सर्गः ॥

## ॥ सप्तचत्वारिंशस्सर्गः ॥

रावणेन तु वैदेही तथा पृष्टा जिहीर्षता ।
परिव्राजकलिङ्गेन शशंसात्मान मङ्गना ॥ १

'ब्राह्मणश्चातिथिश्चाय मनुक्तो हि शपेत माम्' ।
इति ध्यात्वा मुहूर्तं तु सीता वचन मब्रवीत् ॥ २

"दुहिता जनकस्याहं मैथिलस्य महात्मनः ।
सीता नाम्नाऽस्मि भद्रं ते रामभार्या द्विजोत्तम! ॥ ३

उषित्वा द्वादश समा इक्ष्वाकूणां निवेशने ।
भुञ्जाना मानुषान्भोगांत्सर्वकामसमृद्धिनी ॥ ४

तत स्त्रयोदशे वर्षे राजाऽमन्त्रयत प्रभुः ।
अभिषेचयितुं रामं समेतो राजमन्त्रिभिः ॥ ५

तस्मिंत्संभ्रियमाणे तु राघवस्याभिषेचने ।
कैकेयी नाम भर्तार मार्या सा याचते वरम् ॥ ६

प्रतिगृह्य तु कैकेयी श्वशुरं सुकृतेन मे ।
मम प्रव्राजनं भर्तुर्भरतस्याभिषेचनम् ॥ ७

द्वावयाचत भर्तारं सत्यसन्धं नृपोत्तमम् ।
'नाद्य भोक्ष्ये न च स्वप्स्ये न पास्ये च कथंचन ॥ ८
एष मे जीवितस्यान्तो रामो यद्यभिषिच्यते ।'
इति ब्रुवाणां कैकेयीं श्वशुरो मे स मानदः ॥ ९
अयाचतार्थै रन्वर्थै र्नैव याच्ञां चकार सा ।
मम भर्ता महातेजा वयसा पञ्चविंशकः ॥ १०
अष्टादश हि वर्षाणि मम जन्मनिगण्यते ।
रामेति प्रथितो लोके गुणवांत्सत्यवान् शुचिः ॥ ११
विशालाक्षो महाबाहु स्सर्वभूतहिते रतः ।
कामार्तस्तु महातेजाः पिता दशरथ स्स्वयम् ॥ १२
कैकेय्याः प्रियकामार्थं तं रामं नाभ्यषेचयत् ।
अभिषेकाय तु पितु स्समीपं राम मागतम् ॥ १३
कैकेयी मम भर्तार मित्युवाच धृतं वचः ।
"तव पित्रा समाज्ञप्तं ममेदं शृणु राघव! ॥ १४
भरताय प्रदातव्य मिदं राज्य मकण्टकम् ।
त्वया हि खलु वस्तव्यं नव वर्षाणि पञ्च च ॥ १५
वने प्रव्रज काकुत्स्थ! पितरं मोचयानृतात् ।"
'तथे' त्युक्त्वा च तां रामः कैकेयी मकुतो भयः ॥ १६
चकार तद्वचस्तस्य मम भर्ता दृढव्रतः ।
दद्यान्न प्रतिगृह्णीयात्सत्यं ब्रूयान्नचानृतम् ॥ १७
एत द्ब्राह्मण! रामस्य ध्रुवं व्रत मनुत्तमम् ।
तस्य भ्राता तु द्वैमात्रो लक्ष्मणो नाम वीर्यवान् ॥ १८

रामस्य पुरुषव्याघ्र स्सहाय स्समरेऽरिहा ।
स भ्राता लक्ष्मणो नाम धर्मचारी दृढव्रतः ॥ १९
अन्वगच्छद्धनुष्पाणिः प्रव्रजन्तं मया सह ।
जटी तापस रूपेण मया सह सहानुजः ॥ २०
प्रविष्टो दण्डकारण्यं धर्मनित्यो जितेन्द्रियः ।
ते वयं प्रच्युता राज्या त्कैकेय्या स्तु कृते त्रयः ॥ २१
विचराम द्विजश्रेष्ठ! वनं गम्भीर मोजसा ।
समाश्वस मुहूर्तं तु शक्यं वस्तु मिह त्वया ॥ २२
आगमिष्यति मे भर्ता वन्य मादाय पुष्कलम् ।
[रुरून्गोधान्वराहां श्च हत्वाऽऽदायाऽमिषान्बहून् ] ॥ २३
स त्वं नाम च गोत्रञ्च कुलं चाचक्ष्व तत्त्वतः ।
एक श्च दण्डकारण्ये किमर्थं चरसि द्विज! ॥" २४
एवं ब्रुवन्त्यां सीतायां रामपत्न्यां महाबलः ।
प्रत्युवाचोत्तरं तीव्रं रावणो राक्षसाधिपः ॥ २५
"येन वित्रासितालोका स्सदेवासुरपन्नगाः ।
अहं तु रावणो नाम सीते! रक्षोगणेश्वरः ॥ २६
त्वान्तु काञ्चनवर्णाभां दृष्ट्वा कौशेयवासिनीम् ।
रतिं स्वकेषु दारेषु नाधिगच्छाम्यनिन्दिते! ॥ २७
बह्वीना मुत्तमस्त्रीणा माहृताना मितस्ततः ।
सर्वासा मेव भद्रं ते ममाग्रमहिषी भव ॥ २८
लङ्का नाम समुद्रस्य मम मध्ये महापुरी ।
सागरेण परिक्षिप्ता निविष्टा नगमूर्धनि ॥ २९

तत्र सीते! मया सार्धं वनेषु विहरिष्यसि ।
नचास्यारण्यवासस्य स्पृहयिष्यसि भामिनि! ॥ ३०
पञ्चदास्य स्सहस्राणि सर्वाभरणभूषिताः ।
सीते! परिचरिष्यन्ति भार्या भवसि मे यदि ॥" ३१
रावणेनैव मुक्ता तु कुपिता जनकात्मजा ।
प्रत्युवाचानवद्याङ्गी तमनादृत्य राक्षसम् ॥ ३२
"महागिरि मिवाकम्प्यं महेन्द्रसदृशं पतिम् ।
महोदधि मिवाक्षोभ्यमहं राम मनुव्रता ॥ ३३
सर्वलक्षणसम्पन्नं न्यग्रोधपरिमण्डलम् ।
सत्यसन्धं महाभाग महं राम मनुव्रता ॥ ३४
महाबाहुं महोरस्कं सिंहविक्रान्तगामिनम् ।
नृसिंहं सिंहसंकाश महं राम मनुव्रता ॥ ३५
पूर्णचन्द्राननं रामं राजवत्संजितेंद्रियम् ।
पृथुकीर्तिं महात्मान महं राम मनुव्रता ॥ ३६
त्वं पुनर्जम्बुक स्सिंहीं मा मिच्छसि सुदुर्लभाम् ।
नाहं शक्या त्वया स्प्रष्टु मादित्यस्य प्रभा यथा ॥ ३७
पादपान्काञ्चना न्नूनं बहून्पश्यासि मन्दभाक् ।
राघवस्य प्रियां भार्यां य स्त्व मिच्छासि रावण! ॥ ३८
क्षुधितस्य हि सिंहस्य मृगशत्रो स्तरास्विनः ।
आशीविषस्य च मुखा दंष्ट्रा मादातु मिच्छसि ॥ ३९
मन्दरं पर्वतश्रेष्ठं पाणिना हर्तु मिच्छसि ।
कालकूटं विषं पीत्वा स्वस्तिमान्गन्तु मिच्छसि ॥ ४०

अक्षिसूच्या प्रमृजसि जिह्वया लेक्षि च क्षुरम् ।
राघवस्य प्रियां भार्यां योऽधिगन्तुं त्व मिच्छसि ॥ ४१
अवसज्य शिलां कण्ठे समुद्रं तर्तु मिच्छसि ।
सूर्याचन्द्रमसौ चोभौ पाणिभ्यां हर्तु मिच्छसि ॥ ४२
यो रामस्य प्रियां भार्यां प्रधर्षयितु मिच्छसि ।
अग्निं प्रज्वलितं दृष्ट्वा वस्त्रेणाहर्तु मिच्छसि ॥ ४३
कल्याणवृत्तां रामस्य यो भार्यां हर्तु मिच्छसि ।
अयो मुखानां शूलाना मग्रे चरितु मिच्छसि ॥ ४४
रामस्य सदृशीं भार्यां योऽधिगन्तुं त्व मिच्छसि ।
यदन्तरं सिंहसृगालयो र्वने यदन्तरं स्यन्दिनिकासमुद्रयोः ॥ ४५
सुराग्र्यसौवीरकयो र्यदन्तरं तदन्तरं वै तव राघवस्यच ।
यदन्तरं काञ्चनसीसलोहयो र्यदन्तरं चन्दनवारिपङ्कयोः ॥ ४६
य दन्तरं हस्तिबिडालयो र्वने तदन्तरं दाशरथे स्तवैव च ।
यदन्तरं वायसवैनतेययो र्यदन्तरं मद्गुमयूरयो रपि ॥ ४७
यदन्तरं सारसगृध्रयो र्वने तदन्तरं दाशरथे स्तवैव च ।
तस्मिंत्सहस्राक्षसमप्रभावे रामे स्थिते कार्मुकबाणपाणौ ॥ ४८
हृताऽपि तेऽहं न जरां गमिष्ये वज्रं यथा मक्षिकयाऽवगीर्णम् ।
इतीव तद्वाक्य मदुष्टभावा सुदुष्ट मुक्त्वा रजनीचरं तम् ॥ ४९
गात्रप्रकम्पव्यथिता बभूव वातोद्धता सा कदळीव तन्वी ।
तां वेपमानामुपलभ्य सीतां स रावणो मृत्युसमप्रभावः ॥ ५०
कुलं बलं नाम च कर्म च स्वं समाचचक्षे भयकारणार्थम् ।

इति श्रीमदारण्यकाण्डे सप्तचत्वारिंशस्सर्गः ॥

## ॥ अष्टचत्वारिंशस्सर्गः ॥

एवं ब्रुवन्त्यां सीतायां संरब्धः परुषं वचः ।
ललाटे भ्रुकुटिं कृत्वा रावणः प्रत्युवाच ह ॥ १
"भ्राता वैश्रवणस्याहं सापत्न्यो वरवर्णिनि! ।
रावणो नाम भद्रंते दशग्रीवः प्रतापवान् ॥ २
यस्य देवा स्सगन्धर्वाः पिशाचपतगोरगाः ।
विद्रवन्ति भया द्भीता मृत्यो रिव सदा प्रजाः ॥ ३
येन वैश्रवणो राजा द्वैमात्रः कारणान्तरे ।
द्वन्द्व मासादितः क्रोधा द्रणे विक्रम्य निर्जितः ॥ ४
यद्भयार्तः परित्यज्य स्व मधिष्ठान मृद्धिमत् ।
कैलासं पर्वतश्रेष्ठ मध्यास्ते नरवाहनः ॥ ५
यस्य तत्पुष्पकं नाम विमानं कामगं शुभम् ।
वीर्यादेवार्जितं भद्रे! येन यामि विहायसम् ॥ ६
मम संजातरोषस्य मुखं दृष्ट्वैव मैथिलि! ।
विद्रवन्ति परित्रस्ता स्सुरा श्शक्रपुरोगमाः ॥ ७
यत्र तिष्ठाम्यहं तत्र मारुतो वाति शङ्कितः ।
तीव्रांशु श्शिशरांशु श्च भयात्संपद्यते रविः ॥ ८
निष्कम्पपत्रास्तरवो नद्य श्च स्तिमितोदकाः ।
भवन्ति यत्र यत्राहं तिष्ठामि विचरामि च ॥ ९
मम पारे समुद्रस्य लङ्का नाम पुरी शुभा ।
संपूर्णा राक्षसै र्घोरैर्यथेन्द्रस्यामरावती ॥ १०

प्राकारेण परिक्षिप्ता पाण्डुरेण विराजता ।
हेमकक्ष्या पुरी रम्या वैडूर्यमयतोरणा ॥ ११
हस्त्यश्वरथसंबाधा तूर्यनादविनादिता ।
सर्वकालफलै र्वृक्षै स्संकुलोद्यानशोभिता ॥ १२
तत्र त्वं वसती सीते! राजपुत्रि! मयासह ।
न स्मरिष्यसि नारीणां मानुषीणां मनस्विनी ॥ १३
भुञ्जानाऽमानुषा न्भोगान्दिव्यांश्च वरवर्णिनि! ।
न स्मरिष्यसि रामस्य मानुषस्य गतायुषः ॥ १४
स्थापयित्वा प्रियं पुत्रं राज्ये दशरथेन यः ।
मन्दवीर्य स्सुतो ज्येष्ठ स्ततः प्रस्थापितो ह्ययम् ॥ १५
तेन किं भ्रष्टराज्येन रामेण गतचेतसा ।
करिष्यसि विशालाक्षि! तापसेन तपस्विना ॥ १६
सर्वराक्षस भर्तारं कामात्स्वय मिहागतम् ।
न मन्मथशराविष्टं प्रत्याख्यातुं त्वमर्हसि ॥ १७
प्रत्याख्याय हि मां भीरु! परितापं गमिष्यासि ।
चरणेनाभिहत्येव पुरूरवस मूर्वशी ॥ १८
अङ्गुल्या न समो रामो मम युद्ध स मानुषः ।
तव भाग्येन संप्राप्तं भजस्व वरवर्णिनि! ॥" १९
एव मुक्तातु वैदेही क्रुद्धा संरक्तलोचना ।
अब्रवी त्परुषं वाक्यं रहित्ते राक्षसाधिपम् ॥ २०
"कथं वैश्रवणं देवं सर्वभूतनमस्कृतम् ।
भ्रातरं व्यपदिश्य त्व मशुभं कर्तु मिच्छसि? ॥ २१

अवश्यं विनशिष्यन्ति सर्वे रावण! राक्षसाः ।
येषां त्वं कर्कशो राजा दुर्बुद्धि रजितेन्द्रियः ॥ २२
अपहृत्य शचीं भार्यां शक्य मिन्द्रस्य जीवितुम् ।
न च रामस्य भार्यां मामपनीयास्ति जीवितुम् ॥ २३
जीवेच्चिरं वज्रधरस्य हस्ता च्छचीं प्रधृष्याप्रतिरूपरूपाम् ।
न मादृशीं राक्षस! दूषयित्वा पीतामृतस्यापि तवास्ति मोक्षः ॥

इति श्रीमदारण्यकाण्डे अष्टचत्वारिंशस्सर्गः ॥

## ॥ एकोनपञ्चाशस्सर्गः ॥

सीताया वचनं श्रुत्वा दशग्रीवः प्रतापवान् ।
हस्ते हस्तं समाहत्य चकार सुमहद्वपुः ॥ १
स मैथलीं पुनर्वाक्यं बभाषे च ततो भृशम् ।
"नोन्मत्तया श्रुतौ मन्ये मम वीर्यपराक्रमौ ॥ २
उद्वहेयं भुजाभ्यां तु मेदिनी मम्बरे स्थितः ।
आपिबेयं समुद्रं च हन्यां मृत्युं रणे स्थितः ॥ ३
अर्कं रुन्ध्यां शरै स्तीक्ष्णै र्विभिन्द्यां हि महीतलम् ।
कामरूपिण मुन्मत्ते! पश्य मां कामदं पतिम् ॥" ४
एव मुक्तवतस्तस्य सूर्यकल्पे शिखिप्रभे ।
क्रुद्धस्य हरिपर्यन्ते रक्ते नेत्रे बभूवतुः ॥ ५
सद्य स्सौम्यं परित्यज्य भिक्षुरूपं स रावणः ।
स्वं रूपं कालरूपाभं भजे वैश्रवणानुजः ॥ ६

संरक्तनयन श्श्रीमां स्तप्तकाञ्चनकुण्डलः ।
क्रोधेन महता विष्टो नीलजीमूतसन्निभः ॥ ७
दशास्यः कार्मुकी बाणी बभूव क्षणदाचरः ।
स परिव्राजकच्छद्म महाकायो विहाय तत् ॥ ८
प्रतिपद्य स्वकं रूपं रावणो राक्षसाधिपः ।
संरक्तनयनः क्रोधा ज्जीमूतनिचयप्रभः ॥ ९
रक्ताम्बरधर स्तस्थौ स्त्रीरत्नं प्रेक्ष्य मैथिलीम् ।
सतामसितकेशान्तां भास्करस्य प्रभामिव ॥ १०
वसनाभरणोपेतां मैथिलीं रावणोऽब्रवीत् ।
त्रिषु लोकेषु विख्यातं यदि भर्तार मिच्छसि ॥ ११
मा माश्रय वरारोहे! तवाहं सदृशः पतिः ।
मां भजस्व चिराय त्व महं श्लाघ्यः प्रियस्तव ॥ १२
नैव चाहं क्वचि द्भद्रे! करिष्ये तव विप्रियम् ।
त्यज्यतां मानुषो भावो मयि भावः प्रणीयताम् ॥ १३
राज्याच्च्युत मसिद्धार्थं रामं परिमितायुषम् ।
कैर्गुणै रनुरक्ताऽसि मूढे! पण्डितमानिनि! ॥ १४
यः स्त्रिया वचना द्राज्यं विहाय ससुहृज्जनम् ।
अस्मिन्व्याळानुचरिते वने वसति दुर्मतिः ॥" १५
इत्युक्त्वा मैथिलीं वाक्यं प्रियार्हां प्रियवादिनीम् ।
अभिगम्य सुदुष्टात्मा राक्षसः काममोहितः ॥ १६
जग्राह रावण स्सीतां बुधः खे रोहिणी मिव ।
वामेन सीतां पद्माक्षीं मूर्धजेषु करेण सः ॥ १७

ऊर्वोस्तु दक्षिणेनैव परिजग्राह पाणिना ।
तं दृष्ट्वा मृत्युसंकाशं तीक्ष्णदंष्ट्रं महाभुजम् ॥ १८
प्राद्रवन्गिरिसङ्काशं भयार्ता वनदेवताः ।
स च मायामयो दिव्यः खरयुक्तः खरस्वनः ॥ १९
प्रत्यदृश्यत हेमाङ्गो रावणस्य महारथः ।
तत स्तां परुषै र्वाक्यै र्भर्त्सयन् स महास्वनः ॥ २०
अङ्केनादाय वैदेहीं रथ मारोपय त्तदा ।
सा गृहीता विचुक्रोश रावणेन यशस्विनी ॥ २१
रामेति सीता दुःखार्ता रामं दूरगतं वने ।
ता मकामां स कामार्तः पन्नगेन्द्र वधू मिव ॥ २२
विवेष्टमाना मादाय उत्पपाताथ रावणः ।
तत स्सा राक्षसेन्द्रेण ह्रियमाणा विहायसा ॥ २३
भृशं चुक्रोश मत्तेव भ्रान्तचित्ता यथाऽऽतुरा ।
"हा लक्ष्मण! महाबाहो! गुरुचित्तप्रसादक! ॥ २४
ह्रियमाणां न जानीषे रक्षसा मा ममर्षिणा ।
जीवितं सुखमर्थांश्च धर्महेतोः परित्यजन् ॥ २५
ह्रियमाणा मधर्मेण मां राघव! न पश्यसि ।
ननु नामाविनीतानां विनेताऽसि परन्तप! ॥ २६
कथ मेवंविधं पापं न त्वं शासिहि रावणम् ।
ननु सद्योऽविनीतस्य दृश्यते कर्मणः फलम् ॥ २७
कालोऽप्यङ्गीभवत्यत्र सस्याना मिव पक्तये ।
सकर्म कृतवा नेतत्कालोपहतचेतनः ॥ २८

जीवितान्तकरं घोरं रामा व्यसन माप्नुहि ।
हन्तेदानीं सकामाऽस्तु कैकेयी सह बान्धवैः ॥ २९
ह्रिये यद्धर्मकामस्य धर्मपत्नी यशस्विनः ।
आमन्त्रये जनस्थाने कर्णिकारांत्सुपुष्पितान् ॥ ३०
क्षिप्रं रामाय शंसध्वं 'सीतां हरति रावणः'
माल्यवन्तं शिखरिणं वन्दे प्रस्रवणं गिरिम् ॥ ३१
क्षिप्रं रामाय शंस त्वं 'सीतां हरति रावणः' ।
हंसकारण्डवाकीर्णां वन्दे गोदावरीं नदीम् ॥ ३२
क्षिप्रं रामाय शंस त्वं 'सीतां हरति रावणः' ।
दैवतानि च यान्यस्मिन्वने विविधपादपे ॥ ३३
नमस्करोम्यहं तेभ्यो भर्तुश्शंसत मां हृताम् ।
यानिकानिचिदप्यत्र सत्त्वानि निवसन्त्युत ॥ ३४
सर्वाणि शरणं यामि मृगपक्षिगणानपि ।
ह्रियमाणां प्रियां भर्तुः प्राणेभ्योऽपि गरीयसीम् ॥ ३५
'विवशाऽपहृता सीता रावणे' नेति शंसत ।
विदित्वा मां महाबाहुरमुत्रापि महाबलः ॥ ३६
आनेष्यति पराक्रम्य वैवस्वतहृतामपि ।"
सा तदा करुणा वाचो विलपन्ती सुदुःखिता ॥ ३७
वनस्पतिगतं गृध्रं ददर्शाऽयतलोचना ।
सा तमुद्वीक्ष्य सुश्रोणी रावणस्य वशंगता ॥ ३८
समाक्रन्द द्भयपरा दुःखोपहतया गिरा ।
"जटायो! पश्य मामार्य! ह्रियमाणा मनाथवत् ॥ ३९

अनेन राक्षसेन्द्रेण करुणं पापकर्मणा ।
नैष वारयितुं शक्य स्तव क्रूरो निशाचरः ॥ ४०
सत्त्ववा ञ्जतकाशी च सायुध श्चैव दुर्मतिः ।
रामाय तु यथातत्त्वं जटायो! हरणं मम ॥ ४१
लक्ष्मणाय च तत्सर्व माख्यातव्य मशेषतः ।

इति श्रीमदारण्यकाण्डे एकोनपञ्चाशस्सर्गः ॥

॥ पञ्चाशस्सर्गः ॥

तं शब्द मवसुप्तस्तु जटायु रथ शुश्रुवे ।
निरीक्ष्य रावणं क्षिप्रं वैदेहीं च ददर्श सः ॥ १
ततः पर्वतकूटाभ स्तीक्ष्णतुण्डः खगोत्तमः ।
वनस्पतिगत श्श्रीमा न्व्याजहार शुभां गिरम् ॥ २
"दशग्रीव! स्थितो धर्मे पुराणे सत्यसंश्रयः ।
जटायु र्नाम नाम्नाऽहं गृध्रराजो महाबलः ॥ ३
राजा सर्वस्य लोकस्य महेन्द्रवरुणोपमः ।
लोकानां च हिते युक्तो रामो दशरथात्मजः ॥ ४
तस्यैषा लोकनाथस्य धर्मपत्नी यशस्विनी ।
सीतानाम वरारोहा यां त्वं हर्तु मिहेच्छसि ॥ ५
कथं राजा स्थितो धर्मे परदारा न्परामृशेत् ।
रक्षणीया विशेषेण राजदारा महाबल! ॥ ६
निवर्तय मतिं नीचां परदाराभिमर्शनात् ।
न त त्समाचरे द्धीरो यत्परोऽस्य विगर्हयेत् ॥ ७

यथाऽऽत्मनस्तथाऽन्येषां दारा रक्ष्या विपश्चिता ।
धर्ममर्थं च कामं च शिष्टाश्शास्त्रेष्वनागतम् ॥ ८
व्यवस्यन्ति न राजानो धर्मं पौलस्त्यनन्दन! ।
राजा धर्मस्य कामस्य द्रव्याणां चोत्तमो निधिः ॥ ९
धर्मश्शुभं वा पापं वा राजमूलं प्रवर्तते ।
पापस्वभावश्चपलः कथं त्वं रक्षसां वर! ॥ १०
आश्चर्यमभिसंप्राप्तो विमानमिव दुष्कृतिः ।
कामं स्वभावो यो यस्य न शक्यः परिमार्जितुम् ॥ ११
न हि दुष्टात्मनामार्यमावसत्यालये चिरम् ।
विषये वा पुरे वा ते यदा रामो महाबलः ॥ १२
नापराध्यति धर्मात्मा कथं तस्यापराध्यसि ।
यदि शूर्पणखाहेतोर्जनस्थानगतः खरः ॥ १३
अतिवृत्तो हतः पूर्वं रामेणाक्लिष्टकर्मणा ।
अत्र ब्रूहि यथातत्त्वं को रामस्य व्यतिक्रमः ॥ १४
यस्य त्वं लोकनाथस्य भार्यां हृत्वा गमिष्यसि ।
क्षिप्रं विसृज वैदेहीं मा त्वा घोरेण चक्षुषा ॥ १५
दहेद्दहनभूतेन वृत्र मिन्द्राशनिर्यथा ।
सर्पमाशीविषं बद्ध्वा वस्त्रान्ते नावबुध्यसे ॥ १६
ग्रीवायां प्रतिमुक्तं च कालपाशं न पश्यसि ।
स भारस्सौम्य! भर्तव्यो यो नरं नावसादयेत् ॥ १७
तदन्नमपि भोक्तव्यं जीर्यते यदनामयम् ।
यत्कृत्वा न भवेद्धर्मो न कीर्तिर्न यशो भुवि ॥ १८

शरीरस्य भवेत्खेदः कस्तत्कर्म समाचरेत् ।
षष्टिर्वर्षसहस्राणि मम जातस्य रावण! ॥ १९
पितृपैतामहं राज्यं यथावदनुतिष्ठतः ।
वृद्धोऽहं त्वं युवा धन्वी सशरः कवची रथी ॥ २०
तथाऽप्यादाय वैदेहीं कुशली न गमिष्यसि ।
नशक्तस्त्वं बलाद्धर्तुं वैदेहीं मम पश्यतः ॥ २१
हेतुभिर्न्यायसंसिद्धै ध्रुवां वेदश्रुती मिव ।
युध्यस्व यदि शूरोऽसि मुहूर्तं तिष्ठ रावण! ॥ २२
शयिष्यसे हतो भूमौ यथा पूर्वं खरस्तथा ।
असकृत्संयुगे येन निहता दैत्यदानवाः ॥ २३
न चिराच्चीरवासास्त्वां रामो युधि वधिष्यति ।
किन्तु शक्यं मया कर्तुं गतौ दूरं नृपात्मजौ ॥ २४
क्षिप्रं त्वं नश्यसे नीच! तयोर्भीतो न संशयः ।
न हि मे जीवमानस्य नयिष्यासि शुभामिमाम् ॥ २५
सीतां कमलपत्राक्षीं रामस्य महिषीं प्रियां ।
अवश्यं तु मया कार्यं प्रियं तस्य महात्मनः ॥ २६
जीवितेनापि रामस्य तथा दशरथस्य च ।
तिष्ठ तिष्ठ दशग्रीव! मुहूर्तं पश्य रावण! ॥ २७
युद्धातिथ्यं प्रदास्यामि यावत्प्राणं निशाचर! ।
वृन्तादिव फलं त्वां तु पातयेयं रथोत्तमात् ॥" २८
[शरणमस्मि जटायुरहं सखा दशरथस्य रथस्तव तिष्ठतु ।
अविदुषामपराधमहं सहे विसृज रावण! वीरपतिव्रताम् ॥ २९

इति श्रीमदारण्यकाण्डे पञ्चाशस्सर्गः ॥

## ॥ एकपञ्चाशस्सर्गः ॥

इत्युक्तस्य यथान्यायं रावणस्य जटायुषः ।
क्रुद्धस्याग्निनिभास्सर्वा रेजुर्विंशतिदृष्टयः ॥ १
संरक्तनयनः कोपात्तप्तकाञ्चनकुण्डलः ।
राक्षसेन्द्रोऽभिदुद्राव पतगेन्द्रममर्षणः ॥ २
स संप्रहारस्तुमुलस्तयोस्तस्मिन् महावने ।
बभूव वातोद्धतयोर्मेघयोर्गगने यथा ॥ ३
तद्बभूवाद्भुतं युद्धं गृध्रराक्षसयोस्तथा ।
सपक्षयोर्माल्यवतोर्महापर्वतयोरिव ॥ ४
ततो नाळीकनाराचैस्तीक्ष्णाग्रैश्च विकर्णिभिः ।
अभ्यवर्षन्महाघोरैर्गृध्रराजं महाबलः ॥ ५
स तानि शरजालानि गृध्रः पत्त्ररथेश्वरः ।
जटायुः प्रतिजग्राह रावणास्त्राणि संयुगे ॥ ६
तस्य तीक्ष्णनखाभ्यां तु चरणाभ्यां महाबलः ।
चकार बहुधा गात्रे व्रणान्पतगसत्तमः ॥ ७
अथ क्रोधाद्दशग्रीवो जग्राह दश मार्गणान् ।
मृत्युदण्डनिभान्घोराञ्छत्रुमर्दनकाङ्क्षया ॥ ८
सतैर्बाणैर्महावीर्यः पूर्णमुक्तैरजिह्मगैः ।
बिभेद निशितैस्तीक्ष्णैर्गृध्रं घोरैश्शिलीमुखैः ॥ ९
स राक्षसरथेऽपश्यज्जानकीं बाष्पलोचनाम् ।
अचिन्तयित्वा तान्बाणान्राक्षसं समभिद्रवत् ॥ १०

ततोऽस्य सशरं चापं मुक्तामणिविभूषितम् ।
चरणाभ्यां महातजो बभञ्ज पतगेश्वरः ॥ ११
ततोऽन्यद्धनुरादाय रावणः क्रोधमूर्छितः ।
ववर्ष शरवर्षाणि शतशोऽथ सहस्रशः ॥ १२
शरैरावारितस्तस्य संयुगे पतगेश्वरः ।
कुलायमुपसंप्राप्तः पक्षीव प्रबभौ तदा ॥ १३
स तानि शरवर्षाणि पक्षाभ्यां च विधूय च ।
चरणाभ्यां महातेजा बभञ्जास्य महद्धनुः ॥ १४
तच्चाग्निसदृशं दीप्तं रावणस्य शरावरम् ।
पक्षाभ्यां स महावीर्यो व्याधुनोत्पतगेश्वरः ॥ १५
काञ्चनोरश्छदान्दिव्यान्पिशाचवदनान्खरान् ।
तांश्चास्य जवसंपन्नाञ्जघान समरे बली ॥ १६
वरं त्रिवेणुसंपन्नं कामगं पावकार्चिषम् ।
मणिहेमविचित्राङ्गं बभञ्ज च महारथम् ॥ १७
पूर्णचन्द्रप्रतीकाशं छत्रं च व्यजनैस्सह ।
पातयामास वेगेन ग्राहिभी राक्षसैस्सह ॥ १८
सारथेश्चास्य वेगेन तुण्डेनैव महच्छिरः ।
पुनर्व्यपाहरच्छ्रीमान्पक्षिराजो महाबलः ॥ १९
स भग्नधन्वा विरथो हताश्वो हतसारथिः ।
अङ्केनादाय वैदेहीं पपात भुवि रावणः ॥ २०
दृष्ट्वा निपतितं भूमौ रावणं भग्नवाहनम् ।
'साधुसा' ध्विति भूतानि गृध्रराजमपूजयन् ॥ २१

परिश्रान्तं तु तं दृष्ट्वा जरया पक्षियूथपम् ।
उत्पपात पुनर्हृष्टो मैथिलीं गृह्य रावणः ॥ २२
तं प्रहृष्टं निधायाङ्के गच्छन्तं जनकात्मजाम् ।
गृध्रराजस्समुत्पत्य समभिद्रुत्य रावणम् ॥ २३
समावार्य महातेजा जटायुरिदमब्रवीत् ।
"वज्रसंस्पर्शबाणस्य भार्यां रामस्य रावण! ॥ २४
अल्पबुद्धे! हरस्येनां वधाय खलु रक्षसाम् ।
समित्रबन्धुस्सामात्यस्सबलस्सपरिच्छदः ॥ २५
विषपानं पिबस्येतत्पिपासित इवोदकम् ।
अनुबन्धमजानन्तः कर्मणामविचक्षणाः ॥ २६
शीघ्रमेव विनश्यन्ति यथा त्वं विनशिष्यसि ।
बद्धस्त्वं कालपाशेन क्व गतस्तस्य मोक्ष्यसे ॥ २७
वधाय बडिशं गृह्य सामिषं जलजो यथा ।
न हि जातु दुराधर्षौ काकुत्स्थौ तव रावण! ॥ २८
धर्षणं चाश्रमस्यास्य क्षमिष्येते तु राघवौ ।
यथा त्वया कृतं कर्म भीरुणा लोकगर्हितम् ॥ २९
तस्कराचरितो मार्गो नैष वीरनिषेवितः ।
युध्यस्व यदि शूरोऽसि मुहूर्तं तिष्ठ रावण! ॥ ३०
शयिष्यसे हतो भूमौ यथा भ्राता खरस्तथा ।
परेतकाले पुरुषो यत्कर्म प्रतिपद्यते ॥ ३१
विनाशायात्मनोऽधर्म्यं प्रतिपन्नोऽसि कर्म तत् ।
पापानुबन्धो वै यस्य कर्मणः कर्म को नु तत् ॥ ३२

कुर्वीत लोकाधिपतिस्स्वयंभूर्भगवानपि ।"
एवमुक्त्वा शुभं वाक्यं जटायुस्तस्य रक्षसः ॥ ३३
निपपात भृशं पृष्ठे दशग्रीवस्य वीर्यवान् ।
तं गृहीत्वा नखैस्तीक्ष्णैर्विरराद समन्ततः ॥ ३४
अधिरूढो गजारोहो यथा स्याद्दुष्टवारणम् ।
विरराद नखैरस्य तुण्डं पृष्ठे समर्पयन् ॥ ३५
केशांश्चोत्पाटयामास नखपक्षमुखायुधः ।
स तथा गृध्रराजेन क्लिश्यमानो मुहुर्मुहुः ॥ ३६
अमर्षस्फुरितोष्ठस्सन्प्राकम्पत स रावणः ।
स परिष्वज्य वैदेहीं वामेनाङ्केन रावणः ॥ ३७
तलेनाभिजघानाशु जटायुं क्रोधमूर्छितः ।
जटायुस्तमभिक्रम्य तुण्डेनास्य खगाधिपः ॥ ३८
वामबाहून्दश तदा व्यपाहरदरिन्दमः ।
संछिन्नबाहोस्सद्यैव बाहवस्सहसाऽभवन् ॥ ३९
विषज्वालावळीयुक्ता वल्मीकादिव पन्नगाः ।
ततः क्रोधाद्दशग्रीवस्सीतामुत्सृज्य रावणः ॥ ४०
मुष्टिभ्यां चरणाभ्यां च गृध्रराजमपोथयत् ।
ततो मुहूर्तं संग्रामो बभूवातुल्यवीर्ययोः ॥ ४१
राक्षसानां च मुख्यस्य पक्षिणां प्रवरस्य च ।
तस्य व्यायच्छमानस्य रामस्यार्थे स रावणः ॥ ४२
पक्षौ पार्श्वौ च पादौ च खड्ग मुद्धृत्य सोऽच्छिनत् ।
स विछिन्नपक्षस्सहसा रक्षसा रौद्रकर्मणा ॥ ४३

निपपात हतो गृध्रो धरण्यामल्पजीवितः ।
तं दृष्ट्वा पतितं भूमौ क्षतजार्द्रं जटायुषम् ॥ ४४
अभ्यधावत वैदेही स्वबन्धुमिव दुःखिता ।
तं नीलजीमूतनिकाशकल्पं सुपाण्डुरोरस्कमुदारवीर्यम् ॥ ४५
ददर्श लङ्काधिपतिः पृथिव्यां जटायुषं शान्तमिवाग्निदावम् ।
ततस्तु तं पत्ररथं महीतले निपातितं रावणवेगमर्दितम् ॥ ४६
पुनः परिष्वज्य शशिप्रभानना रुरोद सीता जनकात्मजा तदा ।

इति श्रीमदारण्यकाण्डे एकपञ्चाशस्सर्गः ॥

## ॥ द्विपञ्चाशस्सर्गः ॥

तमल्पजीवितं गृध्रं स्फुरन्तं राक्षसाधिपः ।
ददर्श भूमौ पतितं समीपे राघवाश्रमात् ॥ १
सा तु ताराधिपमुखी रावणेन समीक्ष्य तम् ।
गृध्रराजं विनिहतं विललाप सुदुःखिता ॥ २
आलिङ्ग्य गृध्रं निहतं रावणेन बलीयसा ।
विललाप सुदुःखार्ता सीता शशिनिभानना ॥ ३
"निमित्तं लक्षणज्ञानं शकुनिस्वरदर्शनम् ।
अवश्यं सुखदुःखेषु नराणां प्रतिदृश्यते ॥ ४
नूनं राम! न जानासि महद्व्यसनमात्मनः ।
धावन्ति नूनं काकुत्स्थं मदर्थं मृगपक्षिणः ॥ ५
अयं हि पापचारेण मां त्रातुमभिसङ्गतः ।
शेते विनिहतो भूमौ ममाभाग्याद्विहङ्गमः ॥ ६

त्राहि मामद्य काकुत्स्थ! लक्ष्म"णेति वराङ्गना ।
सुसंत्रस्ता समाक्रन्दच्छृण्वतां तु यथान्तिके ॥ ७
[सकृद्रामं पुनश्चश्रूस्तथा लक्ष्मणमङ्गना ।
असकृत्तत्र वैदेही विललाप द्विजान्तिके ॥] ८
तां क्लिष्टमाल्याभरणां विलपन्तीमनाथवत् ।
अभ्यधावत वैदेहीं रावणो राक्षसाधिपः ॥ ९
तां लतामिव वेष्टन्ती मालिङ्गन्तीं महाद्रुमान् ।
'मुञ्चमु'ञ्चेति बहुशः प्रवदन्राक्षसाधिपः ॥ १०
क्रोशन्तीं 'रामरा' मेति रामेण रहितां वने ।
जीवितान्ताय केशेषु जग्राहान्तकसन्निभः ॥ ११
प्रधर्षितायां सीतायां बभूव सचराचरम् ।
जगत्सर्वममर्यादं तमसाऽन्धेन संवृतम् ॥ १२
न वाति मारुतस्तत्र निष्प्रभोऽभूद्दिवाकरः ।
दृष्ट्वा सीतां परामृष्टां दीनां दिव्येन चक्षुषा ॥ १३
'कृतं कार्य' मिति श्रीमान् व्याजहार पितामहः ।
प्रहृष्टा व्यथिताश्चासंत्सर्वे ते परमर्षयः ॥ १४
दृष्ट्वा सीतां परामृष्टां दण्डकारण्यवासिनः ।
रावणस्य विनाशं च प्राप्तं बुद्ध्वा यदृच्छया ॥ १५
स तु तां 'रामरा' मेति रुदतीं लक्ष्मणेति च ।
जगामादाय चाकाशं रावणो राक्षसाधिपः ॥ १६
तप्ताभरणसर्वाङ्गी पीतकौशेयवासिनी ।
रराज राजपुत्री तु विद्युत्सौदामिनी यथा ॥ १७

उद्धूतेन च वस्त्रेण तस्याः पीतेन रावणः ।
अधिकं प्रति बभ्राज गिरिर्दीप्त इवाग्निना ॥ १८

तस्याः परमकल्याण्यास्ताम्राणि सुरभीणि च ।
पद्मपत्राणि वैदेह्या अभ्यकीर्यन्त रावणम् ॥ १९

तस्याः कौशेयमुद्धूतमाकाशे कनकप्रभम् ।
बभौ चादित्यरागेण ताम्रमभ्रमिवातपे ॥ २०

तस्यास्तत्सुनसं वक्त्रमाकाशे रावणाङ्कगम् ।
न रराज विना रामं विनाळ मिव पङ्कजम् ॥ २१

बभूव जलदं नीलं भित्त्वा चन्द्र इवोदितः ।
सुललाटं सुकेशान्तं पद्मगर्भाभमव्रणम् ॥ २२

शुक्लैस्सुविमलैर्दन्तैः प्रभावद्भिरलङ्कृतम् ।
तस्यास्तद्विमलं वक्त्रमाकाशे रावणाङ्कगम् ॥ २३

रुदितं व्यपमृष्टास्रं चन्द्रवत्प्रियदर्शनम् ।
सुनासं चारुताम्रोष्ठमाकाशे हाटकप्रभम् ॥ २४

राक्षसेन समाधूतं तस्यास्तद्वदनं शुभम् ।
शुशुभे न विना रामं दिवा चन्द्र इवोदितः ॥ २५

सा हेमवर्णा नीलाङ्गं मैथिली राक्षसाधिपम् ।
शुशुभे काञ्चनी काञ्ची नीलं मणिमिवाश्रिता ॥ २६

सा पद्मगौरी हेमाभा रावणं जनकात्मजा ।
विद्युद्घनमिवाविश्य शुशुभे तप्तभूषणा ॥ २७

तरुप्रवाळरक्ता सा नीलाङ्गं राक्षसेश्वरम् ।
प्राशोभयत वैदेही गजं कक्ष्येव काञ्चनी ॥ २८

तस्या भूषणघोषेण वैदेह्या राक्षसाधिपः ।
बभौ सचपलो नीलस्सघोष इव तोयदः ॥ २९
उत्तमाङ्गाच्च्युता तस्याः पुष्पवृष्टिस्समन्ततः ।
सीताया ह्रियमाणायाः पपात धरणीतले ॥ ३०
सा तु रावणवेगेन पुष्पवृष्टिस्समन्ततः ।
समाधूता दशग्रीवं पुनरेवाभ्यवर्तत ॥ ३१
अभ्यवर्तत पुष्पाणां धारा वैश्रवणानुजम् ।
नक्षत्रमाला विमला मेरुं नगमिवोन्नतम् ॥ ३२
चरणान्नूपुरं भ्रष्टं वैदेह्या रत्नभूषितम् ।
विद्युन्मण्डलसंकाशं पपात मधुरस्वनम् ॥ ३३
तां महोल्कामिवाकाशे दीप्यमानां स्वतेजसा ।
जहाराऽऽकाश माविश्य सीतां वैश्रवणानुजः ॥ ३४
तस्यास्तान्यग्निवर्णानि भूषणानि महीतले ।
सघोषाण्यवकीर्यन्त क्षीणास्तारा इवाम्बरात् ॥ ३५
तस्याः स्तनान्तराद्भ्रष्टो हारस्ताराधिपद्युतिः ।
'वैदेह्या निपतन्भाति गङ्गेव गगनाच्च्युता ॥ ३६
उत्पन्नवाताभिहता नानाद्विजगणायुताः ।
'माभै' रिति विधूताग्रा व्याजह्रुरिव पादपाः ॥ ३७
नळिन्यो ध्वस्तकमला स्त्रस्तमीनजलेचराः ।
सखीमिव गतोच्छ्वासा मन्वशोचन्त मैथिलीम् ॥ ३८
समन्तादभिसंपत्य सिंहव्याघ्रमृगाद्विजाः ।
अन्वधावंस्तदा रोषात्सीतां छायानुगामिनः । ३९

जलप्रपातास्रमुखाश्शृङ्गैरुच्छ्रितबाहुभिः ।
सीतायां ह्रियमाणायां विक्रोशन्तीव पर्वताः ॥ ४०
ह्रियमाणान्तु वैदेहीं दृष्ट्वा दीनो दिवाकरः ।
प्रतिध्वस्तप्रभश्श्रीमानासीत्पाण्डरमण्डलः । ४१
'नास्ति धर्मः कुतस्सत्यं नार्जवं नानृशंसता ।
यत्र रामस्य वैदेहीं भार्यां हरति रावणः ॥' ४२
इति सर्वाणि भूतानि गणशः पर्यदेवयन् ।
वित्रस्तका दीनमुखा रुरुदुर्मृगपोतकाः ॥ ४३
उद्वीक्ष्योद्वीक्ष्य नयनैरस्रपाताविलेक्षणाः ।
सुप्रवेपितगात्राश्च बभूवुर्वनदेवताः ॥ ४४
विक्रोशन्तीं दृढं सीतां दृष्ट्वा दुःखं तथागताम् ।
तां तु 'लक्ष्मण रा'मेति क्रोशन्तीं मधुरस्वरम् ॥ ४५
अवेक्षमाणां बहुशो वैदेहीं धरणीतलम् ।
स तामाकुलकेशान्तां विप्रमृष्टविशेषकाम् ॥ ४६
जहारात्मविनाशाय दशग्रीवो मनस्विनीम् ।
ततस्तु सा चारुदती शुचिस्मिता विनाकृता बन्धुजनेन मैथली ।
अपश्यती राघवलक्ष्मणावुभौ विवर्णवक्त्रा भयभारपीडिता ॥ ४७

इति श्रीमदारण्यकाण्डे द्विपञ्चाशस्सर्गः ॥

## ॥ त्रिपञ्चाशस्सर्गः ॥

खमुत्पतन्तं तं दृष्ट्वा मैथिली जनकात्मजा ।
दुःखिता परमोद्विग्ना भये महति वर्तिनी ॥ १

रोषरोदनताम्राक्षी भीमाक्षं राक्षसाधिपम् ।
रुदती करुणं सीता ह्रियमाणेदमब्रवीत् ॥ २
" न व्यपत्रपसे नीच ! कर्मणाऽनेन रावण ! ।
ज्ञात्वा विरहितं यन्मां चोरयित्वा पलायसे ॥ ३
त्वयैव नूनं दुष्टात्म ! न्भीरुणा हर्तुमिच्छता ।
ममापवाहितो भर्ता मृगरूपेण मायया ॥ ४
यो हि मामुद्यतस्त्रातुं सोऽप्ययं विनिपातितः ।
गृध्रराजः पुराणोऽसौ श्वशुरस्य सखा मम ॥ ५
परमं खलु ते वीर्यं दृश्यते राक्षसाधम ! ।
विश्राव्य नामधेयं हि युद्धेनास्मि जिता त्वया ॥ ६
ईदृशं गर्हितं कर्म कथं कृत्वा न लज्जसे ।
स्त्रियाश्च हरणं नीच ! रहितेतु परस्य च ॥ ७
कथयिष्यन्ति लोकेषु पुरुषाः कर्म कुत्सितम् ।
सुनृशंसमधर्मिष्ठं तव शौण्डीर्यमानिनः ॥ ८
धिक्ते शौर्यं च सत्त्वं च यत्त्वं कथितवांस्तदा ।
कुलाक्रोशकरं लोके धिक्ते चारित्रमीदृशम् ॥ ९
किं कर्तुं शक्यमेवं हि यज्जवेनैव धावसि ।
मुहूर्तमपि तिष्ठस्व न जीवन्प्रतियास्यसि ॥ १०
न हि चक्षुष्पथं प्राप्य तयोः पार्थिवपुत्रयोः ।
ससैन्योऽपि समर्थस्त्वं मुहूर्तमपि जीवितुम् ॥ ११
न त्वं तयोश्शरस्पर्शं सोढुं शक्तः कथंचन ।
वने प्रज्वलितस्येव स्पर्शं मग्ने विहंगमः ॥ १२

साधु कृत्वाऽऽत्मनः पथ्यं साधु मां मुञ्च रावण! ।
मत्प्रधर्षणरुष्टो हि भ्रात्रा सह पति र्मम ॥ १३
विधास्यति विनाशाय त्वं मां यदि न मुञ्चसि ।
येन त्वं व्यवसायेन बलान्मां हर्तुमिच्छसि ॥ १४
व्यवसायस्स ते नीच! भविष्यति निरर्थकः ।
न ह्यहं तमपश्यन्ती भर्तारं विबुधोपमम् ॥ १५
उत्सहे शत्रुवशगा प्राणान्धारयितुं चिरम् ।
न नूनं चात्मनश्श्रेयः पथ्यं वा समवेक्षसे ॥ १६
मृत्युकाले यथा मर्त्यो विपरीतानि सेवते ।
मुमूर्षूणां हि सर्वेषां यत्पथ्यं तन्न रोचते ॥ १७
पश्याम्यद्य हि कण्ठे त्वां कालपाशावपाशितम् ।
यथा चास्मिन्भयस्थाने न बिभेषि दशानन! ॥ १८
व्यक्तं हिरण्मयान्हि त्वं संपश्यसि महीरुहान् ।
नदीं वैतरणीं घोरां रुधिरौघनिवाहिनीम् ॥ १९
असिपत्रवनं चैव भीमं पश्यसि रावण! ।
तप्तकाञ्चनपुष्पां च वैडूर्यप्रवरच्छदाम् ॥ २०
द्रक्ष्यसे शाल्मलीं तीक्ष्णामायसैः कण्टकैश्चिताम् ।
न हि त्वमीदृशं कृत्वा तस्यालीकं महात्मनः ॥ २१
धरितुं शक्ष्यसि चिरं विषं पीत्वेव निर्घृणः ।
बद्ध स्त्वं कालपाशेन दुर्निवारेण रावण! ॥ २२
क्व गतो लप्स्यसे शर्म भर्तुर्मम महात्मनः ।
निमेषान्तरमात्रेण विना भ्रात्रा महावने ॥ २३

राक्षसा निहता येन सहस्राणि चतुर्दश ।
स कथं राघवो वीरस्सर्वास्त्रकुशलो बली ॥ २४
न त्वां हन्याच्छरैस्तीक्ष्णै रिष्टभार्यापहारिणम् ।
"एतच्चान्यच्च परुषं वैदेही रावणाङ्कगा ।
भयशोकसमाविष्टा करुणं विललाप ह ॥ २५
तथाभृशार्ता बहुचैव भाषिणीं विलापपूर्वं करुणं च भामिनीं ।
जहार पापः करुणं विवेष्टतीं नृपात्मजामागतगात्रवेपथुम् ॥ २६

इति श्रीमदारण्यकाण्डे त्रिपञ्चाशस्सर्गः ॥

---

## ॥ चतुःपञ्चाशस्सर्गः ॥

ह्रियमाणा तु वैदेही कंचिन्नाथमपश्यती ।
ददर्श गिरिशृङ्गस्थान्पञ्च वानरपुङ्गवान् ॥ १
तेषां मध्ये विशालाक्षी कौशेयं कनकप्रभम् ।
उत्तरीयं वरारोहा शुभान्याभरणानि च ॥ २
मुमोच 'यदि रामाय शंसेयु' रिति मैथिली ।
वस्त्र मुत्सृज्य तन्मध्ये निक्षिप्तं सहभूषणम् ॥ ३
संभ्रमात्तु दशग्रीवस्तत्कर्म न स बुद्धवान् ।
पिङ्गाक्षास्तां बिशालाक्षीं नेत्रैरनिमिषैरिब ॥ ४
विक्रोशन्तीं तथा सीतां ददृशुर्वानरर्षभाः ।
स च पम्पामतिक्रम्य लङ्कामभिसुखः पुरीम् ॥ ५
जगाम रुदतीं गृह्यवैदेहीं राक्षसेश्वर ।
तां जहार सुसंहृष्टो रावणो मृत्युमात्मनः ॥ ६

उत्सङ्गेनेव भुजगीं तीक्ष्णदंष्ट्रां महाविषाम् ।
वनानि सरितश्शैलांत्सरांसि च विहाय सा ॥ ७
स क्षिप्रं समतीयाय शरश्चापादिव च्युतः ।
तिमिनक्रनिकेतं तु वरुणालयमक्षयम् ॥ ८
सरितां शरणं गत्वा समतीयाय सागरम् ।
संभ्रमात्परिवृत्तोर्मीरुद्धमीनमहोरगः ॥ ९
वैदेह्यां ह्रियमाणायां बभूव वरुणालयः ।
अन्तरिक्षगता वाच स्ससृजुश्चारणास्तदा ॥ १०
'एतदन्तो दशग्रीव इति सिद्धास्तदाऽब्रुवन् ।
सतु सीतां विवेष्टन्तीमङ्केनादाय रावणः ॥ ११
प्रविवेश पुरीं लङ्कां रूपिणीं मृत्युमात्मनः ।
सोऽभिगम्य पुरीं लङ्कां सुविभक्तमहापथाम् ॥ १२
संरूढकक्ष्याबहुळं स्वमन्तःपुरमाविशत् ।
तत्र तामसितापाङ्गीं शोकमोहपरायणाम् ॥ १३
निदधे रावणस्सीतां मयो मायामिवास्त्रियम् ।
अब्रवीच्च दशग्रीवः पिशाचीर्घोरदर्शनाः ॥ १४
"यथा नेमां पुमान् स्त्रीवा सीतां पश्यत्यसम्मतः ।
मुक्तामणिसुवर्णानि वस्त्राण्याभरणानि च ॥ १५
यद्यदिच्छेत्तदेवास्या देयं मच्छन्दतो यथा ।
या च वक्ष्यति वैदेही वचनं किंचिदप्रियम् ॥ १६
अज्ञानाद्यदि वा ज्ञाना न्न तस्य जीवितं प्रियम् ।"
तथोक्त्वा राक्षसीस्तास्तु राक्षसेन्द्रः प्रतापवान् ॥ १७

निष्क्रम्यान्तःपुरात्तस्मा 'त्किं कृत्य'मिति चिन्तयन् ।
ददर्शाष्टौ महावीर्यान्राक्षसान्पिशिताशनन् ॥ १८
स तान्दृष्ट्वा महावीर्यो वरदानेन मोहितः ।
उवाचैतानिदं वाक्यं प्रशस्यबलवीर्यतः ॥ १९
" नानाप्रहरणाः क्षिप्रमितो गच्छत सत्वराः ।
जनस्थानं हतस्थानं भूतपूर्वंखरालयम् ॥ २०
तत्रोष्यतां जनस्थाने शून्ये निहतराक्षसे ।
पौरुषं बलमाश्रित्य त्रास मुत्सृज्य दूरतः ॥ २१
बलं हि सुमह द्यन्मे जनस्थाने निवेशितम् ।
सदूषणंखरं युद्धे हतं रामेण सायकैः ॥ २२
तत्र क्रोधो ममामर्षा द्धैर्यस्योपरि वर्तते ।
वैरं चसुमहज्जातं रामं प्रति सुदारुणम् ॥ २३
निर्यातयितुमिच्छामि तच्च वैरमहं रिपोः ।
नहि लप्स्याम्यहं निद्रामहत्वा संयुगे रिपुम् ॥ २४
तं त्विदानीमहं हत्वा खरदूषणघातिनम् ।
रामं शर्मोपलप्स्यामि धनं लब्ध्वेव निर्धनः ॥ २५
जनस्थाने वसद्भिस्तु भवद्भी राममाश्रिता ।
प्रवृत्तिरुपनेतव्या 'किङ्करो' तीति तत्त्वतः ॥ २६
अप्रमादा च्च गन्तव्यं सर्वै रपि निशाचरैः ।
कर्तव्यश्च सदा यत्नो राघवस्य वधं प्रति ॥ २७
युष्माकंच बलज्ञोऽहं बहुशो रणमूर्धनि ।
अत श्चास्मिन् जनस्थाने मया यूयं नियोजिताः ॥ २८

"ततः प्रियं वाक्य मुपेत्य राक्षसा महार्थ मष्टावभिवाद्य रावणम् ।
विहाय लङ्कां सहिताः प्रतस्थिरे यतो जनस्थान मलक्ष्यदर्शनाः ॥ २९
ततस्तुसीतामुपलभ्य रावण स्ससंप्रहृष्टः परिगृह्य मैथिलीम् ।
प्रसज्य रामेण च वैर मुत्तमं बभूव मोहान्मुदित स्स राक्षसः ॥

इति श्रीमदारण्यकाण्डे चतुःपञ्चाशस्सर्गः ॥

## ॥ पञ्चपञ्चाशस्सर्गः ॥

सन्दिश्य राक्षसान्घोरान्रावणोऽष्टौ महाबलान् ।
आत्मानं बुद्धिवैक्लब्यात्कृतकृत्य ममन्यत ॥ १
स चिन्तयानो वैदेहीं कामबाणसमर्पितः ।
प्रविवेश गृहं रम्यं सीतां द्रष्टु मभित्वरन् ॥ २
स प्रविश्य तु तद्वेश्म रावणो राक्षसाधिपः ।
अपश्य द्राक्षसी मध्ये सीतां शोकपरायणाम् ॥ ३
अश्रुपूर्णमुखीं दीनां शोकभाराभिपीडिताम् ।
वायुवेगै रिवाऽक्रान्तां मज्जन्तीं नाव मर्णवे ॥ ४
मृगयूथपरिभ्रष्टां मृगीं श्वभिरिवावृताम् ।
अधोमुखमुखीं सीता मभ्येत्य च निशाचरः ॥ ५
तां तु शोकपरां दीना मवशां राक्षसाधिपः ।
स बलाद्दर्शयामास गृहं देवगृहोपमम् ॥ ६
हर्म्यप्रासादसंबाधं स्त्रीसहस्रनिषेवितम् ।
नानापक्षिगणै र्जुष्टं नानारत्नसमन्वितम् ॥ ७

दान्तकै स्तापनीयैश्च स्फाटिकै राजतै रपि ।
वज्रवैडूर्यचित्रैश्च स्तम्भै र्दृष्टि मनोहरैः ॥ ८
दिव्यदुन्दुभिनिर्ह्रादं तप्तकाञ्चनतोरणम् ।
सोपानं काञ्चनं चित्रमारुरोह तया सह ॥ ९
दान्तका राजताश्चैव गवाक्षाः प्रियदर्शनाः ।
हेमजालावृता श्चासं स्तत्र प्रासादपङ्क्तयः ॥ १०
सुधामणिविचित्राणि भूमिभागानि सर्वशः ।
दशग्रीव स्स्वभवने प्रादर्शयत मैथिलीम् ॥ ११
दीर्घिकाः पुष्करिण्य श्च नानावृक्षसमन्विताः ।
रावणो दर्शयामास सीतां शोकपरायणाम् ॥ १२
दर्शयित्वा तु वैदेह्याः कृत्स्नं तद्भवनोत्तमम् ।
उवाच वाक्यं पापात्मा सीतां लोभितु मिच्छया ॥ १३
"दश राक्षसकोट्यश्च द्वाविंशति रथापराः ।
तेषां प्रभुरहं सीते! सर्वेषां भीमकर्मणाम् ॥ १४
वर्जयित्वा जरा वृद्धान्बालांश्च रजनीचरान् ।
सहस्र मेक मेकस्य मम कार्यपुरस्सरम् ॥ १५
यदिदं राजतन्त्रं मे त्वयि सर्वं प्रतिष्ठितम् ।
जीवितं च विशालाक्षि! त्वं मे प्राणै र्गरीयसी ॥ १६
बहूनां स्त्रीसहस्राणां मम योऽसौ परिग्रहः ।
तासां त्व मीश्वरा सीते! मम भार्या भव प्रिये! ॥ १७
साधु किं तेऽन्यया बुद्ध्या रोचयस्व वचो मम ।
भजस्व माऽभितप्तस्य प्रसादं कर्तु मर्हसि ॥ १८

परिक्षिप्ता सहस्रेण लङ्केयं शतयोजना ।
नेयं धर्षयितुं शक्या सेंद्रै रपि सुरासुरः ॥ १९
न देवेषु न यक्षेषु न गन्धर्वेषु न पक्षिषु ।
अहं पश्यामि लोकेषु योमे वीर्यसमो भवेत् ॥ २०
राज्यभ्रष्टेन दीनेन तापसेन गतायुषा ।
किं करिष्यसि रामेण मानुषेणाल्पतेजसा ॥ २१
भजस्व सीते! मा मेव भर्ताऽहं सदृशस्तव ।
यौवनं ह्यध्रुवं भीरु! रमस्वेह मया सह ॥ २२
दर्शने माकृथा बुद्धि राघवस्य वरानने! ।
काऽस्य शक्ति रिहाऽगन्तु मपि सीते! मनोरथैः ॥ २३
नशक्यो वायु राकाशे पाशै र्बद्धुं महाजवः ।
दीप्यमानस्य वाप्यग्ने र्गृहीतुं विमलां शिखाम् ॥ २४
त्रयाणामपि लोकानां न तं पश्यामि शोभने! ।
विक्रमेण नये यस्त्वां मद्बाहुपरिपालिताम् ॥ २५
लङ्कायां सुमह द्राज्य मिदं त्व मनुपालय ।
त्वत्प्रेष्या मद्विधा श्चैव देवा श्चापि चराचराः ॥ २६
अभिषेकोदकक्लिन्ना तुष्टा च रमयस्व माम् ।
दुष्कृतं यत्पुरा कर्म वनवासेन तद्गतम् ॥ २७
यश्च ते सुकृतो धर्मस्तस्येह फल माप्नुहि ।
इह माल्यानि सर्वाणि दिव्यगन्धानि मैथिलि! ॥ २८
भूषणानि च मुख्यानि सेवस्व च मया सह ।
पुष्पकं नाम सुश्रोणि! भ्रातु र्वैश्रवणस्य मे ॥ २९

विमानं सूर्यसङ्काशं तरसा निर्जितं मया ।
विशालं रमणीयंच तद्विमान मनुत्तमम् ॥ ३०
तत्र सीते! मया सार्धं विहरस्व यथासुखम् ।
वदनं पद्मसङ्काशं विमलं चारुदर्शनम् ॥ ३१
शोकार्तन्तु वरारोहे! न भ्राजति वरानने! ।"
एवं वदति तस्मिंत्सा वस्त्रान्तेन वराङ्गना ॥ ३२
पिधायेन्दुनिभं सीता मुखमश्रूण्यवर्तयत् ।
ध्यायन्तीं तामिवास्वस्थां दीनां चिन्ताहतप्रभाम् ॥ ३३
उवाच वचनं पापो रावणो राक्षसेश्वरः ।
"अलं व्रीडेन वैदेहि! धर्मलोपकृतेन च ॥ ३४
आर्षोऽयं दैवनिष्यन्दो यस्त्वा मभिगमिष्यति ।
एतौ पादौ मया स्निग्धौ शिरोभिः परिपीडितौ ॥ ३५
प्रसादं कुरु मे क्षिप्रं वश्यो दासोऽह मस्मि ते ।
इमा श्शून्या मया वाचश्शुष्यमाणेन भाषिताः ॥ ३६
न चापि रावणः काञ्चिन्मूर्ध्ना स्त्रीं प्रणमेत ह ।"
एव मुक्त्वा दशग्रीवो मैथिलीं जनकात्मजाम् ॥ ३७
कृतान्तवश मापन्नो 'ममेय'मिति मन्यते ।

इति श्रीमदारण्यकाण्डे पञ्चपञ्चाशस्सर्गः ॥

॥ षट्पञ्चाशस्सर्गः ॥

सा तथोक्तातु वैदेही निर्भया शोककर्शिता ।
तृण मन्तरतः कृत्वा रावणं प्रत्यभाषत ॥ १

"राजा दशरथो नाम धर्मसेतुरिवाचलः ।
सत्यसन्धः परिज्ञातो यस्य पुत्रस्स राघवः ॥ २
रामो नाम स धर्मात्मा त्रिषु लोकेषु विश्रुतः ।
दीर्घबाहु र्विशालाक्षो दैवतं हि पतिर्मम ॥ ३
इक्ष्वाकूणां कुले जात स्सिंहस्कन्धो महाद्युतिः ।
लक्ष्मणेन सहभ्रात्रा यस्ते प्राणान्हारिष्यति ॥ ४
प्रत्यक्षं यद्यहं तस्य त्वया स्यां धर्षिता बलात् ।
शयित्वा त्वं हत स्संख्ये जनस्थाने यथा खरः ॥ ५
य एते राक्षसाः प्रोक्ता घोररूपा महाबलाः ।
राघवे निर्विषा स्सर्वे सुपर्णे पन्नगा यथा ॥ ६
तस्य ज्याविप्रमुक्तास्ते शराः काञ्चनभूषणाः ।
शरीरं विधमिष्यन्ति गङ्गाकूलमिवोर्मयः ॥ ७
असुरै र्वासुरै र्वा त्वं यद्यवध्योऽसि रावण ! ।
उत्पाद्य सुमहद्वैरं जीवं स्तस्य न मोक्ष्यसे ॥ ८
स ते जीवितशेषस्य राघवोऽन्तकरो बली ।
पशो र्यूपगतस्येव जीवितं तव दुर्लभम् ॥ ९
यदि पश्येत्स रामस्त्वां रोषदीप्तेन चक्षुषा ।
रक्ष ! स्त्व मद्य निर्दग्धो गच्छे स्सद्यः पराभवम् ॥ १०
यश्चन्द्रं नभसो भूमौ पातये न्नाशयेत वा ।
सागरं शोषये द्वापि न सीतां मोचये दिह ॥ ११
गतायु स्त्वं गतश्रीको गतसत्त्वो गतेन्द्रियः ।
लङ्का वैधव्यसंयुक्ता त्वत्कृतेन भविष्यति ॥ १२

न ते पाप मिदं कर्म सुखोदर्कं भविष्यति ।
याऽहं नीता विना भावं पतिपार्श्वात्त्वया वने ॥ १३
स हि दैवतसंयुक्तो मम भर्ता महाद्युतिः ।
निर्भयो वीर्य माश्रित्य शून्ये वसति दण्डके ॥ १४
स ते दर्पं बलं वीर्य मुत्सेकं च तथाविधम् ।
अपनेष्यति गात्रेभ्य श्शरवर्षेण संयुगे ॥ १५
यदा विनाशो भूतानां दृश्यते कालचोदितः ।
तदा कार्ये प्रमाद्यन्ति नराः कालवशं गताः ॥ १६
मां प्रधृष्य स ते कालः प्राप्तोऽयं राक्षसाधम! ।
आत्मनो राक्षसानां च वधायान्तःपुरस्य च ॥ १७
न शक्या यज्ञमध्यस्था वेदि स्स्रुग्भाण्डमण्डिता ।
द्विजातिमन्त्रपूता च चण्डालेनावमर्दितुम् ॥ १८
तथाऽहं धर्मनित्यस्य धर्मपत्नी पतिव्रता ।
त्वया स्प्रष्टुं न शक्याऽस्मि राक्षसाधम! पापिना ॥ १९
क्रीडन्ती राजहंसेन पद्मषण्डेषु नित्यदा ।
हंसी सा तृणषण्डस्थं कथं पश्येत मद्गुकम् ॥ २०
इदं शरीरं निस्संज्ञं बन्ध वा खादयस्व वा ।
नेदं शरीरं रक्ष्यं मे जीवितं वापि राक्षस! ॥ २१
नतु शक्ष्याम्युपक्रोशं पृथिव्यां दातु मात्मनः ।"
एव मुक्त्वा तु वैदेही क्रोधात्सुपरुषं वचः ॥ २२
रावणं मैथिली तत्र पुन र्नोवाच किंचन।
सीताया वचनं श्रुत्वा परुषं रोमहर्षणम् ॥ २३

प्रत्युवाच ततस्सीतां भयसन्दर्शनं वचः ।
"शृणु मैथिलि! मद्वाक्यं मासान्द्वादश भामिनि! ॥ २४
कालेनानेन नाभ्येषि यदि मां चारुहासिनि! ।
तत स्त्वां प्रातराशार्थं सूदाश्छेत्स्यन्ति लेशशः" ॥ २५
इत्युक्त्वा परुषं वाक्यं रावण श्शत्रुरावणः ।
राक्षसी श्च ततः क्रुद्ध इदं वचन मब्रवीत् ॥ २६
"शीघ्र मेव हि राक्षस्यो! विकृता घोरदर्शनाः ।
दर्प मस्या विनेष्यध्वं मांसशोणितभोजनाः" ॥ २७
वचना देव ता स्तस्य सुघोरा राक्षसीगणाः ।
कृतप्राञ्जलयो भूत्वा मैथिलीं पर्यवारयन् ॥ २८
स ताः प्रोवाच राजा तु रावणो घोरदर्शनः ।
"प्रचाल्य चरणोत्कर्षै र्दारय न्निव मेदिनीम् ॥ २९
अशोकवनिकामध्ये मैथिली नीयता मियम् ।
तत्रेयं रक्ष्यतां गूढं युष्माभिः परिवारिता ॥ ३०
तत्रैनां तर्जनै र्घोरैः पुन स्सान्त्वै श्च मैथिलीम् ।
आनयध्वं वशं सर्वा वन्यां गजवधू मिव" ॥ ३१
इति प्रतिसमादिष्टा राक्षस्यो रावणेन ताः ।
अशोकवनिकां जग्मु मैथिलीं प्रतिगृह्य तु ॥ ३२
सर्वकालफलै र्वृक्षै र्नानापुष्पफलै र्वृताम् ।
सर्वकालमदै श्चापि द्विजै स्समुपसेविताम् ॥ ३३
सा तु शोकपरीताङ्गी मैथिली जनकात्मजा ।
राक्षसीवशमापन्ना व्याघ्रीणां हरिणी यथा ॥ ३४

शोकेन महता ग्रस्ता मैथिली जनकात्मजा।
न शर्म लभते भीरुः पाशबद्धा मृगी यथा ॥ ३५
न विन्दते तत्र तु शर्म मैथिली विरूपनेत्राभिरतीव तर्जिता ।
पतिं स्मरन्ती दयितं च दैवतं विचेतनाऽभू द्भयशोकपीडिता ॥ ३६

इति श्रीमदारण्यकाण्डे षट्पञ्चाशस्सर्गः ॥

॥ सप्तपञ्चाशस्सर्गः ॥

राक्षसं मृगरूपेण चरन्तं कामरूपिणम् ।
निहत्य रामो मारीचं तूर्णं पथि निवर्तते ॥ १
तस्य सन्त्वरमाणस्य द्रष्टुकामस्य मैथिलीम् ।
क्रूरस्वनोऽथ गोमायु र्विननादास्य पृष्ठतः ॥ २
स तस्य स्वर माज्ञाय दारुणं रोमहर्षणम् ।
चिन्तयामास गोमायो स्स्वरेण परिशङ्कितः ॥ ३
"अशुभं बत मन्येऽहं गोमायु र्वाश्यते यथा ।
स्वस्ति स्या दपि वैदेह्या राक्षसै र्भक्षणं विना ॥ ४
मारीचेन तु विज्ञाय स्वर मालंब्य मामकम् ।
विक्रुष्टं मृगरूपेण लक्ष्मण श्शृणुयाद्यदि ॥ ५
स सौमित्रि स्स्वरं श्रुत्वा तां च हित्वा च मैथिलीम् ।
तयैव प्रहितः क्षिप्रं मत्सकाश मिहैष्यति ॥ ६
राक्षसै स्सहितै र्नूनं सीताया ईप्सितो वधः ।
काञ्चन श्च मृगो भूत्वा व्यपनीयाश्रमात्तु माम् ॥ ७

दूरं नीत्वा तु मारीचो राक्षसोऽभूच्छराहतः ।
'हा लक्ष्मण! हतोऽस्मी'ति यद्वाक्यं व्याजहार च ॥ ८
अपि स्वस्ति भवेत्ताभ्यां रहिताभ्यां महाजने ।
जनस्थाननिमित्तं हि कृतवैरोऽस्मि राक्षसैः ॥ ९
निमित्तानि च घोराणि दृश्यन्तेऽद्य बहूनि च ।"
इत्येवं चिन्तयन्राम श्श्रुत्वा गोमायुनिस्वनम् ॥ १०
आत्मन श्चापनयना न्मृगरूपेण रक्षसा ।
[निवर्तमान स्त्वरया जवेनाऽश्रम मात्मनः ॥] ११
आजगाम जनस्थानं राघवः परिशङ्कितः ।
तं दीनमनसो दीन मासेदुर्मृगपक्षिणः ॥ १२
सव्यं कृत्वा महात्मानं घोरां श्च ससृजु स्स्वरान् ।
तानि दृष्ट्वा निमित्तानि महाघोराणि राघवः ॥ १३
न्यवर्तताथ त्वरितो जवेनाश्रम मात्मनः ।
स तु सीतां वरारोहां लक्ष्मणं च महाबलम् ॥ १४
आजगाम जनस्थानं चिन्तय न्नेव राघवः ।
ततो लक्ष्मण मायान्तं ददर्श विगतप्रभम् ॥ १५
ततोऽविदूरे रामेण समीयाय स लक्ष्मणः ।
विषण्ण स्सुविषण्णेन दुःखितो दुःखभागिना ॥ १६
संजगर्हेऽथ तं भ्राता ज्येष्ठो लक्ष्मण मागतम् ।
विहाय सीतां विजने वने राक्षससेविते ॥ १७
गृहीत्वा च करं सव्यं लक्ष्मणं रघुनन्दनः ।
उवाच मधुरोदर्क मिदं परुष मार्तिमत् ॥ १८

अहो लक्ष्मण! गर्ह्यं ते कृतं यस्त्वं विहाय ताम् ।
सीता मिहाऽगत स्सौम्य! कच्चि त्स्वस्ति भवे दिह? ॥ १९
न मेऽस्ति संशयो वीर! सर्वथा जनकात्मजा ।
विनष्टा भक्षिता वापि राक्षसै र्वनचारिभिः ॥ २०
अशुभान्येव भूयिष्ठं यथा प्रादुर्भवन्ति मे ।
अपि लक्ष्मण! सीताया स्सामग्र्यं प्राप्नुयावहे ॥ २१
जीवन्त्याः पुरुषव्याघ्र! सुताया जनकस्य वै ।
यथा वै मृगसंघा श्च गोमायु श्चैव भैरवम् ॥ २२
वाश्यन्ते शकुना श्चापि प्रदीप्ता मभितो दिशम् ।
अपि स्वस्ति भवे त्तस्या राजपुत्र्या महाबल! ॥ २३
इदं हि रक्षो मृगसन्निकाशं प्रलोभ्य मां दूर मनुप्रयान्तम् ।
हतं कथंचि न्महता श्रमेण स राक्षसोऽभून्म्रियमाण एव ॥ २४
मनश्च मे दीन मिह प्रहृष्टं चक्षुश्च सव्यं कुरुते विकारम् ।
असंशयं लक्ष्मण! नास्ति सीता हृता मृता वा पथि वर्तते वा ॥ २५

इति श्रीमदारण्यकाण्डे सप्तपञ्चाशस्सर्गः ॥

## ॥ अष्टपञ्चाशस्सर्गः ॥

स दृष्ट्वा लक्ष्मणं दीनं शून्ये दशरथात्मजः ।
पर्यपृच्छत धर्मात्मा वैदेही मागतं विना ॥ १
"प्रस्थितं दण्डकारण्यं या मा मनुजगाम ह ।
क्व सा लक्ष्मण वैदेही यां हित्वा त्व मिहाऽगतः ॥ २

राज्यभ्रष्टस्य दीनस्य दण्डकान्परिधावतः ।
क्व सा दुःखसहाया मे वैदेही तनुमध्यमा? ॥ ३
यां विना नोत्सहे वीर! मुहूर्त मपि जीवितुम् ।
कसा प्राणसहाया मे सीता सुरसुतोपमा ॥ ४
पतित्व ममराणां वा पृथिव्या श्चापि लक्ष्मण! ।
तां विना तपनीयाभां नेच्छेयं जनकात्मजाम् ॥ ५
कच्चि ज्जीवति वैदेहि! प्राणैः प्रियतरा मम ।
कच्चित्प्रव्राजनं सौम्य! न मे मिथ्या भविष्यति ॥ ६
सीतानिमित्तं सौमित्रे! मृते मयि गते त्वयि ।
कच्चित्सकामा सुखिता कैकेयी सा भविष्यति ॥ ७
सपुत्रराज्यां सिद्धार्थां मृतपुत्रा तपस्विनी ।
उपस्थास्यति कौसल्या कच्चित्सौम्य! न कैकयीम् ॥ ८
यदि जीवति वैदेही गमिष्याम्याश्रमं पुनः ।
सुवृत्ता यदि वृत्ता सा प्राणां स्त्यक्ष्यामि लक्ष्मण! ॥ ९
यदि मा माश्रमगतं वैदेही नाभिभाषते ।
पुनः प्रहसिता सीता विनशिष्यामि लक्ष्मण! ॥ १०
ब्रूहि लक्ष्मण! वैदेही यदि जीवति वा नवा ।
त्वयि प्रमत्ते रक्षोभिर्भक्षिता वा तपस्विनी ॥ ११
सुकुमारी च बाला च नित्यं चादुःखदर्शिनी ।
मद्वियोगेन वैदेही व्यक्तं शोचति दुर्मनाः ॥ १२
सर्वथा रक्षसा तेन जिह्मेन सुदुरात्मना ।
वदता 'लक्ष्मणे' त्युच्चै स्तवापि जनितं भयम् ॥ १३

श्रुत स्तु शङ्के वैदेह्या स स्वर स्सदृशां मम ।
त्रस्तया प्रेषितस्त्वं च द्रष्टुं मां शीघ्र मागतः ॥ १४
सर्वथा तु कृतं कष्टं सीता मुत्सृजता वने ।
प्रतिकर्तुं नृशंसानां रक्षसां दत्त मन्तरम् ॥ १५
दुःखिताः खरघातेन राक्षसाः पिशिताशनाः ।
तै स्सीता निहता घोरै र्भविष्यति न संशयः ॥ १६
अहोऽस्मिन् व्यसने मग्न स्सर्वथा शत्रुसूदन! ।
किंन्विदानीं करिष्यामि शङ्के प्राप्तव्य मीदृशम् ॥" १७
इति सीतां वरारोहां चिन्तयन्नेव राघवः ।
आजगाम जनस्थानं त्वरया सहलक्ष्मणः ॥ १८
विगर्हमाणोऽनुज मार्तरूपं क्षुधाश्रमा च्चैव पिपासया च ।
विनिश्श्वसन् शुष्कमुखो विवर्णः प्रतिश्रयं प्राप्य समीक्ष्य शून्यम् ॥
स्व माश्रमं सम्प्रविगाह्य वीरो विहारदेशाननुसृत्य कांश्चित् ।
एतत्तदित्येवनिवासभूमौ प्रहृष्टरोमा व्यथितो बभूव ॥ २०

इति श्रीमदारण्यकाण्डे अष्टपञ्चाशस्सर्गः ॥

---

## ॥ एकोनषष्टितमस्सर्गः ॥

अथाऽश्रमा दुपावृत्त मन्तरा रघुनन्दनः ।
परिपप्रच्छ सौमित्रिं रामो दुःखार्दितं पुनः ॥ १
त मुवाच "किं मर्थं त्व मागतोऽपास्य मैथिलीम् ।
यदा सा तव विश्वासाद्वने विरहिता मया ॥ २

दृष्ट्वेवाभ्यागतं त्वां मे मैथिलीं त्यज्यलक्ष्मण! ।
शङ्कमानं महत्पापं यत्सत्यं व्यथितं मनः ॥ ३
स्फुरते नयनं सव्यं बाहु श्च हृदयं च मे ।
दृष्ट्वा लक्ष्मण! दूरे त्वां सीताविरहितं पथि" ॥ ४
एव मुक्तस्तु सौमित्रि र्लक्ष्मणश्शुभलक्षणः ।
भूयो दुःखसमाविष्टो दुःखितं राममब्रवीत् ॥ ५
"न स्वयं कामकारेण तां त्यक्त्वाऽह मिहागतः ।
प्रचोदित स्तयैवोग्रै स्त्वत्सकाश मिहागतः ॥ ६
आर्येणेव पराक्रुष्टं 'हा सीते! लक्ष्मणेति च ।
'परित्रा' हीति यद्वाक्यं मैथिल्यास्तच्छ्रुतिं गतम् ॥ ७
सा तमार्तस्वरं श्रुत्वा तव स्नेहेन मैथिली ।
'गच्छग' च्छेति मामाह रुदती भयविह्वला ॥ ८
प्रचोद्यमानेन मया 'गच्छे'ति बहुश स्तया ।
प्रत्युक्ता मैथिली वाक्य मिदं त्वत्प्रत्ययान्वितम् ॥ ९
न तत्पश्याम्यहं रक्षो यदस्य भयमावहेत् ।
निर्वृता भव नास्त्येतत्केनाप्येव मुदाहृतम् ॥ १०
विगर्हितं च नीचं च कथ मार्योऽभिधास्यति ।
त्राहीति वचनं सीते! य स्त्राये त्त्रिदशानपि ॥ ११
किं निमित्तं तु केनापि भ्रातु रालम्ब्य मे स्वरम् ।
राक्षसेनेरितं वाक्यं त्राहि त्राहीति शोभने! ॥ १२
विस्वरं व्याहृतं वाक्यं 'लक्ष्मण! त्राहि मा' मिति ।
न भवत्या व्यथा कार्या कुनारीजनसेविता ॥ १३

अलं वैक्लब्य मालम्ब्य स्वस्था भव निरुत्सुका ।
न सोऽस्ति त्रिषु लोकेषु पुमान्वै राघवं रणे ॥ १४
जातो वा जायमानो वा संयुगे यः पराजयेत् ।
न जय्यो राघवो युद्धे देवै श्शक्रपुरोगमैः ॥ १५
एव मुक्ता तु वैदेही परिमोहितचेतना ।
उवाचाश्रूणि मुञ्चन्ती दारुणं मामिदं वचः ॥ १६
'भावो मयि तवात्यर्थं पाप एव निवेशितः ।
विनष्टे भ्रातरि प्राप्तुं न च त्वं मामवाप्स्यसि ॥ १७
संकेता द्भरतेन त्वं रामं समनुगच्छसि ।
क्रोशन्तं हि यथाऽत्यर्थं नैन मभ्यवपद्यसे ॥ १८
रिपुः प्रच्छन्नचारी त्वं मदर्थ मनुगच्छसि ।
राघवस्यान्तरप्रेप्सु स्तथैनं नाभिपद्यसे ॥" १९
एव मुक्तो हि वैदेह्या संरब्धो रक्तलोचनः ।
क्रोधा त्प्रस्फुरमाणोष्ठ आश्रमा दभिनिर्गतः ॥" २०
एवं ब्रुवाणं सौमित्रिं राम स्सन्तापमोहितः ।
आब्रवी द्दुष्कृतं सौम्य! तां विना य स्त्व मागतः ॥ २१
जान न्नपि समर्थं मां रक्षसां विनिवारणे ।
अनेन क्रोधवाक्येन मैथिल्या निस्सृतो भवान् ॥ २२
नहि ते परितुष्यामि त्यक्त्वा यद्यासि मैथिलीम् ।
क्रुद्धाया परुषं श्रुत्वा स्त्रिया स्त्व मिहाऽगतः ॥ २३
सर्वथा त्वपनीतं ते सीतया यत्प्रचोदितः ।
क्रोधस्य वश मापन्नो नाकरोश्शासनं मम ॥ २४

असौ हि राक्षस श्शेते शरेणाभिहतो मया ।
मृगरूपेण येनाह माश्रमादपवाहितः २५

विकृष्य चापं परिधाय सायकं सलीलबाणेन च ताडितो मया ।
मार्गीं तनुं त्यज्य स विक्लबस्वरो बभूव केयूरधर स्सराक्षसः ॥ २६

शराहतेनैव तदार्तया गिरा स्वरं ममाऽलम्ब्य सुदूरसंश्रवम् ।
उदाहृतं तद्वचनं सुदारुणं त्व मागतो येन विहाय मैथिलीम् ॥ २७

इति श्रीमदारण्यकाण्डे एकोनषष्टितमस्सर्गः ॥

## ॥ षष्टितमस्सर्गः ॥

भृश माव्रजमानस्य तस्याधो वामलोचनम् ।
प्रास्फुरच्चास्खलद्रामो वेपथु श्चाप्यजायत ॥ १

उपालक्ष्य निमित्तानि सोऽशुभानि मुहुर्मुहुः ।
'अपि क्षेमं नु सीताया' इति वै व्याजहार च ॥ २

त्वरमाणो जगामाथ सीतादर्शनलालसः ।
शून्य मावसथं दृष्ट्वा बभूवोद्विग्नमानसः ॥ ३

उद्भ्रम न्निव वेगेन विक्षिप न्रघुनन्दनः ।
तत्र तत्रोजटस्थानमभिवीक्ष्य समन्ततः ॥ ४

ददर्श पर्णशालां च रहितां सीतया तदा ।
श्रिया विरहितां ध्वस्तां हेमन्ते पद्मिनी मिव ॥ ५

रुदन्त मिव वृक्षै श्च म्लानपुष्पमृगद्विजम् ।
श्रिया विहीनं विध्वस्तं सन्त्यक्तवनदेवतम् ॥ ६

विप्रकीर्णाजिनकुशं विप्रविद्धबृसीकटम् ।
दृष्ट्वा शून्यं निजस्थानं विललाप पुनःपुनः ॥ ७
"हृतामृता वा नष्टा वा भक्षिता वा भविष्यति ।
निलीनाप्यथ वा भीरु रथवा वनमाश्रिता । ८
गता विचेतुं पुष्पाणि फलान्यपि च वा पुनः ।
अथवा पद्मिनीं याता जलार्थं वा नदीं गता ॥" ९
यत्नान्मृगयमाणस्तु नाससाद वने प्रियाम् ।
शोकरक्तेक्षणश्शोका दुन्मत्त इव लक्ष्यते ॥ १०
वृक्षाद्वृक्षं प्रधावं स्सगिरे श्चाद्रिं नदा न्नदीम् ।
बभूव विलप न्राम श्शोकार्णवपरिप्लुतः ॥ ११
अपि काचि त्त्वया दृष्टा सा कदम्बप्रिया प्रिया ।
कदम्ब! यदि जानीषे शंस सीतां शुभाननाम् ॥" १२
स्निग्धपल्लवसङ्काशा पीताकौशेयवासिनी ।
शंसस्व यदि वा दृष्टा बिल्व! बिल्वोपमस्तनी ॥" १३
अथवार्जुन! शंस त्वं प्रियां ता मर्जुनप्रियाम् ।
जनकस्य सुता भीरु र्यदि जीवतिवा नवा ॥" १४
ककुभः ककुभोरुं तां व्यक्तं जानाति मैथिलीम् ।
यथापल्लवपुष्पाढ्यो भाति ह्येष वनस्पतिः ॥ १५
भ्रमरै रुपगीत श्च यथा द्रुमवरो ह्ययम् ।
एषव्यक्तं विजानाति तिलकस्तिलकप्रियाम् ॥ १६
'अशोक! शोकापनुद! शोकोपहतचेतसम् ।
त्वन्नामानं कुरु क्षिप्रं प्रियासन्दर्शनेन माम् ॥ १७

यदि ताल! त्वया दृष्टा पक्वतालफलस्तनी ।
कथयस्व वरारोहां कारुण्यं यदि ते मयि! ॥' १८
यदि दृष्टा त्वया सीता जम्बु! जम्बूफलोपमा ।
प्रियां यदि विजानीषे निश्शङ्कं कथयस्व मे ॥ १९
अहो! त्वं कर्णिका! राद्य सुपुष्पै श्शोभने भृशम् ।
कर्णिकारप्रिया साध्वी शंस दृष्टा प्रिया यदि ॥' २०
चूतनीपमहासालान्पनसान्कुरवान्धवान् ।
दाडिमानसनान्गत्वा दृष्ट्वा रामो महायशाः ॥ २१
मल्लिकामाधवी श्चैव चम्पकान् केतकी स्तथा ।
पृच्छन् रामो वने भ्रान्त उन्मत्तइवलक्ष्यते ॥ २२
अथवा मृगशावाक्षीं मृग! जनासि मैथिलीम् ।
मृग विप्रेक्षणी कान्ता मृगीभि स्सहिता भवेत् ॥ २३
'गज! सा गजनासोरू यदि दृष्टा त्वया भवेत् ।
तां मन्ये विदितां तुभ्य माख्याहि वरवारण!' ॥ २४
शार्दूल! यदि सा दृष्टा प्रिया चन्द्रनिभानना ।
मैथिली मम विस्रब्धं कथयस्व न ते भयम् ॥ २५
किं धावसि प्रिये! दूरं दृष्टाऽसि कमलेक्षणे! ।
वृक्षैराच्छाद्य चात्मानं किं मां न प्रतिभाषसे ॥ २६
तिष्ठ तिष्ठ वरारोहे! न तेऽस्ति करुणामयि ।
नात्यर्थं हास्यशीलाऽसि किमर्थं मामुपेक्षसे ॥ २७
पीतकौशेयकेनापि सूचिता वरवर्णिनि! ।
धावन्त्यपि मया दृष्टा तिष्ठ यद्यास्ति सौहृदम् ॥ २८

नैव सा नून मथवा हिंसिता चारुहासिनी ।
कृच्छ्रं प्राप्तं न मां नूनं यथोपेक्षितु मर्हति ॥ २९
व्यक्तं सा भक्षिता बाला राक्षसैः पिशिताशनैः ।
विभज्याङ्गानि सर्वाणि मया विरहिता प्रिया ॥ ३०
नूनं तच्छुभदन्तोष्ठं सुनासं चारुकुण्डलम् ।
पूर्णचन्द्र मिव ग्रस्तं मुखं निष्प्रभतां गतम् ॥ ३१
सा हि चम्पकवर्णाभा ग्रीवा ग्रैवेयशोभिता ।
कोमला विलपन्त्या स्तु कान्ताया भक्षिता शुभा ॥ ३२
नूनं विक्षिप्यमाणौ तौ बाहू पल्लवकोमलौ ।
भक्षितौ वेपमानाग्रौ सहस्ताभरणाङ्गदौ ॥ ३३
मया विरहिता बाला रक्षसां भक्षणाय वै ।
सार्थेनेव परित्यक्ता भक्षिता बहुबान्धवा ॥ ३४
'हालक्ष्मण! महाबाहो! पश्यसि त्वं प्रियां क्वचित् ।'
'हा प्रिये! क्व गता भद्रे! हा सीते!' ति पुनःपुनः ॥ ३५
इत्येवं विलपन् रामःपरिधावन्वना द्वनम् ।
क्वचि दुद्भ्रमते वेगा त्क्वचि द्विभ्रमते बलात् ॥ ३६
क्वचि न्मत्त इवाभाति कान्तान्वेषणतत्परः ।
स वनानि नदी श्शैला न्गिरिप्रस्रवणानि च ॥ ३७
काननानि च वेगेन भ्रमत्यपरिसंस्थितः ।
तथा स गत्वा विपुलं महद्वनं परीत्य सर्वं त्वथ मैथिलीं प्रति ।
अनिष्ठिताशः स चकार मार्गणे पुनः प्रियायाः परमं परिश्रमम् ॥

इति श्रीमदारण्यकाण्डे षष्ठितमस्सर्गः ॥

## ॥ एकषष्टितमस्सर्गः ॥

दृष्ट्वाऽऽश्रमपदं शून्यं रामो दशरथात्मजः ।
रहितां पर्णशालां च विध्वस्तान्यासनानि च ॥ १
अदृष्ट्वा तत्र वैदेहीं सन्निरीक्ष्य च सर्वशः ।
उवाच रामः प्राक्रुश्य प्रगृह्य रुचिरौ भुजौ ॥ २
"क्वनु लक्ष्मण! वैदेही कं वा देशमितोगता ।
केनाहृता वा सौमित्रे! भक्षिता केन वा प्रिया ॥" ३
'वृक्षेणाच्छाद्य यदि मां सीते! हसितु मिच्छसि ।
अलं ते हसितेनाद्य मां भजस्व सुदुःखितम् ॥ ४
यैस्सह क्रीडसे सीते! विश्वस्तै र्मृगपोतकैः ।
एते हीना स्त्वया सौम्ये! ध्यायन्त्यास्राविलेक्षणाः ॥' ५
"सीतया रहितोऽहं वै नहि जीवामि लक्ष्मण! ।
मृतं शोकेन महता सीताहरणजेन माम् ॥ ६
परलोके महाराजो नूनं द्रक्ष्यति मे पिता ।
कथं प्रतिज्ञां संश्रुत्य मया त्वमभियोजितः ॥ ७
अपूरयित्वा तं कालं मत्सकाश मिहागतः ।
कामवृत्त मनार्यं मां मृषावादिन मेव च ॥ ८
'धिक्त्वा'मिति परे लोके व्यक्तं वक्ष्यति मे पिता ।
विवशं शोकसंतप्तं दीनं भग्नमनोरथम् ॥" ९
"मामिहोत्सृज्य करुणं कीर्तिर्नरमिवानृजुम् ।
क्व गच्छसि वरारोहे! मां नोत्सृज सुमध्यमे! ॥ १०

त्वया विरहितश्चाहं मोक्ष्ये जीवितमात्मनः ।”
इतीव विलपन्रामस्सीतादर्शनलालसः ॥ ११
न ददर्श सुदुःखार्तो राघवो जनकात्मजाम् ।
अनासादयमानं तं सीतां दशरथात्मजम् ॥ १२
पङ्कमासाद्य विपुलं सीदन्त मिव कुञ्जरम् ।
लक्ष्मणो राममत्यर्थ मुवाच हितकामया ॥ १३
“मा विषादं महाबाहो! कुरु यत्नं मया सह ।
इदं च हि वनं शूर! बहुकन्दरशोभितम् ॥ १४
प्रियकाननसंचारा वनोन्मत्ता च मैथिली ।
सा वनं वा प्रविष्टा स्यान्नलिनीं वा सुपुष्पिताम् ॥ १५
सरितं वाऽपि संप्राप्ता मीनवञ्जुळसेविताम् ।
स्नातुकामा निलीना स्या द्धासकामा वने क्वचित् ॥ १६
वित्रासयितु कामावा लीना स्यात्कानने क्वचित् ।
जिज्ञासमाना वैदेही त्वां मां च पुरुषर्षभः ॥ १७
तस्या ह्यन्वेषणे श्रीमन्! क्षिप्रमेव यतावहे ।
वनं सर्वं विचिनुवो यत्र सा जनकात्मजा ॥ १८
मन्यसे यदि काकुत्स्थ! मास्मशोके मनः कृथाः ।”
एव मुक्तस्तु सौहार्दा लक्ष्मणेन समाहितः ॥ १९
सह सौमित्रिणा रामो विचेतु मुपचक्रमे ।
तौ वनानि गिरीं श्चैव सरितश्च सरांसि च ॥ २०
निखिलेन विचिन्वानौ सीतां दशरथात्मजौ ।
तस्य शैलस्य सानूनि गुहाश्च शिखराणि च ॥ २१

निखिलेन विचिन्वानौ नैव तामभिजग्मतुः ।
विचित्य सर्वतश्शैलं रामो लक्ष्मण मब्रवीत् ॥ २२
'नेह पश्यामि सौमित्रे! वैदेहीं पर्वते' शुभाम् ।
ततो दुःखाभिसंतप्तो लक्ष्मणो वाक्यमब्रवीत् ॥ २३
विचरन्दण्डकारण्यं भ्रातरं दीप्ततेजसम् ।
"प्राप्स्यसि त्वं महाप्राज्ञ! मैथिलीं जनकात्मजाम् ॥ २४
यथा विष्णु र्महाबाहु र्बलिं बध्वा मही मिमाम् ।
एव मुक्तस्तु सैहार्दाल्लक्ष्मणेन स राघवः ॥ २५
उवाच दीनया वाचा दुःखाभिहतचेतनः ।
"वनं सर्वं सुविचितं पद्मिन्यः फुल्लपङ्कजाः ॥ २६
गिरि श्चायं महाप्राज्ञ! बहुकन्दरनिर्झरः ।
नहि पश्यामि वैदेहीं प्राणेभ्योऽपि गरीयसीम् ॥ २७
"एवं स विलपन् रामस्सीताहरणकर्शितः ।
दीनश्शोकसमाविष्टो मुहूर्तं विह्वलोऽभवत् ॥ २८
संतप्तो ह्यवसन्नाङ्गो गतबुद्धिर्विचेतनः ।
निषसादातुरो दीनो निश्श्वस्याशीतमायतम् ॥ २९
बहुळं स तु निश्श्वस्य रामो राजीवलोचनः ।
'हा प्रिये'ति विचुक्रोश बहुशो बाष्पगद्गदः ॥ ३०
तं तत स्सान्त्वयामास लक्ष्मणः प्रियबान्धवः ।
बहुप्रकारं धर्मज्ञः प्रश्रितं प्रश्रिताञ्जलिः ॥ ३१
अनादृत्य तु तद्वाक्यं लक्ष्मणोष्ठपुटाच्च्युतम् ।
अपश्यं स्तां प्रियां सीतां प्राक्रोशत्स पुनःपुनः ॥ ३२

इति श्रीमदारण्यकाण्डे एकषष्टितमस्सर्गः ॥

## ॥ द्विषष्टितमस्सर्गः ॥

सीतामपश्यन्धर्मात्मा कामोपहतचेतनः ।
विललाप महाबाहू रामः कमललोचनः ॥ १
पश्यन्निव च तां सीता मपश्यन्मदनार्दितः ।
उवाच राघवो वाक्यं विलापाश्रयदुर्वचम् ॥ २
त्व मशोकस्य शाखाभिः पुष्प प्रियतया प्रिये! ।
आवृणोषि शरीरं ते मम शोकविवर्धनी ॥ ३
कदळीकाण्डसदृशौ कदळ्या संवृता वुभौ ।
उरू पश्यामि ते देवि! नासि शक्ता निगूहितुम् ॥ ४
कर्णिकारवनं भद्रे! हसन्ती देवि! सेवसे ।
अलं ते परिहासेन मम बाधावहेन वै ॥ ५
परिहासेन किं सीते! परिश्रान्तस्य मे प्रिये! ।
अयं स परिहासोऽपि साधु देवि! न रोचते ॥ ६
विशेषेणाश्रमस्थाने हासोऽयं न प्रशस्यते ।
अवगच्छामि ते शीलं परिहासप्रियं प्रिये! ॥ ७
आगच्छ त्वं विशालाक्षि! शून्योऽय मुटजस्तव ।"
"सुव्यक्तं राक्षसैस्सीता भक्षिता वा हृताऽपि वा ॥ ८
नहि सा विलपन्तं मा मुपसंप्रैति लक्ष्मण! ।
एतानि मृगयूथानि साश्रुनेत्राणि लक्ष्मण! ॥ ९
शंसन्तीव हि वैदेहीं भक्षितां रजनीचरैः ।"
"हा ममार्ये! क यातासि हा साध्वि! वरवर्णिनि! ॥ १०

हासकामा त्वया देवी कैकेयी सा भविष्यति ।”
सीतया सह निर्यातो विना सीता मुपागतः ॥ ११
कथं नाम प्रवेक्ष्यामि शून्य मन्तःपुरं पुनः ।
‘निर्वीर्य’ इति लोको मां ‘निर्दय’श्चेति वक्ष्यति ॥ १२
कातरत्वं प्रकाशं हि सीतापनयनेन मे ।
निवृत्तवनवासश्च जनकं मिथिलाधिपम् ॥ १३
कुशलं परिपृच्छन्तं कथं शक्ष्ये निरीक्षितुम् ।
विदेहराजो नूनं मां दृष्ट्वा विरहितं तया ॥ १४
सुतास्नेहेन संतप्तो मोहस्य वशमेष्यति ।
अथवा न गमिष्यामि पुरीं भरतपालिताम् ॥ १५
स्वर्गोऽपि सीतया हीनश्शून्य एव मतो मम ।”
मामिहोत्सृज्य हि वने गच्छायोध्यां पुरीं शुभाम् ॥ १६
न त्वहं तां विना सीतां जीवेयं हि कथंचन ।
गाढमाश्लिष्य भरतो वाच्यो मद्वचनात्त्वया ॥ १७
‘अनुज्ञातोऽसि रामेण पाल’येति वसुन्धराम् ।
अम्बाच मम कैकेयी सुमित्राच त्वया विभो! ॥ १८
कौसल्या च यथान्याय मभिवाद्या ममाऽज्ञया ।
रक्षणीया प्रयत्नेन भवता सूक्तकारिणा ॥ १९
सीताया श्च विनाशोऽयं मम चामित्रकर्शन! ।
विस्तरेण जनन्या मे विनिवेद्य स्त्वया भवेत् ॥” २०
इति विलपति राघवे सुदीने वन मुपगम्य तया विना सुकेश्या ।
भयविकलमुखस्तु लक्ष्मणोऽपि व्यथितमना भृश मातुरो बभूव ॥

इति श्रीमदारण्यकाण्डे द्विषष्टितमस्सर्गः ॥

## ॥ त्रिषष्टितमस्सर्गः ॥

स राजपुत्रः प्रियया विहीनः कामेन शोकेन च पीड्यमानः ।
विषादयन्भ्रातर मार्तरूपो भूयो विषादं प्रविवेश तीव्रम् ॥ १
स लक्ष्मणं शोकवशाभिपन्नं शोके निमग्नो विपुले तु रामः ।
उवाच वाक्यं व्यसनानुरूप मुष्णं विनिश्श्वस्य रुदंत्सशोकम् ॥ २
"न मद्विधो दुष्कृतकर्मकारी मन्ये द्वितीयोऽस्ति वसुन्धरायाम् ।
शोकेन शोको हि परंपराया मा मेति भिन्दन्हृदयं मनश्च ॥ ३
पूर्वं मया नून मभीस्पितानि पापानि कर्माण्यसकृत्कृतानि ।
तत्रायमद्यापतितो विपाको दुःखेन दुःखं यदहं विशामि ॥ ४
राज्यप्रणाश स्स्वजनै र्वियोगः पितु र्विनाशो जननीवियोगः ।
सर्वाणि मे लक्ष्मण! शोकवेग मापूरयन्तिप्रविचिन्तितानि ॥ ५
सर्वं तु दुःखं मम लक्ष्मणेदं शान्तं शरीरे वन मेत्य शून्यम् ।
सीतावियोगात्पुनरप्युदीर्णं काष्ठैरिवाग्नि स्सहसा प्रदीप्तः ॥ ६
सा नून मार्या मम राक्षसेन बला द्धृता खं समुपेत्य भीरुः ।
अपस्वरं सस्वरविप्रलापा भयेन विक्रन्दितवत्यभीक्ष्णम् ॥ ७
तौ लोहितस्य प्रियदर्शनस्य सदोचितावुत्तमचन्दनस्य ।
वृत्तौ स्तनौ शोणितपङ्कदिग्धौ नूनं प्रियाया मम नाभिभातः ॥ ८
तत् श्लक्ष्णसुव्यक्तमृदुप्रलापं तस्या मुखं कुञ्चितकेशभारम् ।
रक्षोवशं नून मुपागताया न भ्राजते राहुमुखे यथेन्दुः ॥ ९
तां हारपाशस्य सदोचिताया ग्रीवां प्रियाया मम सुव्रतायाः ।
रक्षांसि नूनं परिपीतवन्ति विभिद्य शून्ये रुधिराशनानि ॥ १०

मया विहीना विजने वने या रक्षोभि राहृत्य विकृष्यमाणा ।
नूनं विनादं कुररीव दीना सा मुक्तवत्यायतकान्तनेत्रा ॥ ११
अस्मि न्मया सार्धमुदारशीला शिलातले पूर्व मुपोपविष्टा ।
कान्तस्मिता लक्ष्मण! जातहासा त्वा माह सीता बहुवाक्यजातम्॥
गोदावरीयं सरितांवरिष्ठा प्रिया प्रियाया मम नित्यकालम् ।
अप्यत्र गच्छे दिति चिन्तयामि नैकाकिनी याति हि सा कदाचित्॥
पद्मानना पद्मविशालनेत्रा पद्मानि वाऽनेतु मभिप्रयाता ।
तदप्ययुक्तं न हि सा कदाचि न्मया विना गच्छति पङ्कजानि ॥
कामं त्विदं पुष्पितवृक्षषण्डं नानाविधैः पक्षिगणै रुपेतम् ।
वनं प्रयाता नु तद प्ययुक्त मेकाकिनी साऽतिबिभेति भीरुः ॥"
आदित्य! भो लोककृता कृतज्ञ! लोकस्य सत्यानृतकर्मसाक्षिन्! ।
मम प्रिया सा क्व गता हृतावा शंसस्व मे शोकवशस्य सत्यम् ॥"
"लोकेषु सर्वेषु च नास्ति किंचि द्यत्ते न नित्यं विदितं भवे त्तत् ।
शंसस्व वायो! कुलशालिनीं तां हृता मृता वा पथि वर्तते वा ॥"
इतीव तं शोकविधेयदेहं रामं विसंज्ञं विलपन्त मेवम् ।
उवाच सौमित्रि रदीनसत्त्वो न्याये स्थितं कालयुतं च वाक्यम् ॥
शोकं विमुञ्चार्य! धृतिं भजस्व सोत्साहताचास्तु विमार्गणेऽस्याः ।
उत्साहवन्तो हि नरा न लोके सीदन्ति कर्मस्वतिदुष्करेषु ॥" १९
इतीव सौमित्रि मुदग्रपौरुषं ब्रुवन्त मार्तो रघुवंशवर्धनः ।
न चिन्तयामास धृतिं विमुक्तवान्पुन श्च दुःखं महदभ्युपागमत् ॥

इति श्रीमदारण्यकाण्डे त्रिषष्टितमस्सर्गः ॥

## ॥ चतुष्षष्टितमस्सर्गः ॥

स दीनो दीनया वाचा लक्ष्मणं वाक्यमब्रवीत् ।
"शीघ्रं लक्ष्मण! जानीहि गत्वा गोदावरीं नदीम् ॥ १
अपि गोदावरीं सीता पद्मान्यानयितुं गता ।"
एव मुक्तस्तु रामेण लक्ष्मणः परवीरहा ॥ २
नदीं गोदावरीं रम्यां जगाम लघुविक्रमः ।
तां लक्ष्मण स्तीर्थवतीं विचित्वा राम मब्रवीत् ॥ ३
"नैनां पश्यामि तीर्थेषु क्रोशतो न शृणोति मे ।
कं नु सा देश मापन्ना वैदेही क्लेशनाशिनी ॥ ४
न ह्यहं वेद तं देशं यत्र सा जनकात्मजा ।"
लक्ष्मणस्य वचश्श्रुत्वा दीन स्सन्तापमोहितः ॥ ५
राम स्समभिचक्राम स्वयं गोदावरीं नदीम् ।
सता मुपस्थितो रामः 'क सी' तेत्येव मब्रवीत् ॥ ६
भूतानि 'राक्षसेन्द्रेण वधार्हेण हृता' मिति ।
न तां शशंसू रामाय तथा गोदावरी नदी ॥ ७
ततः प्रचोदिता भूतै 'श्शंसास्मत्ता प्रिया' मिति ।
न तु साऽभ्यवदत्सीतां पृष्टा रामेण शोचता ॥ ८
रावणस्य च तद्रूपं कर्माणि च दुरात्मनः ।
ध्यात्वा भयात्तु वैदेहीं सा नदी न शशंस ताम् ॥ ९
निराशस्तु तया नद्या सीताया दर्शने कृतः ।
उवाच रामः सौमित्रिं सीताऽदर्शनकर्शितः ॥ १०

"एषा गोदावरी सौम्य! किंचि न्न प्रतिभाषते ।
किन्नु लक्ष्मण! वक्ष्यामि समेत्य जनकं वचः ॥ ११
मातरं चैव वैदेह्या विना ता मह मप्रियम् ।
या मे राज्यविहीनस्य वने वन्येन जीवतः ॥ १२
सर्वं व्यपनयेच्छोकं वैदेही क्वनु सा गता ।
ज्ञातिपक्षविहीनस्य राजपुत्री मपश्यतः ॥ १३
मन्ये दीर्घा भविष्यन्ति रात्रयो मम जाग्रतः ।
मन्दाकिनीं जनस्थान मिमं प्रस्रवणं गिरिम् ॥ १४
सर्वाण्यनुचरिष्यामि यदि सीता हि दृश्यते ।
एतेमृगा महावीर्या मा मीक्षन्ते मुहुर्मुहुः ॥ १५
वक्तुकामा इव हि मे इङ्गिता न्युपलक्षये ।"
तां स्तु दृष्ट्वा नरव्याघ्रो राघवः प्रत्युवाच ह ॥ १६
'क्व सी' तेति निरीक्ष न्वै बाष्पसंरुद्धया दृशा ।
एव मुक्ता नरेंद्रेण ते मृगा स्सहसोत्थिताः ॥ १७
दक्षिणाभिमुखा स्सर्वे दर्शयन्तो नभस्स्थलम् ।
मैथिली ह्रियमाणा सा दिशं यामन्वपद्यत ॥ १८
तेन मार्गेण धावन्तो निरीक्षन्ते नराधिपम् ।
येन मार्गं च भूमिं च निरीक्षन्तेस्मते मृगाः ॥ १९
पुन श्च मार्गमिच्छन्तिलक्ष्मणेनोपलक्षिताः ।
तेषां वचनसर्वस्वं लक्षयामास चेङ्गितम् ॥ २०
उवाच लक्ष्मणो ज्येष्ठं धीमा न्भ्रातर मार्तवत् ।
"क्वसीतेति त्वया पृष्टा यथेमे सहसोत्थिताः ॥ २१

दर्शयन्ति क्षितिंचैव दक्षिणां च दिशंमृगाः ।
साधु गच्छावहे देव! दिश मेतां हि नैर्ऋतीम् ॥ २२
यदि स्या दागमःकश्चि दार्या वा साऽथ लक्ष्यते।"
'बाढ' मित्येव काकुत्स्थः प्रस्थितो दक्षिणां दिशम् ॥ २३
लक्ष्मणानुगत श्श्रीमा न्वीक्षमाणो वसुन्धराम् ।
एवं संभाषमाणौ तावन्योन्यं भ्रातरा वुभौ ॥ २४
वसुन्धरायां पतितं पुष्पमार्गं मपश्यताम् ।
तां पुष्पवृष्टिं पतितां दृष्ट्वा रामो महीतले ॥ २५
उवाच लक्ष्मणं वीरो दुःखितो दुःखितं वचः ।
अभिजानामि पुष्पाणि तानीमानीह लक्ष्मण ॥ २६
पिनद्धानि हि वैदेह्या मया दत्तानि कानने ।
मन्ये सूर्य श्च वायु श्च मेदिनी च यशस्विनी ॥ २७
अभिरक्षन्ति पुष्पाणि प्रकुर्वन्तो ममाप्रियम् ।"
एव मुक्त्वा महाबाहुं लक्ष्मणं पुरुषर्षभः ॥ २८
उवाचरामो धर्मात्मा गिरिं प्रस्रवणाकुलम् ।
"कच्चित्क्षितिभृतां नाथ! दृष्टा सर्वाङ्गसुन्दरी! ॥ २९
रामा रम्ये वनोद्देशे मया विरहिता त्वया ।"
क्रुद्धोऽब्रवीद्गिरिं तत्र सिंहः क्षुद्रमृगं यथा ॥ ३०
"तां हेमवर्णां हेमाभां सीतां दर्शय पर्वत! ।
यावत्सानूनि सर्वाणि न ते विध्वंसयाम्यहम् ॥" ३१
एव मुक्तस्तु रामेण पर्वतो मैथिलीं प्रति ।
शंसन्निव तत स्सीतां नादर्शयत राघवे ॥ ३२

ततो दाशरथी राम उवाच च शिलोच्चयम् ।
मम बाणाग्निनिर्दग्धो भस्मीभूतो भविष्यसि ॥ ३३
असेव्यस्सन्ततं चैव निस्तृणद्रुमपल्लवः ।
इमां वा सरितं चाद्य शोषयिष्यामि लक्ष्मण ! ॥ ३४
यदिनाख्याति मे सीता भार्यां चन्द्रनिभाननाम् । ”
एवं स रुषितो रामो दिधक्षन्निव चक्षुषा ॥ ३५
ददर्श भूमौ निष्क्रान्तं राक्षसस्य पदं महत् ।
त्रस्ताया रामकाङ्क्षिण्याः प्रधावन्त्या इतस्ततः ॥ ३६
राक्षसेनानुवृत्ताया मैथिल्याश्चपदान्यथ ।
स समीक्ष्य परिक्रान्तं सीताया राक्षसस्य च ॥ ३७
भग्नं धनुश्च तूणी च विकीर्णं बहुधा रथम् ।
संभ्रान्तहृदयो राम श्शशंस भ्रातरं प्रियम् ॥ ३८
“ पश्य लक्ष्मण ! वैदेह्या श्शीर्णाः कनकबिन्दवः ।
भूषणनांहि सौमित्रे ! माल्यानि विविधानि च ॥ ३९
तप्तबिन्दुनिकाशै श्च चित्रैः क्षतजबिन्दुभिः ।
आवृतं पश्य सौमित्रे ! सर्वतो धरणीतलम् ॥ ४०
मन्ये लक्ष्मण ! वैदेही राक्षसैः कामरूपिणः ।
भित्वा भित्वा विभक्ता वा भक्षिता वा भविष्यति ॥ ४१
तस्या निमित्तं वैदेह्या द्वयोर्विवदमानयोः ।
बभूव युद्धं सौमित्रे ! घोरं राक्षसयो रिह ॥ ४२
मुक्तामणिमयं चेदं तपनीयविभूषितम् ।
धरण्यां पतितं सौम्य ! कस्य भग्नं मह द्धनुः ॥ ४३

[राक्षसाना मिदं वत्स! सुराणा मथवापिवा ।]
तरुणादित्यसङ्काशं वैडूर्यगुळिकाचितम् ॥ ४४
विशीर्णं पतितं भूमौ कवचं तस्य काञ्चनम् ।
छत्रं शतशलाकंच दिव्यमाल्योपशोभितम् ॥ ४५
भग्नदण्ड मिदं कस्य भूमौ सम्य ङ्निपातितम् ।
काञ्चनोरश्छदा श्चेमे पिशाचवदनाः खराः ॥ ४६
भीमरूपा महाकायाःकस्य वानिहता रणे ।
दीप्तपावकसंकाशो द्युतिमां त्समरध्वजः ॥ ४७
अपविद्ध श्च भग्नश्च कस्य साङ्ग्रामिको रथः ।
रथाक्षमात्रा विशिखा स्तपनीयविभूषणाः ॥ ४८
कस्येमेऽभिहता बाणाः प्रकीर्णा घोरकर्मणः ।
[राक्षसानामिमौ वत्स! सुराणा मथवाद्भुतौ ॥] ४९
शरावरौ शरैः पूर्णौ विध्वस्तौ पश्यलक्ष्मण! ।
प्रतोदाभीशुहस्तोवै कस्यायं सारथिर्हतः ॥ ५०
[सारथिं हतवान्कोवा महाबलपराक्रमः ।]
कस्येमौ पुरुषव्याघ्र! शयाते निहतौ युधि ॥ ५१
चामरग्राहिणौ सौम्य! सोष्णीषमणिकुण्डलौ ।
पदवी पुरुषस्यैषा व्यक्तं कस्यापि रक्षसः ॥ ५२
वैरं शतगुणं पश्य ममेदं जीवितान्तकम् ।
सुघोरहृदयै स्सौम्य! राक्षसैः कामरूपिभिः ॥ ५३
हृता मृता वा सीता सा भक्षिता वा तपस्विनी ।
नधर्म स्त्रायते सीतां ह्रियमाणां महावने ॥ ५४

भक्षितायां हि वैदेह्यां हृताया मपि लक्ष्मण! ।
केहिलोके प्रियं कर्तुं शक्ता स्सौम्य! ममेश्वराः ॥ ५५
कर्तार मपि लोकानां शूरं करुणवेदिनम् ।
अज्ञाना दवमन्येरंत्सर्वभूतानि लक्ष्मण! ॥ ५६
मृदुं लोकहिते युक्तं दान्तं करुणवेदिनम् ।
'निर्वीर्य' इति मन्यन्ते नूनं मां त्रिदशेश्वराः ॥ ५७
मां प्राप्य हि गुणो दोष स्संवृत्तः पश्य लक्ष्मण! ।
अद्यैव सर्वभूतानां रक्षसा मभवाय च ॥ ५८
संहृत्यैव शशिज्योत्स्नां महांत्सूर्य इवोदितः ।
संहृत्यैव गुणां त्सर्वा न्मम तेजः प्रकाशते ॥ ५९
नैव यक्षा न गन्धर्वा न पिशाचा न राक्षसाः ।
किन्नरा वा मनुष्या वा सुखं प्राप्स्यन्ति लक्ष्मण! ॥ ६०
ममास्त्रबाण संपूर्ण माकाशं पश्य लक्ष्मण! ।
निस्संपातं करिष्यामि ह्यद्य त्रैलोक्यचारिणाम् ॥ ६१
सन्निरुद्ध ग्रहगण मावारितनिशाकरम् ।
विप्रणष्टानलमरुद्भास्कर द्युतिसंवृतम् ॥ ६२
विनिर्मथितशैलाग्रं शुष्यमाण जलाशयम् ।
ध्वस्तद्रुमलतागुल्मं विप्रणाशितसागरम् ॥ ६३
त्रैलोक्यं तु करिष्यामि संयुक्तं कालकर्मणा ।
न तां कुशलिनीं सीतां प्रदास्यन्ति ममेश्वराः ॥ ६४
अस्मिन्मुहूर्ते सौमित्रे! मम द्रक्ष्यन्ति विक्रमम् ।
नाकाश मुत्पतिष्यन्ति सर्वभूतानि लक्ष्मण! ॥ ६५

मम चापगुणोन्मुक्तै र्बाणजालै र्निरन्तरम् ।
अर्दितं मम नाराचै र्ध्वस्तभ्रान्त मृगद्विजम् ॥ ६६
समाकुल ममर्यादं जगत्पश्याद्यलक्ष्मण ! ।
आकर्णपूर्णै रिषुभि र्जीवलोकं दुरावरैः ॥ ६७
करिष्ये मैथिली हेतो रपिशाच मराक्षसम् ।
मम रोषप्रयुक्तानां सायकानां बलं सुराः ॥ ६८
द्रक्ष्यन्त्यद्य विमुक्ताना मतिदूरातिगामिनाम् ।
नैव देवा न दैतेया न पिशाचानराक्षसाः ॥ ६९
भविष्यन्ति मम क्रोधा त्त्रैलोक्ये विप्रणाशिते ।
देवदानवयक्षाणां लोका ये रक्षसा मपि ॥ ७०
बहुधा न भविष्यन्ति बाणौघै श्शकलीकृताः ।
निर्मर्यादानिमाँल्लोका न्करिष्याम्यद्य सायकैः ॥ ७१
हृतां मृतां वा सौमित्रे ! न दास्यन्ति ममेश्वराः ।
तथारूपां हि वैदेहीं न दास्यन्ति यदिप्रियाम् ॥ ७२
नाशयामि जगत्सर्वं त्रैलोक्यं सचराचरम् ।"
याव दर्शन मस्या वै ताव द्धक्ष्यामि सायकैः ॥ ७३
इत्युक्त्वा रोषताम्राक्षः [स्फुरमाणोष्ठसम्पुटः ।
वल्कलाजिन माबद्ध्य जटाभार मबन्धयत् ॥ ७४
त्रिपुरं जघ्नुषः पूर्वं रुद्रस्येव बभौ तनुः ।
लक्ष्मणा दपि चादाय] रामो निष्पीड्य कार्मुकम् ॥ ७५
शर मादाय संदीप्तं घोर माशीविषोपमम् ।
सन्धाय धनुषि श्रीमा न्रामः परपुरञ्जयः ॥ ७६

युगान्ताग्निरिव क्रुद्ध इदं वचन मब्रवीत् ।
"यथा जरा यथा मृत्यु र्यथा कालो यथा विधिः ॥ ७७
नित्यं न प्रतिहन्यन्ते सर्वभूतेषु लक्ष्मण ! ।
तथाऽहं क्रोधसंयुक्तो न निवार्योऽस्मि सर्वथा ॥ ७८
पुरेव मे चारुदतीमनिन्दितां दिशन्ति सीतां यदि नाद्य मैथिलीम् ।
स देवगन्धर्वमनुष्यपन्नगं जगत्सशैलं परिवर्तयाम्यहम् ॥" ७९

इति श्रीमदारण्यकाण्डे चतुष्षष्टितमस्सर्गः ॥

## ॥ पञ्चषष्टितमस्सर्गः ॥

तप्यमानं तथा रामं सीताहरणकर्शितम् ।
लोकानामभवे युक्तं सांवर्तिक मिवानलम् ॥ १
वीक्षमाणं धनुस्सज्यं निःश्वसन्तं पुनःपुनः ।
दग्धुकामं जगत्सर्वं युगान्ते तु यथाहरम् ॥ २
अदृष्टपूर्वं संक्रुद्धं दृष्ट्वा रामं तु लक्ष्मणः ।
अब्रवीत्प्राञ्जलिर्वाक्यं मुखेन परिशुष्यता ॥ ३
"पुरा भूत्वा मृदुर्दान्त स्सर्वभूतहिते रतः ।
न क्रोधवशमापन्नः प्रकृतिं हातु मर्हसि ॥ ४
चन्द्रे लक्ष्मीः प्रभा सूर्ये गतिर्वायौ भुवि क्षमा ।
एतच्च नियतं सर्वं त्वयि चानुत्तमं यशः ॥ ५
एकस्य नापराधेन लोकान् हन्तुं त्व मर्हसि ।
न तु जानामि कस्यायं भग्नस्साङ्ग्रामिको रथः ॥ ६

केन वा कस्य वा हेतोस्सायुध स्सपरिच्छदः ।
खुरनेमिक्षतश्चायं सिक्तो रुधिरबिन्दुभिः ॥ ७
देशो निर्वृत्तसङ्ग्राम स्सुघोरः पार्थिवात्मज! ।
एकस्य तु विमर्दोऽयं न द्वयोर्वदतां वर! ॥ ८
नहि वृत्तं हि पश्यामि बलस्य महतः पदम् ।
नैकस्य तु कृते लोकान्विनाशयितु मर्हसि ॥ ९
युक्तदण्डा हि मृदवः प्रशान्ता वसुधाधिपाः ।
सदा त्वं सर्वभूतानां शरण्यः परमागतिः ॥ १०
कोनुदारप्रणाशं ते साधु मन्येत राघव! ।
सरित स्सागराश्शैला देवगन्धर्वदानवाः ॥ ११
नालं ते विप्रियं कर्तुं दीक्षितस्येव साधवः ।
येन राजन्! हृता सीता तमन्वेषितु मर्हसि ॥ १२
मद्द्वितीयो धनुष्पाणि स्सहायैः परमर्षिभिः ।
समुद्रं च विचेष्यामः पर्वतां श्च वनानि च ॥ १३
गुहाश्च विविधा घोराः नदीः पद्मवनानि च ।
देवगन्धर्वलोकां श्च विचेष्याम स्समाहिताः ॥ १४
यावन्नाधिगमिष्याम स्तव भार्यापहारिणम् ।
नचेत्साम्ना प्रदास्यन्ति पत्नीं ते त्रिदशेश्वराः ॥ १५
कोसलेन्द्र! ततः पश्चात्प्राप्तकालं करिष्यसि ।
शीलेन साम्ना विनयेन सीतां नयेन न प्राप्स्यसि चेन्नरेन्द्र! ।
तत स्समुत्सादय हेमपुङ्खै र्महेन्द्रवज्रप्रतिमै श्शरौघैः ॥" १६

इति श्रीमदारण्यकाण्डे पञ्चषष्टितमस्सर्गः ॥

## ॥ षट्षष्टितमस्सर्गः ॥

तं तथा शोकसंतप्तं विलपन्त मनाथवत् ।
मोहेन महताऽऽविष्टं परिद्यून मचेतनम् ॥ १
तत स्सौमित्रि राश्वास्य मुहूर्तादिव लक्ष्मणः ।
रामं संबोधयामास चरणौ चाभिपीडयन् ॥ २
महता तपसा राम! महता चापि कर्मणा ।
राज्ञा दशरथेनासि लब्धोऽमृतमिवामरैः ॥ ३
तव चैव गुणैर्बद्धस्त्वद्वियोगान्महीपतिः ।
राजा देवत्वमापन्नो भरतस्य यथाश्रुतम् ॥ ४
यदि दुःखमिदं प्राप्तं काकुत्स्थ! न सहिष्यसे ।
प्राकृतश्चाल्पसत्त्व श्च इतरः कस्सहिष्यति ॥ ५
दुःखितो हि भवान्लोकां स्तेजसा यदि धक्ष्यते ।
आर्ताः प्रजा नरव्याघ्र! कनु यास्यन्ति निर्वृतिम् ॥ ६
लोकस्वभाव एवैष ययाति र्नहुषात्मजः ।
गतश्शक्रेण सालोक्य मनयस्तं समस्पृशत् ॥ ७
महर्षियो वसिष्ठस्तु यःपितुर्नः पुरोहितः ।
अह्ना पुत्रशतं जज्ञे तथैवास्य पुनर्हतम् ॥ ८
याचेयं जगतां माता देवी लोकनमस्कृता ।
अस्या श्च चलनं भूमेर्दृश्यते सत्यसंश्रव! ॥ ९
यौ धर्मौ जगतां नेत्रौ यत्र सर्वं प्रतिष्ठितम् ।
आदित्यचन्द्रौ ग्रहण मभ्युपेतौ महाबलौ ॥ १०

सुमहान्त्यपि भूतानि देवाश्च पुरुषर्षभ!।
नदैवस्य प्रमुञ्चन्ति सर्वभूतादिदेहिनः ॥ ११
शक्रादिष्वपि देवेषु वर्तमानौ नयानयौ।
श्रूयते नरशार्दूल! नत्वं शोचितु मर्हसि ॥ १२
नष्टाया मपि वैदेह्यां हृताया मपि चानघ!।
शोचितुं नार्हसे वीर! यथाऽन्यः प्राकृतस्तथा ॥ १३
त्वद्विधा नहि शोचन्ति सततं सत्यदर्शिनः।
सुमहत्स्वपि कृच्छ्रेषु रामानिर्विण्णदर्शनाः ॥ १४
तत्त्वतो हि नरश्रेष्ठ! बुद्ध्या समनुचिन्तय।
बुद्ध्या युक्ता महाप्राज्ञा विजानन्ति शुभाशुभे ॥ १५
अदृष्टगुणदोषाणा मधृतानां तु कर्मणाम्।
नान्तरेण क्रियां तेषां फलमिष्टं प्रवर्तते ॥ १६
त्वमेव हि पुरा राम! मा मेवं बहुशोऽन्वशाः।
अनुशिष्याद्धि को नु त्वा मपि साक्षाद्बृहस्पतिः ॥ १७
बुद्धिश्च ते महाप्राज्ञ! देवै रपि दुरन्वया।
शोकेनाभिप्रसुप्तं ते ज्ञानं सम्बोधयाम्यहम् ॥ १८
दिव्यं च मानुषं च त्व मात्मन श्च पराक्रमम्।
इक्ष्वाकुवृष! भावेक्ष्य यतस्व द्विषतां वधे ॥ १९
किं ते सर्वविनाशेन कृतेन पुरुषर्षभ!।
तमेव त्वं रिपुं पापं विज्ञायोद्धर्तु मर्हसि ॥ २०

इति श्रीमदारण्यकाण्डे षट्षष्टितमस्सर्गः ॥

## ॥ सप्तषष्टितमस्सर्गः ॥

पूर्वजोऽप्युक्तमात्रस्तु लक्ष्मणेन सुभाषितम् ।
सारग्राही महासारं प्रतिजग्राह राघवः ॥ १
सन्निगृह्य महाबाहुः प्रवृत्तं कोपमात्मनः ।
अवष्टभ्य धनुः क्षिप्रं रामो लक्ष्मण मब्रवीत् ॥ २
" किं करिष्यावहे वत्स ! क्वा गच्छाव लक्ष्मण ! ।
केनोपायेन पश्येयं सीता मिति विचिन्तय ॥ " ३
तं तथा परितापार्तं लक्ष्मणो राममब्रवीत् ।
"इद मेव जनस्थानं त्वमन्वेषितु मर्हसि ॥ ४
राक्षसै र्बहुभिः कीर्णं नानाद्रुमलतायुतम् ।
सन्तीह गिरिदुर्गाणि निर्दराः कन्दराणिच ॥ ५
गुहाश्च विविधा घोरा नानामृगगणाकुलाः ।
आवासाः किन्नराणां च गन्धर्वभवनानि च ॥ ६
तानि युक्तो मया सार्धं त्वमन्वेषितु मर्हसि ।
त्वद्विधा बुद्धिसम्पन्ना महात्मानो नरर्षभ ! ॥ ७
आपत्सु न प्रकम्पन्ते वायुवेगैरिवाचलाः ।"
इत्युक्त स्तद्वनं सर्वं विचचार स लक्ष्मणः ॥ ८
क्रुद्धो राम श्शरं घोरं संधाय धनुषि क्षुरम् ।
ततः पर्वतकूटाभं महाभागं द्विजोत्तमम् ॥ ९
ददर्श पतितं भूमौ क्षतजार्द्रं जटायुषम् ।
तं दृष्ट्वा गिरिशृङ्गाभं रामो लक्ष्मण मब्रवीत् ॥ १०

"अनेनसीता वैदेही भक्षिता नात्र संशयः ।
गृध्ररूपमिदं रक्षो व्यक्तं भवति कानने ॥ ११
भक्षयित्वा विशालाक्षीमास्ते सीतां यथासुखम् ।
एनं वधिष्ये दीप्तास्यै र्घोरै र्बाणै रजिह्मगैः ॥" १२
इत्युक्त्वाऽभ्यतद्गृध्रं संधाय धनुषि क्षुरम् ।
क्रुद्धो राम स्समुद्रान्तां कम्पयन्निव मेदिनीम् ॥ १३
तं दीनं दीनया वाचा सफेनं रुधिरं वमन् ।
अभ्यभाषत पक्षी तु रामं दशरथात्मजम् ॥ १४
[मां न मारय भद्रं ते म्रियमाणं स्वकर्मणा] ।
"यामोषधि मिवाऽयुष्म न्नन्वेषसि महावने ॥ १५
सा देवी मम च प्राणा रावणेनोभयं हृतम् ।
त्वया विरहिता देवी लक्ष्मणेन च राघव! ॥ १६
ह्रियमाणा मया दृष्टा रावणेन बलीयसा ।
सीता मभ्यवपन्नोऽहं रावणश्च रणे मया ॥ १७
विध्वंसितरथश्चात्र पातितो धरणीतले ।
एत दस्य धनु र्भग्न मेतदस्य शरावरम् ॥ १८
अय मस्य रथो राम! भग्न स्साङ्ग्रामिको मया ।
अयं तु सारथि स्तस्य मत्पक्षनिहतो युधि ॥ १९
परिश्रान्तस्य मे पक्षौ च्छित्त्वा खड्गेन रावणः ।
सीता मादाय वैदेही मुत्पपात विहायसम् ॥ २०
रक्षसा निहतं पूर्वं न मां हन्तुं त्वं मर्हसि ।"
राम स्तस्य तु विज्ञाय बाष्पपूर्णमुख स्तदा ॥ २१

द्विगुणीकृततापार्तस्सीतासक्तां प्रियां कथाम् ।
[श्रुत्वा जटायुषो वाक्यं राम स्सौमित्रिणा सह] ॥ २२

गृध्रराजं परिष्वज्य परित्यज्य महद्धनुः ।
निपपातावशो भूमौ रुरोद सहलक्ष्मणः ॥ २३

एक मेकायने दुर्गे निःश्वसन्तं कथंचन ।
समीक्ष्य दुःखिततरो राम स्सौमित्रि मब्रवीत् ॥ २४

"राज्या द्भ्रंशो वने वास स्सीता नष्टा हतो द्विजः ।
ईदृशीयं ममालक्ष्मी र्निर्दहेदपि पावकम् ॥ २५

संपूर्ण मपि चे दद्य प्रविशेयं महोदधिम् ।
सोऽपि नूनं ममालक्ष्म्या विशुष्येत्सरितां पतिः ॥ २६

नास्त्यभाग्यतरो लोके मत्तोऽस्मिंत्सचराचरे ।
येनेयं महती प्राप्ता मया व्यसनवागुरा ॥ २७

अयं पितृवयस्यो मे गृध्रराजो जरान्वितः ।
शेते विनिहतो भूमौ मम भाग्यविपर्ययात् ॥ २८

इत्येव मुक्त्वा बहुशो राघव स्सहलक्ष्मणः ।
जटायुषं च पस्पर्श पितृस्नेहं विदर्शयन् ॥ २९

निकृत्तपक्षं रुधिरावसिक्तं स गृध्रराजं परिरभ्य रामः ।
'क्व मैथिली प्राणसमा म' मेति विमुच्य वाचं निपपात भूमौ॥३०

इति श्रीमदारण्यकाण्डे सप्तषष्टितमस्सर्गः ॥

## ॥ अष्टषष्टितमस्सर्गः ॥

राम स्सम्प्रेक्ष्य तं गृध्रं भुवि रौद्रेण पातितम् ।
सौमित्रिं मित्रसम्पन्न मिदं वचन मब्रवीत् ॥ १
"ममायं नून मर्थेषु यतमानो विहङ्गमः ।
राक्षसेन हत स्संख्ये प्राणां स्त्यक्ष्यति दुस्त्यजान् ॥ २
अय मस्य शरीरेऽस्मिन्प्राणो लक्ष्मण! विद्यते ।
तथाहि स्वरहीनोऽयं विक्लबस्समुदीक्षते ॥" ३
"जटायो! यदि शक्नोषि वाक्यं व्याहरितुं पुनः ।
सीता माख्याहि भद्रं ते वध माख्याहि चात्मनः ॥ ४
किंनिमित्तोऽहरत्सीतां रावण स्तस्य किं मया ।
अपराधं तु यं दृष्ट्वा रावणेन हृताप्रिया ॥ ५
कथं तच्चन्द्रसंकाशं मुख मासीन्मनोहरम् ।
सीतया कानि चोक्तानि तस्मिन्काले द्विजोत्तम! ॥ ६
कथंवीर्यः कथंरूपः किंकर्मा सचराक्षसः? ।
क्व चास्यभवनं तात! ब्रूहि मे परिपृच्छतः ॥" ७
त मुद्वीक्ष्याथ दीनात्मा विलपन्तमनन्तरम् ।
वाचाऽतिसन्नया रामं जटायु रिद मब्रवीत् ॥ ८
"हृता सा राक्षसेन्द्रेण रावणेन विहायसा ।
माया मास्थाय विपुलां वातदुर्दिन संकुलाम् ॥ ९
परिश्रान्तस्य मे तात! पक्षौ छित्त्वा स राक्षसः ।
सीता मादाय वैदेहीं प्रयातो दक्षिणां दिशम् ॥ १०

उपरुद्ध्यन्ति मे प्राणा दृष्टिर्भ्रमति राघव! ।
पश्यामि वृक्षांत्सौवर्णा नुशीरकृतमूर्धजान् ॥ ११
येन यातो मुहूर्तेन सीता मादाय रावणः ।
विप्रणष्टं धनं क्षिप्रं तत्स्वामी प्रतिपद्यते ॥ १२
विन्दो नाम मुहूर्तोऽयं सच काकुत्स्थ! नाबुधत् ।
त्वत्प्रियां जानकीं हृत्वा रावणो राक्षसेश्वरः ॥ १३
झषवद्बडिशं गृह्य क्षिप्र मेव विनश्यति ।
नच त्वया व्यथा कार्या जनकस्य सुतां प्रति ॥ १४
वैदेह्या रंस्यसे क्षिप्रं हत्वा तं राक्षसं रणे ।"
असम्मूढस्य गृध्रस्य रामं प्रत्यनुभाषतः ॥ १५
आस्यात्सुस्राव रुधिरं म्रियमाणस्य सामिषम् ।
"पुत्रो विश्रवसस्साक्षा द्भ्राता वैश्रवणस्य च ॥" १६
इत्युक्त्वा दुर्लभान्प्राणा न्मुमोच पतगेश्वरः ।
'ब्रूहि ब्रू'हीति रामस्य ब्रुवाणस्य कृताञ्जलेः ॥ १७
त्यक्त्वा शरीरं गृध्रस्य जग्मुः प्राणा विहायसम् ।
स निक्षिप्य शिरो भूमौ प्रसार्य चरणौ तदा ॥ १८
विक्षिप्य च शरीरं स्वं पपात धरणीतले ।
तं गृध्रं प्रेक्ष्य ताम्राक्षं गतासु मचलोपमम् ॥ १९
राम स्सुबहुभि र्दुःखै र्दीन स्सौमित्रि मब्रवीत् ।
"बहूनि रक्षसां वासे वर्षाणि वसता सुखम् ॥ २०
पक्षिराजेन वृद्धेन तातमित्रेण न स्सुखम् ।]
अनेन दण्डकारण्ये विशीर्ण मिह पक्षिणा ॥ २१

अनेकवार्षिको यस्तु चिरकालसमुत्थितः ।
सोऽयं भूमौ हतश्शेते कालो हि दुरतिक्रमः ॥ २२

पश्य लक्ष्मण! गृध्रोऽय मुपकारी हत श्चमे ।
सीता मभ्यवपन्नो वै रावणेन बलीयसा ॥ २३

गृध्रराज्यं परित्यज्य पितृपैतामहं महत् ।
मम हेतोरयं प्राणान्मुमोच पतगेश्वरः ॥ २४

सर्वत्र खलु दृश्यन्ते साधवो धर्मचारिणः ।
शूरा श्शरण्या स्सौमित्रे! तिर्यग्योनिगतेष्वपि ॥ २५

सीताहरणजंदुःखं न मे सौम्य! तथागतम् ।
यथा विनाशो गृध्रस्य मत्कृते च परन्तप! ॥ २६

अयंपतगराज स्तु सानुक्रोश स्सुहृत्प्रियः ।
मम हेतोःपरिक्रान्तो गत स्स्वर्गं न संशयः ॥ २७

पुत्रै रमात्यै र्दारै श्च परिक्षीणो महावने ।
अनाथ इव धर्मात्मा गतो वैवस्वतक्षयम् ] ॥ २८

राजा दशरथश्श्रीमा न्यथा मम महायशाः ।
पूजनीय श्च मान्य श्च तथाऽयं पतगेश्वरः ॥ २९

सौमित्रे! हर काष्ठानि निर्मथिष्यामि पावकम् ।
गृध्रराजं दिधक्षामि मत्कृते निधनं गतम् ॥ ३०

नाथं पतगलोकस्य चितामारोप्य राघव! ।
इमं धक्ष्यामि सौमित्रे! हतं रौद्रेण रक्षसा ॥ ३१

" या गति र्यज्ञशीलाना माहिताग्नेश्च या गतिः ।
अपरावर्तिनां याच याचभूमिप्रदायिनाम् ॥ ३२

मया त्वं समनुज्ञातो गच्छ लोकाननुत्तमान् ।
गृध्रराज! महासत्त्व! संस्कृत श्च मया व्रज ॥" ३३

एव मुक्त्वा चितां दीप्तामारोप्य पतगेश्वरम् ।
ददाह रामो धर्मात्मा स्वबन्धुमिव दुःखितः ॥ ३४

रामोऽथ सहसौमित्रि र्वनं गत्वा सवीर्यवान् ।
स्थूला न्हत्वा महारोही ननु तस्तार तं द्विजम् ॥ ३५

रोहिमांसानि चोत्कृत्य पेशीकृत्य महायशाः ।
शकुनाय ददौ रामो रम्ये हरितशाद्वले ॥ ३६

यत्तत्प्रेतस्य मर्त्यस्य कथयन्ति द्विजातयः ।
तत्स्वर्गगमनं तस्य पित्र्यं रामो जजाप ह ॥ ३७

ततो गोदावरीं गत्वा नदीं नरवरात्मजौ ।
उदकंचक्रतुस्तस्मै गृध्रराजाय ता वुभौ ॥ ३८

शास्त्रदृष्टेन विधिना जले गृध्राय राघवौ ।
स्नात्वा तौ गृध्रराजाय उदकं चक्रतु स्तदा ॥ ३९

स गृध्रराजः कृतवान्यशस्करं सुदुष्करं कर्म रणे निपातितः ।
महर्षिकल्पेन च संस्कृतस्तदा जगाम पुण्यां गतिमात्मन श्शुभाम् ॥

कृतोदकौ तावपि पक्षिसत्तमे स्थिरां च बुद्धिं प्रणिधाय जग्मतुः ।
प्रवेश्य सीताधिगमे ततो मनोवनं सुरेन्द्राविव विष्णुवासवौ ॥ ४१

इति श्रीमदारण्यकाण्डे अष्टषष्टितमस्सर्गः ॥

## ॥ एकोनसप्ततितमस्सर्गः ॥

कृत्वैव मुदकं तस्मै प्रस्थितौ रामलक्ष्मणौ ।
अवेक्षन्तौ वनेसीतांपश्चिमां जग्मतु र्दिशम् ॥ १
तौ दिशं दक्षिणां गत्वा शरचापासिधारिणौ ।
अविप्रहतमैक्ष्वाकौ पन्थानं प्रतिपेदतुः ॥ २
गुल्मै र्वृक्षै श्च बहुभि र्लताभि श्च प्रवेष्टितम् ।
आवृतं सर्वतो दुर्गं गहनं घोरदर्शनम् ॥ ३
व्यतिक्रम्यतु वेगेन व्यालसिंहनिषेवितम् ।
सुभीमं तन्महारण्यं व्यतियातौ महाबलौ ॥ ४
ततः परं जनस्थाना त्त्रिक्रोशं गम्य राघवौ ।
क्रौञ्चारण्यं विविशितु र्गहनं तौ महौजसौ ॥ ५
नानामेघघनप्रख्यं प्रहृष्ट मिव सर्वतः ।
नानापक्षिगणै र्जुष्टं नानाव्याळमृगैर्युतम् ॥ ६
दिदृक्षमाणौ वैदेहीं तद्वनं तौ विचिक्यतुः ।
तत्र तत्रावतिष्ठन्तौ सीताहरणकर्शितौ ॥ ७
ततः पूर्वेण तौगत्वा त्रिक्रोशं भ्रातरौ तदा ।
क्रौञ्चारण्य मतिक्रम्य मतङ्गाश्रम मन्तरा ॥ ८
दृष्ट्वातु तद्वनं घोरं बहुभीममृगाद्विजम् ।
नानासत्त्वसमाकीर्णं सर्वं गहनपादपम् ॥ ९
ददृशाते तु तौ तत्र दरींदशरथात्मजौ ।
पाताळसमगम्भीरां तमसा नित्यसंवृताम् ॥ १०

आसाद्य तौ नरव्याघ्रौ दर्यास्तस्याऽविदूरतः ।
ददृशाते महारूपां राक्षसीं विकृताननाम् ॥ ११
भयदामल्पसत्त्वानां भीभत्सां रौद्रदर्शनाम् ।
लम्बोदरीं तीक्ष्णदंष्ट्रां करालां परुषत्वचम् ॥ १२
भक्षयन्तीं मृगान्भीमा न्विकटांमुक्तमूर्धजाम् ।
प्रैक्षेतां तौ तत स्तत्र भ्रातरौ रामलक्ष्मणौ ॥ १३
सा समासाद्य तौ वीरौ व्रजन्तं भ्रातु रग्रतः ।
'एहि रंस्याव' हेत्युक्त्वा समालम्बत लक्ष्मणम् ॥ १४
उवाच चैनं वचनं सौमित्रिमुपगूह्य सा ।
"अहंत्वयोमुखी नाम लाभस्ते त्वमसिप्रियः ॥ १५
नाथ! पर्वतकूटेषु नदीनां पुळिनेषु च ।
आयुश्शेष मिमं वीर! त्वं मया सह रंस्यसे ॥" १६
एवमुक्त स्तु कुपितः खड्ग मुद्धृत्य लक्ष्मणः ।
कर्णनासे स्तनौ चास्या निचकर्तारिसूदनः ॥ १७
कर्णनासे निकृत्ते तु विस्वरं सा विनद्य च ।
यथागतं प्रदुद्राव राक्षसी भीमदर्शना ॥ १८
तस्यां गतायां गहनं विशन्तौ वन मोजसा ।
आसेदतु रमित्रघ्नौ भ्रातरौ रामलक्ष्मणौ ॥ १९
लक्ष्मण स्तु महातेजा स्सत्त्ववान् शीलवान् शुचिः ।
अब्रवीत्प्राञ्जलि र्वाक्यं भ्रातरं दीप्ततेजसम् ॥ २०
"स्पन्दते मे दृढं बाहु रुद्विग्न मिव मे मनः ।
प्रायशश्चाप्यनिष्टानि निमित्तान्युपलक्षये ॥ २१

तस्मात्सज्जीभवार्य! त्वं कुरुष्व वचनं हितम् ।
ममैवहि निमित्तानि सद्य श्शंसन्ति सम्भ्रमम् ॥ २२
एष वञ्जुळको नाम पक्षी परमदारुणः ।
आवयो र्विजयं युद्धे शंसन्निव विनर्दति ॥" २३
तयो रन्वेषतो रेवं सर्वं तद्वन मोजसा ।
संजज्ञे विपुल श्शब्दःप्रभञ्जन्निव तद्वनम् ॥ २४
संवेष्टित मिवात्यर्थं गगनं मातरिश्वना ।
वनस्य तस्य शब्दोऽभू द्दिवमापूरयन्निव ॥ २५
तं शब्दं काङ्क्षमाण स्तु रामः कक्षे सहानुजः ।
ददर्श सुमहाकायं राक्षसं विपुलोरसम् ॥ २६
आसेदतु स्तत स्तत्र ता वुभौ प्रमुखे स्थितम् ।
विवृद्ध मशिरोग्रीवं कबन्ध मुदरे मुखम् ॥ २७
रोमभि र्निचितै स्तीक्ष्णै र्महागिरि मिवोच्छ्रितम् ।
नीलमेघनिभं रौद्रं मेघस्तनितनिस्वनम् ॥ २८
अग्निज्वालानिकाशेन ललाटस्थेन दीप्यता ।
महापक्ष्मेण पिङ्गेन विपुलेनायतेन च ॥ २९
एकेनोरसि घोरेण नयनेनाशुदर्शिना ।
महादंष्ट्रोपपन्नं तल्लेलिहानं महामुखम् ॥ ३०
भक्षयन्तं महाघोरा नृक्षसिंहमृगद्विपान् ।
घोरौ भुजौ विकुर्वाणमुभौ योजन मायतौ ॥ ३१
कराभ्यां विविधान्गृह्य ऋक्षा न्पक्षिगणा न्मृगान् ।
आकर्षन्तं विकर्षन्त मनेका न्मृगयूथपान् ॥ ३२

स्थित मावृत्य पन्थानं तयोर्भ्रात्रोः प्रपन्नयोः ।
अथ तौ समभिक्रम्य क्रोशमात्रे ददर्शतुः ॥ ३३
महान्तं दारुणं भीमं कबन्धं भुजसंवृतम् ।
कबन्धमिव संस्थाना दतिघोरप्रदर्शनम् ॥ ३४
स महाबाहु रत्यर्थं प्रसार्य विपुलौ भुजौ ।
जग्राह सहितावेव राघवौ पीडयन्बलात् ॥ ३५
खड्गिनौ दृढधन्वानौ तिग्मतेजोवपुर्धरौ ।
भ्रातरौ विवशं प्राप्तौ कृष्यमाणौ महाबलौ ॥ ३६
तत्र धैर्येण शूरस्तु राघवो नैव विव्यथे ।
बाल्यादनाश्रयत्वा च्च लक्ष्मण स्त्वति विव्यथे ॥ ३७
उवाच च विषण्ण स्स न्राघवं राघवानुजः ।
"पश्य मां वीर! विवशं राक्षसस्य वशं गतम् ॥ ३८
मयैकेनविनिर्युक्तः परिमुच्यस्व राघव! ।
मां हि भूतबलिं दत्त्वा पलायस्व यथासुखम् ॥ ३९
अधिगन्तासि वैदेही मचिरेणेति मे मतिः ।
प्रतिलभ्य च काकुत्स्थ! पितृपैतामहीं महीम् ॥ ४०
तत्रमां राम! राज्यस्थः स्मर्तुमर्हसि सर्वदा ।
लक्ष्मणेनैव मुक्तस्तु राम स्सौमित्रि मब्रवीत् ॥ ४१
"मा स्म त्रासं कृथा वीर! नहि त्वादृग्विषीदति ।"
एतस्मिन्नन्तरे क्रूरो भ्रातरौ रामलक्ष्मणौ ॥ ४२
पप्रच्छ घननिर्घोषः कबन्धो दानवोत्तमः ।
"कौ युवां वृषभस्कन्धौ महाखड्गधनुर्धरौ ॥ ४३

घोरं देश मिमं प्राप्तौ मम भक्षावुपस्थितौ ।
वदतं कार्य मिह वां किमर्थं चागतौ युवाम् ॥ ४४
इमं देशमनुप्राप्तौ क्षुधार्तस्येह तिष्ठतः ।
सबाणचापखड्गौ च तीक्ष्णशृङ्गाविवर्षभौ ॥ ४५
ममाऽस्य मनुसंप्राप्तौ दुर्लभं जीवितं पुनः ।
तस्य तद्वचनं श्रुत्वा कबन्धस्य दुरात्मनः ॥ ४६
उवाच लक्ष्मणं रामो मुखेन परिशुष्यता ।
"कृच्छ्रात्कृच्छ्रतरं प्राप्य दारुणं सत्यविक्रमः ! ॥ ४७
व्यसनं जीवितान्ताय प्राप्त मप्राप्य तां प्रियाम् ।
कालस्य सुमह द्वीर्यं सर्वभूतेषु लक्ष्मण ! ॥ ४८
त्वांच मां च नरव्याघ्र ! व्यसनैः पश्य मोहितौ ।
नातिभारोऽस्ति दैवस्य सर्वभूतेषु लक्ष्मण ! ॥ ४९
शूरा श्च बलवन्तश्च कृतास्त्राश्च रणाजिरे ।
कालाभिपन्ना स्सीदन्ति यथा वालुकसेतवः ॥" ५०
इति ब्रुवाणो दृढसत्यविक्रमो महायशा दाशरथिः प्रतापवान् ।
अवेक्ष्य सौमित्रि मुदग्रपौरुषं स्थिरां तदा स्वां मति मात्मनाऽकरोत् ॥

इति श्रीमदारण्यकाण्डे एकोनसप्ततितमस्सर्गः ॥

## ॥ सप्ततितमस्सर्गः ॥

तौ तु तत्र स्थितौ दृष्ट्वा भ्रातरौ रामलक्ष्मणौ ।
बाहुपाशपरिक्षिप्तौ कबन्धो वाक्य मब्रवीत् ॥ १

तिष्ठतः किन्नु मां दृष्ट्वा क्षुधार्तं क्षत्रियर्षभौ ।
द्दारार्थं तु संदिष्टौ दैवेन गतचेतसौ ॥" २
छ्रुत्वा लक्ष्मणो वाक्यं प्राप्तकालं हितं तदा ।
ोचाऽर्तिं समापन्नो विक्रमे कृतलक्षणः ॥ ३
त्वां च मां च पुरातूर्ण मादत्ते राक्षसाधमः ।
स्मादसिभ्यामस्याशु बाहू च्छिन्दावहै गुरू ॥ ४
ीषणोऽयं महाकायो राक्षसो भुजविक्रमः ।
ोकं ह्यतिजितं कृत्वा ह्यावां हन्तु मिहेच्छति ॥ ५
निश्चेष्टानां वधो राजन्! कुत्सितो जगतीपतेः ।
क्रतुमध्योपनीतानां पशूना मिव राघव! ॥" ६
एतत्सञ्जल्पितं श्रुत्वा तयोः क्रुद्धस्तु राक्षसः ।
विदार्याऽस्यं तदा रौद्रस्तौ भक्षयितु मारभत् ॥ ७
ततस्तौ देशकालज्ञौ खड्गाभ्यामेव राघवौ ।
अच्छिन्दतां सुसंहृष्टौ बाहू तस्यांसदेशतः ॥
क्षिणो दक्षिणं बाहु मसक्त मसिना ततः ।
चच्छेद रामो वेगेन सव्यं वीरस्तु लक्ष्मणः ॥ ९
स पपात महाबाहु श्छिन्नबाहु र्महास्वनः ।
खंच गांच दिशश्चैव नादयञ्जलदो यथा ॥ १०
सनिकृत्तौ भुजौ दृष्ट्वा शोणितौघपरिप्लुतः ।
दीनः पप्रच्छ तौ वीरौ 'कौ युवा'मिति दानवः ॥ ११
इति तस्य ब्रुवाणस्य लक्ष्मण श्शुभलक्षणः ।
शशंस राघवं तस्य कबन्धस्य महात्मनः ॥ १२

"अय मिक्ष्वाकुदायादो रामो नाम जनैश्श्रुतः ।
अस्यैवावरजं विद्धि भ्रातरं मां च लक्ष्मणम् ॥ १३
[मात्रा प्रतिहते राज्ये रामः प्रव्राजितो वनम् ।
मया सह चरत्येष भार्ययाच महद्वनम् ॥] १४
अस्य देवप्रभावस्य वसतो विजने वने ।
रक्षसाऽपहृता पत्नी या मिच्छन्ताविहागतौ ॥ १५
त्वं तु कोवा किमर्थं वा कबन्धसदृशो वने ।
आस्येनोरसि दीप्तेन भग्नजङ्घो विचेष्टसे ॥" १६
एव मुक्तः कबन्ध स्तु लक्ष्मणेनोत्तरं वचः ।
उवाच परमप्रीत स्तदिन्द्रवचनं स्मरन् ॥ १७
"स्वागतं वां नरव्याघ्रौ ! दिष्ट्या पश्यामि चाप्यहम् ।
दिष्ट्या [illegible] निकृत्तौ मे युवाभ्यां बाहुबन्धनौ ॥ १८
विरूपं यच्चमे रूपं प्राप्तं ह्यविनयाद्यथा ।
तन्मे शृणु नरव्याघ्र ! तत्वत श्शंसत स्तव ॥ १९

इति श्रीमदारण्यकाण्डे सप्ततितमस्सर्गः ॥

---

## ॥ एकसप्ततितमस्सर्गः ॥

"पुरा राम ! महाबाहो ! महाबलपराक्रम ! ।
रूप मासीन्ममाचिन्त्यं त्रिषु लोकेषु विश्रुतम् ॥ १
यथा सोमस्य शक्रस्य सूर्यस्य च यथा वपुः ।
सोऽहं रूपमिदं कृत्वा लोकवित्रासनं महत् ॥

मतङ्गवन मित्येव विश्रुतं रघुनन्दन! ।
इह ते भावितात्मानो गुरवो मे महावने ॥ २२
ु वांचक्रिरे तीर्थं मन्त्रवन्मन्त्रपूजितम् ।
इ प्रत्यक्स्थली वेदि र्यत्र ते मे सुसत्कृताः ॥ २३
पु पोपहारं कुर्वन्ति श्रमा दुद्वेपिभिः करैः ।
षां तपःप्रभावेन पश्याद्यापि रघूद्वह! ॥ २४
द्योतयन्ति दिश स्सर्वा श्श्रियां वेद्योऽतुलप्रभाः ।
अशक्नुवद्भि स्तै र्गन्तु मुपवासश्रमालसैः ॥ २५
चिन्तितेऽभ्यागतान्पश्य सहितांस्सप्तसागरान् ।
कृताभिषेकै स्तै र्न्यस्ता वल्कलाः पादपेष्विह ॥ २६
अद्यापि नावशुष्यन्ति प्रदेशे रघुनन्दन! ।
देवकार्याणि कुर्वद्भिर्यानीमानि कृतानि वै ॥ २७
पुष्पैःकुवलयै स्साधं म्लानत्वं नोपयान्तिवै ।
कृत्स्नं वन मिदं दृष्टं श्रोतव्यं च श्रुतं त्वया? ॥ २८
तदिच्छाम्यभ्यनुज्ञाता त्यक्तु मेत त्कळेबरम् ।
तेषा मिच्छाम्यहं गन्तुं समीपं भावितात्मनाम् ॥ २९
मुनीना माश्रमो येषा महं च परिचारिणी ।"
धर्मिष्ठं तु वच श्श्रुत्वा राघव स्सहलक्ष्मणः ॥ ३०
प्रहर्षमतुलं लेभे आश्चर्य मिति तत्त्वतः ।
ता मुवाच ततो राम श्श्रमणीं संश्रितव्रताम् ॥ ३१
"अर्चितोऽहं त्वया भक्त्या गच्छ कामं यथासुखम् ।"
इत्युक्ता जटिला वृद्धा चीरकृष्णाजिनाम्बरा ॥ ३२

तस्मिन्मुहूर्ते शबरी देहं जीर्णं जिहासती ।
अनुज्ञातातु रामेण हुत्वाऽत्मानं हुताशने ॥ ३३
ज्वलत्पावकसङ्काशा स्वर्ग मेव जगाम सा ।
दिव्याभरणसंयुक्ता दिव्यमाल्यानुलेपना ॥ ३४
दिव्याम्बरधरा तत्र बभूव प्रियदर्शना ।
विराजयन्ती तं देशं विद्युत्सौदामिनी यथा ॥ ३५
[प्रणम्य शिरसा रामं स्वर्गता सुप्रभानना ।
यत्र ते सुकृतात्मानो विहरन्ति महर्षयः ॥] ३६

इति श्रीमदारण्यकाण्डे चतुस्सप्ततितमस्सर्गः ॥

## ॥ पञ्चसप्ततितमस्सर्गः ॥

दिवं तु तस्यां यातायां शबर्यां स्वेन तेजसा ।
लक्ष्मणेन सह भ्राता चिन्तयामास राघवः ॥ १
स चिन्तयित्वा धर्मात्मा प्रभावं तं महात्मनाम् ।
हितकारिण मेकाग्रं लक्ष्मणं राघवोऽब्रवीत् ॥ २
"दृष्टोऽय माश्रम स्सौम्य बह्वाश्चर्यो महात्मनाम् ।
विश्वस्तमृगशार्दूलो नानाविहगसेवितः ॥ ३
सप्तानांच समुद्राणा मेषु तीर्थेषु लक्ष्मण! ।
उपस्पृष्टंच विधिवत्पितरश्चापि तर्पिताः ॥ ४
प्रनष्ट मशुभं तत्तत्कल्याणं समुपस्थितम् ।
तेन तत्त्वेन हृष्टं मे मनोलक्ष्मण! सम्प्रति ॥ ५

हृदये हि नरव्याघ्र! शुभमाविर्भविष्यति ।
तदागच्छ गमिष्यावः पम्पां तां प्रियदर्शनाम् ॥ ६
ऋश्यमूको गिरिर्यत्र नातिदूरे प्रकाशते ।
यस्मिन्वसति धर्मात्मा सुग्रीवोंऽशुमत स्सुतः ॥ ७
नित्यं वालिभयात्रस्तश्चतुर्भि स्सहवानरैः ।
अभित्वरे च तं द्रष्टुं सुग्रीवं वानरर्षभम् ॥ ८
तदधीनं हि मे सौम्य! सीतायाः परिमार्गणम् ।”
एवं ब्रुवाणं तं धीरं रामं सौमित्रि रब्रवीत् ॥ ९
“गच्छाव स्त्वरितं तत्र ममापि त्वरतेमनः ।”
आश्रमात्तु ततस्तस्मान्निष्क्रम्य स विशाम्पतिः ॥ १०
आजगाम ततः पम्पां लक्ष्मणेन सहाभिभूः ।
स ददर्श ततः पुण्या मुदारजनसेविताम् ॥ ११
नानाद्रुमलताकीर्णां पम्पां पानीयवाहिनीम् ।
पद्मै स्सौगन्धिकै स्ताम्रां शुक्लां कुमुदमण्डलैः ॥ १२
नीलां कुवलयोद्घाटैर्बहुवर्णां कुथामिव ।
सतामासाद्य वैरामो दूरादुदकवाहिनीम् ॥ १३
मतङ्गसरसं नाम ह्रदं समवगाहत ।
अरविन्दोत्पलवतीं पद्मसौगन्धिकायुताम् ॥ १४
पुष्पिताम्रवणोपेतां बर्हिणोद्घुष्टनादिताम् ।
तिलकै र्बीजपूरैश्च धवै श्शुक्लद्रुमै स्तथा ॥ १५
पुष्पितैः करवीरैश्च पुन्नागैश्च सुपुष्पितैः ।
मालतीकुन्दगुल्मैश्च भाण्डीरैर्निचुळै स्तथा ॥ १६

अशोकै स्सप्तपर्णैश्च केतकै रतिमुक्तकैः ।
अन्यैश्च विविधैर्वृक्षैः प्रमदामिव भूषिताम् ॥ १७
समीक्षमाणौ पुष्पाढ्यं सर्वतो विपुलद्रुमम् ।
कोयष्टिकै श्चार्जुनकै श्शतपत्रैश्च कीरकैः ॥ १८
एतै श्चान्यै श्च विहगै र्नादितन्तु वनं महत् ।
ततो जग्मतु रव्यग्रौ राघवौ सुसमाहितौ ॥ १९
तद्वनं चैव सरसः पश्यन्तौ शकुनैर्युतम् ।
स ददर्श ततः पम्पां शीतवारिनिधिं शुभाम् ॥ २०
प्रहृष्टनानाशकुनां पादपै रुपशोभिताम् ।
[तिलकाशोकपुन्नागवकुळोद्दालकाशिनीम् ॥] २१
स रामो विविधान् वृक्षान् सरांसि विविधानि च ।
पश्यन्कामाभिसन्तप्तो जगाम परमं ह्रदम् ॥ २२
पुष्पितोपवनोपेतां सालचम्पकशोभिताम् ।
षट्पदौघसमाविष्टां श्रीमती मतुलप्रभाम् ॥ २३
स्फटिकोपमतोयाढ्यां श्लक्ष्णवालुकसन्तताम् ।
सतां दृष्ट्वा पुनः पम्पां पद्मसौगन्धिकैर्युताम् ॥ २४
इत्युवाच तदा वाक्यं लक्ष्मणं सत्यविक्रमः ।
"अस्यास्तीरे तु पूर्वोक्तः पर्वतो धातुमण्डितः ॥ २५
ऋश्यमूक इतिख्यातः पुण्यः पुष्पितपादपः ।
हरेर्ऋक्षरजोनाम्नः पुत्रस्तस्य महात्मनः ॥ २६
अध्यास्ते तं महावीर्य स्सुग्रीव इति विश्रुतः ।
सुग्रीव मभिगच्छ त्वं वानरेन्द्रं नरर्षभ! ॥" २७

इत्युवाच पुनर्वाक्यं लक्ष्मणं सत्यविक्रमम् ।
'राज्यभ्रष्टेन दीनेन तस्या मासक्तचेतसा ॥ २८

न मया विना शक्यं सीतां लक्ष्मण! जीवितुम् ।"

इत्येव मुक्त्वा मदनाभिपीडित स्स लक्ष्मणं वाक्य मनन्यचेतसम् ।
विवेश पम्पां नळिनीं मनोरमां रघूत्तमश्शोकविषादयन्त्रितः ॥

ततो महद्वर्त्म सुदूरसंक्रमः क्रमेण गत्वा प्रतिकूलधन्वनम् ।
ददर्श पम्पां शुभदर्शकाननामनेकनानाविधपक्षिजालकाम् ॥ ३०

इत्यार्षे श्रीमद्रामायणे आदिकाव्ये
वाल्मीकीये चतुर्विंशत्सहस्रिकायां संहितायाम्-
मारण्यकाण्डे पञ्चसप्ततितमस्सर्गः ॥

Printed by V. Ramaswamy Sastrulu & Sons, at 'Vavilla Press' Madras.